श्रीः ।

# निर्णयसिन्धुः ।

## (धर्मशास्त्रनिबन्धः)

[illegible]

[illegible] ।







[illegible]

प्राचीनपुस्तकोपलब्धपाठनिवेशनपुरःसरसंशो
धनेन शास्त्रिद्वारा परिष्कृत्य

मुम्बय्यां

## खेमराजश्रीकृष्णदास

इत्यनेन

स्वकीये "श्रीवेंकटेश्वर" मुद्रणालये

मुद्रयित्वा प्रकाशितम् ।

संवद् १९५२ शके १८१७

स्मार्तधर्मकर्मानुष्ठान[illegible] परमो धर्मः। यस्य प्रतिष्ठापको भगवान्साक्षात्। यथा चोक्तं श्रीभगवता स्वमुखेनैव श्रीगीतासु—" परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥" इति—" यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥" इति च। एतावता चायं भारतखण्डप्रचलितो वेदोक्तः स्मृत्युक्तश्च धर्मः स साक्षाद्भगवदुपदिष्ट इति तावत्सिद्धम्। वेदोक्तो हि धर्मो वैदिकः स्मृत्युक्तः स्मार्त इति हि व्यवहारः। स्मृत्युक्तो हि धर्मो वेदोक्तधर्माविरुद्धः। स्मृतीनां वेदार्थपरिबृंहणैकनिबन्धनत्वात्। वेदस्य चानादित्वान्नित्यत्वाद्भगवतोत्पादितत्वाच्चाप्तत्वेन धर्ममूलत्वमस्ति—" अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।" इति मनुस्मृत्यादौ स्पष्टम्। वेदो हि कर्मकाण्ड-ज्ञानकाण्ड-उपासनाकाण्डात्मकः। तत्र कर्मकाण्डो विधिनिषेधात्मकः। अप्राप्तं फलवतं चार्थं यः स्वसामर्थ्येन प्रकाशयति स विधिः। स विधिश्चतुर्धा-उत्पत्तिविधिः, विनियोगविधिः, प्रयोगविधिः, अधिकारिविधिश्चेति। तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः। अंगसंबंधबोधको विधिर्विनियोगविधिः। प्रयोगे शैघ्र्यबोधको विधिःप्रयोगविधिः। फलस्वाम्यबोधको विधिरधिकारिविधिश्च। निषेधश्च विधिप्रतियोगी। अनयोर्विधिनिषेधयोरुभयोः पुरुषार्थानुबंधित्वम्। तत्र विवेकश्चेत्थम्-यथा विधेर्विधेयार्थपरिच्छेदकत्वेनार्थवत्त्वं, तथाऽनर्थहेतुकर्मणः सकाशात्पुरुषस्य निवृत्तिकरणत्वं निषेधस्येति द्वयोरपि पुरुषार्थानुबन्धनानुकूलत्वमेकमेव फलं पर्यवसन्नम्। ज्ञानकाण्डोपासनाकाण्डयोर्विचारः प्रकृतेऽप्रयोजनकतया नेह लिखितः—एवंच कर्मकाण्डात्मकवेदस्य नितरां गूढार्थपरिज्ञानमल्पज्ञसांसारिकजीवानां दुर्लभमिति मत्वा परमकारुणिका महर्षयो वेदार्थविशदीकरणाय नानाविधान्स्मृतिग्रन्थानरीरचन्। तथाच महर्षिबाहुल्यान्मतिबाहुल्येनानन्तवेदार्थविवरणरूपास्ते स्मृतिग्रन्थाः सुबोधा बभूवुः केवलं वेदापेक्षया। परंतूत्तरोत्तरमस्मादृशानां मन्दमतीनां जीवानां तेष्वतिविशालेषु स्मृतिग्रन्थरत्नाकरेष्ववगाहनासामर्थ्यमालोच्य " राजा धर्मस्य रक्षकः" इति शाश्वतिकशास्त्रानुशासनानुसारेणानेकैः सद्धर्मनिष्ठैर्भूपालैरनेकविद्वज्जनेभ्यः स्वाश्रयं दत्वा तद्द्वारा नानाधर्मस्मृतिग्रन्थोहापोहनपुरःसरं वर्णधर्माचारप्रतिपादकान्धर्मनिबंधग्रन्थान्निर्माप्याचारप्रबन्धोऽप्रतिहतः पृथिव्यां यथापरंपरं प्रवर्तितः। सोऽयं तेषामुर्वीपतीनामुपकारो यदद्यापि वयं सर्वेऽपि वर्गाः स्वस्ववर्णाश्रमधर्माचारान्प्रतिपालयामः। अस्त्येवेदं प्रायः सकलविदुषां विदितम्। प्रकृतं तावत्प्रस्तुमः किंचित। पूर्वमुक्तरीत्या श्रीसूर्यसेनमहीमहेन्द्रेण सकलवैय-



# प्रस्तावना।

कर्मप्रवृत्तिपरिज्ञानाय प्रेरितेन स्वाश्रितेन पण्डितमण्डलायमानेन मीमांसकसीमंतमणिना श्रीमदह्लाटनाथपण्डितेन सर्वधर्मस्मृतिपुराणग्रंथपर्यालोचनपूर्वकं सकलस्वधर्मकर्माचारबोधनायायं "**निर्णयामृत**" नामा निबन्धो विरचितः। अयं च निबन्धग्रन्थो निर्णयसिन्धोरपि प्राचीन इत्युपलभ्यते।निर्णयसिन्धौ निर्णयामृतनिबन्धस्थवचनानां प्रामाण्येनोपादानदर्शनात्। तथा चायं ग्रन्थः प्राचीनः सन्नप्रमाणो महन्मान्यतया सर्वमान्यतामर्हत्येवेति तावत्सिद्धम्।

सोऽयं "**निर्णयामृत**" नामा ग्रन्थोऽस्माभिर्महतायासेन संपाद्य शास्त्रिजनद्वारा संशोध्य च स्वकीये "**श्रीवेङ्कटेश्वर**" मुद्रणालये मुद्रयित्वा प्रकाशितः।

विज्ञापयामश्च विद्वज्जनान्-इमं ग्रंथं संगृह्यैतदुक्तरीत्या स्वधर्मकर्माण्यनुष्ठाय सफलयंतु स्वकीयं मानवीयं जन्मेति।

विद्वज्जनकृपाकांक्षी-

**खेमराज श्रीकृष्णदास.**

"श्रीवेङ्कटेश्वर" छापाखाना-मुंबई.

श्रीः ।

# अथ निर्णयामृतानुक्रमणिका ॥

| विषयाः. | पृ. पं. | विषयाः. | पृ. पं. |
|---|---|---|---|

---

# इति निर्णयामृतस्यानुक्रमणिका समाप्ता॥

श्रीः ।

# अथ निर्णयामृतप्रारम्भः ।



॥ श्रीमद्रमारमणचरणाभ्यांनमः ॥ ॥ ॐनमोभगवतेवासुदेवाय ॥ कारणमेकंजगतांवारणमास्येनवारणंविपदाम् ॥ किमपिमहोमहनीयंप्रत्यूहव्यूहदारणंवंदे ॥१॥ भावयामिदृढभक्तिभावनाभावितांघ्रियुगलांसुमंगलाम् ॥ इष्टदांसततमिष्टदेवतांमंत्रवत्सकलमंत्रमातरम् ॥२॥ औपाधिकःस्फुरतियत्रकलादिभेदस्तद्ब्रह्मतत्वमपियस्यनवेदवेदः ॥ सर्गस्थितिप्रलयहेतुमहेतुमेकंकालस्वरूपमहमन्वहमानमामि ॥ ३ ॥ यैःकृतःश्रुतिमहार्णवपारप्राप्तिहेतुरिहसंग्रहसेतुः ॥ तान्नमामिमनुविष्णुयमाद्यान्कालनिर्णयकृतोप्यहमाद्यान् ॥ ४ ॥ अव्यादव्याहतैश्वर्यभव्याभाव्यार्त्तिनाशिनी ॥ दिष्टादिष्टानमद्भक्तकामाकामारिकामिनी ॥ ५ ॥ जयंतिभूमाविहबाहुबाणाःक्षितीश्वराविश्रुतबाहुबाणाः ॥ प्रकुर्वतेयेविशदार्यशोभिर्जगत्पवित्रंचसदायशोभिः ॥ ६ ॥ बभूवभूपस्त्रिदशैःसरूपस्तदन्ववायेबलवान्सरूपः ॥ चकारनित्यंचसमाहितानांपरिक्षयंयःपरमाहितानाम् ॥ ७ ॥ तस्यात्मजन्माजनिकर्णदेवस्त्यागेनयोविश्रुतकर्णदेवः ॥ वपुःश्रियानिर्जितकामदेवःसदासमाराधितवामदेवः ॥८॥ तदात्मभूरुद्धगणःक्षितीन्द्रःकृतींद्रभोगींद्रनिभानुभावः ॥ शुभावदातायतकीर्त्तिरार्त्तिहरःसतांश्रीपतिमूर्तिरासीत् ॥ ॥ ९ ॥ स्वकीर्त्तिवल्लीप्रभवालवालस्थलीवढिल्लीनगरीमतल्ली ॥ भल्लीशतप्रोतशकेशकुंभीकुंभास्त्रनीरैःसमसिंचितेन ॥१०॥ प्रव्यक्तमासुक्तमहेमकुंभमुक्ताव्यमुक्तागणपोषसक्ताः ॥ रक्तासवैःसंयतियेनकालीव्यालीढविश्वाप्यभितर्प्यतेस्म ॥११॥ उद्धरणंशुद्धरणमुद्धरणंविद्विषांसमुद्ध

१ प्रकुर्वतेयेविशदाश ( स ) शोभिर्जगत्समग्रंचसदायशोभिरितिमूलपाठः । २ निर्जित इति पाठां० ।

रणम् ॥ सुहृदांपुरानतहृदांनमतितमांकोननामतमनामः ॥१२॥सौंद
र्येणविजृंभितोरतिपतिःशौर्येणचश्रीपतिर्गांभीर्येणसरित्पतिर्विलसता
धैर्येणभूभृत्पतिः ॥ सत्कांत्योडुपतिः श्रियाधनपतिर्यस्तेजसाऽ
हर्पतिस्तेनार्योद्धरणेश्वरेणसुमतिःस्पर्द्धेतकःक्ष्मापतिः ॥ १३ ॥
असावसावाहितसत्प्रतापःस्वसन्निवेशोचितरम्यदेशम् ॥ अध्यास्त
ऋध्यास्तसमस्तशक्रास्पदंपुरंसादरमेकचक्रम् ॥ १४ ॥ राजते
यत्पुररम्यंराजमंडलमंडितम् ॥ कमलोल्लासिसद्रत्नंरत्नाकरविभूति
मत् ॥ १५ ॥ लसद्विलासिनीसिंजन्नूपुरंभातियत्पुरम् ॥ पुरंपुरंद
रस्येवभूरिसुंदरमंदिरम् ॥ १६ ॥ यस्योपकंठेशितिकंठकंठस्पर्द्धि
प्रभाभानुसुतावहंती ॥ तदुत्थवेदध्वनिसन्निकर्षादभ्यस्यतीवाखिलपा
वनत्वम् ॥ १७ ॥ यत्रानिशंसत्रकृतःपवित्राः सत्रास्वगोत्रैर्गृहिणोवसं
ति ॥ यद्धोमधूमःकुरुतेतिभूमाघनाघनैर्मेदुरमंतरिक्षम् ॥ १८ ॥ यत्सौ
धजालेषुनिविश्यरात्रौतद्वासधूपैःपृथुलीकृतांगाः ॥ निर्याणनिर्यत्न
तयाभजंतेनीलांबुदानीलशिलाविलासम् ॥ १९ ॥ यदुच्चसौधध्वज
चैलेजालजातानिलैर्हेलिहयाःसलीलम् ॥ विश्रान्तिमश्रांतमितःश्रयंतः
कुतोपिनःश्रांतिमवाप्नुवंति ॥२०॥ व्यजैषिभूलोकपुरींसुराणांपुरींव्य
जैषिध्वजदंडघातैः ॥ जेष्यामिपातालमितिस्रवंतीविवक्षतीदंप्रतिबिं
बदंभात् ॥ २१ ॥ प्रत्याशमापूरितयाचकाशंमान्यंवदान्यान्वयमत्र
वीक्ष्य ॥ वृंदारकाणांत्रिदिवेपिवृंदैर्मंदारकाणांवसतिर्विगीता ॥ २२ ॥
पुरंशशासैषपुरंदराभस्तदेवचक्राख्यमनेकचक्रः ॥ असंख्यसंख्यारि
जयोर्जिताख्याविख्यातशुष्मोद्धरणःक्षितीशः ॥ २३ ॥ अमुद्रैरपि
यःसततसमुद्रैर्मुद्रितांमहीम् ॥ पालयंस्तन्महीपालःपुरालंकुरुतेपुरम् ॥
॥२४॥ गुणरत्नकराच्चन्द्रश्चंद्रसेनस्ततोभवत् ॥ महामहामहादेवशा
लिमौलिविभूषणः ॥ २५ ॥ यस्यविश्वोपकारायदातुमभ्युद्यतेकरे॥
सशंकेधनदःस्वैरंचकंपेकनकाचलः ॥ २६ ॥ अमनोवृत्तिगम्येनय

१ पुनयानन्दमितिपाठः । २ जालचैल इतिवापाठः ।

स्यदानेनदीव्यता ॥ अर्थिप्रत्यर्थिनोव्युच्चैःप्रापुरेवनदुर्गतिम् ॥ २७॥
यस्यधाटीषुघोटीनांप्रखरंखुरजंरजः ॥चकाराच्छाद्यगगनंदुर्दिनंरिपुमं
दिरे ॥२८॥ यस्याविश्राणनस्योच्चैःश्रवणेननरस्यच ॥सुराःसुरालयंस्व
ल्पमनल्पमपिमेनिरे॥२९॥तस्यात्मजन्माचरितार्थजन्माश्रीसूर्यसेनो
जयतिक्षितींद्रः ॥सुदर्शनेनेवविभर्त्तिगोपीनारायणत्वंभुवियःप्रसिद्धम्
॥ ३० ॥ संतानशोभमानःकविगुरुबुधमित्रमंगलैःसहितः ॥ जिष्णु
र्यदेषयुक्तंश्रितशतकोटिःसुधर्माढ्यः ॥ ३१ ॥ यस्मिन्धारायतिक्षोणि
मेणीदृक्चित्तहारिणि ॥ शेषेपिफणिनामीशेनविशेषाधियोवयम् ॥३२॥
ददतोयस्यपाणिस्थपारिहार्यरवच्छलात् ॥ रमारौतीवसततंराजावि
तरतीतिमाम् ॥ ३३ ॥ द्विषोस्ययत्रावालिभिःपरिधानंप्रकुर्वते ॥
तद्योषितांततोमन्येतच्छून्याः स्तनमंडलाः ॥३४॥ बुधानानंदयन्स
र्वान्राजावसुभिरूर्जितैः॥कथंमौलौमहेशानंनपदंकुरुतेसदा ॥३५॥नि
हत्यशत्रून्निखिलांस्तदीयादेशाःसदावग्रहखिन्नवेषाः ॥ तदंगनानांवन
नादयुक्तैर्नेत्रांबुभिर्येनकृताःसवर्षाः ॥३६॥ समुद्यतेयस्यकरेप्रदातुमा
लोक्यतेह्यत्रमहाद्भिचित्रम् ॥ वनीपकानामवनीपकत्वं वनीपकत्वंत्व
वनीपकानाम् ॥ ३७ ॥ जलेनदिव्येनसदाभिषिक्ताःसिंहासनाभ्याश्र
यिणोनिरस्ताः ॥ श्रीसूर्यसेनेनवनेपिराज्यंकांतातपत्राःकलयंत्यमि
त्राः ॥ ३८ ॥ यत्कीर्त्तिश्चरिकार्त्तिकार्त्तिकशशिश्येनीयमन्यादृशं
धातुःसर्गनिसर्गमित्रकुतुकंस्पर्शादमुष्यायतः ॥ कैलासंतिनगावलंति
मनुजाःक्षीरार्णवंत्यर्णवाश्चक्रायंतिखगाहरंत्यपिसुराःशेषंत्यशेषाहयः
॥ ३९ ॥ चकास्तियस्यातिबलप्रतापःप्रतापसेनोवरजःप्रसिद्धः ॥
भक्त्याभिरामस्यसदाग्रजस्ययोलक्ष्मणाकारमुपैतिभव्यम् ॥४०॥औ
दार्यसौंदर्यदयानयाज्ञाविज्ञानशौर्यादिगुणेषुनान्यम् ॥प्रतापसेनस्यस
मंसमंताल्लोकेविलोकेत्रविचित्रलोके ॥४१॥ श्रीदिवसेनस्तनयोपिगोपी
नारायणस्याजनिकामरूपः ॥ लब्ध्वाप्रसादेनमहेश्वरस्यरामारतिस्तु

१ लब्धप्रसादाशशिखंडमौलेर्नूनम् इतिपाठांतरः।

ष्टिमुपैतियत्र ॥४२॥ देवसेनकुमारस्यकुमारस्यचनान्तरम्॥आर्यानं दकृतोनित्यंबिभ्रतःशक्तिमुत्तमाम् ॥४३॥श्रीसूर्यसेनःपुरमेकचक्रंवरां गमध्यास्यजयत्यजस्रम्॥यमेत्यकांतंजितनाककांतंगुर्वीयमुर्वीचसंदो वरास्ते॥४४॥विद्वत्सुसत्स्वपिमहत्सुसमाश्रितेषुश्रीसिद्धलक्ष्मणसुतः सुतरामसुष्य ॥ श्रीसूर्यसेननृपतेरुपतेजसोभूद्वल्लाटनाथमतिमानाति मानपात्रम् ॥ ४५ ॥ एवंकदापिसुमतिर्नृपतिःस्वनाम्नाश्रौतादिकर्म सुसकालविनिर्णयाय ॥ आदिक्षदक्षपतिसाम्ययशोनिशातशस्त्राहता हितशतःशतमन्युकल्पः ॥ ४६ ॥ अगाधग्रंथपाथोधिमथालोड्याधि यामया ॥ समुद्धृतंनृपादेशात्तेनेदंनिर्णयामृतम् ॥ ४७ ॥ मनुस्मृतिं विष्णुपराशरापस्तंबस्मृतीर्वीक्ष्यमिताक्षरांच ॥ तथापरार्कार्णवपारि जातान्स्मृत्यर्थसारंस्मृतिचंद्रिकांच ॥ ४८ ॥ मात्स्यंकौर्मंचवाराहंह स्त्रावैष्णववामने ॥ मार्कंडेयपुराणंच भविष्योत्तरभारते ॥ ४९ ॥ परिशिष्टंहेमाद्रिमनंतभट्टीयगृह्यपरिशिष्टे ॥ कालादर्शंचिंतामणित्रिदं डींचकृत्यकल्पतरुम् ॥ ५० ॥ धवलपुराणसमुच्चयदुर्गोत्सवराम कौतुकानितथा ॥ संवत्सरप्रदीपंसभोजराजीयदेवदासीयम् ॥ ५१ ॥ रूपनारायणीयंविद्याभट्टपद्धतिंविततताम् ॥ वीक्ष्यमहादेवीयंशुभंनि बंधंचविश्वरूपकृतम् ॥ ५२ ॥ श्रीसूर्यसेननृपतेरादेशात्सिद्धलक्ष्मण तनूजः ॥ वल्लाटनाथसूरिःसंग्रहमिहकालनिर्णयेकृतवान् ॥ ५३ ॥ इतिग्रंथावतारः ॥ ॥ अथानुक्रमणी ॥ ॥ ग्रंथेश्रीसूर्यसेनस्यनि र्णयामृतसंज्ञके ॥ आदावस्मिन्नुदाहारःकथितःप्रथितक्रमः ॥ १ ॥ एकभक्तादिकानांतुव्रतानांतदनंतरम् ॥ निरूपितंस्वरूपंचतत्ति थीनांचनिर्णयः ॥ २ ॥ साधारणेद्वितीयादियुग्मानामथनिर्णयः ॥ प्रतिपन्निर्णयश्चाथसामान्यःसमुदाहृतः ॥ ३ ॥ चैत्रप्रतिपदत्रैवह्व च्छयानंगपूजनम् ॥ मौनव्रतप्रतिपदोनिर्णयस्तद्विधिस्तथा ॥ ४ ॥

१ मुदिताविरास्ते इतिपाठः ।

दीपोत्सवप्रतिपदोनिर्णयःकृत्यमत्रच ॥ अथसिद्धविरुद्धादियोगाः प्रतिपदीरिताः ॥९॥ तत्रकार्यविवर्ज्यादिप्रतिपत्स्वखिलासुच ॥ वह्नेःपूजेतिकथितःप्रतिपन्निर्णयक्रमः ॥ ६ ॥ अथद्वितीयासामान्य निर्णयःसमुदाहृतः ॥ अशून्यशयनाख्येचद्वितीयानिर्णयोव्रते ॥७॥ चैत्रशुक्लद्वितीयायामुमेशाग्निप्रपूजनम् ॥ अथोयमद्वितीयायांयमपूजादिकक्रमः ॥ ८ ॥ अथसिद्धविरुद्धादियोगायेचद्वितीयया ॥ तत्रकार्याणिवर्ज्यानिवेधसश्चप्रपूजनम् ॥ ९ ॥ ततस्तृतीयासामान्य निर्णयस्तदनंतरम् ॥ आंदोलनतृतीयायांविधिश्चैत्रेप्रकीर्त्तितः ॥ ॥ १० ॥ सौभाग्यशयनाख्यंचव्रतंतत्रैवकीर्तितम् ॥ मन्वादिकतिथीनांचवर्णनंतदनन्तरम् ॥ ११॥ अथाक्षय्यतृतीयायानिर्णयःकृत्यमत्रयत् ॥ विधानवर्णनंचात्रश्राद्धदानादिवर्णनम् ॥ १२ ॥ अत्रैवलक्ष्मीसहितविष्णुपूजाततःपरम्॥ज्येष्ठेरंभातृतीयायानिर्णयस्तद्विधिस्तथा ॥१३॥ भाद्रशुक्लतृतीयायांहेमगौरीप्रपूजनम् ॥ माघशुक्लतृतीयायां गुडदानादिकंतथा ॥ १४॥ तथासर्वतृतीयासुगौरीपूजाप्रकीर्त्तिता ॥ ततःसिद्धविरुद्धादिकार्यवर्ज्यादिवर्णनम् ॥ १५॥ ततश्चतुर्थीसामान्य निर्णयःपरिकीर्त्तितः ॥ गणनाथचतुर्थ्याश्चनिर्णयस्तदनंतरम् ॥१६॥ चैत्रेगणेशपूजाचचतुर्थ्यांज्येष्ठमासिच ॥ उमापूजाभाद्रपदेगणेशाभ्यर्चनेविधिः॥१७॥चंद्रदर्शनदोषश्चतत्रतच्छांतिरेवच ॥ अथाश्विनचतुर्थ्यांतुदेवीकेशप्रसाधनम् ॥१८॥माघेकुंभेचतुर्थ्यांतुकुंदपुष्पैःशिवार्चनम् ॥ तत्रैवपार्वतीपूजाविधिर्दानफलादिकम् ॥ १९ ॥ व्रतंवरचतुर्थ्यांतुचातुर्मास्यव्रतंपरम् ॥ नागोपवासःसर्वासुगणेशस्यचपूजनम्॥ ॥२०॥अथसिद्धविरुद्धादिकार्याकार्यनिरूपणम्॥पंचम्यास्त्वथसामान्यनिर्णयःकथितोत्रच ॥ २१ ॥ स्कंदोपवासश्चैत्रेतुपंचम्यांनागपूजनम् ॥ तथाश्रावणपंचम्यांनागलेखप्रपूजनम् ॥ २२ ॥ तत्रैवऋ

१ युगादिवर्णनमितिवापाठः। २ कुंदचतुर्थ्यामितिवापाठः।

षिपूजादिपंचम्यामाश्विनस्यतु ॥ नागपूजासहेंद्राण्यादेव्याश्वस्नपन
क्रिया ॥ २३ ॥ माघशुक्लस्यपंचम्यांकामपूजोत्सवादिके ॥ पंचमी
षुचपूजासुफणीशानांप्रपूजनम् ॥ २४ ॥ तथासिद्धविरुद्धादिकार्या
कार्यविनिर्णयः ॥ अथसामान्यतःषष्ठीनिर्णयःसमुदाहृतः ॥ २५ ॥
आषाढशुक्लषष्ठ्यांचकार्त्तिकेयस्यपूजनम् ॥ भाद्रषष्ठ्यांतुस्नानादि
कार्त्तिकेयावलोकनम् ॥ २६ ॥ तत्रैवसूर्यपूजादिकपिलाषष्ठ्यतः
परम् ॥ कृष्णपक्षेतथाचैवचंद्रषष्ठीव्रतंशुभम् ॥ २७ ॥ आश्विनेशु
क्लषष्ठ्यांतुबिल्ववृक्षनिमंत्रणम् ॥ कार्त्तिकेशुक्लषष्ठ्यांतुप्रोक्तोवह्निम
होत्सवः ॥ २८ ॥ मार्गशीर्षस्यषष्ठ्यांतुस्कंदपूजाप्रकीर्त्तिता ॥ सर्वा
सुचैवषष्ठीषुकार्त्तिकेयस्यपूजनम् ॥२९ ॥ तथासिद्धविरुद्धादिकृत्या
कृत्यविनिश्चयः ॥ अथसामान्यतःप्रोक्तःसप्तम्यास्तुविनिर्णयः ॥३०॥
चैत्रेतत्ररवेःपूजावैशाखेनिंबसप्तमी ॥ तथैवाषाढसप्तम्यांविवस्व
त्पूजनव्रतम् ॥ ३१ ॥ सप्तम्यामाश्विनेमासिपत्रिकायाःप्रवेशनम् ॥
मार्गशीर्षेतथामित्रसप्तम्यांरविपूजनम् ॥ ३२ ॥ अचलासप्तमी
माघेयोगःपद्मकसंज्ञकः ॥ सप्तमीषुचसर्व्वासुपूजनंभास्करस्य
तु ॥३३॥ तथासिद्धविरुद्धादिकार्याकार्यविनिर्णयः ॥ अथाष्टम्यास्तु
सामान्यनिर्णयःपरिकीर्तितः ॥ ३४ ॥ चैत्रेशोकाष्टमीकृत्यंवैशाखे
चाष्टमीव्रतम् ॥ ज्येष्ठाष्टम्यांतथादेवीशिवयोःपूजनंक्रमात् ॥ ३५ ॥
आषाढमासिचाष्टम्यांमहिषघ्न्याःप्रपूजनम् ॥ श्रावणेमासिकृष्णस्यज
न्माष्टम्याविनिर्णयः ॥३६॥ भाद्रेदूर्वाष्टमीशुक्लातथाज्येष्ठाष्टमीविधिः ॥
महालक्ष्मीव्रतंतद्वन्महाष्टम्याविनिर्णयः ॥ ३७ ॥ देवीपूजाविधिश्चा
त्रबलिदानविनिर्णयः ॥ लोहाभिसारिकंकर्ममंत्राश्छत्रादिपूजने ॥३८॥
तथापराजितायाश्चपूजाप्रोक्ताप्रसंगतः ॥ पौषाष्टम्यामीशपूजामाघे
भीष्माष्टमीविधिः ॥ ३९ ॥ फाल्गुनेमासिचाष्टम्यांसीतालक्ष्मीप्रपू
जनम् ॥ बुधाष्टमीनिर्णयश्चसर्वासुशिवपूजनम् ॥ ४० ॥ तथासिद्ध

विरुद्धादिकार्याकार्यविनिर्णयः॥ नवम्यानिर्णयःप्रोक्तःसामान्यस्तदनं
तरम् ॥ ४१ ॥ नवम्यांमासिवैशाखेचंडिकापूजनेविधिः ॥ ज्येष्ठकुमा
रिकापूजात्वाषाढेनवमीद्वये ॥ ४२ ॥ ऐंद्र्याःपूजाश्रावणेतुकौमार्या
नवमीद्वये ॥ भाद्रेतुनंदानवमीशुक्लाकृष्णाप्रबोधिनी ॥ ४३ ॥ नवमी
नंदिनीमार्गेमहानंदातपस्यथ ॥ उक्तासरस्वतीपूजासर्वासुनवमीष्वपि
॥ ४४ ॥ अथसिद्धविरुद्धादिकार्याकार्यविनिर्णयः ॥ अथसामान्यतः
प्रोक्तोदशम्यास्तुविनिर्णयः ॥ ४५ ॥ यमपूजातत्रचैत्रेज्येष्ठेदशहरा
विधिः ॥ विधिर्विजययात्रायादशम्यामाश्विनस्यच ॥ ४६ ॥ दशमी
षुचसर्वासुप्रोक्तापूजांतकस्यच ॥ तथासिद्धविरुद्धादिकार्याकार्यविनि
र्णयः ॥४७॥ एकादशीनिर्णयोथतद्भेदाश्चप्रकीर्त्तिताः॥व्रतानुकल्पा
श्चात्रोक्ताःसूतकादौव्रतक्रमः ॥ ४८ ॥ व्रतस्यान्यनियोगेनकरणेफल
निर्णयः॥चैत्रेतुरुक्मिणीपूजावास्तुपूजाहरेर्दिने ॥४९॥आन्दोलनंचात्र
विष्णोर्निर्जलैकादशीव्रतम् ॥ आषाढशुक्लैकादश्यांविष्णोःप्रस्वापन
क्रमः ॥ ५० ॥ एकादश्यांभाद्रपदेतत्पार्श्वपरिवर्त्तनम् ॥ कार्त्तिके
मासिशुक्लायामेकादश्यांप्रबोधनम् ॥ ५१ ॥ रथयात्रोत्सवश्चैवहरेः
प्रोक्तस्ततःपरम् ॥ मार्गशीर्षादिमासेषुद्वादशैकादशीषुच ॥ ५२ ॥
प्रोक्तःक्रमेणधरणीव्रतदानार्चनेविधिः ॥ शिवपूजासुसर्वासुपक्षयोरुभ
योरपि॥५३॥अथसिद्धविरुद्धादिकार्याकार्यविनिर्णयः॥द्वादशीनिर्णय
श्चाथश्रवणद्वादशीव्रतम् ॥ ५४ ॥ शक्रध्वजोत्थापनंचद्वादश्यां
वत्सपूजनम् ॥ माघेतिलद्वादशीचविष्णुपूजाचसर्वतः ॥ ५५ ॥ तथा
सिद्धविरुद्धादिकार्याकार्यविनिर्णयः ॥ त्रयोदशीनिर्णयोथतथाऽनंगत्र
योदशी ॥ ५६ ॥ त्रयोदशीगजच्छायायमदीपश्चकार्त्तिके ॥ पूजाश
नित्रयोदश्यांप्रदोषेशंकरस्यच ॥ ५७ ॥ तथासिद्धविरुद्धादिकार्या
कार्यविनिर्णयः॥सामान्योऽथचतुर्दश्यानिर्णयश्चैत्रमासिच ॥५८॥ शि
वपूजाचतुर्दश्यांदमनेनतथात्रच ॥ कामनिर्वापणविधिःकथितःक्रीड

नादिभिः ॥ ५९ ॥ हेमधेनुप्रदानंचज्येष्ठेवैशिवतुष्टये ॥ तथानंतव्रतस्यापिनिर्णयःपरिकीर्त्तितः ॥ ६० ॥ तथाप्रेतचतुर्द्दश्याआरटत्यास्तथैवच ॥ शिवरात्रिश्चतुर्द्दश्याःसर्वासुशिवपूजनम् ॥ ६१ ॥ तथासिद्धविरुद्धादिकार्याकार्यविनिर्णयः॥सामान्योऽथसमुद्दिष्टः पौर्णमास्याविनिर्णयः॥६२॥ कृत्यंचैत्रस्यपूर्णायांवैशाख्यांतदनंतरम् ॥ ज्यैष्ठ्यांकृत्यमथाषाढ्यांश्रावण्यांकृत्यमप्यथ ॥ ६३ ॥ उपाकर्मविधिश्चात्रसप्रपंचोनिरूपितः ॥ भाद्रपद्यांपौर्णमास्यांसावित्रीपूजनक्रमः ॥६४॥ तत्रैवलोकपालानांपूजनंपरिकीर्त्तितम् ॥ आश्विन्यांचनिकुंभोपद्रवशांतिरुदाहृता ॥ ६५ ॥ कौमुद्याख्यात्रलक्ष्मींद्रपूजादानंघृतस्यच ॥ कार्त्तिक्यामथदुग्धाब्धिदानंदामोदरार्चनम् ॥ ६६ ॥ वृषोत्सर्गक्रियानीलवृषदानमिहात्रच ॥ मार्गशीर्ष्यांचंद्रपूजाप्रदानंलवणस्यच॥६७॥ अलक्ष्मीनाशनंस्नानादिकंपौष्यामथोदितम् ॥ माघ्यांचतिलपात्रादिदानंश्राद्धंतिलैस्तथा६८॥ होलिकानिर्णयश्चाथपूर्णिमालभ्ययोगकाः॥ स्नानंतीर्थविशेषाणांमहाचैत्र्यादिषूदितम् ॥ ६९ ॥ चंद्रपूजातुसर्वासुपूर्णिमासुसमीरिता ॥ तथासिद्धविरुद्धादिकार्याकार्यविनिर्णयः॥७०॥ व्रतादिषुततःप्रोक्तश्चामासामान्यनिर्णयः ॥ निर्णयोवटसावित्र्याःसुखरात्रेश्चनिर्णयः ॥ ७१ ॥ माघामायांब्रह्मपूजालभ्ययोगास्तथोदिताः ॥ अर्द्धोदयविधिश्चात्रकालभागस्ततःपरम् ॥ ७२ ॥ यागानुष्ठानसिद्ध्यर्थंपर्वद्वयविनिर्णयः ॥ तिथयश्चाप्यनध्यायेमासकृत्यान्यतःपरम् ॥ ७३ ॥ अगस्त्यार्घ्यविधिश्चैवचातुर्मास्यव्रतानिच ॥ निर्णयोव्रतबंधस्यविवाहस्यतथैवच ॥ ७४ ॥ द्विरागमनकालश्चप्रोक्तःप्रकरणेत्विह ॥ ७५ ॥ ॥ इति श्रीसूर्य्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेव्रततिथिनिर्णयप्रकरणस्याद्यानुक्रमणिकासमाप्ता ॥१॥ ॥ अथद्वितीयस्यश्राद्धप्रकरणस्यानुक्रमणिका॥ तत्रादौकथ्यतेश्राद्धविषयामाविनिर्णयः ॥ श्राद्धस्वरूपंतद्भेदाःश्राद्धकालास्ततःपरम् ॥ १ ॥

अष्टकानिर्णयश्चाथमृताहस्यचनिर्णयः ॥ श्राद्धदेशाश्चतत्रोक्तास्त
थैकोद्दिष्टपार्वणे ॥ २ ॥ नियमाश्चतथास्त्रीणांपृथक्श्राद्धविधि
क्रमः ॥ एकस्मिन्नह्न्यनेकेषांश्राद्धानां करणक्रमः ॥ ३ ॥ तथा
शौचाद्यंतरितेश्राद्धेकालांतरक्रमः ॥ आमश्राद्धविधिश्चाथतत्काला
श्चप्रकीर्त्तिताः ॥ ४ ॥ श्राद्धकालास्तथाजीवत्पितृकस्येहकीर्त्तिताः ॥
जीवत्पितामहादेश्चप्रोक्तःश्राद्धविधिस्तथा ॥ ५ ॥ ततश्चाहरहःश्राद्धं
महालयविनिर्णयः ॥ काम्यश्राद्धंततःप्रोक्तंनवश्राद्धान्यतःपरम् ॥ ६ ॥
निर्णयोमासिकानांचसपिंडीकरणंतथा ॥ सपिंडीकरणेस्त्रीणांपतिश्व
श्वादिभिःक्रमात् ॥ ७ ॥ सापिंड्यंक्षत्रियादीनांसंकल्पश्राद्धमेवच ॥
तथाभ्युदयिकंश्राद्धंजीवच्छ्राद्धंततःपरम् ॥ ८ ॥ संक्रांतिनिर्णयश्चा
थमलमासविनिर्णयः ॥ शुक्रगुर्वोस्तथामौढ्यंग्रहणस्याथनिर्णयः ॥
॥ ९ ॥ ॥ इति श्रीसूर्य्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेद्वितीय
स्यश्राद्धप्रकरणस्यानुक्रमणिकासमाप्ता ॥ २ ॥ ॥ अथतृतीयस्य
द्रव्यशुद्धिप्रकरणस्यानुक्रमणिका ॥ ॥द्रव्यप्रकरणेत्वादौश्राद्धीयद्रव्य
संग्रहः ॥ ततोनिषिद्धद्रव्याणिद्रव्यशुद्धिस्ततःपरम् ॥ १ ॥ भूशुद्धि
रत्रप्रथमंपात्रशुद्धिस्ततःपरम् ॥ ततोधान्यादिशुद्धिस्याज्जलशुद्धि
स्तथैवच ॥ २ ॥ वस्त्रादिशुद्धिस्तदनुक्रमेणपरिकीर्त्तिता ॥ अशुद्धेर
पवादश्चद्रव्याणांकथितस्ततः ॥ ३ ॥ ॥ इतितृतीयस्यद्रव्यशुद्धिप्रकर
णस्यानुक्रमणिका ॥ ३ ॥ अथचतुर्थस्याशौचप्रकरणस्यानुक्रमणिका ॥
शावाशौचंतुतत्रादौपाताशौचंततः परम् ॥ ततश्चजननाशौचंषष्ठ्या
दिविधिरत्रच ॥ १ ॥ वयोवस्थाकृताशौचंसर्वसाधारणंततः ॥ दाहा
दिकेषुसंस्कारेष्वधिकारिक्रमस्ततः ॥ २ ॥ नारायणबलिस्तद्वत्सर्प
पूजाक्रमस्ततः ॥ तथान्वारोहणविधिःसंघातमरणेविधिः ॥ ३ ॥
प्रत्यवायोहीनवर्णसंस्कारेषूत्तमस्यच ॥ बीजक्षेत्रविवेकश्चानेकपुत्रक्रि
याक्रमः ॥ ४ ॥ रजस्वलासूतिकयोर्मृतयोःशुद्धिरप्यथ ॥ रजस्वला

याःशुद्धिश्चकालभेदास्तथोदिताः ॥ ५॥ पंचकेषुमृतानांचदोषशांति
रतःपरम् ॥ कालस्तथांगस्पर्शस्यदर्शायातेक्रियाक्रमः ॥ ६ ॥
पुनःसंस्कारकालश्चकथितस्तदनंतरम् ॥ तथावर्णविशेषेणविशेषःसू
तकस्यच॥७॥ दशाहादिकसंख्याचदिनरात्रिविभागतः॥देशभेदास्त
थाशौचेसद्यःशौचादिकंततः ॥८॥ अनुलोमविजातीयसपिंडाशौचम
प्यथ ॥ तथामातामहाचार्याद्याशौचनियमस्ततः ॥ ९ ॥ अनौरसादि
काशौचंनृपाशौचमतःपरम् ॥ सद्यःशौचंराजशिल्पिप्रभृतीनांस्वकर्म
सु ॥ १० ॥ देशांतरमृताशौचंतद्देशांतरलक्षणम् ॥ अस्थिपर्णशरा
देश्चसंस्कारविधिरीरितः ॥ ११ ॥ प्रोषितस्यतथाजीवद्वार्तानाकर्णनेवि
धिः ॥ अथानुगमनाशौचंप्रायश्चित्तंचतत्रयत् ॥ १२ ॥ आशौचसन्नि
पातस्यनिर्णयस्तदनंतरम् ॥ आशौचेकार्यवर्ज्यादिकर्मणोनिर्णयस्त
तः ॥ १३ ॥ ॥ इति श्री० निर्णयामृतेचतुर्थस्याशौचप्रकरणस्याऽ
नुक्रमणिकासमाप्ता ॥ ४ ॥ ॥ अथतिथयोविध्युक्तकर्मानुष्ठानफल
सिद्ध्यर्थंतदंगतयानिर्णीयंते॥अत्यंताप्राप्तप्रापणंहिविधिः ॥तदुक्तम्॥
विधिरत्यंतमप्राप्तौनियमःपाक्षिकेसति ॥ तत्रचान्यत्रचप्राप्तौपरिसं
ख्याविधीयतइति ॥ सचविधिर्वेदवाक्यम् ॥ तस्यचप्रामाण्यंसिद्ध
मेव ॥ तन्मूलत्वात्स्मृतिपुराणानामपिविधित्वेनप्रामाण्यम् ॥ सद्वि
विधः ॥ प्रवर्तकोनिवर्तकश्चेति ॥ तत्रप्रवर्तको यथा ॥ अमावा
स्यायामपराह्णेपिंडपितृयज्ञेनचरंतीति ॥ तथा ॥ दर्शेस्नात्वापितृ
भ्योथदद्यात्कुशतिलोदकम् ॥ अन्नंच विधिवद्दद्यात्संततिस्तेनव
र्द्धतइति ॥ निवर्तकोयथा ॥ अमावास्यायांनाधीयीतनाध्याप
येत् ॥ नछिंद्यादार्द्रदारुनाद्यादन्नंपरस्यचेति ॥ तथा ॥ अमावा
स्यांनगच्छेत्तुप्राप्तकालमपिस्त्रियम् ॥ तैलंचनस्पृशेदामवृक्षादींश्चनछे
दयेदिति ॥ एवमुक्तोभयविधाविध्युक्तकर्मणोधिकरणत्वेनतिथ
योगम् ॥ तदुक्तम् ॥ कालेहिकर्मचोद्यतेनकर्माणिकालइति ॥ तासा

मंगत्वमपिविधिसिद्धमेव ॥ तथाचविधिः ॥ पौर्णमास्यांपौर्णमास्यांयजेत ॥ अमावास्यायाममावास्यायांयजेतेति ॥ गर्गेणाऽप्युक्तम् ॥ तिथिनक्षत्रवारादिसाधनंपुण्यपापयोः ॥ प्रधानगुणभावेननस्वातंत्र्येणतेक्षमाइति॥ अतश्चतिथयोविध्यंगत्वेननिर्णेतव्याः ॥ ननुतिथयोनिर्णेतव्याइत्युक्तम्॥कास्तास्तिथयइतिचेत् ॥ सत्यम् ॥ प्रतिपदाद्याःषोडश तिथयःप्रसिद्धाएव ॥ तत्रत्रिंशन्मुहूर्त्तात्मकेनाहोरात्रेणसूर्यमंडलात्सकाशाच्चंद्रस्यप्रथमकलानिर्गमेशुक्लप्रतिपद्भवति॥द्वितीयाहोरात्रेणद्वितीयकलानिर्गमेद्वितीयाभवति॥ एवंतृतीयादयोद्रष्टव्याः ॥ एवंक्रमेणपंचदशेनाहोरात्रेणपंचदश्याःकलायानिर्गमेसूर्याचंद्रमसोरत्यंतविप्रकर्षात्पूर्णिमाभवति ॥ एवमस्यांपूर्णिमायां संपूर्णमंडलस्येंदोःषोडशेनाहोरात्रेणएकं[1]कलायारविमंडलप्रवेशेकृष्णप्रतिपद्भवति ॥ एवंप्रवेशक्रमेणद्वितीयाद्याविज्ञेयाः ॥ एवंत्रिंशत्तमेनाहोरात्रेणपंचदश्याःकलायाःप्रवेशे सूर्याचंद्रमसोरत्यंतसंनिकर्षादमावास्याभवति ॥ तदुक्तंगोभिलेन ॥ यःपरोविप्रकर्षःसूर्याचंद्रमसोःसापौर्णमासी ॥ यःपरःसंनिकर्षःसामावास्येति ॥ श्रुतिरप्याह ॥ " अहोरात्राणिविदधद्विश्वस्यामिषतोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् " इति ॥ ननुत्रिंशन्मुहूर्त्तात्मकेनाहोरात्रेणेत्युक्तम् ॥ तत्रमुहूर्तस्वरूपंनिरूपणीयम् ॥ सत्यम् ॥ लोकप्रसिद्धौद्वौनिमेषौत्रुटिः ॥ तौद्वौलवः ॥ तौद्वौक्षणः ॥ तेदशकाष्ठा ॥ तास्त्रिंशत्कला ॥ तास्त्रिंशन्मुहूर्त्तइति ॥ तथाचगार्ग्यः ॥ अक्षिपक्ष्मजनिक्षेपोनिमेषःपरिकीर्तितः॥ द्वौनिमेषौत्रुटिर्नामद्वौत्रुटीतुलवःस्मृतः॥ द्वौलवौक्षणइत्युक्तःकाष्ठाप्रोक्तादशक्षणैः ॥ त्रिंशत्काष्ठाःकलाप्रोक्ताकालास्त्रिंशन्मुहूर्तकः ॥ तेतुत्रिंशदहोरात्रइत्याहभगवान्हरिरिति ॥ अस्यप्रमाणंप्रकारांतरेणमहाभारतेनिरूपितम्॥ कर्षेणाभ्यधिकैःषड्भिःपलैस्ताम्रस्यभाजनम्॥ त्रिंशदंगुलिविस्तारमुच्छ्रितंचतुरंगुलम्॥

१ प्रथमकलाया इतिपाठांतरम् ।

स्वर्णमाषेणकृत्वाचचतुरंगुलकंटिकाम् ॥ मध्यभागेतयाविद्धंसानाम घटिकास्मृता ॥ तद्रंध्रेणांभसापात्रंयावत्कालेनपूर्यते ॥ सकालो नाडिकातस्याःषष्टिभागोविनाडिका ॥ नाडीद्वयंमुहूर्त्तस्तुतेपंचद शवासरः ॥ एवंरात्रिस्तथापक्षमासर्त्वयनवत्सराइति ॥ स्वर्णमा षादिमानंचागस्त्येनोक्तम् ॥ यवःस्यात्सर्षपैःषड्भिर्गुंजाचस्थात्रिभिर्य वैः॥गुंजाभिःपंचभिश्चैकोमाषकःपरिकीर्त्तितः ॥ भवेत्षोडशभिर्माषैः सुवर्णस्तैःपुनःस्मृतः ॥ पलंसुवर्णाश्चत्वारःपंचवापरिकीर्तितमिति ॥ कर्षस्तुपलस्यचतुर्थोभागः ॥ सएवसुवर्णोपि ॥तदुक्तंत्रिकांडचाम् ॥ मानंतुलांगुलिप्रस्थैर्गुंजापंचाथमाषकः ॥ तेषोडशाक्षःकर्षोऽस्त्रीपलं कर्षचतुष्टयमिति ॥ नन्वेवमपितिथीनांविध्यंगत्वेनाविधिनैवसिद्धत्वा त्तन्निर्णयस्याप्यप्रयोजकतयानारंभणीयत्वमितिचेत् ॥ सत्यम् ॥ त्रिं शन्मुहूर्त्तात्मकाहोरात्रकालावच्छिन्नानांतिथीनांसंपूर्णत्वेनानिर्णेयत्वे ऽपिन्नृणांधर्माधर्माभ्यांयत्रवृद्धिह्रासौभवतः तत्रैकस्यास्तिथेर्दिन द्वयव्यापित्वेनतत्तिथौविहितंकर्मकुत्रकर्तव्यमिति संदेहेऽवश्यंनिर्णयः कर्त्तव्यइतिसिद्धम् ॥ धर्माधर्मवशात्तिथेर्वृद्धिह्रासौगोभिलेनोक्तौ ॥ खर्वोदर्पस्तथाहिंसात्रिविधंतिथिलक्षणम् ॥धर्माधर्मवशादेवतिथिस्त्रेधा विवर्त्ततइति॥ खर्वःसमतिथिः ॥ यथा ॥ एका तिथिःपूर्वदिनेमध्याह्न व्यापिनी अन्याप्यन्यस्मिन्दिनेतावत्येवेति ॥ तद्योगात्तिथिरपिख र्वइत्युपचारः ॥ दर्पो यथा ॥ एका पूर्वेह्निमध्याह्नादधिकावर्तते ॥ अन्याप्यन्यस्मिँस्तथैवपूर्वतिथेरधिका ॥ हिंसाक्षयः तद्योगात्ति थिरपिहिंसेत्युपचारः ॥ यथा ॥ एका पूर्वदिनेमध्याह्नन्यूनाअन्याप्य न्यस्मिँस्तथैवपूर्वतिथेर्न्यूनेति ॥ ननुतथापिद्वितीयादितिथौविहित स्यकर्मणः पूर्वदिनेपरदिनेवाद्वितीयादिभागएवविधानान्निर्णयोप्रयोज कइतिचेन्न ॥ तैलाभ्यंगादिनिषेधविषयकस्यापूर्वस्यातिथिभागमात्रेसि द्धावपिनित्यनैमित्तिककाम्यरूपविधिजन्यस्यापूर्वस्यासिद्धिः ॥ पूर्ववि

द्धात्वेन परविद्धात्वेन वा पूज्यायामपि तिथौ भवति ॥ तथाचोक्तं वृद्धगार्ग्येण॥ निमित्तकालमादाय वृत्तिर्विधिनिषेधयोः॥ विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके ॥ तिथीनां पूज्यता नाम कर्मानुष्ठानता मता ॥ निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षत इति ॥ ननु पूर्वविद्धात्वेन परविद्धात्वेन च पूज्यायां तिथावित्युक्तं स वेधः कीदृश इति चेत् ॥ उच्यते ॥ सर्वास्तिथयः पक्षद्वयेपि सामान्येन पूर्वया परया च तिथ्या त्रिभिर्मुहूर्तैर्विद्धाः स्युः ॥ तदाह पैठीनसिः ॥ पक्षद्वयेपि तिथयस्तिथिं पूर्वामथोत्तराम् ॥ त्रिभिर्मुहूर्तैर्विध्यंति सामान्योयं विधिः स्मृत इति ॥ नन्वयं वेधविधिस्तिथिसामान्यविषयो न संभवति ॥ तदुक्तं स्कंदपुराणे ॥ नागो द्वादशनाडीभिर्दिक्पंचदशभिस्तथा ॥ भूतोष्टादशनाडीभिर्दूषयत्युत्तरां तिथिमिति ॥ सत्यम् ॥ अयं विशेषवेध उत्तरतिथिविषयः ॥ सामान्यविहितस्तु त्रिमुहूर्तवेधः पूर्वतिथिविषयः ॥ तदुक्तं कूर्मपुराणे ॥ चतुर्दशी पंचमी च तथा च दशमी तिथिः ॥ पूर्वां तिथिं दूषयंति त्रिभिरेव मुहूर्तकैरिति ॥ ननु दशमी पंचदशनाडीभिरेकादशीं विद्ध्यतीत्युक्तम् ॥ तच्च ॥ अरुणोदयकाले तु दशमी यदि दृश्यते ॥ पापमूलं तदा ज्ञेयमेकादश्यामुपोषणम् ॥ तथा ॥ कलार्द्धेनापि विद्धा स्याद्दशम्येकादशी यदा ॥ तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेदिति भविष्यत्पुराणस्मृतिवाक्याभ्यां विरुद्धमिव दृश्यते ॥ सत्यम् ॥ अरुणोदयादिसर्वप्रकारवेधस्तु वैष्णवोपवासविषयः॥ यश्च पंचदशनाडीवेधस्तु वैष्णवव्यतिरिक्तविषयः ॥ तदुक्तं निगमे ॥ सर्वप्रकारवेधोयमुपवासस्य दूषकः ॥ सार्द्धसप्तमुहूर्तस्तु वेधोयं बाधते व्रतमिति ॥ नन्वत्र वाक्ये वैष्णवव्रतव्यतिरिक्तेति यदाश्रयणात्पंचदशनाडीवेधस्य तद्विषयत्वं कुतोवगम्यत इति चेत् ॥ सत्यम् ॥ प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः ॥ उदयस्था सदा पूज्या हरिनक्तव्रते तिथिरिति स्कंदपुराणवचनेन सर्वनक्तव्रतानां प्रदोषव्यापिनीतिथावेव विहितत्वेपि हरिनक्तव्रतस्योदायिकातिथावेव

विधानेनपूज्यत्वमभिहितम् ॥ किमुतोपवासादीनामिति॥अयंचत्रिमुहूर्तादिवेधउदयादूर्ध्वंपूर्वतिथ्या अस्तमयात्प्राक्परतिथ्याचेत्यवगम्यते ॥ कुतोवचनसामर्थ्यात् ॥ सातिथिस्तदहोरात्रंयस्यामभ्युदितोरविः ॥ वर्द्धमानस्यपक्षस्यह्रासेत्वस्तमयस्तिथिः ॥ यांतिथिंसमनुप्राप्यउदयंयातिभास्करः ॥ सातिथिःसकलाज्ञेयास्नानदानजपादिषु॥ उदयन्नेवसवितायांतिथिंप्रतिपद्यते ॥ सातिथिःसकलाज्ञेयादानाध्ययनकर्मसु ॥ सातिथिस्तदहोरात्रंयत्रास्तंयातिभास्करः ॥ उदितेदैविकंभानौपित्र्यंचास्तंगतेरवौ ॥ द्विस्त्रिमुहूर्त्तमह्नोयासातिथिर्हव्यकव्ययोरिति॥अस्यायमर्थः॥उदयाद्विमुहूर्त्तव्यापिन्यांदैविकंकर्म॥अस्तमयात्त्रिमुहूर्त्तव्यापिन्यांपित्र्यंकर्मकार्यमिति ॥ एवंजाबालिविष्णुसुमंतुवचनैरुदयास्तमयव्यापिनीनामेवतिथीनांसामस्त्येनप्राशस्त्याभिधानात्पूर्वापरवेधोप्युदयास्तमयकालीनएवेत्यवसीयते ॥एवंपूर्वापरवेधेनप्रशस्तासुतिथिषुविहितस्यकर्मणः फलातिशयप्रापकत्वात्तदर्थंतिथयोवश्यंनिर्णेतव्याइतिसिद्धम् ॥ ॥इतितिथ्युदाहरणप्रकरणम् ॥ श्रीसूर्यसेनभूभृद्विमलयशःक्षीरसागरादुदिते॥इतिनिर्णयामृतेऽस्मिन्नाद्यउदाहरणनिर्णयोजातः ॥ श्रीमत्पंडितसिद्धलक्ष्मणसुतःश्रीसिद्धलक्ष्मीपदद्वंद्वाराधनसुप्रसिद्धमहिमायःसिद्धसारस्वतः ॥ आदेशादकृतैषसूर्यमहसःश्रीसूर्यसेनप्रभोर्वैधेकर्मणिकालनिर्णयमसावल्लाडनाथः सुधीः ॥ ॥ एवंतिथीनां निर्णयत्वेसिद्धेतासांतिथीनामेकभक्तादिव्रतांगत्वादेकभक्तादिव्रतानांस्वरूपंकालश्चनिरूप्यते॥ ॥तत्रतानिव्रतान्येकभक्तनक्तायाचितोपवासभेदेनचतुर्धाभवंति॥तत्रैकभक्तंनामदिनार्धरूपमध्याह्नादुपरिनियमेनभोजनम् ॥ तदुक्तम् ॥ दिनार्द्धसमयेऽतीतेभुज्यतेनियमेनयत् ॥ एकभक्तमितिप्रोक्तमतस्तत्स्याद्दिवैवहीति ॥ एतच्चैकभक्तव्रतंमध्याह्नव्यापिन्यांतिथौकर्त्तव्यम् ॥ तदुक्तंस्मृतिसंग्रहे॥ मध्याह्नव्यापिनीयास्यादेकभक्तेसदातिथिरिति॥

बौधायनोप्याह ॥ उदयेतूपवासस्यभक्तस्यास्तमयेतिथिःमध्याह्न
व्यापिनीग्राह्याएकभक्तव्रतेतिथिरिति ॥ अत्रमध्याह्नोनामपं
चधाविभक्तस्याह्नस्तृतीयोभागः ॥ विभागक्रमश्चामावास्या
निर्णयेवक्ष्यते ॥ एवंत्रयोदशींघटिकामारभ्याष्टादशींघटिकांया
वत् षड्घटिकात्मकोमध्याह्नस्तत्राप्युत्तरस्मिन्घटिकात्रयेएकभक्तं
कर्त्तव्यम्॥अन्यथादिनार्द्धसमयेऽतीतइतिवचनस्यानर्थक्यंप्रसज्येत॥
एकस्यांचैकभक्ततिथौपूर्वदिनेमध्याह्नव्यापिन्यांसत्यां द्वितीयदिनेम
ध्याह्नपर्यंतंस्थितायामपि तदुत्तरतिथिवृद्धौवृद्धिनाडिकार्द्धसंयोगे
नद्वितीयदिनेपिमध्याह्नव्यापित्वंप्रसज्येत ॥ तथापूर्वदिनेमध्याह्नादुप
रिप्रवृत्तायां द्वितीयदिनेक्षयवशान्मध्याह्नैकदेशव्यापिन्यां परतिथेः
परमह्रासादस्याअपिह्रासनाडिकार्द्धवियोगेनमध्याह्नव्यापित्वंप्रसज्ये
त॥ तदाहलौगाक्षिः॥तिथेःपरस्याघटिकाश्चयाःस्युर्न्यूनास्तथाचाभ्य
धिकाश्चतासाम् ॥ अर्द्धंवियोज्यंचतथाप्रयोज्यंह्रासेचवृद्धौप्रथमेदिने
स्यादिति॥एवंचसतिकुत्रैकभक्तव्रतमितिचेत्सत्यम्॥तस्यामेवमध्या
ह्नव्यापिन्यांकार्यम् ॥अत्रपरतिथिसंबंधिन्योर्ह्रासवृद्ध्योरप्रयोजकत्वा
त् ॥ तथाचोक्तम् ॥ कर्मणो यस्ययःकालस्तत्कालव्यापिनी
तिथिः ॥ तयाकर्माणिकुर्वीतह्रासवृद्धीनकारणमिति ॥ यदातुपूर्वदि
नार्द्धोत्तरघटिकात्रयेस्वल्पंस्पृष्ट्वापरादिनेमध्याह्नादूर्ध्वमप्येकभक्ताति
थिर्व्याप्नोति तदाद्वितीयएवदिनेएकभक्तंकार्यम् ॥ मध्याह्नव्यापिन्या
मेवैकभक्तविधानात् ॥ बहुमुख्यकर्मकालव्यापित्वाच्च तिथिवृद्धौदर्प
त्वाच्च ॥ तथाचोक्तम्॥खर्वदर्पौपरौपूज्यौहिंसास्यात्पूर्वकालिकीति ॥
योयस्यविहितःकालः कर्मणस्तदुपक्रमे ॥ विद्यमानोभवेदंगंनोज्झि
तोपक्रमेणत्विति वचनाच्च ॥ यदापुनर्दिनद्वयेपिमुख्यकर्मणःकालैकदे
शमपिनव्याप्नोति ॥ तदापूर्वैवग्राह्या ॥ मुख्यकालव्यापित्वेपिगौण
कर्मकालस्पर्शनात् ॥ तिथिक्षयेणहिंसात्वाच्च ॥ हिंसास्यात्पूर्वका

लिकीतिवचनात् ॥ यदापुनरेकास्मिन्नपिदिनेकृत्स्नंमध्याह्नंनव्या
प्नोति ॥ किंतुपूर्वस्मिन्नपिदिनेस्वल्पंमध्याह्नंस्पृशति उत्तरस्मिन्न
पिदिनेतावंतमेवतदातिथेःसाम्येनखर्वत्वादुत्तरैवग्राह्या ॥ खर्वदर्पौर
वौपूज्यावित्युक्तत्वात् ॥ यदापुनर्दिनद्वयेपिमध्याह्नव्यापिनीतदायु
ग्मवाक्येननिर्णीयते ॥ तदुक्तंमोक्षेश्वरेण ॥ व्याप्नोतिकर्मकालंया
तिथिर्भवतितिथिद्वये ॥ वेधवाक्येननिर्णीयग्राह्यापूर्वपरापिचेति ॥ अ
यंचनिर्णयःस्वतंत्रैकभक्तविषयः॥अन्यव्रतांगभूतमेकभक्तंतुतत्तिथावे
वकार्यम्॥तथाचोक्तं ॥तिथिर्यथोपवासेस्यादेकभक्तेपिसातिथिरिति॥
तत्तूपवासानुकल्पत्वेनविधीयमानैकभक्तविषयमितिगम्यते ॥ अन्य
थास्मृतिसंग्रहबौधायनवाक्याभ्यांमध्याह्नव्यापिन्यामेवैकभक्तविधा
नाद्विरोधः स्यात् ॥ अस्यचोपवासानुकल्पत्वमेकादशीविषयेकूर्मपु
राणेनिदर्शितम् ॥ यथा॥ एकभक्तेननक्तेनक्षीणवृद्धातुरःक्षपेदिति ॥
॥ ॥ इत्येकभक्ततिथिनिर्णयः ॥ ॥ अथनक्ततिथिनिर्णयः ॥
नक्तंनामाहरशनंवर्जयित्वा रात्रौभोक्तव्यमितिनियमाद्दिवारात्रिव्रतम्
तस्मादेतद्दिवारात्रिव्यापिन्यामेवतिथौकर्त्तव्यम्॥तदुक्तंस्कंदपुराणे॥
दिवारात्रिव्रतंयच्चएकमेवतिथौस्मृतम् तस्यामुभयव्यापिन्यांकुर्या
देवव्रतंव्रती॥ अत्रोभयव्यापिन्यामेवेत्यन्वयः॥कूर्मपुराणेपि ॥ प्रदोष
व्यापिनीयत्रत्रिमुहूर्तादिवायादि ॥तदानक्तव्रतंकुर्यात्स्वाध्यायस्यनिषे
धवदिति ॥ ॥ प्रदोषलक्षणंचतत्रैवोक्तम्॥ ॥ उदयात्प्राक्तनीसंध्या
घटिकात्रयमिष्यते ॥ सायंसंध्यात्रिघटिका अस्तादुपरिभा
स्वतः ॥ प्रदोषस्त्रिमुहूर्त्तःस्याद्रवावस्तंगतेसति ॥ इति ॥ अत्रयदि
कश्चिद्ब्रूयात् ॥ षड्घटिकात्मकेप्रदोषेआद्यंघटिकात्रयंसंध्याकालः ।
तदतिक्रम्योत्तरस्मिन्घटिकात्रये नक्तव्रतनिमित्तंभोजनंकार्यम्॥ सं
ध्यायांभोजननिषेधात्॥ तथाचस्मृतिः॥ चत्वारिमानिकर्माणिसंध्या
यांपरिवर्जयेत् ॥ आहारंमैथुनंनिद्रांस्वाध्यायंचचतुर्थकमिति ॥ संप्र

त्युच्यते॥भोजननिषेधस्यमुख्यसंध्याकालसंबंधेनैववक्तुंशक्यत्वात्॥ गौणत्रिघटिकात्मकसंध्याश्रयणेकारणाभावात् ॥ संध्यानामादिनरात्र्योःसंधौविहितासंध्योपासनादिक्रिया ॥ संधिश्चखंडमार्त्तंडमंडलोपलब्धिसमयः॥तस्यालपत्वात्क्रियायाश्चविततत्वेनतावत्काले कर्त्तुमशक्यत्वान्मुख्यार्थबाधेसति संध्याशब्देनसंधिसंबंधीपूर्वापरोवा क्रियापर्याप्तकालोलक्ष्यते ॥ अतश्चखंडमण्डलोपलब्ध्यादिस्तारकोदयांतोमुख्यःसायंसंध्याकालः । किंचिदलक्ष्यतारकात्सूर्यदर्शनावधिर्मुख्यःप्रातःसंध्याकालइति ॥ यथाचोक्तम्॥ याज्ञवल्क्येन ॥ प्रातःसंध्यां सनक्षत्रांसायंसंध्यांसभास्कराम् इति प्रक्रम्य॥ जपन्नासीतसावित्रींप्रत्यगातारकोदयात् ॥ संध्यांप्राक्प्रातरेवंहितिष्ठेदासूर्यदर्शनात् इति ॥ त्रिघटिकात्मकःसंध्याकालस्तुमुख्यकालेदैवादकृतानांसंध्योपासनादीनांघटिकात्रयपर्यंतंकर्तव्यताभ्यनुज्ञापनार्थं संध्यागर्जितादिनाविहितानध्ययनादिपरश्च ॥नक्तव्रतविहितभोजनंतु नक्षत्रदर्शनएवकर्त्तव्यम् ॥ नक्तभोजनस्यनक्षत्रदर्शनाविधानं भविष्यपुराणेभिहितम् ॥ यथा ॥ मुहूर्त्तोनन्दिनंनक्तंप्रवदंतिमनीषिणः । नक्षत्रदर्शनान्नक्तमहंमन्येगणाधिपेति ॥ अत्रवचनेननक्षत्रदर्शनादिति ल्यब्लोपेपंचमी ॥ अतश्चनक्षत्रदर्शनंप्राप्यनक्तविहितंभोजनंविधेयमित्यर्थः॥ नक्तस्यपूर्वार्द्धेनैवविधानात्॥ ननु यातिथिर्दिवात्रिमुहूर्त्तव्यापिनीप्रदोषव्यापिनीच तस्यांनक्तव्रतंकार्यमित्युक्तम् ॥ यदापुनर्नक्ततिथिः पूर्वदिनेप्रदोषंव्याप्नोति परदिनेऽस्तमयादर्वाचीनांत्रिमुहूर्त्तंव्याप्नोति किंचिद्वास्पृशति तदाकुत्रनक्तव्रतंकार्यमितिचेत्॥ उच्यते॥ पूर्वत्रैवकार्यम्॥ प्रदोषव्यापित्वात् ॥ तदुक्तं जाबालिना ॥ अतःस्युस्तिथयःपुण्याःकर्मानुष्ठानतोदिवा ॥ नक्तव्रतेषुसर्वत्र रात्रियोगःप्रशस्यते इति ॥ एवमेकादशीनक्तव्रतेपिप्रसक्तौ व्यासेनोक्तम्॥ ॥ प्रदोषव्यापिनीग्राह्यासदानक्तव्रतेतिथिः ॥ एकादशीं

विनासर्वाशुक्लाकृष्णाऽपिवासमेति ॥ यदानक्तातिथिःपूर्वापरयोरह्नोः प्रदोषंव्याप्नोति तदापरैवग्राह्या ॥ दिवारात्रिव्यापित्वात् ॥ तदाहजाबालिः ॥ यदिस्यादुभयोरह्नोःप्रदोषव्यापिनीतिथिः ॥ तत्रोत्तरत्र नक्तंस्यादुभयत्रापिसायत "इति ॥ उभयत्रापिदिवारात्रावपीत्यर्थः ॥ यदानक्ततिथिःपूर्वापरयोरह्नोःप्रदोषंनव्याप्नोति तदापिपरैवग्राह्या किंतु दिवैवात्मनश्छायाद्वैगुण्येननक्तंकार्यम् ॥ तदुक्तंस्कन्दपुराणे ॥ "प्रदोषव्यापिनीनस्याद्दिवानक्तंविधीयते ॥ आत्मनोद्विगुणांछायामतिक्रामतिभास्करे ॥ तन्नक्तंनक्तमित्याहुर्ननक्तंनिशिभोजनमिति ॥ ननुनक्तव्रतस्यरात्रौभोजनमनेकवचनविहितम् ॥ आत्मच्छायाद्वैगुण्यभोजनेतद्विरोधइतिचेन्न ॥ विषयविशेषवचनेनसामान्यवचनानांबाधइतिनविरोधः ॥ यदानक्ततिथिःपूर्वदिनेप्रदोषमधिकंस्पृशति परदिनेस्वल्पंस्पृशति तदाप्युत्तरत्रैवस्यात् ॥ दिवारात्रिव्रतत्वेनदिवारात्रिस्पृश्यैवतिथौविधेयत्वात् ॥सौरनक्तव्रतंतुप्रदोषव्यापिन्यामेवतिथौदिवानक्तंकार्यं॥तदाहसुमन्तुः ॥ "त्रिमुहूर्त्तस्पृगेवाह्निनिशिवातावतीतिथिः ॥ तस्यांसौरंचरेन्नक्तमहन्येवतुभोजनम्"इति ॥ कूर्मपुराणेप्युक्तम् ॥ " नरस्यद्विगुणांछायामतिक्रामेद्यदारविः॥ तदा सौरंचरेन्नक्तंनकुर्यान्निशिभोजनम्"इति॥ ॥इतिनक्ततिथिनिर्णयः॥ ॥

अथप्रसंगान्नक्षत्रव्रतकालउच्यते ॥ ॥ सूर्यास्तमयकालव्यापिनिनक्षत्रे नक्षत्रव्रतंकार्यम् ॥ यदाऽत्यंतक्षयगामिनक्षत्रंदिनद्वयेप्यस्तमयकालव्यापिनभवतितदार्द्धरात्रादर्वाक्चंद्रेणयुक्तेनक्षत्रेकायम् ॥ तदुक्तंविष्णुधर्मोत्तरे ॥ "उपोषितव्यंनक्षत्रंयस्मिन्नस्तमियाद्रविः ॥ युज्यतेयत्रवातारानिशीथेशशिनासह "इति ॥ अत्रनिशीथशब्देनार्द्धरात्रादर्वाचीनकालोलक्ष्यते ॥ अन्यथासुमंतुवचनेनविरोधःस्यात् ॥ यदुक्तम्॥"यत्रार्द्धरात्रादर्वाक्तुनक्षत्रंप्राप्यतेतिथौ ॥तन्नक्षत्रेव्रतंकुर्यादतीते पारणंतथा" इति ॥ नक्षत्रोपवासेयातिथिःसैवनक्षत्रविहितनक्तैकभक्त

तंयस्मिन्नभ्यवहरणेतदयाचितंनाम ॥ननु "एकभक्तेननक्तेनतथैवाया
चितेनच " इत्यादिवचनेष्वयाचितस्याभ्यवहारविषयत्वाविशेषदर्श
नात्तद्विषयत्वंकुतोवसीयतइतिचेत् ॥ सत्यम् ॥ शिष्टाचारादेवाभ्य
वहारश्चभक्ष्यभोज्यलेह्यपेयचोष्यभेदेनपंचविधः ॥ तत्र दंतैरवखं
ड्यावखंड्ययन्निगीर्यंते तद्भक्ष्यम् ॥ दंतावखंडनमंतरेणमुखव्यापारेणै
वयन्निगीर्यतेतद्भोज्यम् ॥ लेह्यंनाम जिह्वयागृहीत्वायदंतर्गिल्यते ॥ पे
यंप्रसिद्धंक्षीरादि॥चोष्यंनाम द्रव्यांतर्गतंसाररसंमुखव्यापारेणदंतव्या
पारेणवागृहीत्वायन्निगिल्यतेअसारंत्यज्यते यथाम्रफलेक्षुदंडादि ॥अ
तश्चायाचितमेवान्यप्रार्थनयाभ्यवहरिष्याम्येवेतिप्रातःसंकल्प्यतथा
विधमभ्यवहरणमयाचितव्रतम्॥ अस्यचसामान्यतएकभक्तरूपत्वादे
कभक्तवन्मध्याह्नव्यापिन्यामेवतिथौसतिसंभवेविधेयत्वम् ॥ दिवसेप
रप्रार्थनयाभोजनासंभवेसतिरात्रौवापरप्रार्थनयाभोक्तव्यम् ॥ अन्य
थाभ्यवहरिष्याम्येवेतिसंकल्पभग्नप्रसंगात् ॥ नन्वयाचितस्यैकभक्त
तुल्यत्वेनैकभक्तकालएवविधानात् ॥ तत्रासंभवेतन्नक्रियतएवेतिचे
न्न ॥ कालस्यांगभूतत्वेनांगभूतस्यकालस्यलोपेऽङ्गिनोव्रतस्यलोपा
संभवात् ॥ ननुयत्कर्मयस्मिन्कालेविहितंतस्याप्राप्तौतन्नक्रियतएवे
तिप्रसिद्धविरोधइतिचेत् ॥ सत्यम् ॥ स्वतंत्रकर्मविषयत्वात्प्रसिद्धेः ॥
अयाचितस्यचपराधीनत्वात्॥किंच ॥दैवादंतरितस्योपासनस्यदिनां
तरेविधानदर्शनात् ॥ तथा तन्मासिकृष्णैकादश्यांकुर्यादिंदुक्षयेऽपि
वेत्यतीतस्यप्रत्याब्दिकादेरपिकृष्णैकादश्यादिकालांतरेविधानाच्च ॥
अन्यथादैवादंतरितस्योपासनादेरपि कालांतरेविधानायोग्यत्वादकर
णंप्रसज्येत ॥ क्रियतेचकालांतरइतिशिष्टाचारप्राप्तप्रसिद्धिसद्भावा



चनप्रसिद्धविरोधइतिनकिंचित्कष्टम् ॥ एवमेकभक्तादिव्रतानांखंड
तिथिंविहायखंडतिथावेवोपक्रमसमाप्त्योर्विहितत्वात्खंडाखंडस्वरूपं
निरूप्यतंनिषेधविधीअभिधीयेते ॥ यातिथीरुदयादारभ्यदिनार्द्ध
व्याविनीनस्यात्साखंडातिथिः ॥ तस्यांव्रतानांप्रारंभंसमापनंचनकु
र्यात् ॥ तदाहसत्यव्रतः ॥ उदयस्थातिथिर्याहिनभवेद्दिनमध्यगा ॥
साखंडानव्रतानांस्यात्तत्रारंभःसमापनम् इति ॥ यातिथिरुदयादार
भ्यदिनार्द्धव्यापिनीसात्वखंडा ॥ तस्यांव्रतानामारंभंसमाप्तिंचकुर्या
त् ॥ तदाहबृहद्वसिष्ठः॥ अखंडवर्त्तिमार्तंडाह्यखंडाभवेत्तिथिः॥ व्रत
प्रारंभणंतस्यामनष्टगुरुशुक्रयुगइति ॥ नन्वत्रवचनेसमाप्तिपदाश्रयणा
दत्रसमाप्तिःकर्त्तव्येतिकुतोऽवगम्यतइतिचेत् ॥ सत्यम् ॥खंडतिथौनि
षेधबलादेवाखंडतिथौविधानंप्राप्तम् ॥ भावाभावौविहायतृतीयावस्था
याःक्वचिद्दर्शनात्॥ ॥इति श्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतए
कभक्तादिनिर्णयः ॥ ॥ श्रीसूर्यसेनभूभृद्विमलयशःक्षीरसागरादुदिते॥
श्रीनिर्णयामृतेस्मिञ्शुभैकभक्तादिनिर्णयोजातः ॥ श्रीमत्पंडित
सिद्धलक्ष्मणसुतःश्रीसिद्धलक्ष्मीपदद्वंद्वाराधनसुप्रसिद्धमहिमायाःसि
द्धसारस्वतः ॥ आदेशादकृतैषसूर्यमहसःश्रीसूर्यसेनप्रभोर्वैधेकर्मणि
कालनिर्णयमसावल्लाटनाथःसुधीः॥ ॥अथउपवासादिव्रतसाधारण
युग्मतिथिनिर्णयःप्रस्तूयते ॥ ॥ तत्रशुक्लपक्षेद्वितीयातृतीयायुक्ता
ग्राह्या ॥ तृतीयाचद्वितीयायुक्ता ॥ चतुर्थीपंचम्या ॥ पंचमीचतु
र्थ्या ॥ षष्ठीसप्तम्या ॥ सप्तमीषष्ठ्या ॥ अष्टमीनवम्या ॥ नवम्यष्ट
म्या॥एकादशीद्वादश्या॥ द्वादश्यैकादश्या ॥ चतुर्दशीपौर्णमास्या ॥
पौर्णमासीचतुर्दश्या ॥ अमावास्याप्रतिपदा ॥ प्रतिपदमावास्ययेति॥
तदुक्तंनिगमे ॥ “युग्माग्नियुगभूतानिषण्मुनिर्वसुरंध्रके ॥ रुद्रेणद्वाद
शीयुक्ताचतुर्दश्यातुपूर्णिमा॥ प्रतिपद्यप्यमावास्यातिथ्योर्युग्मंमहत्फ

दतानशुक्लपक्षयुग्मानीतिकथंज्ञायते॥उच्यते॥चतुर्दश्याचपूर्णिमेति प्रतिपद्यमावास्येति च चतुर्दशीपूर्णिमायुग्मसाहचर्यात्प्रतिपदमावास्यायुग्मसाहचर्याच्च॥एतयोःकृष्णपक्षेऽसंभवात् ॥ दशमीएकादशीयुतानवमीयुतावाकार्या ॥ तदुक्तम् ॥ "संपूर्णादशमीकार्यापरयापूर्वयाथवा ॥ युक्तानदूषितायस्मादतःसासर्वतोमुखी ॥ पुराणसमुच्चयेऽपि ॥ संपूर्णादशमीकार्यामिश्रितापूर्वयाथवेइति ॥ अत्रसंपूर्णेति शुक्लपक्षसंबंधिनीत्यर्थः ॥ संपूर्णचंद्रसंबंधात् ॥ पूर्वयाथवेतिपक्षांतरस्वीकारएकादशीव्रतांगभूतदशमीनियमेषुएकादशीयुताकार्य्या[1] ॥ तदसंभवेनवमीयुतावाकार्येत्यर्थः ॥ केवलदशमीसंबंधिव्रतेषुतुप्रायेणनवमीयुताकार्या ॥ तदुक्तमापस्तंबेन ॥ दशमीचप्रकर्त्तव्यासदुर्गाद्विजसत्तमेति ॥ सदुर्गानवमीयुक्ता ॥ शुक्लत्रयोदशीतु द्वादशीयुताकार्या ॥ तदाहसुमंतुः ॥ "त्रयोदशीतुकर्त्तव्या द्वादशीसहितामुने"इति ॥ ननुयुग्मवाक्येएकादशीद्वादश्योरेवयुग्मत्वमुक्त्वाएतद्व्यस्तंमहादोषमित्युक्तत्वाद्दशम्येकादश्योर्द्वादशीत्रयोदश्योश्चयुग्मत्वकथनेतन्नियमवैपरीत्यंस्यादितिचेत् ॥सत्यम् ॥ महादोषत्वकथनमेकादशीद्वादशीविहितकर्माभिप्रायेण नतुदशमीत्रयोदशीविहितकर्माभिप्रायेण॥इदंतुवचनद्वयंदशमीत्रयोदश्योर्विहितकर्माभिप्रेत्यप्रवृत्तमितिनवैपरीत्यम्॥ ॥अथकृष्णपक्षयुग्मानि ॥ ॥तत्र प्रतिपदादिकाविषमातिथिःपरयुताकार्या ॥ द्वितीयादिकासमातिथिः पूर्वयुताकार्या ॥ तदुक्तमापस्तंबेन ॥ प्रतिपत्सद्वितीयास्याद्द्वितीयाप्रतिपद्युता ॥ चतुर्थीसंयुतायाचसातृतीयाफलप्रदा॥पंचमीचप्रकर्त्तव्याषष्ठ्यायुक्तातुनारद ॥ कृष्णपक्षेष्टमीचैवकृष्णपक्षेचतुर्दशी ॥

१ ग्राह्येतिवा ।



पूर्वविद्धातुकर्तव्यापरविद्धानकुत्रचित् ॥ दशमीचैवकर्तव्यासदुर्गा द्विजसत्तम ॥ कृष्णाष्टमी[1]ह्यमावास्याकृष्णपक्षेत्रयोदशी ॥ एताःपर युताःपूज्याः परापूर्वेणसंयुता " इति ॥ अत्रकृष्णपक्षेत्रयोदशीति कृष्णपक्षसंबंधस्त्रयोदश्याएव नतुषष्ठ्यष्टम्योः ॥ तयोपूर्वयुतयो रेववचनसामर्थ्येनोपादानात् ॥ वचनंच ॥ "पंचमीतुप्रकर्त्तव्याप ष्ठ्यायुक्ताचनारद "॥कृष्णपक्षेऽष्टमीत्यादिच॥एकादशीकृष्णपक्षेपि द्वादशीयुतैवकार्या ॥ रुद्रेणद्वादशीयुक्तेत्येतद्युग्मवचनाविरोधिव चनांतराभावात् ॥ एवंतिथीनांयुग्मत्वेनप्राशस्त्येसत्वेकस्मिन्दिने द्वितीयादितिथिद्वयसंभवेद्वितीयादिविहितंकर्म द्वितीयादिभागेएव कार्यम् ॥नतुतृतीयादिभागेइतिचेत्॥ न॥तिथिद्वयभागेपिकर्त्तव्यम्॥ सामान्यवेधस्यत्रिमुहूर्त्तात्मिकत्वात् ॥ त्रिमुहूर्त्तादिकाले इतरव्रता नांशक्यविधानत्वेपिनक्तोपवासयोःकर्त्तुमशक्यत्वात् ॥ ननुतृती यादिविहितनक्तोपवासादपिद्वितीयादिभागमतिक्रम्य तृतीयादिभा गप्रवेशमारभ्यक्रियेतामितिचेत् ॥ मैवम् ॥ व्रतस्यप्रातरेवोपक्रम्य कर्त्तव्यताविधानात् ॥ तदाहदक्षः ॥ "प्रातरारभ्यमतिमान्कुर्या न्नक्तव्रतादिकम् ॥ नापराह्णेनमध्याह्नेपित्र्यकालोदितौस्मृतौइति ॥ अत्रप्रारंभश्चसंकल्परूपः ॥ उक्तंच ॥ आरंभोवरणंयज्ञेसंकल्पोव्र तसत्रयोः ॥ नांदीमुखंविवाहादौश्राद्धेपाकपरिक्रिया"इति ॥ नन्वेवं युगभूतानीतिचतुर्थ्याःपरविद्धत्वेनपूज्यत्वम्॥ पंचम्याःपूर्वविद्धात्वेन पूज्यत्वम्॥अतश्चतुर्थीविहितंकर्मपंचमीविद्धतिथौप्रसक्तम् ॥पंचमीवि हितंकर्मचतुर्थीविद्धतिथौप्रसक्तम् ॥एवंचसतिव्रतद्वयस्यैकस्मिन्दिने कर्तव्यत्वेप्रातेकथंविधानम् ॥एकेनप्रातरारभ्यैकभक्तनक्तादिरूपद्वय स्यकर्तुमशक्यत्वात् ॥ उत्तरम् ॥ कर्तृभेदेनकर्तुंशक्यत्वान्ना नुपपत्तिः ॥ एकेनारब्धेव्रतद्वयेतादितरस्यकर्तृत्वाभावात्कर्तृभेदे

१ षष्ठचष्टमीतिपाठः ।

नकर्त्तुंशक्यत इत्यसंगतामितिचेन्न ॥ कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् इतिविधानोदकभक्तायाचितोपवासादिषुभार्यादिनियोगाद्विधानमुपपद्यते ॥ देवार्चनादिनियमस्वरूपव्रतादिष्वेकेनैवकर्तुंशक्यत्वान्नानुपपत्तिः ॥ नन्वेवंतिथिद्वयविहितस्य स्नानाद्याह्निकस्यापिद्विविधानंप्रसज्येत ॥ मैवम् ॥ तिथिद्वयमेकेनकर्त्तुंशक्यंव्रतद्वयमेवपृथक्कुर्यात् ॥ तदुक्तंमरीचिना ॥ तिथिद्वयोदितंयत्तुव्रतंतत्पृथगाचरेत् ॥ तिथ्योर्द्वैधेतुस्नानादि सकृदाह्निकमाचरेत् इति ॥ अतस्तिथिद्वयभागेपिनक्तादिव्रतंकुर्यादितिसिद्धम् ॥ नन्वेवंयुग्मतिथीनामेवंपूर्वपरविद्धतयाप्राशस्त्येसति ॥ वर्द्धमानस्यपक्षस्यसोदयापूज्यतेतिथिः ॥ यदापक्षक्षयंयातितदास्यादापराह्निकी ॥ तथा ॥ त्रिमुहूर्त्तापिकर्त्तव्यायातिथिर्वृद्धिगामिनी ॥ षण्मुहूर्तानकर्त्तव्यायातिथिःक्षयगामिनी इतिचबौधायनषट्त्रिंशन्मतवाक्याभ्यांतिथीनांक्षयवृद्धिभ्यांपूज्यत्वमुक्तम् ॥ शुक्लपक्षेतिथिर्ग्राह्यायस्यामभ्युदितोरविः ॥ कृष्णपक्षेतिथिर्ग्राह्यायस्यामस्तमितोरविः ॥ इत्यत्रापिवाक्येशुक्लपक्षकृष्णपक्षपदाभ्यांवृद्धिक्षयावेवलक्ष्येते ॥ तदुक्तम् ॥ शुक्लपक्षेहिचंद्रस्यवृद्धिर्भवतिभास्करात् ॥ कृष्णपक्षेक्षयस्ताभ्यांतिथीनामपितौखलु इति ॥ अतश्चशुक्लपक्षकृष्णपक्षपदयोर्वृद्धिक्षयोपलक्षकत्वादनेनशंखवचनेनापिवृद्धिक्षयाभ्यामेवतिथीनांपूज्यत्वमुक्तम् ॥ तच्चव्यर्थंस्यादितिचेत् ॥ मैवम् ॥ विषयभेदादुपपत्तेः ॥ युग्मादिवाक्यस्यव्रतादिविषयत्वाद्वृद्धिह्रासयोः प्रत्याब्दिकादिविषयत्वात् ॥ तथाचनिगमे ॥ द्वितीयादिकयुग्मानां पूज्यतानियमादिषु ॥ एकोद्दिष्टाब्दवृद्ध्यादौवृद्धिह्रासादिचोदनेति ॥ नियमादिषुव्रतादिष्वित्यर्थः ॥ ब्रह्मवैवर्त्तेऽपि ॥ तिथिह्रासादियुग्मानां वृद्धिह्रासविधिःसदा ॥ व्रत

श्राद्धविभागेनविज्ञातव्याव्यवस्थितिरिति ॥ अतश्चद्वितीयादिक युग्मतयापूज्यासुतिथिषुव्रतादिकंकर्त्तव्यम् ॥ तिथिक्षयवृद्धिभ्यांपूज्यास्वेकोद्दिष्टाब्दिकादिकर्तव्यमितिव्यवस्थासुस्था ॥ ॥ इति श्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेसामान्यतिथिनिर्णयप्रकरणम् ॥ ॥ श्रीसूर्यसेनभूभृद्विमलयशःक्षीरसागराद्रुदिते ॥ इतिनिर्णयामृतेऽस्मिंस्तिथिसामान्यस्यनिर्णयोयमभूत् ॥ श्रीमत्पंडितसिद्धलक्ष्मणसुतःश्रीसिद्धलक्ष्मीपदद्वंद्वाराधनसुप्रसिद्धमहिमायःसिद्धसारस्वतः ॥ आदेशादकृतैषसूर्यमहसःश्रीसूर्यसेनप्रभोर्वैधेकर्मणिकालनिर्णयमसावल्लाटनाथःसुधीः ॥ ॥ अथप्रतिपदादिविशेषतिथिनिर्णयःप्रारभ्यते ॥ ॥ तत्रनिर्णयोनामविप्रतिपन्नानांवाक्यानांपरस्परविरोधपरिहारः ॥ तदेवतत्त्वदर्शनमुच्यते ॥ तदुक्तम् ॥ तत्त्वेविप्रतिपन्नानांवाक्यानामितरेतरम् ॥ विरोधपरिहारोत्रनिर्णयस्तत्त्वदर्शनम् इति ॥ तत्रप्रथमंप्रतिपन्निर्णीयते ॥ अस्याश्चनिरुक्तिर्भविष्योत्तरेप्रोक्ता ॥ यथा ॥ तिथीनां प्रवरायस्माद्ब्रह्मणा समुदाहृता ॥ प्रतिपद्यपरेपूर्वेप्रतिपत्तेनसोच्यते इति ॥ शुक्लप्रतिपदमावास्यायुतैवग्राह्या ॥ तदुक्तं युग्मवाक्ये ॥ प्रतिपद्यप्यमावास्या इति ॥ पैठीनसिनाप्युक्तम् ॥ पंचमीसप्तमीचैवदशमीचत्रयोदशी ॥ प्रतिपन्नवमीचैवकर्तव्यासंमुखी तिथिरिति ॥ संमुखीसायाह्नव्यापिनी ॥ वृद्धवसिष्ठोपि ॥ द्वितीया पंचमीवेधाद्दशमीचत्रयोदशी॥चतुर्दशीचोपवासेहन्युः पूर्वोत्तरेतिथी॥ उपवासेसप्तमीतुवेधाद्धंत्युत्तरंदिनम् इति ॥ द्वितीयापंचमीदशमीत्रयोदशीचतुर्दश्यःस्ववेधादुपवासादिविषयेस्वस्मात्पूर्वामुत्तरांचतिथिंहन्युः ॥ सप्तमीतुस्ववेधादुत्तरामेवतिथिंहंतीत्यर्थः ॥ एतेनप्रतिपत्तृतीयाचद्वितीयाविद्धानोपोष्यत इति लभ्यते ॥ एवंचतुर्थीषष्ठीचपंचमीयुतानोपोष्यते ॥ नवम्येकादशीचदशमीयुतानोपोष्यते ॥ द्वादशीचतुर्दशीचत्रयोदशीयुतानोपोष्यते ॥ त्रयोदशीपूर्णि

मामावास्याश्चतुर्दशीयुतानोपोष्यन्ते ॥ नन्वेवंसतिप्रतिपत्सद्वितीया स्यादित्यापस्तंबवचनविरोधःस्यादितिचेन्न ॥आपस्तंबवचनस्यतिल काशोककरवीरव्रतविषयत्वात्॥ ननुचतुर्थीषष्ठ्योः पंचमीवेधानिषेधेऽ पियुग्मभूतानीतिनिगमवचनविरोधइतिचेत्॥ मैवम् ॥ युग्मवचनस्य गणेशचतुर्थ्यव्यतिरिक्तविषयत्वात् ॥ पंचमीवेधनिषेधस्यगणेशव्रत विषयत्वादित्यविरोधः॥ नन्वत्रवाक्येचतुर्दशीस्ववेधात्पूर्वांत्रयोदशीं परांपूर्णिमांचहंतीत्युक्तम् ॥ तत्तु षष्ठ्यष्टमीअमावास्याकृष्णप क्षेत्रयोदशी ॥ एताःपरयुताःपूज्याःपरापूर्वेणसंयुता ॥ इत्यापस्तंबवच नेनचतुर्दश्याचपूर्णिमेतियुग्मवचनेनचविरुध्येतेतिचेत्॥ मैवम्॥आप स्तंबवचनस्यकृष्णत्रयोदशीविषयत्वात् ॥ निषेधस्यशुक्लत्रयोदशी विषयत्वादित्यविरोधः ॥ युग्मवाक्यस्यचवटसावित्रीव्रतव्यतिरिक्त व्रतविषयत्वादित्यविरोधः॥ ननुसप्तमीस्ववेधादष्टमींहंतीत्युक्तम् ॥त दपि॥कृष्णपक्षेष्टमीचैवकृष्णपक्षेचतुर्दशी ॥ पूर्वविद्धाप्रकर्त्तव्यापरवि द्धानकुत्रचित्॥इत्यापस्तंबवचनेनविरुद्धमितिचेन्न ॥ निषेधवाक्यस्य शुक्लाष्टमीविषयत्वात् ॥ एवंवृद्धवसिष्ठवाक्यस्यनिगमादिवाक्यैर्विरो धः परिहृतः ॥ अन्यान्यप्येवंविधविरुद्धवाक्यान्युक्तविषयेष्वेवव्यव स्थापनीयानि ॥ ॥ इतिप्रतिपत्सामान्यनिर्णयः ॥ ॥ अथविशेष निर्णयः ॥ ॥ तत्रचैत्रकृष्णप्रतिपदिपूर्वविद्धायांनीराजनादिकर्मकर्त्त व्यम्॥अस्यचहोलिकानंतरकर्त्तव्यत्वाद्धोलिकायाश्चपूर्वविद्धायाएवप्र शस्तत्वादेतदपिपूर्वविद्धायामेवेत्यवसीयते ॥ अत्रप्रतिपदिप्रातरुत्था यश्वपचंस्पृष्ट्वा[1]स्नानंकुर्यात् ॥ ततोहोलिकाविभूतिंवंदित्वागोमहिषी बालकादीनलंकृत्यतोरणाधोनयेत्॥तदुक्तंभविष्योत्तरे॥चैत्रेमासिमहा बाहोपुण्यप्रतिपदापरा ॥यस्तस्यांश्वपचंस्पृष्ट्वा[2]स्नानंकुर्यान्नरोत्तमः ॥ नतस्यदुरितंकिंचिन्नाधयोव्याधयोनृप ॥ भवंतिकुरुशार्दूलतस्मा

१ दृष्ट्वेतिपाठः। २ दृष्ट्वेत्येवपाठांतरम्।

त्स्नानंसमाचरेत् ॥ दिव्यंनीराजनंतद्धिसर्वरोगविनाशनमिति ॥ तथा॥ प्रवृत्तेमधुमासेतुप्रतिपद्युदितेरवौ ॥ कृत्वाचावश्यकार्याणिसं तर्प्यपितृदेवताः॥ वंदयेद्धोलिकाभूतिंसर्वदुष्टोपशांतये॥ विभूतिवंदन मंत्रः॥ वंदितासिसुरेंद्रेणब्रह्मणाशंकरेणच ॥ अतस्त्वंपाहिनोदेविविभूते भूतिदाभवेति ॥ तथाच ॥ गोमहिष्यादियत्किंचित्तत्सर्वंभूषयेन्नृपः ॥ चूर्णवस्त्रादिभिःसर्वैस्तोरणाधस्ततोनयेदिति ॥ अत्रैवकृत्यांतरमाह ॥ गोमयेनोपलिप्तेचतुष्कैश्चार्चितेगृहांगणेशुक्लवस्त्राच्छादितेशुभआसने प्राङ्मुखउपविष्टोब्राह्मणैःकृतस्वस्त्ययनः मंगलद्रव्यान्वितस्थालह स्तयासुलक्षणयासुवासिन्याकृतचंदनातिलकनीराजनादिमंगलःसचंद नमाम्रमुकुलंप्राश्नीयात् ॥ एषाचहृच्छयकामपूजाक्रियतेजनैरिति ॥ तदुक्तंयुधिष्ठिरंप्रतिकृष्णेन ॥ यत्पिबन्तिवसंताद्येचूतपुष्पंसचंदनम् ॥ सत्यंहृत्स्थस्यकामस्यपूजनंक्रियतेजनैरिति ॥वसंताद्येचैत्रकृष्णप्रति पदीत्यर्थः॥ पुराणसमुच्चयेप्युक्तम् ॥ वृत्तेतुषारसमयेसितपंचदश्यां प्रातर्वसंतसमयेसमुपस्थितेच ॥ संप्राश्यचूतकुसुमंसहचंदनेनसत्यं हिपार्थपुरुषोथसमांसुखीस्यात्॥ समांसंपूर्णसंवत्सरइत्यर्थः ॥ काला ध्वनोरत्यंतसंयोगेइति द्वितीया ॥ प्राशनमंत्रश्च॥चूतमग्र्यंवसंतस्यमा कंदकुसुमंतव ॥ सचंदनंपिबाम्यद्यसर्वकमार्थसिद्धयइति॥ततःप्रातर्द्वि तीयायांपुत्रमित्रादिसंयुतः॥ नृपतिर्वितते देशेवितानवरशोभिते॥सर्व तश्चसमाकीर्णेरत्नकंबलशोभिते ॥ उपविश्यासनेरम्येपौरजानपदैः सह॥सिंदूरकुंकुमक्षोदपट्टवासैः सचंदनैः॥विकीर्यलोकांस्तांबूलैःसंमा न्यचपृथक्पृथक्॥नृत्यगीतविनोदैश्चकुर्यात्काममहोत्सवम्॥एवंकुर्वन्न वाप्नोतियावत्संवत्सरंसुखमिति ॥ ॥ इतिचैत्रप्रतिपन्निर्णयः ॥ ॥ अथभाद्रपदशुक्लप्रतिपत् ॥ ॥ तत्रमहत्तमाख्यंशिवव्रतंकार्यं तदेवमौ नव्रतमित्युच्यते ॥ तदुक्तंस्कंदपुराणे ॥ नंदिकेश्वरउवाच ॥ देवकेन विधानेनव्रतपुण्यंमहत्तमम्॥कस्यांतिथौप्रकर्त्तव्यंविधानंतद्वदस्वमे ॥

॥ स्कंद उवाच ॥ मासिभाद्रपदेशुक्लेपक्षेचप्रतिपत्तिथौ ॥ नैवेद्यंतुपचे न्मौनात्षोडशत्रिगुणानिच॥फलानिपिष्टपक्वानिदद्याद्विप्रायषोडश ॥ देवायषोडशैतानिदातव्यानिप्रयत्नतः ॥ भुज्यंतेषोडशतथाव्रतस्य नियमाश्रयादित्यादि ॥ इदंचव्रतंपूर्वविद्धायामेवकर्तव्यं रुद्रव्रत त्वात् ॥ तदुक्तंब्रह्मवैवर्ते ॥ रुद्रव्रतेषुसर्वेषुकर्त्तव्यासंमुखीतिथिरिति ॥ ॥इतिभाद्रप्रतिपन्निर्णयः॥ ॥ अथकार्त्तिकशुक्लप्रतिपत् ॥ ॥ साचति थिक्षयेगोक्रीडादौपूर्वयुतैवकार्या॥ तिथिवृद्धौतूदयव्यापिनीग्राह्या ॥ तदुक्तंपुराणसमुच्चये ॥ " वर्द्धमानेतिथौनंदायदासार्धत्रियामिका ॥ द्वितीयावृद्धिगामित्वादुत्तरातत्रचोच्यत इति ॥ तथाचोक्तम् ॥ त्रियामगादर्शतिथिर्भवेच्चेत्सार्धत्रियामाप्रतिपद्विवृद्धौ ॥ दीपोत्स वेतेमुनिभिःप्रदिष्टेअतोन्यथापूर्वयुतेविधेयेइति ॥ ननु पूर्वविद्धाप्रकर्त व्याशिवरात्रिर्बलेर्दिनमिति ॥ तथा ॥ याकुहूः प्रतिपन्मिश्रातत्रगाःपू जयेन्नृप ॥ पूजनात्रीणिवर्धंतेप्रजागावोमहीपतिरितिच ॥ पूर्वयुता याएवविधानात् ॥ तथाच ॥ नंदायादर्शनेरक्षाबलिदानंदशासुवा॥ भद्रायांगोकुलक्रीडासदेशोवैविनश्यतीति ॥ भद्रायांद्वितीयायाम् ॥ ॥ देवलोपि ॥ प्रतिपद्दर्शसंयोगेक्रीडनंतुगवांमतम् ॥ परविद्धेषुयः कुर्यात्पुत्रदारधनक्षयइति ॥ तथा ॥ प्रतिपद्यग्निकरणंद्वितीयायां तुगोर्चनम् ॥ छत्रच्छेदंकरिष्येतेवित्तनाशंकुलक्षयमित्यादिवाक्यैःप रविद्धानिषेधाच्च वर्धमानतिथौनंदेतित्रियामगादर्शतिथिरितिचवाक्या भ्यांविरोधःस्यादितिचेत्सत्यं ॥ यस्यांप्रतिपादिद्वितीयायुक्तायांचंद्रद र्शनंसंभाव्यतेतद्विषयत्वान्निषेधवाक्यानामितिनविरोधः ॥ प्रतिपद्यप राह्णात्मकत्रिमुहूर्तव्यापिन्यांद्वितीयायांचंद्रदर्शनंसंभाव्यते ॥तदुक्तम न्वाधानविषयेवृद्धशातातपेन ॥ द्वितीयात्रिमुहूर्ताचेत्प्रतिपद्याप राह्णिकी ॥ अन्वाधानंचतुर्दश्यांपरतःसोमदर्शनादिति ॥ अपराह्णश्च पंचधाविभक्तस्याह्नश्चतुर्थोभागः ॥ अतश्चयत्रप्रतिपदिषण्मुहूर्तव्या

पिनीद्वितीयातत्रचंद्रदर्शनसंभवाद्गोक्रीडनंनकार्यम् ॥ तदुक्तं पुराणसमुच्चये ॥ गवांक्रीडादिनेयत्ररात्रौदृश्येतचंद्रमाः ॥ सोमो राजापशून्हंतिसुरभिःपूजकांस्तथेति ॥ चंद्रदर्शनेतुद्वितीयायुते वतिथेर्वृद्धगामित्वाद्ग्राह्या ॥ किंच ॥ सार्धत्रियामाप्रतिपद्विवृद्धा वित्यत्रप्रतिपदःसार्धत्रियामव्यापित्वेनद्वितीयावेधोपिनसंभवति ॥ वे धस्यत्रिमुहूर्तात्मकत्वात् ॥ तिथिवृद्धौपूर्वविद्धानिषेधाच्चपरविद्धा प्राप्तिः ॥ तदुक्तंभविष्योत्तरे ॥ यथाद्वादशभिर्मासैर्मासोवृद्धो मलिम्लुचः॥तथैवाहोरात्रवृद्धातिथिःप्रोक्तामलिम्लुचा॥यथामलिम्लु चः पूर्वोमासोदैवस्तथोत्तरः ॥ त्याज्यातिथिस्तथापूर्वाग्राह्याचैवतथो त्तरेति ॥ सर्वथाद्वितीयास्पर्शनिषेधाग्रहस्तुनयुक्तः ॥ तादृशवा क्यश्रवणात् ॥ चंद्रोदयेतुतत्रैवपूजयेत्सुरभीःसदेत्यादिवाक्यानर्थ क्याप्रसंगाच्चातश्चंद्रदर्शनासंभावनायांपूर्वाह्णेक्रीडनं गवामितिकर्मका लव्यापित्वात्तिथिवृद्धौपरैवप्रतिपद्गोक्रीडादौग्राह्येतिसर्वमनवद्यम् ॥

॥ अथात्रकृत्यमुच्यते ॥ ॥अत्रप्रातरेवगोवर्धनपूजाकार्या ॥ गाव श्चालंकृत्यपूज्याः ॥ वाहनदोहनेवर्जयेत् ॥ तदुक्तंस्कन्दपुराणे ॥ प्रातर्गोवर्धनःपूज्योद्यूतंचापिसमाचरेत् ॥ भूषणीयस्तथागावः पूज्याश्चावाहदोहनादिति ॥ गोवर्धनपूजामंत्रः ॥ गोवर्ध नधराधारगोकुलत्राणकारण ॥ बहुबाहुकृतच्छायगवांकोटिप्रदो भव ॥ गोपूजामंत्रौच ॥ लक्ष्मीर्यालोकपालानांधेनुरूपेणसं स्थिता॥घृतंवहतिसंज्ञार्थंममपापंव्यपोहतु ॥अग्रतःसंतुमेगावोगावोमे संतुपृष्ठतः॥गावोमेहृदये संतु गवांमध्येवसाम्यहमिति॥अत्रैवापराह्णेपू र्वस्यांदिशिस्तंभवृक्षादिषुकुशकाशनिर्मितांमार्गपालींनिबध्यतस्या अधस्तलेनसर्वैर्वर्णैर्गच्छेयुः ॥ तदुक्तंस्कन्दपुराणे ॥ ततोपराह्णसमये पूर्वस्यांदिशिभारत॥मार्गपालींप्रबध्नीयात्तुंगस्तंभेचपादपे॥कुशकाश मयींदिव्यांलंबकैर्बहुभिर्वृताम् ॥ कृतेहोमेद्विजेंद्रैस्तुबध्नीयान्मार्गपालि

काम्॥नमस्कारंततःकुर्यान्मंत्रेणानेनसुव्रत ॥मार्गपालिनमस्तेस्तुसर्वं लोकसुखप्रदे ॥ विधेयैःपुत्रदाराद्यैःपुनरेहिव्रतस्यमे॥नीराजनंचतत्रैव कार्यंराष्ट्रजयप्रदम्॥मार्गपालीतलेनेत्थंयांतिगावोगजावृषाः ॥ राजानो राजपुत्राश्चब्राह्मणाःशूद्रजातयः ॥मार्गपालींसमुल्लंघ्यनीरुजःस्युःसुखा न्विताइति॥अथतत्रैवचवष्टिकाकर्षणमपिकार्यम्॥ तदुक्तमादित्यपुरा णे॥कुशकाशमयींकुर्याद्वष्टिकांसुदृढांनवाम्॥तामेकतोराजपुत्राहीनव र्णास्तथान्यतः ॥गृहीत्वाकर्षयेयुस्तांयथासारंमुहुर्मुहुः॥जयेत्रहीनजा तीनांजयोराज्ञस्तुवत्सरम्॥जयचिह्नमिदंराजाविदधीतप्रयत्नतइति ॥ अथतत्रैवरात्रौराजास्वसदनस्यांतेपंचरंगकैर्वक्ष्यमाणलक्षणंबलिमालि ख्यसपरिवारःषोडशोपचारैर्बलिंपूजयित्वातत्प्रीत्यर्थंयथाशक्तिदानंद द्यात्तद्दानमक्षयफलंभवति ॥ पौराश्चस्वस्वगृहेशय्यायांतंडुलैर्बलिमा लिख्यपूजयेयुः॥तदुक्तंस्कंदपुराणे ॥ कृत्वैतत्सर्वमेवेहरात्रौदैत्यपतेर्ब लेः॥पूजांकृत्वानृपःसाक्षाद्भूमौमंडलकेशुभे ॥बलिमालिख्यदैत्येंद्रंवर्ण कैः पंचरंगकैः॥सर्वाभरणसंपूर्णंविंध्यावल्यासहान्वितम्॥कूष्मांडबाण जंभोरुमयदानवसंवृतम्॥संपूर्णहृष्टवदनंकिरीटोत्करसंकुलम् ॥ द्विभु जंदैत्यराजानंकारयित्वानृपःस्वयम्॥गृहस्यमध्येशालायांविशालायां ततोऽर्चयेत्॥लोकैश्चापिगृहस्यांतःशय्यायांशुक्लतण्डुलैः॥संस्थाप्यब लिराजानंफलैःपुष्पैश्चपूजयेत्॥बलिराजनमस्तुभ्यंविरोचनसुतप्रभो॥ भविष्येन्द्रसुराराते पूजामेप्रतिगृह्यताम् ॥ इतिपूजामंत्रः ॥ बलिमु द्दिश्यदीयंतेदानानिकुरुनंदन ॥यानितान्यक्षयान्याहुर्मयैवंसंप्रदर्शित म्॥यदस्यांदीयतेदानंस्वल्पंवायदिवाबहु ॥तदक्षयंभवेत्सर्वंविष्णोःप्री तिकरंपरमिति ॥ ॥ इतिदीपोत्सवप्रतिपन्निर्णयः ॥ ॥ अन्यमासप्र तिपत्सुकश्चिद्व्रतादिविशेषोनप्रसिद्धः ॥ यदिक्वचित्स्यात्तदासोऽपि युग्मवाक्येनपूर्वविद्धायामेवकार्यः॥नक्तादिव्रतविशेषेतुतत्तत्कालव्या पिनीग्राह्येतिसिद्धांतः॥ ॥ अत्रप्रासंगिकंकिंचिल्लिख्यते॥ ॥इयंप्रतिप

च्छुक्रवारेणयुक्तासिद्धोच्यते ॥ तदुक्तम् ॥ शुक्रेणप्रतिपत्षष्ठीएका
दश्यात्रयोदशी ॥ सिद्धाभाग्योत्तराषाढाहस्तश्रवणरेवतीइति ॥ अत्र
सर्वाणिशुभकर्माणिकार्याणि॥इयंभौमवासरेणबुधवारेणचविरुद्धा॥ त
दुक्तम् ॥ कुजेतुवैश्वदेवार्द्राप्रतिपत्पूर्वभाद्रपात्॥वारुणंवसुदेवंचपूर्णया
सहवर्जयेदिति॥तथा ॥ बुधेधनिष्ठाभरणीदस्रेमूलसमन्विता ॥ तृतीया
नवमीप्रतिपद्रेवतीभिर्विवर्जयेदिति ॥ ॥ सामान्यतःसर्वास्वपिप्रति
दादितिथिष्वग्न्यादयस्तिथिपाःस्वतिथौपूज्याः ॥ तिथयश्चरत्नमाला
यामुक्ताः॥वह्निर्विरिंचोगिरिजागणेशः फणीविशाखोदिनकृन्महेशः ॥
दुर्गांतकोविष्णुहरिस्मराश्चशर्वःशशीचेतिपुराणदृष्टाइति ॥कालादर्शे
पि ॥ अग्निंविरिंचिंगौरींश्चगणेशंफणिनंगुहम् ॥ सूर्यंशंभुंसरस्वतींयम
मीशंहरिंस्मरम्॥ शिवंचंद्रंचप्रतिपदाद्यासुतिथिषुक्रमात्॥ शुक्लेकृष्णे
पिवापक्षेविधिकृत्परिपूजयेदिति ॥ रत्नमालायामेकादशीद्वादश्योर्वि
ष्णुवदेवतोक्ता ॥ अत्रत्वेकादश्याःशिवोद्वादश्याविष्णुरितीयान्भेदः॥
अतश्चसर्वमासपक्षद्वयगतासुचतुर्विंशतिसंख्यास्वपिप्रतिपत्सुतिथि
पत्वेनवह्निपूजासर्वोपचारैरवश्यंकार्या॥तदुक्तंवह्निपुराणे॥ प्रतिपद्यग्नि
पूजास्याद्द्वितीयायांचवेधसः॥ दशम्यामंतकस्यापिपष्ठ्यांपूजागुहस्य
च॥चतुर्थ्यांगणनाथस्यगौर्यास्तत्पूर्ववासरे ॥ सरस्वत्यानवम्यांचस
प्तम्यांभास्करस्यच ॥अष्टम्यांचचतुर्दश्यामेकादश्यांशिवस्यच॥द्वाद
श्यांचत्रयोदश्यांहरेश्चमदनस्यच॥ शेषादीनांफणीशानांपंचम्यांपूजनं
भवेत्॥ पर्वणींदोस्तिथिष्वासुपक्षद्वयगतास्वपीति॥प्रतिपदादीनांपंच
दशतिथीनांत्रिरावृत्त्यानंदाभद्राजयारिक्तापूर्णेतिचसंज्ञाभवंति ॥ तदु
क्तंरत्नमालायाम् ॥नंदाचभद्राचजयाचरिक्तापूर्णेतिसर्वास्तिथयःक्रमा
त्स्युः ॥ कनिष्ठमध्येष्टफलास्तुशुक्लेकृष्णेभवंत्युत्तममध्यहीनाइति ॥
॥अथप्रतिपत्कृत्यमुच्यते ॥ ॥ सर्व्वासुप्रतिपत्सुविवाहक्षेत्रवास्तुचि

---

१ हस्तेतिवापाठः ।

त्रासवाद्यवश्यंकार्यं ॥ यथाहभोजः ॥ विवाहःप्रतिपत्षष्ठ्योःक्षेत्रंवा स्तुतथासवमिति ॥ भास्करोपि ॥ नदासुनर्तनंक्षेत्रंवास्तुचित्रंतथा सर्वमिति॥ नंदाः प्रतिपत्षष्ठ्येकादश्यः ॥ अत्रप्रतिपदिदंतकाष्ठंपूर्वं दिग्गमनंचवर्जयेत् ॥ तदुक्तम् ॥ नष्टेंदुषष्ठीप्रतित्सुधीमान्नजातुदंतो त्कषणंविदध्यादिति ॥ तथाच ॥ क्रमात्पूर्वोत्तराग्नेयानैर्ऋत्येया म्यपश्चिमे॥ वायव्येशानयोर्योगिन्यःस्युःप्रतिपदादिषु॥ अयमर्थः॥ प्रतिपदिनवम्यांचपूर्वस्यांयोगिनी ॥ द्वितीयादशम्योरुत्तरस्याम्॥ तृतीयैकादश्योराग्नेय्याम्॥ चतुर्थीद्वादश्योर्नैर्ऋत्यांपंचमीत्रयोदश्यो र्दक्षिणस्याम् ॥ षष्ठीचतुर्दश्योःपश्चिमायाम् ॥ सप्तमीपौर्णमास्योः वायव्याम् ॥ अष्टम्यमावास्ययोरैशान्यां योगिन्यः ॥ प्रतिवसंति अतस्तासांसांमुख्येनयात्रानिषिद्धेत्यर्थः ॥ रविभौमशनीनामन्यतमे क्रूरग्रहेमेषस्थेसतिप्रतिपत्पंचमीचदुष्टाभवति॥तदुक्तम्॥ आद्याश्चत स्रःक्रियपूर्वकाणामेषांचतुर्णामपिपंचमीस्यात् ॥ पराःपरेषांपरतस्त थैवसक्रूरराशेरशुभातिथिःस्यादिति॥ अयमर्थः ॥ प्रतिपदाद्याश्च तस्रस्तिथयोमेषादीनांचतुर्णांसंबंधिन्यः ॥ पंचमीप्रत्येकंचतुर्णांसंबं धिनी अतश्चरविभौमशनीनामन्यतमेक्रूरग्रहेमेषस्थेसतिप्रतित्पंचमी चदुष्टा ॥ वृषस्थेसतिद्वितीयापंचमीच ॥ मिथुनस्थेतृतीया पंचमीच॥कर्कस्थेचतुर्थीपंचमीच॥ पराःषष्ठ्याद्याश्चतस्रस्तिथयोद शमीच सिंहादीनांचतुर्णां संबंधिन्यः॥ दशमीप्रत्येकंचतुर्णाम् ॥ अत श्चक्रूरग्रहेसिंहराशिस्थितेषष्ठीदशमीचदुष्टे ॥ कन्यास्थेसप्तमीदशमी च ॥ तुलास्थेअष्टमीदशमीच॥वृश्चिकस्थेनवमीदशमीच॥ परतएका दश्यादयश्चतस्रस्तिथयःपूर्णिमाचैवंधनुरादीनांचतुर्णांसंबंधिन्यः॥अ तश्चधनुस्थेक्रूरेएकादशीपूर्णिमाचदुष्टे॥मकरस्थेद्वादशीपूर्णिमाच॥ कुंभस्थेत्रयोदशीपूर्णिमाच ॥ मीनस्थेचतुर्दशीपूर्णिमाचेत्यर्थः ॥ ॥ ॥ इति श्रीसूर्यसेनमहीमहेंद्रविरचितेमिर्णयामृतेप्रतिपन्निर्णयः॥

॥ अथद्वितीयानिर्णीयते ॥ ॥ द्वितीयातिथिरुपवासादिषुतृतीयायुतै वग्राह्या ॥ तदुक्तंनिगमे ॥ युग्माग्नीति॥तथा ॥ एकादश्यष्टमीषष्ठीद्वितीयाचचतुर्दशी॥त्रयोदशीअमावास्याउपोष्याःस्युःपरान्विताइति॥ अत्राष्टमीचतुर्दश्यौशुक्लेत्रयोदशीकृष्णा ॥ अमावास्यावटसावित्रीव्रतव्यतिरिक्ता ॥ ननुप्रतिपत्सद्वितीयास्याद्द्वितीयाप्रतिपद्युतेतिवाक्येनप्रतिपद्युक्तायाद्वितीयायाविधानात् ॥तृतीयैकादशीषष्ठी तथाचैवाष्टमीतिथिः॥ वेधादधस्ताद्धन्युस्ताउपवासेतिथीस्त्वमाइतिवाक्येनतृतीयायुतायानिषेधाच्चविरोधइतिचेत् ॥सत्यम् ॥ पूर्वविद्धाविधानस्यपरविद्धानिषेधस्यचयमद्वितीयाऽशून्यशयनव्रतविषयत्वाददविरोधः ॥ यमद्वितीयायांतुभगिनीभिर्भ्रातरोभोज्यन्ते नतूपवासादिकंक्रियतइति ॥ अशून्यशयनस्यचंद्रोदयव्रतत्वात्तत्कालव्यापितिथावेवकर्तव्यम् ॥ यदुक्तम् ॥ एकभक्तदिवानक्तेनिशिचंद्रोदयव्रते॥ तिथिस्तात्कालिकीग्राह्यापारणेत्वपरातिथिरिति ॥ संवर्त्तोपि ॥ कृष्णाष्टमीबृहत्तल्यासावित्रीवटपत्रिका ॥ कामत्रयोदशीरंभाउपोष्याः पूर्वसंयुताइति ॥ बृहत्तलपाऽशून्यशयनद्वितीया ॥ उपोष्येत्यत्रोपवासशब्दोव्रतपरः ॥ यत्तु चतुर्ष्वसितपक्षेषुमासेषुश्रावणादिषु ॥ अशून्याख्यंव्रतंकुर्य्याज्जययातुफलाधिकामिति तृतीयायुक्तायांप्राशस्त्यविधानं तद्दिनद्वयेपिपरमवृद्ध्याचंद्रोदयव्यापित्वेनतिथिदर्पत्वात्तद्विषयत्वम् ॥ सर्वदर्प्पौपरौपूज्यावितिदर्पतिथेःपरयुतायाएवपूज्यत्वविधानादित्यविरोधः ॥ ॥ इतिद्वितीयासामान्यनिर्णयः ॥ ॥ अथविशेषनिर्णयः ॥ ॥ तत्रचैत्रशुक्लद्वितीयायामुमापूजाशिवपूजाग्निपूजाचकार्या ॥ तदुक्तंभविष्योत्तरे ॥ चैत्रशुक्लद्वितीयायामुमापूजाफलार्थिभिः[1] ॥ शिवपूजाग्निपूजाचकर्त्तव्यामुनिसत्तमेति ॥ देवीपुराणे ॥ उमांशिवंहुताशंचद्वितीयायांप्रपूजयेत् ॥ हविष्यमन्नंनैवेद्यंदेयंगंधार्चनान्वितम् ॥फलमा

१ शिवार्थिभिरितिपाठः ।

प्नोतिविप्रेंद्रसर्वक्रतुसमुद्भवमिति॥ ॥इतिचैत्रद्वितीयानिर्णयः॥ ॥श्राव णादिचातुर्मास्यकृष्णद्वितीयासुचतसृष्वशून्यशयनव्रतंकुर्यात् ॥चतु र्ष्वसितपक्षेष्वित्युक्तमेव ॥ अस्यव्रतस्यप्रसिद्धत्वाद्विधिर्नलिखितः ॥ कार्तिकशुक्लद्वितीयाचयमद्वितीया ॥ अस्यांयमुनास्नानंकृत्वा यमंपूजयेत्तर्पयेच्च ॥ भगिनीभिर्भ्रातरोभोजनीयाः ॥ भ्रातृभिश्चभ गिन्योवस्त्रालंकारादिभिःसत्कार्याः ॥ तदुक्तंस्कंदपुराणे ॥ ऊर्जेशुक्ल द्वितीयायामपराह्णेऽर्चयेद्यमम्॥स्नानंकृत्वाभानुजायांयमलोकंनपश्य ति ॥ तथा ॥ ऊर्जेशुक्लद्वितीयायांपूजितस्तर्पितोयमः ॥ महिषा सनमारूढोदंडमुद्गरधारिभिः ॥ वेष्टितःकिंकरैर्दुष्टैस्तस्मैयच्छति वांछितम् ॥ कार्तिकेशुक्लपक्षस्यद्वितीयायांतुनारद ॥ यमोयमुन यापूर्वंभोजितःस्वगृहेऽर्चितः ॥ द्वितीयायांमहोत्सर्गेनारकीयास्तुत र्पिताः ॥ पापेभ्योविप्रयुक्तास्तेमुक्ताःसर्वनिबंधनात् ॥ तेषांमहोत्स वोवृत्तोयमराष्ट्रेसुखावहः ॥ अतोयमद्वितीयेयंत्रिषुलोकेषुविश्रुता ॥ अस्यांनिजगृहेविप्रनभोक्तव्यंततोबुधैः ॥ स्नेहेनभगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ॥ दानानिचप्रदेयानिभगिनीभ्योविधानतः ॥ स्वर्णा लंकारवस्त्राद्यैःपूज्याःसत्कारभोजनैः ॥ सर्वाभगिन्यःसंपूज्याअभावे प्रतिपन्नकाइति ॥ पितृव्यादिपुत्र्यः अन्याश्चयाभगिनीत्वेनप्रतिपन्नाः ॥ ॥इतियमद्वितीयानिर्णयः ॥ ॥ अन्यमासद्वितीयासुव्रतविशेषः कश्चित्प्रसिद्धोनास्ति ॥ यदिकश्चित्स्यात् तर्हियुग्मवाक्येनपरवि द्धायामेवकार्यः ॥ नक्तादिव्रतविशेषेतुतत्कालव्यापिन्यामेवेतिसिद्धां तः ॥ पक्षद्वयगतासुचतुर्विंशतिसंख्यकास्वपिद्वितीयासुतिथिपोवे धाः सर्वोपचारैःसंपूज्यः ॥ तदुक्तम् ॥ द्वितीयायांचवेधसइति ॥ अथसिद्धविरुद्धाधिकमुच्यते ॥ द्वितीयाबुधवारेणसिद्धाभवति ॥ तदुक्तम् ॥ बुधवारेद्वितीयाचद्वादशीसप्तमीपुनः ॥मृगानुराधाहस्तश्च कृत्तिकासिद्धिदायकेति ॥ अत्रसर्वत्रकार्यारंभःसिद्धिदोभवति ॥

॥ श्रीपतिनाप्युक्तम् ॥ सोमपुत्रेचभद्रासर्वारंभेष्वेवसिद्धातिथिः स्यादिति ॥ इयंशुक्रवारेणविरुद्धा ॥ अत्रशुभकर्मनकार्यम् ॥ तदुक्तम् ॥ भार्गवेरोहिणीज्येष्ठाद्वितीयासप्तमीपुनः ॥ पुष्योमघातथाऽऽश्लेषासर्वकार्येषुवर्जितेति ॥ द्वितीयायांवैवाहिकंकर्मभूषणकर्मरथादिनामार्गगमनंव्रतारंभंपौष्टिकंकर्मचकुर्वीत ॥ तदुक्तंभास्करेण ॥ ॥ व्रतपौष्टिकेद्वितीयाद्वादश्योःसप्तमीषुकुर्वीत ॥ प्रत्युद्वहनविशेषं गृहशयनशकटयानाध्वकर्माणीति ॥ द्वितीयायांब्राह्मणव्यतिरिक्तास्त्रयोवर्णामलापकर्षकस्नानंनकुर्युः ॥ तत्रस्नानात्पुत्रधननाशोभवति॥ तदुक्तंभास्करेण ॥ त्रयोदश्यांद्वितीयायांदशम्यांचविशेषतः ॥ शूद्रविट्क्षत्रियाःस्नानंनाचरेयुःकथंचनेति ॥ स्नातुस्तनूजान्दशमीत्रयोदश्यर्थंद्वितीयाद्वितयान्निहंति ॥ मलापहस्नाननिषेधएषनानित्यनैमित्तिककाम्यकानामिति ॥अत्रोत्तरस्यांदिशियोगिनीसांमुख्याद्यात्रानकार्या॥क्रमात्पूर्वोत्तरेतियोगिनीसांमुख्यंप्रागेवोक्तम् ॥ धनुर्मीनस्थेरवौद्वितीयादग्धाभवति॥तदुक्तंश्रीपतिना ॥ एकांतरादिनकरेतिथयोद्वितीयापूर्वाधनुःशफरयोर्वृषकुंभयोश्च ॥कर्काजयोश्चमिथुनाबलयोर्मृगेंद्रकौर्प्योस्तुलामकरयोश्चभवंतिदग्धाइति॥शफरोमीनः ॥अजोमेषः ॥ अबलाकन्या ॥ मृगेंद्रःसिंहः ॥ कौर्पिर्वृश्चिकः ॥ क्रूरग्रहेवृषास्थितेद्वितीयादुष्टाभवति ॥ आद्याश्चतस्रइत्याद्युक्तमेव ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेद्वितीयानिर्णयः॥ ॥ अथतृतीयानिर्णीयते ॥ ॥ तत्ररंभाव्यतिरिक्तातृतीयाचतुर्थीयुतैवोपवासादिषुग्राह्या ॥ तदुक्तंविष्णुधर्मोत्तरे ॥ एकादश्यष्टमीषष्ठीपौर्णमासीचतुर्दशी ॥ अमावास्यातृतीयाचताउपोष्याःपरान्विताइति ॥ ननुयुग्माग्नीतियुग्मवाक्येनतृतीयाद्वितीयायुक्ताग्राह्येत्युक्तम् ॥ तेनाविरोधइतिचेन्न युग्मवाक्यस्यरंभाव्रतविषयत्वात् ॥ तदुक्तंब्रह्मवैवर्ते ॥ रंभाख्यांवर्जयित्वातुतृतीयांद्विजसत्तम ॥ अन्येषुसर्वकार्येषुगणयुक्ता

प्रशस्यतइति ॥ तथा अनंगत्रयोदशीरंभाउपोष्याःपूर्वसंयुताइति ॥ स्कंदपुराणेपि ॥ कृष्णाष्टमीचतुर्थीचसावित्रीवटपैतृकी ॥ शुक्लत्रयोदशीरंभानोपोष्याःपरसंयुताइति ॥ अतश्चरंभातृतीयापूर्वयुतैव कार्या॥अन्याचतुर्थीयुतैव॥रंभाव्रतादन्यत्रद्वितीयायुतायांप्रत्यवायोऽपिश्रूयते॥तदुक्तंब्रह्मवैवर्ते ॥ तृतीयानतुकर्त्तव्याद्वितीयोपहताप्रभो ॥ द्वितीयोपहतायांतुयःकरोतिनराधमः ॥ संवत्सरकृतेनेहनरोधर्मेणमुच्यतइति ॥ पुराणसमुच्चयेऽपि ॥ द्वितीयाशेषसंयुक्तांतृतीयांकुरुतेतुयः ॥ सयातिनरकंघोरंकालसूत्रंभयंकरमिति ॥ तथाच तत्रैव ॥ द्वितीयाशेषसंयुक्तांयाकरोतिविमोहिता॥सावैधव्यमवाप्नोति प्रवदंतिमनीषिणइति ॥ एवंस्त्रीणांद्वितीयासहिततृतीयाकरणेदोषंप्रदर्श्यचतुर्थीयुतायांफलाधिक्यंचप्रदर्शितम् ॥ तथाच ॥ चतुर्थीसहितायातुसातृतीयाफलप्रदा ॥ अवैधव्यकरीस्त्रीणांपुत्रपौत्रप्रवर्द्धिनीति ॥ एवमन्यान्यपिपूर्वविद्धाप्रतिपादकानिवाक्यानिरंभाव्रतविषयेयोजनीयानीतिसिद्धांतः॥ ॥ इतितृतीयासामान्यनिर्णयः ॥

॥ अथविशेषनिर्णयः ॥ ॥ अत्रचैत्रशुक्लतृतीयांऽऽदोलनतृतीयेत्युच्यते तत्रपार्वतीमीश्वरंचसंपूज्यांदोलयेत् ॥ रात्रौजागरणंदक्षिणादानंच कुर्यात् ॥ तदुक्तंदेवीपुराणे ॥ तृतीयायांयजेद्देवींशंकरेणसमन्विताम् ॥ कुंकुमागुरुकर्पूरमणिवस्त्रसुगंधकैः ॥ स्रग्गंधधूपदीपैश्च दमनेनविशेषतः ॥ आंदोलयेत्ततोवत्साशिवोमातुष्टयेसदा ॥ रात्रौजागरणंकार्यंप्रातर्देयाचदक्षिणा ॥ हेमवस्त्रान्नपानानितांबूलानिस्रजस्तथेति॥शंकरोमामूर्तिस्वरूपंचतत्रैवोक्तम्॥सौवर्णीतुउमाकार्याराजतःशंकरस्तथा॥चतुर्भुजस्तुदेवेशोद्विभुजातुउमास्मृतेति ॥ अत्रैवसौभाग्यशयनव्रतं ॥तदुक्तंमत्स्यपुराणे ॥ वसंतमासमासाद्यतृतीयायांजनप्रिये ॥ सौभाग्यायसदास्त्रीभिःकार्यंपुत्रसुखेप्सुभिरिति ॥ अस्यचविधिर्मत्स्यपुराणएवद्रष्टव्यः विस्तरत्वादस्माभिर्नालिखितः ॥ इयंम

न्वादिरपि॥तदुक्तंमत्स्यपुराणे ॥आश्वयुक्शुक्लनवमीद्वादशीकार्त्तिके सिता ॥ तृतीयाचैत्रमासस्यतथाभाद्रपदस्यच ॥ श्रावणेचाष्टमी कृष्णापौषेचैकादशीसिता॥सिताषाढस्यदशमीमाघमासस्यसप्तमी ॥ श्रावणेचाप्यमावास्याज्येष्ठेपंचदशीतथा ॥ आषाढीकार्त्तिकीमाघीचै त्रीचैवविशेषतः॥ एतामन्वादयःप्रोक्तामुनिभिःपूर्वदर्शिभिः॥ ॥ इति चैत्रतृतीयानिर्णयः॥ ॥ अथवैशाखशुक्लतृतीयायांगौरीपूजांकृत्वा जलपूर्णकलशंदद्यात् ॥ तदुक्तंदेवीपुराणे गौरीपूजाप्रक्रमे ॥ तृतीयायांतुवैशाखेरोहिण्यृक्षेप्रपूज्यतु ॥ उदकुंभप्रदानेनशिवलोके महीयतइति ॥ इयंचतृतीयात्रेतायुगादिरक्षय्यतृतीयेतिचो च्यते॥ तदुक्तंरत्नमालायाम् ॥ माघेपंचदशी कृष्णानभस्येचत्रयो दशी ॥ तृतीयामाधवेशुक्लानवम्यूर्जेयुगादयः॥ भविष्योत्तरेऽपि ॥ नवम्यांशुक्लपक्षस्यकार्त्तिकेकृतनिर्गमः ॥ त्रेतासिततृतीयायांवैशा खेसमपद्यत ॥ दर्शेतुमाघमासस्यप्रवृत्तंद्वापरंयुगम् ॥ कलिःकृष्णत्र योदश्यांनभस्येमासिनिर्गतइति ॥ यत्तुब्रह्मपुराणे ॥ वैशाखेमासि शुक्लायांतृतीयायांजनार्दनः ॥ ब्रह्मलोकात्त्रिपथगांपृथिव्यामवतारय त् ॥ यवानुत्पादयामासयुगंचारब्धवान्कृतमितीयंकृतयुगादिरित्यु क्तम्॥ तत्तुकल्पभेदेनव्यवस्थाप्यम्॥ इयंचविष्णुपूजाहोमदानादिषु पूर्वाह्णव्यापिनीग्राह्या ॥ तदुक्तंभविष्योत्तरे ॥ द्वेशुक्लेद्वेतथाकृष्णे युगाद्याःकवयोविदुः ॥शुक्लेपूर्वाह्णिकेग्राह्येकृष्णेचैवापराह्णिकेइति ॥ ॥नारदीयेऽपि ॥ वसिष्ठउवाच ॥ वैशाखेशुक्लपक्षेतुतृतीया रोहिणीयुता ॥ दुर्लभाबुधवारेणसोमेनाऽपियुतातथा ॥ रोहिणी बुधयुक्तापिपूर्वविद्धाविवर्जिता ॥ भक्त्याकृताऽपिमांधातर्हंतिपुण्यं पुराकृतम्॥ गौरीविनायकोपेतारोहिणीबुधसंयुता॥ विनापिरोहिणी योगात्पुण्यकोटिप्रदासदेति ॥ गौरीतृतीया विनायकश्चतुर्थी॥यत्तुका लादर्शेऽमावास्यानिर्णयेश्राद्धेऽमावास्याऽऽपराह्णिकीग्राह्येत्युक्तम् ॥

एवंमन्वंतरादीनांयुगादीनांविनिर्णयः ॥ महालयस्यपक्षस्याष्टकादीनामपिस्मृतइति॥ युगादीनामपिसर्वेषामपराह्णव्यापित्वेनप्राशस्त्यमुक्तंतत्तुतत्रविहितश्राद्धादिविषयम् ॥ तत्रश्राद्धविधानं विष्णुपुराणे प्रोक्तम् ॥ पानीयमप्यत्रतिलैर्विमिश्रंदद्यात्पितृभ्यःप्रयतोमनुष्यः ॥ श्राद्धंकृतंतेनसमाःसहस्रंरहस्यमेतन्मुनयोवदंतीति ॥ मत्स्यपुराणेऽपि ॥ कृतंश्राद्धंविधानेनमन्वादिषुयुगादिषु ॥ हायनानिद्विसाहस्रं पितॄणांतृप्तिदंभवेत् ॥ महाभारतेऽपि ॥ यामन्वाद्यायुगाद्याश्चतिथयस्तासुमानवः ॥ स्नात्वाहुत्वाचदत्त्वाचजप्त्वानंतफलंलभेदिति ॥ अतश्चयुगादिप्रयुक्त्याविहितश्राद्धविषयेमावास्यावदापराह्णिकीग्राह्या ॥ विष्णुपूजादौचतुर्थीयुतैवग्राह्येतिसिद्धांतः ॥ अत्रैवलक्ष्मीसहितविष्णुपूजाभविष्योत्तरेऽभिहिता ॥ वैशाखस्यतृतीयायांश्रीसमेतंजगद्गुरुम् ॥ नारायणंपूजयेथाःपुष्पधूपविलेपनैरिति ॥ विशेषांतरंचतत्रैवोक्तम् ॥ वैशाखेशुक्लपक्षेतुतृतीयायांतथैवच ॥ गंगातोये नरःस्नात्वामुच्यतेसर्वकिल्बिषैः॥ तस्यांकार्योयवैर्होमोयवैर्विष्णुंसमर्चयेत् ॥ यवान्दद्याद्द्विजातिभ्यःप्रयतःप्राशयेद्यवानिति ॥ ॥ इत्यक्षय्यतृतीयानिर्णयः॥ ॥ अथज्येष्ठेमासिरंभातृतीयायथा ॥ ॥ ज्येष्ठशुक्लतृतीयायांपतिपुत्रफलार्थिनी नारी सूर्योदयेस्नात्वासतीव्रतनियमं गृहीत्वाचतसृषुदिक्षुकुंडेषु स्थंडिलेषुवाग्नीन्संस्थाप्यपंचमोभास्कर इतिपंचाग्निमध्येवेदिकायांरंभास्तंभोपशोभितां पुष्पमंडपिकांकृत्वा तत्रसर्वशक्तिमयींदेवीमावाह्य॥तस्याःसंमुखीपूर्वाभिमुखीवोपविश्य॥ सर्वोपचारैर्देवींनमोंऽतैर्नाममंत्रैःसंपूज्यसूर्यास्तमयपर्यंतंतिष्ठेत्॥ब्राह्मणाश्चप्रणवादिभिर्नमोंतैर्नाममंत्रैः सौभाग्यद्रव्याणितेष्वग्निषुजुहुयुः॥ ततोद्विजदांपत्यंचतुर्थ्यांभोजयित्वायथाशक्त्याचार्यायगृहदानादिकंदद्यात्॥इदंव्रतंभविष्योत्तरेप्रोक्तम्॥ यथा ॥ ज्येष्ठशुक्लतृतीयायां स्नातानियमतत्परा ॥ कुरुपार्श्वेषुपंचाग्नीञ्ज्वलमानान्हुता[1]हुतीन् ॥

[1] घृताहुतीन् इत्यपिपाठः ।

गार्हपत्यं दक्षिणाग्निं सभ्यं चाहवनीयकम् ॥ पंचमंभास्करंतेजइत्येते पंचवह्नयः॥एतेषांमध्यगाभूत्वातिष्ठेःपूर्वमुखीस्थिरा ॥ चतुर्भुजांध्यानपरांपंकजोपरिसंस्थिताम् ॥ मृगाजिनाच्छन्नकटींजटावल्कलधारिणीम् ॥ सर्वाभरणसंयुक्तांदेवीमभिमुखींकुरु ॥ महालक्ष्मीर्महाकाली महामायामहामही॥गंगाचयमुनासिंधुःशरयूर्नर्मदानदी ॥सरस्वतीवैतरणीसैवप्रोक्तामहासती॥सप्रणवैर्नमोंतैश्चनामभिःपूजनंभवेत् ॥चतुर्थीसहितैश्चैवस्वाहांतैर्होमइष्यते॥तदास्यप्रेक्षणपराभवतद्भावनान्विता॥ होमंकुर्युर्यतात्मानोब्राह्मणाःसर्वतोदिशम् ॥ देव्याःपूजाप्रकर्त्तव्यापुष्पधूपादिनाततः॥बहुप्रकारंनैवेद्यंदातव्यंघृतपाचितम् ॥ स्थापयेदग्रतोदेव्याःसौभाग्याष्टकमेवच ॥ जीरकंधान्यकंचैवकौसुंभंकुंकुमंतथा॥ निष्पावाःपावनातिलालवणंशर्करागुडम् ॥ निष्पावाःशिंबिधान्यानि ॥ पावनातिलाभृष्टतिलाः ॥ शर्करागुडमिति शर्करागुडोवेत्यर्थः ॥ पुष्पमंडपिकाकार्यारंभास्तंभोपशोभिता ॥तत्रसंपूजयेद्देवींशक्त्यास्वर्णादिनिर्मिताम्॥ पद्मासनेनसंतिष्ठयावत्परिणतोरविः ॥ततःप्रणम्यरुद्राणींमंत्रमेतमुदीरयेत् ॥ "वेदेषुसर्वशास्त्रेषुदिविभूमौरसातले ॥ श्रुतोदृष्टश्चबहुशोनशक्त्यारहितःशिवः॥ त्वंशक्तिस्त्वंस्वधास्वाहात्वंसावित्रीसरस्वती॥पतिंदेहिसुतान्देहिगृहंदेहिनमोऽस्तुते" ॥एवंक्षमापयेद्देवींप्रणिपत्यपुनःपुनः॥देहिभक्त्यागृहंरम्यंविचित्रंबहुभूमिकम् ॥ गृहदानविधानेनब्राह्मणायतपस्विने ॥ सपत्नीकायसंपूज्यसर्वोपस्करसंयुतम् ॥ निर्वर्त्यविधिनानेनततःपश्चात्समापयेत् ॥ दांपत्यानिचभोज्यानिचतुर्थ्यांमधुरैरसैः ॥ इत्युक्तेतेमयासर्वंरंभाव्रतमनुत्तमम्॥ व्रतांतेऽगस्त्यमुनयेत्वंप्रदत्स्वगृहंशुभम् ॥ इदंव्रतंमयाप्रोक्तंयाश्चरिष्यंतियोषितः ॥ कांतार्थीपुरुषोवापिख्यातंरंभाव्रतंभुवि ॥ भार्यापुत्रगृहंभोगाःकुलवृद्धिर्भविष्यति ॥ स्त्रीणांचातुलसौभाग्यंगार्हस्थ्यंसार्वकामिकम् ॥ सपत्नीदर्पदलनंवशीकरणमुत्तमम् ॥ मृताशिवपुरंयाति

ततोविष्णुपुरंव्रजेदिति ॥ ॥ इतिरंभातृतीयाव्रतम् ॥ ॥ अथभा द्रपदतृतीयायांकांचनगौरींकृत्वासंपूज्यगुडापूपनैवेद्यंदद्यात् ॥ तदु क्तंभविष्योत्तरे ॥ गुडापूपास्तुदातव्यामासिभाद्रपदेतथा ॥ तृती याशुक्लपक्षस्यसर्वपापहरास्मृतेति ॥ ॥ इतिभाद्रपदतृतीया ॥ ॥ अथमाघशुक्लतृतीयायामुमामहेश्वरप्रीत्यर्थंगुडलवणदानंकुर्यात् ॥ तदुक्तंभविष्योत्तरे ॥ माघेशुक्लतृतीयायांगुडस्यलवणस्यच ॥ दानंश्रेयस्करंराजन्स्त्रीणांचपुरुषस्यच ॥ गुडेनतुष्यतेदेवीलव णेनस्वयंप्रभुरिति ॥ एवमन्यान्यपितृतीयाव्रतानिचतुर्थ्यायुक्तायां मेवकार्याणीतिसिद्धांतः ॥ पक्षद्वयगतासुसर्वास्वपितृतीयासुतिथि पतित्वेनगौरीपूज्या ॥ तदुक्तम् ॥ चतुर्थ्यांगणनाथस्यगौर्यास्तत्पूर्व वासरइति ॥ तत्पूर्ववासरेचतुर्थीपूर्वदिनेतृतीयायामित्यर्थः ॥ अथ सिद्धविरुद्धादिकम् ॥ तृतीयाभौमवारेणसिद्धा॥तदुक्तम् ॥ भौमेषष्ठी तृतीयास्यादष्टमीचत्रयोदशी ॥ मूलाश्विन्यौमृगाश्लेषासिद्धाउत्तरभाद्र पादिति ॥ तृतीयाबुधवारेणविरुद्धा॥तदुक्तम्॥बुधेधनिष्ठांभरणींहस्त मूलसमन्विताम् ॥ तृतीयांनवमींप्रतिपद्रेवतींचविवर्जयेदिति ॥ विरुद्धयोगेशुभकर्मनकार्यम् ॥ अथात्रकृत्यान्याह ॥ तृतीयादिज यातिथिषुसंग्रामोपयोगिबलोपयोगिचकर्मसिद्ध्यति ॥ तदुक्तंर त्नमालायाम्॥जयासुसंग्रामबलोपयोगिकार्याणिसिद्ध्यंतिविनिर्मिता नीति ॥ भास्करेणापि॥जयासुविदधीताजिबलकार्याणिनिर्वृतइति ॥ इयंतृतीया रविभौमशनीनामन्यतमेक्रूरग्रहेमिथुनराशिस्थेसति दु ष्टाभवति ॥ आद्याश्चतस्त्रइत्याद्युक्तमेव ॥ तृतीयायामाग्नेय्यांदिशियो गिन्यःप्रतिवसंति ॥ अतस्तत्रयात्रानकार्या ॥ क्रमात्पूर्वोत्तराग्ने य्यामित्याद्युक्तमेव ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृ तेतृतीयानिर्णयः ॥ ॥ अथोपवासादिषुचतुर्थीनिर्णीयते ॥ ॥ चतु र्थीगणेशव्रतकुंडचतुर्थीव्रतबहुलाचतुर्थीव्रतव्यतिरिक्तेषु पंचमीयु

१ दस्त्रौवि पाठांतरम् । २ श्रीपतिनेतिपाठांतरम् ।

तैवग्राह्या ॥ तदुक्तंनिगमे ॥ युगभूतानीति ॥ विष्णुधर्मोत्तरेऽपि ॥ एकादशीतथाषष्ठीअमावास्याचतुर्थिका ॥ उपोष्याःपरसंयुक्ताः पराःपूर्वेणसंयुताइति ॥ गणेशचतुर्थीतुतृतीयायुतैवोपोष्या ॥ चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यतइति ॥ ब्रह्मवैवर्तेऽपि ॥ चतुर्थीसहितायातुसातृतीयाफलप्रदा ॥ चतुर्थीचतृतीयायांमहापुण्यफलप्रदा॥ कर्तव्याव्रतिभिर्वत्सगणनाथसुतोषणीति ॥ गणनाथंसुतरांतोषयतीतिगणेशचतुर्थीत्यर्थः॥ तथाचस्कंदपुराणे ॥ कृष्णाष्टमीचतुर्थीचसावित्रीवटपैतृकी ॥ शुक्लत्रयोदशीरंभानोपोष्याःपरसंयुताइति ॥ अत्रापिचतुर्थीगणेशचतुर्थ्येववेदितव्या ॥ अन्यथायुगभूतानीतिनिगमवाक्यविरोधःस्यात् ॥ एवंमाघशुक्लपक्षेगौरीचतुर्थी॥ कुंडचतुर्थीतियाप्रसिद्धासाचबहुलाचतुर्थीचतृतीयायुतेएवोपोष्ये॥ तदुक्तंपुराणसमुच्चये ॥ गौर्याश्चतुर्थीवटधेनुपूजादुर्गार्चनंदुर्भरहोलिकेच ॥ वत्सस्यपूजाशिवरात्रिरेताःपराविनिघ्नंतिनृपंसराष्ट्रमिति ॥ अत्रधेनुपूजेतिबहुलाचतुर्थीविहितादीपोत्सवप्रातिपद्विहिताचधेनुपूजागम्यते ॥ वत्सस्यपूजेतिवत्सद्वादशीविहितधेनुपूजायाःपृथगुपादानात् ॥ अत्रविनायकव्रतानुष्ठानेपिचतुर्थ्यामध्याह्नव्यापित्वंमुख्यंप्रयोजकम् ॥ चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यते ॥मध्याह्नव्यापिनीचेत्स्यात्परतश्चेत्परेहनीतिमाधवोदाहृतरहस्यवचनात् ॥ यदापूर्वेद्युर्मध्याह्नव्यापिनीभवति ॥ तदामुख्यप्रयोजकस्याविद्यमानत्वान्मातृविद्धात्वगुणस्यचसंभवात्साग्राह्या ॥ तादृशेविषयेपरेद्युःसत्यामपिमध्याह्नव्यापिन्यांसात्याज्या॥ ॥अतएवप्रशस्यतइत्युक्तम्॥यदातुपरेद्युरेवमध्याह्नव्यापिनीतदामातृविद्धायागुणाभावेपि प्रधानप्रयोजनानुरोधेन परविद्धैव ग्राह्या ॥ तदाचतत्रैवस्मृत्यंतरवचनम् ॥ मातृविद्धाप्रशस्तास्याच्चतुर्थीगणनायके ॥ मध्याह्नात्परतश्चेत्स्यान्नागविद्धाप्रशस्यते ॥ ॥ इति चतुर्थीसामान्यनिर्णयः ॥ ॥ अथविशेषनिर्णयः ॥ ॥ चैत्रशुक्लचतु

15679

थ्यांलड्डुकादिभिर्गणेशमर्चयित्वासर्वकामान्प्राप्नुयात् ॥ तदुक्तंदेवी पुराणेचैत्रमासतिथिकृत्यप्रकरणे ॥ गणेशेकारयेत्पूजांलड्डुका दिभिरादरात् ॥ चतुर्थ्यांविघ्ननाशायसर्वकामसमृद्धयइति ॥ ज्येष्ठ शुक्लचतुर्थ्यांस्त्रीभिरुमापूज्या ॥ तदुक्तंब्रह्मपुराणे ॥ ज्येष्ठशु क्लचतुर्थ्यांतुजातापूर्वमुमासती ॥ तस्मात्सातत्रसंपूज्यास्त्रीभिःसौभा ग्यवृद्धये॥उपहारैश्वविविधैर्गीतनृत्योत्सवादिभिः ॥ होमैःपयोभिर्वस्त्रै श्वपत्रपुष्पैःसुगंधिभिरिति॥ ॥इतिज्येष्ठचतुर्थी॥ ॥ अथभाद्रपदशुक्ल चतुर्थीशिवाख्या ॥ तत्रगणेशपूजनंस्नानदानादिकंचानंतगुणंभव ति ॥ तदुक्तंभविष्योत्तरे ॥ शिवाशांतसुखाराजंश्चतुर्थीत्रिविधा स्मृता ॥ मासिभाद्रपदेशुक्लाशिवलोकेप्रपूजिता ॥ तस्यांस्नानंत थादानमुपवासोजपस्तथा ॥ क्रियमाणंशतगुणंप्रसादाद्दंतिनोनृपेति॥ इयमेवगणेशचतुर्थीरविवारेणभौमवारेणवासमन्विता महाचतुर्थीत्यु च्यते ॥ अत्रकल्पोक्तविधिनागणेशपूजनात्सर्वकार्यसिद्धिर्भवति ॥ तदुक्तंवाराहपुराणे॥भाद्रशुक्लचतुर्थीयाभौमेनार्केणवायुता॥महतीसा त्रविघ्नेशमर्चित्वेष्टंलभेन्नरइति ॥ अत्रैवरात्रौचंद्रंनपश्येत् ॥ चंद्रद र्शनान्मिथ्याभिशास्तिर्भवति ॥ प्रमादाद्दृष्ट्वापिविष्णुपुराणोक्तंश्लोकंत द्दोषशांत्यर्थंपठेत् ॥ तदुक्तं पाराशरस्मृतौ ॥ कन्यादित्ये चतुर्थ्यांतुशुक्लेचंद्रस्यदर्शनम् ॥ मिथ्याभिदूषणंकुर्यात्तस्मात्पश्ये न्नतंतदा ॥ तद्दोषशांतयेसिंहःप्रसेनमितिवैपठेदिति ॥ कन्यादित्ये भाद्रशुक्लपक्षे॥श्लोकश्च ॥ सिंहःप्रसेनमवधीत्सिंहोजांबवताहतः॥सुकु मारकमारोदीस्तवह्येषस्यमंतकइति ॥ अन्यापिशुक्लचतुर्थीभौमवारे णयुतासूर्यग्रहणतुल्या ॥ तदुक्तंशंखेन ॥ अमावास्यातुसोमेनसप्त मीभानुनासह ॥ चतुर्थीभूमिपुत्रेणसूर्यपुत्रेणचाष्टमी ॥ चतस्रस्ति थयस्त्वेताः सूर्यग्रहणसन्निभाइति ॥ ब्रह्मपुराणेशुक्लचतुर्थ्यांचंद्र दर्शनविषयेविशेषउक्तः ॥ वासुदेवोभिशस्तस्तुनिशाकरमरीचिषु ॥

स्थितश्चतुर्थ्यामाद्यायांमनुष्याणांपतिश्वसः ॥ ततश्चतुर्थ्यांचंद्रंतुप्र यत्नाद्वीक्ष्यमानवः॥पठेत्पौराणिकंवाक्यंप्राङ्मुखोवाप्युदङ्मुखइति ॥ प्रयत्नात्पठेदित्यन्वयः ॥ वाक्यं सिंहःप्रसेनमिति॥आद्यायांचतुर्थ्यांशु क्लचतुर्थ्यामित्यर्थः॥ ॥ इतिभाद्रपदशुक्लचतुर्थी ॥ ॥ अथभाद्रपद शुक्लनवम्यांप्रबोधितायादेव्याआश्वयुक्शुक्लचतुर्थ्यामभ्यंगादिसंस्का रैःकेशान्विशोधयेत् ॥ ततःशुक्लपंचम्यांपूर्वाह्णेगंधोदकैस्तांदेवींस्ना पयेत् ॥ तत्सप्तम्यांतांबिल्वपत्रैःप्रपूजयेत् ॥ तदष्टम्यामुपोष्यरा त्रौजागरणंकृत्वाप्रातियामंदेवींपूजयेत् ॥ तन्नवम्यांविधिवत्संपूज्यब लिदानंकुर्यात् ॥ तद्दशम्यांदेवींरथमारोप्यगीतवादित्रशब्दैःसहनग रेभ्रामयेत् ॥ तदुक्तंदेवीपुराणे ॥ कन्यायांकृष्णपक्षेतुपूजयित्वार्द्र भेऽपिवा ॥ कन्यायांभाद्रपदइत्यर्थः ॥ नवम्यांबोधयेद्देवींगीतवादित्र निःस्वनैः ॥ शुक्लपक्षेचतुर्थ्यांतुदेवीकेशविशोधनम् ॥ प्रातरेवतुप ञ्चम्यांस्नापयेत्सलिलैःशुभैः ॥ सप्तम्यांपत्रिकापूजाह्यष्टम्यामप्युपो षणम् ॥ पूजनंजागरंचैवरथमारोप्यवैपुरइति ॥ ॥ इत्याश्विनचतुर्थी॥ माघशुक्लचतुर्थींतुवरदाख्यातत्रकुंदपुष्पैःशिवमभ्यर्च्यनरोनक्तभोजी श्रियमाप्नोति॥तदुक्तंकूर्मपुराणे॥कुंभेशुक्लचतुर्थ्यांतुकुंदपुष्पैःसदाशि वम्॥संपूज्ययोहिनक्ताशीसप्राप्नोतिश्रियंनरइति ॥ इयमेवकुंदचतुर्थी तिप्रसिद्धा ॥ अत्रैवब्रह्मपुराणेविशेषउक्तः ॥ उमाचतुर्थ्यांमाघेतु शुक्लायांयोगिनीगणैः॥प्राग्भक्षयित्वासृष्टाचभूयःस्वांगात्स्वकैर्गुणैः॥ ससृजुःसाहितायस्मात्तस्मात्प्रोक्तासतीह्युमा॥तस्मात्सातत्रसंपूज्यान रैःस्त्रीभिर्विशेषतः ॥ कुंदपुष्पैःप्रयत्नेनसम्यग्भक्त्यासमाहितैः ॥ कुंकुमालक्तकाभ्यांचरक्तसूत्रैःसकंकणैः ॥ अर्घैःपुष्पैस्तथाधूपैर्दीपैर्ब लिभिरेवच ॥ गुडार्द्रकाभ्यांपयसालवणेनाथपालकैः ॥ पूज्याःस्त्रिय श्चाविधवातथाविप्राश्चशोभनाः ॥ सौभाग्यवृद्धयेपश्चाद्भोक्तव्यंबंधु भिःसहेति ॥ पालकैःकुंदैः ॥ देवीपुराणेत्वियंकुंडचतुर्थ्युक्ता ॥

१ कृष्णनवम्यामितिपाठः। माघशुक्लचतुर्थ्यामितिपाठः।

यथा॥माघमासेतुसंप्राप्तेचतुर्थीकुंडसंज्ञिता ॥ सोपोष्याचसुरश्रेष्ठास्त तोराज्यंभविष्यति ॥ ॥ इतिमाघचतुर्थी ॥ ॥ अन्यच्चवर्षचतुष्टयसा ध्यंवरचतुर्थ्याव्रतमस्ति ॥ तदुक्तंस्कांदे ॥ चतुर्थ्यांमार्गशीर्षेतु शुक्लपक्षेनृपोत्तम ॥ प्रारभ्यप्रतिमासंचचतुर्थ्यांगणनायकम् ॥ संपूज्यविधिनाकुर्यादेकभक्तंसमाहितः॥ अक्षारलवणंत्वेवंपूर्णेसंवत्सरे ततः ॥ द्वितीयवत्सरेचाथनक्तंप्रतिचतुर्थिच ॥ कुर्याद्गणेशमभ्यर्च्य तृतीयेयाचितंतथा ॥ एवमेवप्रकुर्वीतचतुर्थेस्यादुपोषणम् ॥ ततश्च तुर्थेसंपूर्णेतदुद्यापनमाचरेदिति ॥ इदंवरचतुर्थ्याख्यंव्रतंसर्वार्थसाध कमिति ॥ ॥ इतिवरचतुर्थीव्रतम् ॥ ॥ अथफाल्गुनादिमासचतुष्टय साध्यंगणेशचतुर्थीव्रतम्॥ तदुक्तंवाराहपुराणे ॥ अथाविघ्नव्रतंराजन्क थयामिशृणुष्वतत्॥चतुर्थ्यांफाल्गुनेमासिग्रहीतव्यंव्रतंत्विदम्॥नक्ता हारेणराजेंद्रतिलान्नंपायसंस्मृतम् ॥ तदेवाग्नौचहोतव्यंतद्देयंब्राह्मणेषु च॥चातुर्मास्यव्रतंचैवकृत्वैवंपंचमेतथा॥ सौवर्णगजवक्त्रंतुकृत्वाविप्रा यदापयेत् ॥ आयसैःपंचभिःपात्रैरुपेतंपंचाभिस्तथा ॥ एवंकृत्वा व्रतंचैवसर्वविघ्नैर्विमुच्यतइति॥पूजाहोमादिमंत्रश्च ॥ दिव्यायशूरायग जाननायलंबोदरायैकदंतायुधाय ॥ नगात्मजादेहसमुद्भवायकुठार हस्तायनमोवरायेति ॥ अनेनमंत्रेणपूजांकृत्वास्वाहांतेनातिलान्हु त्वाब्राह्मणेभ्योदत्त्वास्वयमपितदेवनक्तमश्नीयात् ॥ एवंमासचतुष्टयं व्रतंकृत्वा आषाढशुक्लचतुर्थ्यांसौवर्णविनायकदानमात्रं कुर्य्यादितिप्र योगः ॥ भविष्योत्तरेतुविशेषउक्तः ॥ चतुर्थ्यांतुयदाराजन्नारवारो व्रतान्वितः ॥ दद्यात्तिलान्नंविप्रायस्वयंभुंक्तेतिलौदनम् ॥ वर्षत्रयं समाप्तिर्हिव्रतस्यतुयदाभवेत् ॥ विनायकस्तदातुष्टोददातिफल मीहितमिति ॥ मत्स्यपुराणेतु ॥ चतुर्थ्यांनक्तभुग्दद्यादब्दां तेहेमवारणम् ॥ व्रतंवैनायकंनामशिवलोकफलप्रदमिति ॥ इदं व्रतंद्वादशस्वपिमासेषूभयचतुर्थ्योर्विधेयमितिगम्यते ॥ एवंमनोरथ

विनायकचतुर्थ्यादि विनायकव्रतानि कुंडचतुर्थ्यादिगौरिव्रतानिचतृतीयायुक्तचतुर्थ्यामेवकार्याणि ॥ अन्यानिनागचतुर्थ्यादीनिव्रतानि पंचमीयुक्तायांचतुर्थ्यामितिसिद्धांतः ॥ केषुचिद्देशेषुचतुर्थ्यांचमध्याह्नव्यापिन्यामुपोष्यनागान्क्षीरेणाप्याय्यपंचम्यांपारणंप्रकुर्युः ॥ तदुक्तंपुराणसमुच्चये॥ युगंमध्यंदिनेयत्रतत्रोपोष्यफणीश्वरान् ॥ क्षीरेणाप्याय्यपंचम्यांपारयेत्प्रयतोनरः॥विषाणितस्यनश्यंतिनैनंहिंसंतिपन्नगाइति॥युगंचतुर्थी ॥ कूर्मपुराणेपि ॥ तिथौयुगाह्वयायांचसमुपोष्ययथाविधि॥ शंखपालादिनागानांशेषस्यचमहात्मनः ॥ पूजाकार्यापुष्पगंधक्षीराप्यायनपूर्विकेति ॥ एतच्चकार्त्तिकशुक्लचतुर्थ्यांनागव्रतमितिकालादर्शे ॥ पक्षद्वयगतासुसर्वास्वपिचतुर्थीषुतिथ्यधिपोगणेशः पूज्यः॥चतुर्थ्यांगणनाथस्येत्युक्तत्वात्॥ ॥अथसिद्धविरुद्धादिकं॥चतुर्थीशनिवारेणसिद्धाभवति ॥ तदुक्तम् ॥ शनौचतुर्थीनवमीचतुर्दश्यथरोहिणी॥शततारास्वातिमघाभाग्यंचैवतुसिद्धयइति॥ चतुर्थीगुरुवारेणविरुद्धा ॥तदुक्तम्॥जीवेऽष्टमीचतुर्थीचआर्द्राचोत्तरफाल्गुनी॥रोहिणीवारुणंचैवविरुद्धंमृगसंमितमिति॥अत्रकृत्यमुच्यते॥शत्रुवधाग्निविषप्रयोगाद्यनिष्टकर्मचतुर्थ्यादिरिक्तातिथिषुकार्यं॥तदुक्तंभास्करेण ॥ चतुर्थ्यांचचतुर्दश्यांनवम्यांचारिमर्दनम् ॥ दमनंबंधनंभेदमभियोगाभिचारकम् ॥ विषाग्निसंप्रयोगंचकुर्वीतकपटानिचेति ॥ चतुर्थ्यांनैर्ऋत्यांयोगिन्यःप्रतिवसंति ॥ अतस्तत्सांमुख्यात्तत्रयात्रानकार्या ॥ क्रमात्पूर्वोत्तराग्नेयनैर्ऋत्यइत्युक्तत्वात् ॥ रविभौमशनीनामन्यतमेक्रूरग्रहेकर्कस्थेसतिचतुर्थीशुभकार्येषुवर्जिता ॥ आद्याश्चतस्रइत्युक्तत्वात् ॥ सूर्येवृषकुंभस्थितेसतिचतुर्थीदग्धाभवति ॥ एकांतरादिनकरइत्यादिद्वितीयानिर्णयएवोक्तम् ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेचतुर्थीनिर्णयः ॥ ॥ अथपंचमीनिर्णीयते ॥ ॥ पंचमीतिथिरुपवासादिषुचतुर्थ्यायुतैवग्राह्या ॥ तदुक्तंनि

गमे ॥ युगभूतानीति ॥ जाबालिरपि ॥ प्रतिपत्पंचमीचैव उपोष्यापूर्वसंयुतेति ॥ पैठीनसिरपि ॥ पंचमीसप्तमीचैवदशमीचत्रयोदशी ॥ प्रतिपन्नवमीचैवकर्त्तव्यासंमुखीतिथिरिति ॥ संमुखीसायाह्नव्यापिनी ॥ अत्रत्रयोदशीशुक्ला ॥ तथाच ॥ एकादशीतथाषष्ठीअमावास्याचतुर्थिका॥ उपोष्याःपरसंयुक्ताःपराःपूर्वेणसंयुताइति॥ चतुर्थ्याःपरापंचमीपूर्वयुताचतुर्थ्यायुतो पोष्येत्यर्थः ॥ एतैर्वाक्यैः पंचम्याश्चतुर्थीयुतायाएवविधानात् ॥ ब्रह्मवैवर्तवचनेनपरविद्धानिषेधाच्च ॥ यथा ॥ प्रतिपत्पंचमीचैवसावित्रीवटपूर्णिमा ॥ नवमीदशमीचैवनोपोष्याःपरसंयुताइति ॥ यत्तुब्रह्मवैवर्त्तवचनम् ॥ पंचमीतुप्रकर्त्तव्याषष्ठीयुक्तातुनारद ॥ नहिषष्ठीनागविद्धाकर्त्तव्यातुकदाचनेति ॥ तत्तुस्कंदोपवासविषयंनागपूजाविषयंच॥ननुकृष्णाष्टमीस्कंदषष्ठीशिवरात्रिश्चतुर्दशी॥एताःपूर्वयुताःकार्यास्तिथ्यंतेपारणंभवेदिति ॥ स्कंदोपवासस्यषष्ठ्यांविधानात्पंचम्याः षष्ठीयुतत्वेनप्राशस्त्याभिधानंस्कंदोपवासविषयाविरुद्धमितिचेत् ॥ सत्यम् ॥ देशभेदेनव्यवस्था कल्पनीया॥केषुचिद्देशेषुपंचम्यामुपोष्यषष्ठ्यांस्कंदंपूजयंति॥तदुक्तं वाराहपुराणे॥आषाढेशुक्लषष्ठीतुतिथिःकौमारिकास्मृता ॥कुमारमर्चयेत्तत्रपूर्वत्रोपोष्यवैदिनइति॥ पूर्वत्रादिनेपंचम्यामित्यर्थः ॥स्कंदपुराणेपि॥स्कंदोपवासेस्वीकार्यापंचमीपरसंयुता॥त्रिमुहूर्त्तातुषष्ठ्यांस्यात्पूर्वयुक्तान्यथाभवेदिति ॥एषुवचनेषुस्कंदोपवासस्यपंचम्यांविधानात्पंचम्याःषष्ठीयुतायाउपोष्यत्वविधानं देशभेदेनव्यवस्थितस्कंदोपवासविषयमित्यविरोधः॥ अतश्चस्कंदोपवासव्यतिरिक्तोपवासादिषुचतुर्थीयुतैवपूज्येतिसिद्धांतः ॥ चैत्रशुक्लपंचम्यांत्वनंतादीन्नागाधिपान्संपूज्यक्षीरघृतनैवेद्यंदद्यात् ॥ तदुक्तंदेवीपुराणेचैत्रमासतिथिप्रक्रमे ॥ पंचम्यांपूजयेन्नागाननंताद्यान्महोरगान् ॥ क्षीरंसर्पिस्तुनैवेद्यंदेयंसर्वसुखावहामिति ॥ मत्स्यपुराणेऽपिनागमूर्तिस्वरूपमुक्तम् ॥ यथा ॥

१ भूतेतिपाठान्तरम् ।

नागाश्चैवतुकर्त्तव्याःखड्गखेटकधारिणः॥ अधःसर्पाकृतिस्तेषांनाभेरू र्ध्वंतुपौरुषी ॥ फणाश्चमूर्ध्निकर्तव्याद्विजिह्वाबहवोऽसमाइति ॥ असमाविषमसंख्याकाः ॥ ॥ इतिचैत्रपंचमीनिर्णयः॥ ॥अथश्रावणशुक्लपंचम्यांद्वारस्योभयोः पार्श्वयोर्गोमयेननागान्विलिख्यदधिदूर्वांकुरपुष्पोपहारादिभिः संपूज्यतत्प्रीतयेब्राह्मणान्भोजयेत् ॥ एतेनसर्पभयंकुत्रचिन्नभवति ॥ तदुक्तंभविष्योत्तरे ॥ श्रावणेमासिपंचम्यां शुक्लपक्षेनराधिप ॥ द्वारस्योभयतोलेख्यागोमयेनविषोल्बणाः ॥ पूजयेद्विधिवद्वीरदधिदूर्वांकुरैःकुशैः ॥ गंधपुष्पोपहारैश्चब्राह्मणानांचतर्पणैः ॥ एतस्यांपूजयंतीहनागान्भक्तिपुरःसराः ॥ नतेषांसर्पतोवीरभयंभवतिकुत्रचिदिति ॥ ॥ इतिश्रावणपंचमी ॥ ॥ अथभाद्रशुक्लपंचम्यांऋषिपंचमीव्रतम् ॥ तत्रप्रायेणनार्यःकश्यपादीन्सप्तऋषीन्संपूज्याकृष्टभूम्युत्पन्नश्यामाकादिमुन्यन्नशाकाहारेणोपोष्यसर्वपापविनिर्मुक्ताःसर्वान्कामान्प्राप्नुवंति॥तदुक्तंब्रह्मपुराणे ॥ ऋषिरुवाच॥ सुशीलेशृणुतत्सम्यग्व्रतानामुत्तमंव्रतम् ॥ येनचीर्णेनसहसापापात्तस्मात्प्रमुच्यते ॥ दुःखत्रयाभिघातश्चजायतेनात्रसंशयः॥कल्याणानिविवर्धंतेसंपदश्चनिरापदः॥नभस्यशुक्लपक्षेतुयदाभवतिपंचमी ॥ नद्यादिकेतदास्नात्वाकृत्वानियममेवच॥ब्राह्मणीक्षत्रियावैश्याशूद्राचापिवरानने ॥ कृत्वानैमित्तिकंकर्मगत्वानिजगृहंपुनः ॥ वेदींसम्यक्प्रकुर्वीतगोमयेनोपलेपिताम् ॥ रंगवल्लीसमायुक्तांनानापुष्पोपशोभिताम्॥ तत्रसप्तऋषीन्दिव्यान्भक्तियुक्ताप्रपूजयेत् ॥ गंधैश्चविविधैःपुष्पैर्धूपैर्दीपैःसुशोभनैः ॥ ततोनैवेद्यसंपन्नमर्घ्यंदद्याच्छुभैःफलैः ॥ अर्घ्यमंत्रश्च ॥ “ कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौतमः ॥ जमदग्निर्वसिष्ठश्चसप्तैतेऋषयःस्मृताः ॥ गृह्णीतार्घ्यंमयादत्तंतुष्टाभवतसर्वदेति ॥ एवंपूजांविनिर्वर्त्यऋषीन्ध्यात्वासमाहिता ॥ अकृष्टपृथ्वीसंजातशाकाहारंप्रकल्पयेत् ॥ शयीतब्रह्मचर्येणऋषीन्ध्यात्वासमाहिता॥अनेनविधि

नासप्तवर्षाणिव्रतमाचरेदिति ॥ अस्योद्यापनम् ॥आदौमध्येतथाचांते कुर्यादुद्यापनंबुधः ॥ आचार्यान्वरयेत्सप्तवेदवेदांगपारगान् ॥ प्रतिमाःसप्तकुर्वीतसुवर्णेनस्वशक्तितः ॥ जटिलाःसाक्षसूत्राश्चकमंडलुसमन्विताः ॥ संस्थाप्यकलशेष्वेतान्मृन्मयेष्वव्रणेषुच॥ स्नापयेद्विधिवद्भक्त्यापंचामृतविधानतः ॥ एवंपूजांविनिर्वर्त्यअर्घ्यंदद्याद्यथापुरा ॥ आचार्यान्पूजयेद्भक्त्यावस्त्रालंकारभूषणैः॥ अनुज्ञयागुरोःपश्चाद्ब्राह्मणेभ्योनिवेदयेत्॥प्रतिमावस्त्रसंयुक्ताभोजयित्वायथाविधि ॥ अनेनविधिनासम्यग्व्रतमेतत्समाचरेत् ॥ सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयत्फलम् ॥ सर्वदानेषुयद्देयंतदेतद्व्रतधारणादिति ॥ ॥ इतिऋषिपंचमीव्रतम् ॥ अथाश्विनशुक्लपंचम्यांशचीसहितंकुशमयंनागंघृतक्षीरसलिलैःस्नापयित्वासंपूज्य क्षीरसिक्तगोधूमान्नंनैवेद्यंदद्यात् ॥ तदुक्तंभविष्योत्तरे ॥ तथाचाश्वयुजेमासिपंचम्यांकुरुनंदन कृत्वाकुशमयंनागमिंद्राण्यासहपूजयेत् ॥ घृतोदकाभ्यांपयसास्नापयित्वाविशांपते ॥ गोधूमैःपयसासिक्तैर्भक्ष्यैश्चविविधैस्तथा ॥ पूजयेत्कुरुशार्दूलतस्यशेषादयोनृप ॥ नागाःप्रीताभवंतीहशांतिमाप्नोतिवैविभो इति ॥ अत्रैव प्रशोधितकेशायादेव्याःपूर्वाह्णस्नानंकारयेत् ॥ तदुक्तंदेवीपुराणे ॥ प्रातरेवतुपंचम्यांस्नापयेत्सलिलैःशुभैरिति ॥ ॥ इत्याश्विनपंचमी॥ ॥ अथमाघशुक्लपंचमीश्रीपंचमी॥ तत्ररतिसहितंमदनंसंपूज्यवसंतोत्सवारंभःकार्यः ॥ तदुक्तंपुराणसमुच्चये॥ माघमासेनृपश्रेष्ठशुक्लायां पंचमीतिथौ ॥ रतिकामौतुसंपूज्यकर्त्तव्यःसुमहोत्सवः॥दानानिचप्रदेयानितेनतुष्यतिमाधवइति॥ ॥ इतिश्रीपंचमी॥एवमन्यान्यपिस्कंदोपवासनागपूजाव्यतिरिक्तानिपंचमीव्रतानि चतुर्थीयुक्तपंचम्यामेवकार्याणीतिसिद्धम् ॥ अथसिद्धविरुद्धादिकंलिख्यते ॥ पंचमीगुरुवारेणसिद्धाभवति ॥ तदुक्तम् ॥ गुरौदशमीपंचम्यौपौर्णमासीविशाखिका ॥ भाग्यानुराधेसिद्धाःस्युस्तथापुष्यपुनर्वसूइति ॥ इयंश

१ अन्नंदद्यादितिपाठः ।

निवारेणविरुद्धा ॥ तदुक्तम् ॥ सौरेहस्तोत्तराषाढारेवतीचित्रयासह ॥ पंचमीचैवषष्ठीचअर्यम्णासहवर्जितेति॥अर्यम्णोत्तराफाल्गुन्या॥ अथात्रकृत्यमुच्यते ॥ पंचम्यादिषुपूर्णातिथिषुमांगल्यविवाहयात्राशांतिकपौष्टिकादिकर्माणिकार्याणि ॥ अमावास्यायांपूर्णात्वेपिपितृकर्ममुक्त्वान्यच्छुभंकर्मनकार्यम्॥तदुक्तंभास्करेण॥विवाहयात्रोत्सवशांतिकानिपूर्णासुकार्याणिचपौष्टिकानीति॥श्रीपतिरपि॥ पूर्णासुमांगल्यविवाहयात्रासपौष्टिकंशांतिककर्मकार्यम् ॥ सदैवदर्शेपितृकर्ममुक्त्वानान्यद्विदध्याच्छुभमंगलादीति॥ पौष्टिकंनामायुर्वृद्ध्यर्थंक्रियमाणंहोमादिकंकर्म ॥शांतिकंतुग्रहपीडोत्पातादिशांतयेक्रियमाणंदानहोमादि॥ शुभंशांतिकादि ॥ मंगलंविवाहादि ॥ इयंपंचमीरविभौमशनीनामन्यतमेक्रूरग्रहेमेषादिराशिचतुष्टयस्थितेसातिदुष्टाभवति ॥ एषांचतुर्णामपिपंचमीस्यादित्युक्तत्वात् ॥ अत्रदक्षिणस्यांदिशियोगिनीसांमुख्यात्तत्रयात्रानकार्या ॥ नैर्ऋत्येयाम्यपश्चिमइत्याद्युक्तमेव॥ पक्षद्वयगतासु सर्वास्वपिपंचमीषुतिथिपतित्वेनशेषादयोनागाःपूज्याः ॥ उक्तंच ॥ शेषादीनांफणीशानांपंचम्यांपूजनंभवेदिति ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेपंचमीनिर्णयः ॥ ॥ अथषष्ठीनिर्णयः ॥ ॥ षष्ठीतिथिरुपवासादिषुसप्तमीयुतैवग्राह्या ॥ तदुक्तं षण्मुन्योरिति ॥ बृहस्पतिनाप्युक्तम् ॥ एकादश्यष्टमीषष्ठीद्वितीयाचचतुर्दशी ॥ अमावास्यातृतीयाचताउपोष्याःपरान्विताइति ॥ षष्ठ्याःसप्तमीयुतायाःपूज्यत्वविधानात् ॥ तथाच ॥ नागविद्धातुयाषष्ठीभानुविद्धोमहेश्वरः ॥ चतुर्दशीकामविद्धातिस्रस्तामलिनामताइति ॥ तथाच ॥ नहिषष्ठीनागविद्धाकर्त्तव्यातुकदाचन ॥ तथाच ॥ नागविद्धातुयाषष्ठीशिवविद्धातुसप्तमी ॥ दशम्येकादशीविद्धानोपोष्याःस्युःकथंचनेति ॥ तथाच ॥ द्वितीयापंचमीवेधादित्यादिभिर्जाबालिब्रह्मवैवर्त्तसौरपुराणवृद्धवसिष्ठवाक्यैः पंचमीयुक्तायानिषेधाच्च

१ पौर्णमासीति पाठान्तरम् ।

[illegible]सिद्धांतः ॥ ॥ इतिषष्ठीसामान्यनिर्ण
यः ॥ ॥ आषाढशुक्लषष्ठीस्कंदषष्ठी॥तत्रपंचम्यामुपोष्यषष्ठ्यांस्कंदं
पूजयेत्॥ तदुक्तंवाराहपुराणे ॥ आषाढेशुक्लषष्ठीतुतिथिःकौमारिका
स्मृता ॥ कुमारमर्चयेत्तत्रपूर्वत्रोपोष्यवैदिनइति ॥ भाद्रपदशुक्ल
षष्ठ्यामपिदक्षिणापथस्थंकार्त्तिकेयंदृष्ट्वाब्रह्महत्यादिपापैर्मुच्यते तत्र
स्नानदानपूजादिकंकृतमक्षय्यंभवति ॥ ॥ तदुक्तंभविष्योत्तरे ॥
॥ येयंभाद्रपदेमासिषष्ठीस्याद्भरतर्षभ ॥ इयंपापहरापुण्याशिवाशां
ताशुभानृप ॥ स्नानदानादिकंसर्वमस्यामक्षय्यमुच्यते ॥ येस्यां
पश्यतिगांगेयंदाक्षिणापथमाश्रितम् ॥ ब्रह्महत्यादिपापैस्तेमुच्यंतेनात्र
संशयइति ॥ इयमेवसूर्यषष्ठी ॥ अत्रस्नात्वाभास्करंसंपूज्यपञ्चगव्यं
प्राश्याश्वमेधफलंप्राप्यते ॥ तदुक्तम् ॥ शुक्लेभाद्रपदेषष्ठ्यांस्नानंभा
स्करपूजनम् ॥ प्राशनंपञ्चगव्यस्यअश्वमेधफलप्रदमिति ॥ भाद्रप
दकृष्णषष्ठीभौमवारेणरोहिणीनक्षत्रेणव्यतीपातयोगेनच युक्ता कपि
लाषष्ठीत्युच्यते ॥ तत्रव्रतोपवासादिभिर्भास्करंपूजयित्वाब्राह्मणा
यकपिलांदद्यात् ॥ तदुक्तंवाराहपुराणे ॥ नभस्यकृष्णपक्षेतुरोहि
णीपातभूसुतैः ॥ युक्ताषष्ठीपुराणज्ञैःकपिलापरिकीर्तिता ॥ व्रतोपवा
सनियमैर्भास्करंतत्रपूजयेत् ॥ कपिलांचद्विजाग्र्यायदत्त्वाक्रतुफलं
लभेदिति ॥ पुराणसमुच्चयेतुविशेषउक्तः ॥ भाद्रेमास्यसितपक्षेभा
नौचैवकरेस्थिते ॥ पातेकुजेचरोहिण्यांसाषष्ठीकपिलाभवेदिति ॥
अत्रभाद्रपदकृष्णषष्ठीचांद्रमासाभिप्रायेणोक्ता ॥ अतश्चापरपक्षेकपि
लाषष्ठीभवेदिति॥ अत्रभाद्रपदमासकृष्णपक्षषष्ठ्यांरोहिणीनक्षत्रभौम
वारव्यतीपातयोगानांसर्वेषांयौगपद्येनयोगेनैवप्राशस्त्यं नकेवलष

ष्ठ्यादीनाम् ॥तदुक्तम् ॥ संयोगेतुचतुर्णांतुनिर्दिष्टापरमेष्ठिना ॥सूर्य स्यहस्तस्थितत्वंसतिसंभवेफलातिशयप्रदम् ॥अतश्चेयंषष्ठीपूर्वदिनेप रदिनेवायत्रैवयोगचतुष्टयसंभवःसैवग्राह्या ॥ भाद्रपदकृष्णषष्ठीचंद्रष ष्ठीचोच्यते ॥ साचंद्रोदयव्यापिनीग्राह्या ॥ उभयत्रचंद्रोदयव्यापित्वे पूर्वविद्धैवप्रशस्यते॥तदुक्तम् ॥तद्भाद्रपदेमासिषष्ठ्यांपक्षेसितेतरे ॥ चंद्रषष्ठीव्रतंकुर्यात्पूर्वविद्धाप्रशस्यतइति ॥ तथा ॥ चंद्रोदयेयदाषष्ठी पूर्वाह्णेवापरेहनि ॥ चंद्रषष्ठ्यसितेपक्षेसैवोपोष्याप्रयत्नतइति ॥ ॥ इतिभाद्रपदषष्ठी ॥ ॥ अथाश्विनशुक्लषष्ठ्यांज्येष्ठानक्षत्रयुक्तायामसं भवेकेवलायांबिल्ववृक्षनिमंत्रणंकार्यम् ॥ तत्रायंमंत्रः ॥ "ॐरावणस्य वधार्थायरामस्यानुग्रहायच ॥ अकालेब्रह्मणाबोधोदेव्यास्त्वयिकृ तःपुरा ॥ श्रीशैलशिखरेजातःश्रीफल श्रीनिकेतन ॥ नेतव्योसिम याागच्छपूज्योदुर्गास्वरूपतइति" ॥ ॥ इत्याश्विनषष्ठी ॥ ॥ कार्ति कशुक्लषष्ठ्यांभौमवारयुक्तायांवह्निंसंपूज्य वह्निमहोत्सवंकुर्यात् ॥ तदुक्तं मत्स्यपुराणे ॥ वृश्चिकार्केशुक्लषष्ठीभौमवारेप्युपस्थिता ॥ महाषष्ठीतिसाप्रोक्तासर्वपापहरातिथिः ॥ तस्यांस्वपितिवैवह्निःपूर्व त्रोपोष्यवैदिने ॥ षष्ठ्यांवह्निसमभ्यर्च्यकुर्याद्वह्निमहोत्सवमिति ॥ वृश्चिकार्केकार्त्तिकेमासीत्यर्थः॥ ॥इतिकार्तिकषष्ठी॥ ॥अथमार्गशी र्षशुक्लषष्ठ्यांस्कंदस्तारकंहतवानतस्तत्रस्कंदंसंपूज्य स्नानदानादि कृतमक्षय्यंभवति ॥ तदुक्तंभविष्योत्तरे ॥ येयंमार्गशिरेमासिषष्ठी भरतसत्तम ॥ पुण्यापापहराधन्याशिवाशांतागुहप्रिया ॥ निह त्यतारकंषष्ठ्यांगुहस्तारकराजजित् ॥ रराजतेनदयिताकार्त्तिकेय स्यसातिथिः ॥ स्नानदानादिकंकर्मतस्यामक्षय्यमुच्यतइति ॥ ॥ इतिमार्गशीर्षषष्ठी ॥ ॥ पक्षद्वयगतासुसर्वमासषष्ठीषुतिथिपतित्वेन स्कंदंसंपूजयेत् ॥ तदुक्तम् ॥ षष्ठ्यांपूजागुहस्यचेति ॥ अथसि द्धविरुद्धादिकंलिख्यते ॥ तदुक्तंप्रतिपन्निर्णये ॥ शुक्रेणप्रतिपत्ष

ष्ठीत्यादि ॥ षष्ठीभौमेनापिसिद्धा ॥ भौमेषष्ठीतृतीयास्यादितिचोक्तमे
व ॥ षष्ठीशनिवारेणविरुद्धा॥तदुक्तम् ॥सौरेहस्तोत्तराषाढारेवतीचित्र
यासह॥पंचमीचैवषष्ठीचअर्यम्णासहवर्जितेति ॥ षष्ठ्यांशनिवारेणक्र
कचाभिधानोयोगः ॥ तदुक्तंरत्नमालायाम् ॥ तिथेश्चवारस्यचयत्रसं
ख्ययात्रयोदशस्युर्मिलनेकृतेसति ॥स्मृतः सयोगःक्रकचाभिधानको
विवर्जनीयःशुभकर्मसुध्रुवमिति॥अत्रापिप्रतिपद्विहितमेवविवाहादिक
मेकार्यम् ॥ विवाहंप्रतिपत्षष्ठ्योरित्याद्युक्तमेव॥अत्रदंतकाष्ठंतैलाभ्यं
गस्नानंनिषिद्धम् ॥ यथा ॥ दंतकाष्ठेकुलद्रव्यजातिनाशोयथाक्रमम्॥
जायतेषष्ठ्यमावास्याप्रतिपत्सुकृतेसतीति ॥ तथाचरत्नमालायाम्॥
षष्ठीषुतैलंपलमष्टमीषुक्षुरक्रियांचैवचतुर्दशीषु ॥ स्त्रीसेवनंनष्टक
लासुपुंसामायुःक्षयार्थंमुनयोवदंति ॥ अयंदंतकाष्ठादिनिषेधस्ता
त्कालिकतिथावेव ॥ तदुक्तम् ॥ स्नानेचाभ्यंजनेचैवदंतधावनमै
थुने ॥ तिथिस्तात्कालिकीज्ञेयातथामरणजन्मनोरिति ॥ अत्र
षष्ठीषुतैलमित्युक्तत्वात्तिलतैलस्नानमेवनिषिद्धम् ॥ नतुसर्षपादि
तैलस्नानम् ॥ तदुक्तंस्मृतिसमुच्चये ॥ यत्रतैलनिषेधःस्यात्तिलतै
लंनिषिध्यते ॥ अभ्यंगस्यनिषिद्धेतुसर्षपादेरपीष्यतइति ॥ रवि
भौमशनीनामन्यतमेक्रूरग्रहेसिंहस्थितेसतिषष्ठीदुष्टाभवति ॥ पराः
परेषामित्याद्युक्तत्वात् ॥ तथाच ॥ कर्कमेषस्थेसूर्येषष्ठीदग्धाभव
ति ॥ तत्रशुभकर्मनकार्यम् ॥ तच्चद्वितीयानिर्णये एकांतरादिनकरइ
त्याद्युक्तम् ॥ षष्ठ्यांपश्चिमेयोगिनीसांमुख्याद्यात्रानकार्या ॥ याम्य
पश्चिमइत्याद्युक्तत्वात् ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णया
मृतेषष्ठीनिर्णयः॥ ॥अथसप्तमीनिर्णयः ॥ ॥ सप्तमीतिथिरुपवासादि
षुषष्ठीयुतैवग्राह्या ॥तदुक्तम्॥ षण्मुन्योरिति ॥ तथाच ॥ षष्ठ्यष्टमी
अमावास्याकृष्णपक्षेत्रयोदशी ॥ एताःपरयुताःपूज्याःपराःपूर्वेणसं
युताइति ॥ षष्ठ्याःपरासप्तमी ॥ सापूर्वयुतापूज्येत्यर्थः ॥ पैठीन

सिरपि ॥ पंचमीसप्तमीचेति ॥ एभिर्वचनैः सप्तम्याः पूर्वविद्धाया एवावि धानात् ॥ तथा॥नागविद्धातुयाषष्ठीरुद्रविद्धोदिवाकरः ॥ कामविद्धो भवेद्विष्णुर्नग्राह्यास्तेतुवासराइति ॥अत्रनागः पंचमी ॥ रुद्रोऽष्टमी ॥ दिवाकरः सप्तमी ॥ कामस्त्रयोदशी ॥ विष्णुर्द्वादशी ॥ तथाच ॥ स प्तमीनाष्टमीयुक्तानसप्तम्यायुताष्टमीति ॥ तथाच ॥ सप्तमीपरवि द्धातुनोपोष्यैवकदाचनेत्यादिवचनैः परविद्धानिषेधाच्चसप्तमीषष्ठीयुते वोपोष्येतिसिद्धांतः ॥ ॥ इतिसप्तमीसामान्यनिर्णयः ॥ ॥ अथ विशेषनिर्णयः ॥ ॥ अथचैत्रशुक्लसप्तम्यांदमनकादिभिः सूर्यपूजाक र्त्तव्या ॥ तदुक्तंदेवीपुराणे चैत्रमासतिथिप्रक्रमे ॥ भास्करस्य तुसप्तम्यांपूजांदमनकादिभिः ॥ कृत्वाप्राप्नोतिभोगादीन्विगतारिर्महा तपाइति ॥ वैशाखशुक्लसप्तम्यांनिंबसप्तमीव्रतंकुर्यात् ॥ तदुक्तंभवि ष्योत्तरेसप्तमीप्रकरणे॥तृतीयासप्तमीवीरतच्छृणुष्वाग्रतोमम ॥ निंब पत्रैः स्मृतायातुपापघ्नीशोकनाशिनी॥ ॥अथआषाढशुक्लसप्तम्यांविव स्वान्नामसूर्योजातः ॥ तत्रवर्तुलमंडलस्थितंसूर्यंधूपदीपानुलेपनादि भिः संपूज्यभक्ष्यभोज्यादिनैवेद्यंदद्यात् ॥ तदुक्तंब्रह्मपुराणे ॥ आषाढ शुक्लसप्तम्यांविवस्वान्नामभास्करः ॥ जातः पूर्वंतुतस्मात्तंतत्रोपोष्य जपेत्सदा ॥ रथचक्राकृतौरम्येमंडलेसर्वकामदम् ॥ भक्ष्यैर्भोज्यैस्त थापेयैः पुष्पैर्धूपैर्विलेपनैरिति ॥ ॥ आश्विनशुक्लसप्तम्यांमूलयुक्ता यांकेवलायांवापूर्वंनिमंत्रितांफलद्वययुक्तांबिल्वपत्रिकामानीयतयास हपंचम्यांस्नापितांदेवींपूजयेत् ॥ तदुक्तंलिंगपुराणे ॥ मूलाभावेच सप्तम्यांकेवलायांप्रवेशयेत् ॥ युग्माभिन्नांचबिल्वस्यफलाभ्यांशाखि कांतथा ॥ तथाचप्रतिमांदेव्याः स्नात्वाभ्युक्ष्यप्रवेशयेदितिच ॥ पू जाचबिल्वपत्रैरेवकार्या ॥ तदुक्तंब्रह्मपुराणे ॥ सप्तम्यांपत्रिकापूजे ति ॥ ॥ मार्गशीर्षशुक्लसप्तमीमित्रसप्तमी ॥ तत्रपूर्वदिनेउपोष्यकृतव पनः स्नात्वारविंसर्वोपचारैः संपूज्यब्राह्मणान्भोजयेत् ॥ ततः स्वयंभ

धुप्लुतंपिष्टान्नंभुंजीत ॥ तदुक्तंब्रह्मपुराणे ॥ यद्विष्णोर्दक्षिणंनेत्रंतदेवाकृतिमत्पुनः ॥ अदितेःकश्यपाज्जज्ञेमित्रोनामदिवाकरः॥ सप्तम्यांतेनसाख्यातालोकेस्मिन्मित्रसप्तमी ॥ षष्ठ्यांचस्नपनंकार्यंतस्मैमित्रायभानवे ॥ तत्रोपवासःकर्त्तव्योभक्ष्याण्यथफलानिच ॥ रात्रौजागरणंकार्यंगीतनृत्यपुरस्कृतम्॥ सप्तम्यांवपनंकुर्यात्तत्रस्नात्वायजेद्रविम् ॥ नानाकुसुमसंभारैर्भक्ष्यपिष्टमयैःशुभैः ॥ मधुनाचप्रभूतेनहोमजाप्यसमाधिभिः ॥ ब्राह्मणान्भोजयेत्पश्चाद्दीनानाथांश्चमानवान् ॥ अष्टम्यांसंविभज्यांश्चतथाचनटनर्तकान्॥ दिनद्वयेचभोक्तव्यंपिष्टमन्नंमधुप्लुतमिति ॥ दिनद्वयेसप्तम्यामष्टम्यांच ॥ ॥ माघशुक्लसप्तमीअचलासप्तमी जयंतीचोच्यते ॥ ॥ सासूर्यग्रहणतुल्या तस्यामरुणोदयव्यापिन्यांस्नात्वासूर्यायार्घ्यंदद्यात् ॥ तदुक्तंभविष्योत्तरे ॥ माघस्यशुक्लपक्षेतुसप्तमीयात्रिलोचन ॥ जयंतीनामसाप्रोक्तासर्वपापहरातिथिरिति ॥ स्मृतिचन्द्रिकायामपि ॥ सूर्यग्रहणतुल्यातुशुक्लामाघस्यसप्तमी ॥ अरुणोदयवेलायांतत्रस्नानंमहाफलमिति॥ तथा ॥माघेमासिसितेपक्षेसप्तमीकोटिभास्करा ॥ कुर्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसंपदइति ॥ अर्घ्यदानमंत्रश्च ॥ यद्यज्जन्मकृतंपापंमयाजन्मसुसप्तसु ॥ तन्मेरोगंचशोकंचमाकरीहंतुसप्तमीति ॥ इयमेवरविवारेणपुंनामनक्षत्रेणचयुक्तामहतीप्रोक्तातत्रसूर्यमर्चयेत् ॥ तदुक्तंगर्गेण ॥ रविवारेणयुक्तायांसप्तम्यामुत्तरायणे ॥पुन्नामधेयनक्षत्रेपूजयेच्चदिवाकरमिति ॥ उत्तरायणेमाघमासे ॥ पुन्नामनक्षत्राणिच ॥ हस्तोमैत्रस्तथापुष्योमृगशीर्षःपुनर्वसू ॥ पुंनामधेयनक्षत्राण्येतान्याहुर्मनीषिण इति ॥ अन्यापिसप्तमीभानुवारयुक्तामहाफलप्रदा ॥ तदुक्तम् ॥ सोमवारेत्वमावास्याभानुवारेचसप्तमी ॥ अंगारकदिनेप्राप्तेचतुर्थीवाचतुर्दशी ॥ षष्टिवर्षसहस्राणितत्कर्त्तावेिंदतेफलमिति ॥ अत्रचतुर्थीशुक्ला॥ चतुर्दशीकृष्णाप्रशस्ततरा ॥ षष्ठीरविवाराभ्यांयुक्तायांसप्तम्यांपद्मकाख्यो

योगोभवति ॥ तदुक्तम् ॥ षष्ठीसप्तमिकायोगेवारश्चेदंशुमालिनः ॥ योगोयंपद्मकोनामसहस्रार्कग्रहैःसमइति ॥ पक्षद्वयगतासुसर्वमाससप्तमीषुतिथिपतित्वेनादित्यःपूज्यः॥ उक्तंच ॥सप्तम्यांभास्करस्यचेति ॥ ॥ अथसिद्धविरुद्धादिकंलिख्यते ॥ ॥सप्तमीबुधवारेणसिद्धाभवति ॥ तदुक्तम् ॥ बुधवारेद्वितीयाचद्वादशीसप्तमीपुनरिति ॥ सप्तम्यांरविवारेणसंवर्त्ताख्योविरुद्धोयोगोभवति॥ तदुक्तम् ॥सप्तम्यांदिनकरवासरोयदिस्याद्वारश्चेत्प्रतिपदिवेंदुनंदनस्य॥ संवर्तोमुनिभिरुदीरितःसयोगःसंत्याज्यःशुभफलकांक्षिभिःप्रयत्नादिति ॥सप्तमीरविवारादिविरुद्धयोगेषुकश्चिद्विशेषोलिख्यते॥यथा ॥ विरुद्धयोगास्तिथिवारजातानक्षत्रवारप्रभवाश्चयेऽत्र ॥हूणेषुवंगेषुखशेषुवर्ज्याःशेषेषुदेशेषुनतेनिषिद्धा इति॥सप्तम्यांचद्वितीयांचतद्व्रतपौष्टिकादिकर्मकार्यम् ॥व्रतपौष्टिकेद्वितीयाद्वादशीसप्तमीषुकुर्वीतेत्युक्तवात् ॥सप्तम्यामामलकस्नानंलक्ष्मीनाशकरम् ॥ तदुक्तम् ॥ सप्तम्यांनिंदुनवमीषुचसंपदित्सुःस्नायात्कदाचिदपिनामलकैर्मनुष्यइति ॥ रविभौमशनीनामन्यतमेक्रूरग्रहेकन्याराशिस्थितेसप्तमीशुभकर्मसुनिषिद्धा ॥ तदुक्तम् ॥ पराःपरेषामित्यादि॥सप्तम्यांवायव्यांदिशियोगिनीसांमुख्याद्यात्रानकार्या वायव्येशानयोरित्युक्तत्वात् ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृते सप्तमीनिर्णयः ॥ ॥ अथाष्टमीनिर्णयः ॥ तत्रशुक्लाष्टमीनवमीयुतैव ग्राह्या ॥ तदुक्तम् ॥ वसुरंध्रयोरिति ॥ ब्रह्मवैवर्त्तेपि ॥ नवम्यासहकार्यास्यादष्टमीसर्वदाबुधैरिति॥स्मृत्यंतरेपि ॥शुक्लपक्षेष्टमीचैवशुक्लपक्षेचतुर्दशी ॥पूर्वविद्धानकर्त्तव्याकर्त्तव्यापरसंयुता॥ उपवासेषुकार्येषुएषधर्मःसनातनइति॥बृहस्पतिरपि॥ एकादश्यष्टमीषष्ठीपौर्णमासीचतुर्दशी ॥ अमावास्यातृतीयाचताउपोष्याःपरान्विताइति ॥ निगमेपि॥ षष्ठ्यष्टमीअमावास्येति॥एषुवाक्येष्वष्टमीचतुर्दश्योःशुक्लेवेदितव्ये॥इत्यादिभिर्वाक्यैः परविद्धाविधानात् ॥ तथाच ॥ नाष्टमीसप्तमीयु

क्तासप्तमीनाष्टमीयुतेति ॥ तथा ॥ भानुविद्धोमहेश्वरइति ॥ तथा ॥ उपवासेसप्तमीतुवेधाद्धंत्युत्तरांतिथिमित्यादिवाक्यैः पूर्वविद्धानिषेधा च्चशुक्लाष्टमीनवमीयुतैवोपोष्येतिसिद्धांतः ॥दूर्वाष्टमीतुशुक्लापिपूर्वैवो पोष्या॥कृष्णपक्षाष्टमीतुसामान्यतः पूर्वयुतैवग्राह्या॥ तदुक्तम्॥कृष्ण पक्षेष्टमीचैव कृष्णपक्षेचतुर्दशी॥पूर्वविद्धातुकर्त्तव्यापरविद्धानकुत्रचि दिति॥ननु अष्टमीनवमीयुग्मेमहोत्साहोमहाधनैः ॥शिवशक्त्योःशिव क्षेत्रेपक्षयोरुभयोरपीतिवाक्येनपक्षद्वयगतयोरष्टम्योर्नवमीयुक्तत्वेनप्रा शस्त्यमभिहितं कृष्णपक्षेष्टमीचेतिवाक्येनपूर्वविद्धाष्टम्याःप्राशस्त्य मुक्तमितिविरोधइतिचेत्॥सत्यम्॥नवमीयुक्ताष्टम्याअर्द्धनारीश्वररूप त्वादुमामहेश्वरपूजाविषयेकृष्णाष्टमीनवमीयुतैवग्राह्या॥अन्यव्रतेषुसा मान्यतः सप्तमीयुतैवेत्यविरोधः ॥ तदुक्तम् ॥ अष्टम्यानवमीविद्धान वम्याचाष्टमीतथा ॥ अर्द्धनारीश्वरप्रायाउमामाहेश्वरीतिथिः ॥ अष्टमी नवमीयोगेतूमामहेश्वरपूजाभोजराजीयेनोक्ता ॥ यथा ॥ अष्टम्यां पूज्यतेरुद्रोनवम्यांशक्तिरर्च्यते ॥ द्वयोर्योगेतुसंप्राप्तेपूजायांतुमहाफल मिति ॥ अष्टमीनवम्योर्योगेद्वयोःशक्तिरुद्रयोःपूजायांमहाफलमित्य र्थः ॥ अतश्चोमामहेश्वरपूजाकृष्णाष्टम्यामपिनवमीयुक्तायामेवकार्ये तिसिद्धम्॥ ॥इत्यष्टमीसामान्यनिर्णयः॥ ॥अथविशेषनिर्णयः॥ ॥तत्र चैत्रशुक्लाष्टमीत्वशोकाष्टमी ॥ तस्यांपुनर्वसुनक्षत्रयुतायामष्टावशोक कलिकाःप्राश्याः ॥ तदुक्तंलिंगपुराणे ॥ अशोककलिकाश्चाष्टौ येपिबंतिपुनर्वसौ ॥ चैत्रेमासिसिताष्टम्यांनतेशोकमवाप्नुयुरिति ॥ प्राशनमंत्रश्च ॥ त्वामशोककराभीष्टमधुमाससमुद्भवम् ॥ पिबामि शोकसंतप्तोमामशोकंसदाकुर्विति ॥ अत्राप्याश्विनशुक्लाष्टम्यामिव देव्यामहापूजाकार्या ॥ तदुक्तम् ॥ मार्कंडेयपुराणे ॥ शरत्कालेमहापू जाक्रियतेयाचवार्षिकी ॥ तस्यांममैतन्माहात्म्यंश्रुत्वाभक्तिसमन्वित इत्यत्रयाचवार्षिकीत्यनेनसंवत्सरस्यादौचैत्रशुक्लप्रतिपद्युपक्रम्याष्टमी

पर्यंतंक्रियमाणापूजाभिधीयते ॥ अतश्चशरद्वसंतयोस्तुल्यएवदुर्गो त्सवःकार्यः ॥ ॥ इतिचैत्राष्टमी ॥ ॥ अथवैशाखशुक्लाष्टम्यामुपो षितआम्रफलरसेनस्नात्वाऽपराजिताख्यांदेवींमांसीवालकवारिभिः स्नापयित्वासंपूज्यशर्कराक्षीरनैवेद्यंदत्त्वानवम्यांतदेवब्राह्मणान्कुमारी श्चभोजयित्वापारणंकुर्यात् ॥ तदुक्तंदेवीपुराणे ॥ सहकारफलैःस्नानं वैशाखेह्यष्टमीदिने ॥ आत्मनोदेवतांस्नाप्यमांसीवालकवारिभिः ॥ लेपनंफलकर्पूरंधूपंदीपंसुगंधिकमिति ॥ फलंजातीफलम् ॥ संवत्सर प्रदीपे ॥ देव्याःपूजाप्रकुर्वीतकेतक्याचंपकेनच ॥ शर्कराक्षीरनैवेद्यं कन्याविप्रेषुभोजनम् ॥ आत्मनःपारणंतद्वद्दक्षिणांशक्तितोददेत् ॥ सर्वतीर्थाभिषेकंतुअनेनाप्नोतिभार्गवेति ॥ ॥इतिवैशाखशुक्लाष्टमी ॥ अथज्येष्ठशुक्लाष्टम्यांशुक्लांदेवींपूजयेत् ॥ तदुक्तंब्रह्मपुराणे ॥ शुक्लाष्ट म्यांपुराजाताशुक्लादेवीमहाशनिः ॥ वधायदानवेंद्राणांशुक्लपक्षेततो यजेदिति॥ज्येष्ठकृष्णाष्टम्यांशिवपूजाकार्या ॥ तदुक्तंभविष्योत्तरे ॥ ज्येष्ठमासिद्विजश्रेष्ठकृष्णाष्टम्यांत्रिलोचनम् ॥ यःपूजयतिदेवेशमीश लोकंव्रजेन्नरइति ॥ ॥ इतिज्येष्ठाष्टमी ॥ ॥ अथाषाढशुक्लाष्टम्या मुपोषितोहरिद्रातोयेनस्नात्वा महिषघ्नीनाम्नींदेवीं तेनैवस्नापयित्वा पूजयेत् ॥ तदुक्तंदेवीपुराणे॥अष्टम्यांचतथाषाढेनिशातोयेनस्नापये त् ॥स्वयंस्नात्वाचकर्पूरैश्चंदनैस्तांविलेपयेत्॥धूपचंदनकर्पूरैर्वालकैः सितासिद्धकैः ॥ भक्ष्याञ्छर्करयापूर्णान्पानकानिशुभानिच ॥ दापये त्कन्यकाविप्रभोजनंचात्मनस्तथा ॥ शक्तितोदक्षिणांदद्यान्महिषघ्नीं चकीर्त्तयेत् ॥ दीपमालाघृतेनैवसर्वान्कामान्प्रयच्छतीति ॥ ॥ इत्या षाढाष्टमी ॥ अथश्रावणेमासिमहाविष्णोरष्टमावतारस्यश्रीकृष्णदे वस्यजन्माष्टमीनिर्णीयते ॥ तत्रसकामैर्निष्कामैरपिसर्वथोपवासःक र्त्तव्यः ॥अकरणेप्रत्यवायश्रवणात्॥यथा॥गृध्रमांसंखरंकाकंश्येनंवामु निसत्तम॥मांसंवाद्विपदांभुंक्तेकृष्णजन्माष्टमीदिने ॥तथा॥कृष्णाष्टमी

दिनेप्राप्तेयेनभुक्तंद्विजोत्तम ॥ त्रैलोक्यजनितंपापंभुक्तंतेननसंशयः ॥ ब्रह्मघ्नश्चसुरापश्चगोवधःस्त्रीवधोऽपिवा ॥ नलोकोमुनिशार्दूलजयंतीवि मुखस्यच॥येनकुर्वंतिजानंतःकृष्णजन्माष्टमीव्रतम् ॥ तेभवंतिमहाप्रा ज्ञव्यालामहतिकानने॥श्रावणेबहुलेपक्षेकृष्णजन्माष्टमीव्रतम्॥नकरो तिनरोयस्तुसभवेत्क्रूरराक्षसः॥नकरोतियदाविष्णोर्जयंतीसंभवंव्रतम् ॥यमस्यवशमापन्नःसहतेनारकींव्यथाम्॥अतीतानागतंतेनकुलमेको त्तरंशतम् ॥पातितंनरकेघोरेयोभुंक्तेकृष्णवासरइत्यादिवाक्यैर्जन्माष्ट म्यांभोजनेमहादोषःश्रूयते॥उपवासेमहाफलसंबंधश्च ॥ तदुक्तंविष्णु रहस्ये ॥ प्राजापत्यर्क्षसंयुक्ताकृष्णानभसिचाष्टमी ॥ मुहूर्तमपिल भ्येतसोपोष्यासामहाफलेति ॥ भविष्योत्तरेपि ॥ प्रतिवर्षंविधाने नमद्भक्तोधर्मनंदन ॥ नरोवाप्यथवानारीयथोक्तंफलमाप्नुयात् ॥ पुत्रसंतानमारोग्यंसौभाग्यमतुलंलभेत् ॥ इहधर्मरतिर्भूत्वामृतो वैकुंठमाप्नुयात् ॥ तत्रदिव्यविमानेनवर्षलक्षंयुधिष्ठिर ॥ भो गान्नानाविधान्भुक्त्वापुण्यशेषादिहागतः ॥ सर्वकामसमृद्धेतुस र्वासुखविवर्जिते ॥ सर्वधर्मयुतेपार्थसर्वगोकुलसंयुते ॥ कुलेनृपव रिष्ठानांजायतेत्रिदशोपमः ॥ यस्मिन्सदैवदेशेतुलिखितंवापटार्पि तम् ॥ समजन्मदिनंपुण्यंसर्वालंकारशोभितम् ॥ पूज्यतेपांडवश्रे ष्ठजनैरुत्सवसंयुतैः ॥ परचक्रभयंतत्रनकदाचिद्भवेन्नृप ॥ पर्ज न्यः[1]कालवर्षीस्यादीतिभ्योनभयंभवेत् ॥ गृहेवापूज्यतेयस्मिन्देव क्याश्चरितंमम॥ तत्रसर्वसमृद्धिःस्यान्नोपसर्गादिकंभयमिति ॥ तथा स्कंदपुराणे ॥ व्रतेनाराध्यदेवेशंदेवकीसहितंहरिम् ॥ त्यक्त्वायम पथंघोरंयातिविष्णोःपरंपदम्॥जन्माष्टमीव्रतंयेवैप्रकुर्वंतिनरोत्तमाः ॥ कारयंत्यथवालोकाँल्लक्ष्मीस्तेषांसदास्थिरा॥स्मरणंवासुदेवस्यमृत्यु कालेभवेन्मुने ॥ सिद्ध्यंतिसर्वकार्याणिकृतेजन्माष्टमीव्रतइत्यादिवा क्यैःसोपवासव्रतकरणेऐहिकामुष्मिकादिमहाफलश्रवणाच्चसर्वैरेवात्रो

१ कामवर्षीस्यादित्यपिपाठः।

पवासव्रतंकार्यम्॥तच्चव्रतंकीदृश्यामष्टम्यांक्रियतइतीदानींविचार्यते। साचजन्माष्टमीशुद्धाविद्धाभेदेनषोडशप्रकारा ॥ तत्रशुद्धायाअष्टौभेदाः ॥ यथा॥शुद्धासमान्यूनाधिकाचेतित्रिधा॥ तत्रशुद्धासमारोहिणीसहितातद्रहिताचेतिद्विविधा॥शुद्धान्यूनापिरोहिणीसहितातद्रहिताचेति द्विविधा॥ शुद्धाधिकातु पूर्वदिनएवरोहिणीसहिता परदिनएवरोहिणीसहिता उभयत्ररोहिणीसहिता उभयत्ररोहिणीरहिताचेतिचतुर्विधा ॥ एवंशुद्धाष्टविधा ॥ एवंविद्धासमापि रोहिणीसहितातद्रहिताचेतिद्विविधा ॥ विद्धन्यूनापिरोहिणीसहितातद्रहिताचेतिद्विविधा विद्धाधिकातुपूर्वदिनएवरोहिणीसहिता परदिनएवरोहिणीसहिता उभयत्ररोहिणीसहिता उभयत्ररोहिणीरहितेतिचतुर्धा ॥ एवंविद्धाष्टविधा ॥ उभयेषांशुद्धाविद्धाभेदानांमेलनेषोडशविधाभवंति ॥ द्वावन्याववांतरभेदौ ॥ यथा ॥ अर्द्धरात्रेरोहिणीयुक्ताजन्माष्टमीजयंत्येका ॥ द्वितीयानवम्यांरोहिण्याबुधवारसोमवारयोरन्यतमेनचयुक्ता ॥ एवमष्टादशप्रकाराजन्माष्टमी ॥ तत्रशुद्धसमाशुद्धन्यूनाविद्धसमाविद्धन्यूनाचरोहिणीसहितारोहिणीरहितायासैवोपोष्या ॥ द्वितीयदिने अष्टम्या अभावात् ॥ एतेष्वष्टसुभेदेष्वविवादः ॥ तत्र रोहिणीसहितत्वंमुहूर्तमात्रेणापिग्राह्यम् ॥ तदुक्तम् ॥ प्राजापत्यर्क्षसंयुक्ताकृष्णानभसिचाष्टमी ॥ मुहूर्तमपिलभ्येतसोपोष्यासामहाफलेति॥ नभसीतिचांद्रमासाभिप्रायेण ॥ शुद्धाधिकापियोभयत्ररोहिणीरहितातस्यांसंपूर्णायामुपवासंकृत्वाद्वितीयेह्नितिथ्यंतेपारणंकुर्यात् ॥ ॥ तदुक्तम् ॥ तिथिनक्षत्रनियमेतिथिभांतेचपारणम् ॥ अतोऽन्यथापारणेतुव्रतभंगमवाप्नुयादिति ॥ अथयाशुद्धाधिकापूर्वदिनेपरदिनेरोहिणीयुक्तासैवोपोष्या ॥ तदुक्तंविष्णुरहस्ये ॥ मुहूर्तमप्यहोरात्रेयस्मिन्युक्तंतुलभ्यते ॥ अष्टम्यांरोहिणीऋक्षंतांसुपुण्यामुपावसेदिति ॥ याशुद्धाधिकोभयत्ररोहिणीयुक्तातांसंपूर्णामुपोष्याद्वि

तीयदिनेतिथिनक्षत्रवियोगेपारणंकुर्यात् ॥ तदुक्तम् ॥ रोहिणीसंयुताचेयंविद्वद्भिःसमुपोषिता॥वियोगेपारणंकुर्युर्मुनयोब्रह्मवादिनइति ॥ तथा॥सांयोगिकेव्रतेप्राप्तेयत्रैकोपिनयुज्यते ॥ तत्रैवपारणंकुर्यादेवंवेदविदोविदुरिति॥तथाच॥भांतेकुर्यात्तिथेर्वापिशस्तंभारतपारणमिति॥ अथविद्धाधिकायोभयत्ररोहिणीरहितातस्यांविद्धायामेवोपोष्यतिथ्यंतेपारणंकुर्वीत ॥ तदुक्तम् ॥ कृष्णाष्टमीस्कंदषष्ठीशिवरात्रिश्चतुर्दशी ॥ एताःपूर्वयुताः कार्यास्तिथ्यंतेपारणंभवेदिति ॥ निगमेऽपि ॥ पूर्वविद्धासुतिथिषुभेषुचश्रवणंविना ॥ उपोष्यविधिवत्कुर्यात्तत्तदंतेतुपारणमिति ॥ विद्धाधिकापिपूर्वदिनेवायस्मिन्रोहिणीसहितासैवोपोष्या ॥ तदुक्तम् ॥ मुहूर्तमप्यहोरात्रेयस्मिन्युक्तंतुलभ्यते ॥ अष्टम्यारोहिणीऋक्षंतांसुपुण्यामुपावसेदिति ॥ यापुनर्विद्धाधिकोभयत्ररोहिणीसहितातांपूर्वामेवोपोष्यतिथ्यंतेपारणंकुर्यात् ॥ तदुक्तंब्रह्मवैवर्ते॥कार्याविद्धापिसप्तम्यारोहिणीसहिताष्टमीति ॥अत्राष्टम्यंतेपारणंकार्यंरोहिण्यंतोनापेक्षितः ॥ भांतेपारणविधानस्यरोहिणीश्रवणव्यतिरिक्तनक्षत्रविषयत्वात् ॥तदुक्तम्॥ याःकाश्चित्तिथयःपुण्याःप्रोक्तानक्षत्रसंयुताः ॥ ऋक्षांतेपारणंकुर्याद्विनाश्रवणरोहिणीमिति ॥ ननुयदापूर्वविद्धोपवासेपरदिनेर्द्धरात्रेतदूर्ध्ववातिथ्यंतोभवति ॥ तदामहानिशायांभोजननिषेधात् द्वितीयदिनेप्युपवासःप्रसज्येत सचनयुक्तः॥पारणस्यचपारयातिकर्मत्वेनव्रतमितिसमाप्त्यर्थत्वात्तदभावेपूर्वव्रतस्यापरिसमाप्तिरेवस्यादितिचेत्॥सत्यम्॥ तिथिभांतकालःपारणस्यांगंपारणमंगि॥नह्यंगाभावेंगिनएवलोपइतिप्रसिद्धिरस्ति॥अतश्चतिथ्यंताभावेपिदिवैवपारणंकार्यम् ॥तदुक्तम्॥ तिथ्यृक्षयोर्यदोच्छेदोनक्षत्रांतमथापिवा॥अर्धरात्रेऽथवाकुर्यात्पारणंत्वपरेहनीत्यस्यायमर्थः तिथ्यृक्षयोश्छेदेनक्षत्रांतेवापारणंकुर्यात् ॥ अथवायद्यर्धरात्रेतिथिभांतःस्यात्तदापरेऽहनिदिवसएवपारणं कुर्यात् ॥ दिवसपारणंचसर्वो

पवाससाधारणम्॥तदुक्तम्॥सर्वेष्वेवोपवासेषुदिवापारणमिष्यतइति॥ ॥ तथा ॥ तिथ्यंतेवोत्सवांतेवाव्रतीकुर्वीतपारणमिति ॥ अतश्च यदाभोजनानिषिद्धेकालेतिथिभांतोभवतितदातत्रैवपारणंकार्यम्॥ अन्यथोत्सवांतेएवपारणंकार्यमित्यलमितिप्रपंचेन ॥ ननुसप्तमीविद्धायामष्टम्यामुभयत्ररोहिणीयुक्तायांद्वितीयाष्टम्याएवाष्टयामिकत्वेनप्राशस्त्याभिधानात्पूर्वविद्धोपवासविरोधइतिचेत् ॥ यथा ॥ सप्तमीसंयुताष्टम्यांभूत्वाऋक्षंद्विजोत्तम ॥ प्राजापत्यंद्वितीयेऽह्निमुहूर्त्तार्द्धंभवेद्यदि ॥ तदाष्टयामिकंज्ञेयंप्रोक्तंव्यासादिभिःपुरेति ॥ सत्यम् ॥ एतद्वचनंनोपवासविषयम्॥उपवासशब्दाभावात्॥किंतु॥पूर्वदिनउपोष्यद्वितीयदिनविहितस्यपारणस्यांगत्वेन विधीयमानंब्राह्मणभोजनदक्षिणादिकंरोहिण्यष्टम्यतिक्रमेणापिसंपूर्णत्वाभिधानेनरोहिण्यष्टम्योरेवकृतंस्यादितिमहाफलत्वंबोधयति ॥ अथशुद्धाविद्धावायाष्टमीअर्द्धरात्रेरोहिणीयुक्तासाजयंतीत्युच्यते ॥ तदुक्तम् ॥ अर्द्धरात्रेतुरोहिण्यांयदाकृष्णाष्टमीभवेत् ॥ तस्यामभ्यर्चनंशौरेर्हंतिपापंत्रिजन्मजम्॥ सोपवासोहरेःपूजांकृत्वातत्रनसीदति ॥ तथाच ॥ रोहिणीसहिताकृष्णमासिभाद्रपदेष्टमी ॥ अर्द्धरात्रादधःसाहिकलामात्रायदा भवेत् ॥ तत्रजातोजगन्नाथःकौस्तुभीहरिरव्ययः ॥ तमेवोपवसेत्कालंकुर्यात्तत्रैवजागरम् ॥ अर्द्धरात्रेतुयोगःस्यात्तारापत्युदयेसति ॥ जयंतीनामसारात्रिस्तत्रजातोजनार्दनः ॥ नियतात्माशुचिःस्नात्वापूजांतत्रप्रवर्तयेदिति ॥ अत्रभाद्रपदइतिकृष्णप्रतिपदादिमासाभिप्रायम् ॥ मार्कंडेयोऽपि ॥ प्राजापत्येनसंयुक्ताकृष्णानभसिचाष्टमी ॥ जयंतीनामसाप्रोक्तासाह्युपोष्यामहाफलेति ॥ इयंपूर्वदिनेपरदिनेवायत्रैवार्द्धरात्रेरोहिणीयोगःसैवोपोष्या ॥ यदातुदिनवृद्ध्यादिनद्वयेऽप्यर्द्धरात्रेरोहिणीयोगस्तदातूत्तरैवोपोष्या ॥तदुक्तम् ॥ वर्जनीयाप्रयत्नेनसप्तमीसंयुताष्टमी ॥ सऋक्षापिनकर्त्तव्यासप्तमीसहिताष्टमी ॥

यदातुसूर्योदयेस्वल्पाप्यष्टमीसाचरोहिणीयुक्ताउपरि सकलानवमीबु धवारेणसोमवारेणवाभवतिसामुक्तिदा॥संपूर्णामष्टमींपरित्यज्यसैवस्व ल्पाप्युपोष्या ॥ तदुक्तंपद्मपुराणे ॥ उदयेचाष्टमीकिंचित्सकलान वमीयदि ॥ भवेत्तुबुधसंयुक्ताप्राजापत्यर्क्षसंयुता ॥ अपिवर्षशतेनाऽ पिलभ्यतेवानवाविभोइति ॥ तथाच ॥ प्रेतयोनिगतानांचप्रेतत्वंना शितंनरैः ॥ यैःकृताश्रावणेमासिअष्टमीरोहिणीयुता ॥ किंपुनर्बुध वारेणसोमेनापिविशेषतः ॥ किंपुनर्नवमीयुक्ताकुलकोट्यास्तुमुक्तिदे ति॥ ॥ इति श्रीकृष्णजन्माष्टमीनिर्णयः ॥ ॥ अथभाद्रपदशुक्लाष्टमी निर्णीयते ॥सैवदूर्वाष्टमी ॥साशुक्लापिपूर्वविद्धैवग्राह्या॥ तदुक्तम् ॥श्रा वणीदुर्गनवमीदूर्वाचैवहुताशनी॥ पूर्वविद्धातुकर्त्तव्याशिवरात्रिर्बलेर्दि नमिति॥ अस्यांपूर्वविद्धायांज्येष्ठामूलनक्षत्ररहितायांसिंहस्थेसवितर्य गस्त्यानुदयेदूर्वामभ्यर्च्यानग्निपक्वमन्नंभोक्तव्यम् ॥ एवंकृतेनारीसप्त जन्मानिपतिपुत्रविरहंनाप्नुयात् ॥ उक्तवैपरीत्येमहादोषः ॥ तदुक्तंपु राणसमुच्चये॥ शुक्लाष्टमीतिथिर्यातुमासिभाद्रपदेभवेत् ॥ दूर्वाष्टमीतु साज्ञेयानोत्तरासाविधीयतइति ॥तथा ॥ प्राप्तेभाद्रपदेमासिशुक्लाष्ट म्यांचभारत ॥ दूर्वामभ्यर्चयेद्भक्त्याज्येष्ठांमूलं चवर्जयेदिति ॥ तथाज्येष्ठायांपूजनेदोषश्च ॥ ऐंद्रर्क्षेपूजितादूर्वाहंत्यपत्यानिनान्यथे ति ॥ अथदूर्वायाअपूजनेदोषश्चपुराणसमुच्चयएवोक्तः ॥ यानपूजय तेदूर्वांमोहादिहयथाविधि ॥ त्रीणिजन्मानिवैधव्यंलभतेनात्रसंशयः ॥ तस्मात्संपूजनीयासाप्रतिवर्षंवधूजनैः ॥ सुखसंतानजननीभर्त्तुःसौ ख्यकरीसदेति ॥स्कंदपुराणेऽपि॥ शुक्लेभाद्रपदेमासिदूर्वासंज्ञातथाष्ट मी॥ सिंहेऽर्केसाचकर्त्तव्यानकन्यास्थेकदाचन॥सिंहस्थेसोत्तमासूर्येऽ नुदितेमुनिसत्तम॥अगस्त्यउदितेपूजायांदोषश्चतत्रैवोक्तः॥ अगस्त्य उदितेतातपूजयेदमृतोद्भवाम्॥वैधव्यंपुत्रशोकंचदशजन्मानिपंचच ॥ तथा ॥ दूर्वाष्टमीसदात्याज्याज्येष्ठमूलर्क्षसंयुता ॥ परविद्धातथाकृ

ष्णामुनिःशातातपोऽब्रवीदिति॥ननुयानपूजयतेमोहादित्यादिनाप्रति वर्षंदूर्वाष्टम्यांअपूजनेवैधव्यादिदोषोऽभिहितः॥ यदापुनर्ज्येष्ठादिविरहोन संभवतितदाकिंकार्यमितिचेत् ॥ सत्यम् ॥ तदादूर्वामभ्यर्च्यैकभ क्तंकार्यम् ॥तदुक्तम्॥ कर्त्तव्याचैकभक्तेनज्येष्ठामूलंयदाभवेत्॥ दूर्वा मभ्यर्चयेद्भक्त्यानवंध्यंदिवसंनयेदिति ॥ अतएवयदाज्येष्ठामूलेनभ वतस्तदाग्निपक्वंनाश्नीयादितिगम्यते ॥ दूर्वापूजामध्याद्दुपरिकर्त्त व्या ॥ तदुक्तम् ॥ मुहूर्त्तेरौहिणेऽष्टम्यांपूर्वावायदिवापरा ॥ दूर्वाष्टमीतु साकार्याज्येष्ठामूलंचवर्जयेदिति ॥ रौहिणोनवमोमुहूर्त्तः ॥ परविद्धा निषेधेऽपियदिवापरेतिपरविद्धाविधानंपूर्वस्यांकर्मकालव्यापिन्यांपरा पिकार्येतिज्ञापनार्थम् ॥ ॥इतिदूर्वाष्टमीनिर्णयः॥ ॥अथभाद्रपदशुक्ला ष्टमीज्येष्ठानक्षत्रयुक्ताकेवलावाज्येष्ठाष्टमीत्युच्यते ॥ अत्रज्येष्ठादेवींपू जयेत् ॥ तदुक्तंकालादर्शे ॥ भाद्रेशुक्लाष्टमीज्येष्ठानक्षत्रेणसम न्विता ॥ महतीकीर्त्तितातस्यांज्येष्ठांदेवींप्रपूजयेत् ॥ उपहारैर्बहुवि धैरलक्ष्मीविनिवृत्तयइति ॥ लिंगपुराणेऽपि ॥ कन्यार्केयाष्टमीशुक्ला ज्येष्ठर्क्षेमहतीस्मृता ॥ अलक्ष्मीपरिहारायज्येष्ठांतत्रप्रपूजयेदिति ॥ पूजामंत्रश्च ॥ ज्येष्ठायैतेनमस्तुभ्यंश्रेष्ठायैतेनमोनमः ॥ शर्वायैतेनम स्तुभ्यंशांकर्यैतेनमोनमइति ॥ प्रतिवर्षंक्रियमाणंज्येष्ठाव्रतंनक्षत्राभा वेतिथावेवकार्यम् ॥ यज्ज्येष्ठानक्षत्रयुक्तायांयस्यांकस्यांचित्तिथौनक्ष त्रप्राधान्येनकेवलंव्रतंक्रियतेतत्केवलनक्षत्रएवकार्यम् ॥ तदुक्तंमत्स्य पुराणे ॥ प्रत्याब्दिकंतथाउक्तंयज्ज्येष्ठादैवतंव्रतम् ॥ प्रतिज्येष्ठाव्रतंयच्च विहितंकेवलोडुनि ॥ तिथावेवाचरेदाद्यंद्वितीयंकेवलर्क्षतइति ॥ ऋक्ष तःऋक्षे ॥ तसिप्रत्ययांतः ॥ ॥इतिज्येष्ठाव्रतम् ॥ ॥ अथाश्विनेमासि कृष्णपक्षाष्टम्यांदोषचतुष्टयरहितायांमहालक्ष्मीव्रतंकार्यम् ॥ तच्चचं द्रोदयकालव्यापिन्यामेव चंद्रोदयएवपूजार्घ्यादिविधानात् ॥ हस्तप्रां तदलस्थेसूर्येतद्व्रतंनसमापयेत् ॥ तदुक्तंपुराणसमुच्चये ॥ कन्यागतेऽ

कंप्रारभ्यकर्त्तव्यंनाश्रियोर्चनम् ॥ हस्तप्रांतदलस्थेर्केतद्व्रतंनसमापये दिति ॥ ब्रह्मांडपुराणेऽपि॥सप्तमीपुष्यसंयुक्ताकर्त्तव्याचाश्विनाष्टमी ॥ दुर्गोत्सवेसितेपक्षेबहुलेश्रावितेशुभेइति ॥ अत्रसप्तमीपुष्यसंयुक्तेतिबहु लाष्टम्याएवविशेषणम्॥सिताष्टम्यांपुष्यनक्षत्रासंभवात् ॥आश्विनासि ताष्टम्यांदुर्गोत्सवः कार्यइत्येतावन्मात्रंविधीयते ॥ तथाच ॥ अ र्द्धरात्रमतिक्रम्यवर्ततेयोत्तरातिथिः ॥ तदातस्यांतिथौकार्यंमहाल क्ष्मीव्रतंशुभमिति॥ दोषचतुष्टयवर्जनंचपुराणसमुच्चयेप्रोक्तम्॥पूजनी यागृहस्थेनअष्टमीप्रावृषिश्रियः ॥ दोषैश्चतुर्भिःसंत्यक्तासर्वसंपत्करी तिथिरिति ॥ दोषाश्चतत्रैवोक्ताः॥ पुत्रसौभाग्यराज्यायुर्नाशिनीसाप्र कीर्त्तिता ॥ तस्मात्सर्वप्रयत्नेनत्याज्याकन्यागतेरवौ ॥ विशेषेणप रित्याज्यानवमीदूषितायदीति ॥ अत्रकन्यागतेरवौनिषेधोव्रतप्रारंभ विषयः॥ तथाच ॥ त्रिदिनेचावमेचैवअष्टमींनोपवासयेत् ॥ पुत्रघ्नान वमीविद्धास्वघ्नीहस्तार्कगेरवौ॥ धर्मघ्नीत्रिदिनेप्रोक्तात्याज्याचैषावमेऽ पिसेति ॥ स्वंद्रव्यंहंतीतिस्वघ्नी ॥ नवमीवेधः रवेर्हस्तोत्तरद लगतंत्रिदिनमवमंचेतिदोषचतुष्टयम् ॥ त्रिदिनावमदिनयोर्लक्षणं चरत्नमालायामुक्तम् ॥ यत्रैकःस्पृशतितिथित्रयावसानंवारश्चेदवम दिनंतदुक्तमाद्यैः ॥ यास्पर्शाद्भवतितिथित्रयस्यचाह्नांत्रिद्युस्पृक्क थितमिदंद्वयंचनेष्टमिति ॥ एतद्दोषवर्जनमुपक्रमोद्यापनयोरेवप्रायेणज्ञे यम् ॥ अन्यथाषोडशवर्षसाध्यस्यव्रतस्यांतरासंभवेऽकरणंप्रसज्ये त ॥ अतःसतिसंभवेदोषवर्जनंनतुनियमेन ॥ तथाचोक्तम् ॥ श्रियोर्चनंभाद्रपदेसिताष्टमींप्रारभ्यकन्यार्धगतेनसूर्ये ॥ समापयेत्तत्र तिथौचयावत्सूर्यस्यपूर्वार्द्धगतोयुवत्याइति ॥ नवमीवेधनिषेधोपि परदिनेचंद्रोदयादर्वाग्ज्ञेयः॥चंद्रोदयादूर्ध्वंत्रिमुहूर्तव्यापित्वेतूत्तरैवनव मीविद्धापिकार्या ॥तदुक्तम्॥पूर्वावापरविद्धावाग्राह्याचंद्रोदयेसदा॥त्रि मुहूर्त्तापिसापूज्यापरतश्चोर्ध्वगामिनीति ॥चंद्रोदयादूर्ध्वगामिनीत्रिमुहू र्त्ताष्टमीचेत्तदापराकार्यानचेत्पूर्वेत्यर्थः॥॥इतिमहालक्ष्मीव्रतनिर्णयः॥

अथाश्विनेमासिशुक्लामहाष्टमीनिर्णीयते॥ साचनवमीयुक्तैवदुर्गोत्सवो
पवासादिषुग्राह्या॥तदुक्तंवसुरंध्रयोरिति॥तथा ॥नाष्टमीसप्तमीयुक्तास
प्तमीनाष्टमीयुता॥नवम्यासहकार्यास्यादष्टमीसर्वदाबुधैरिति॥ तथाच
॥अष्टमीनवमीयुग्मेमहोत्साहोमहोत्सवइति ॥तथाच॥ अष्टम्यांचनव
म्यांचजगन्मातरमंबिकाम्॥पूजयित्वाऽऽश्विनेमासिविशोकोजायतेनर
इत्यादिभिर्वाक्यैर्नवमीयुक्तायाएवप्राशस्त्याभिधानात् ॥ सप्तमीयुक्ता
तुसतिसंभवेसर्वथावर्जनीया॥अत्रमहादोषश्रवणात् ॥ यथा ॥ पुत्रान्हं
तिपशून्हंतिहंतिराष्ट्रंसराजकम् ॥ हंतिजातानजातांश्चसप्तमीसहिता
ष्टमी ॥तस्मात्सर्वप्रयत्नेनसप्तमीवेधसंयुता ॥ वर्जनीयाष्टमीपार्थभुवो
राष्ट्रमभीप्सुभिरिति ॥ तथाच ॥ सप्तमीशल्यसंविद्धावर्जनीयासदाष्ट
मी ॥ स्तोकापिसातिथिःपुण्यायस्यांसूर्योदयोभवेदिति ॥ भोजराजी
ये ॥ भीमपराक्रमोपि॥नदिवाननिशापिचविष्टिहतानशुभाखलुसप्त
मिकोपहता ॥यदिचाष्टमिशेषभवानवमीअमरैरपिपूज्यतमानवमीति
॥ इयंनवम्याभौमवारेणचयुक्ताप्रशस्ततरा ॥ यदुक्तम् ॥ अष्टम्या
मुदितेसूर्येदिनांतेनवमीभवेत् ॥ कुजवारोभवेत्तत्रपूजनीयाप्रयत्न
तइति ॥ इयमष्टमीमूलनक्षत्रेणपूर्वाषाढानक्षत्रेणवायुक्तामहानवमी
प्रोक्ता ॥ यथोक्तम् ॥ आश्वयुक्शुक्लपक्षेतुयाष्टमीमूलसंयुता ॥ यापू
र्वाषाढयासार्द्धमृक्षद्वययुताथवा ॥ सामहानवमीज्ञेयात्रैलोक्येपिसुदु
र्लभा ॥ तथाच ॥ कन्यागतेसवितरिशुक्लपक्षेऽष्टमीतुया ॥ मूलनक्षत्र
संयुक्तासामहानवमीस्मृतेति ॥ मूलनक्षत्रयुक्तापिसप्तमीलेशसहिताचे
त्तर्हिदुष्टैव ॥ यदुक्तं दुर्गोत्सवे ॥ मूलेनापिहिसंयुक्तासदात्याज्याऽ
ष्टमीबुधैः ॥ लेशमात्रेणसप्तम्याअपिस्याद्यादिदूषितेति ॥ नवमी
युतायाःप्राशस्त्यंदेवीपुराणेप्रोक्तम् ॥ संतर्जयंतीहुंकारैःखड्गोद्यत
परायणा ॥ नवम्यांपूजितादेवीददात्यानंदजंफलम् ॥ सापुण्यासा
पवित्राचसाधर्म्यासुखदायिनी ॥ तस्यांसंपूजनीयातुचामुंडामुंडमालि

नीति ॥ तथाच ॥ मूलपूर्वाषाढयोरेवंपूजाप्रशस्ता ॥ उत्तराषाढायांतुनिषिद्धा ॥ तदुक्तंरूपनारायणीये ॥मूलेप्रपूजयेद्देवींतथासलिलदैवते ॥ वैश्वदेवेतुनक्षत्रेपूजितादुःखदाभवेदिति ॥ उत्तराषाढायांतु निषेधश्चसतिसंभवेज्ञेयः ॥ तदुक्तंदुर्गोत्सवे ॥ मूलाभावेतुकर्त्तव्या अष्टमीतोयसंयुता ॥ विश्वयुक्तापिकर्त्तव्याअष्टमीनवमीयुतेति ॥तथाच ॥ प्रतिपद्यांहरेत्खड्गंद्वितीयायांधृतंधनुः ॥ तृतीयायांकरेचक्रं[1] चतुर्थ्यांचर्मनिर्मलम् ॥ पंचम्यामाददेशूलंषष्ठ्यांतुपरशुंतथा ॥ गदांबिभर्तिसप्तम्यामष्टम्यांशक्तिमुत्तमाम् ॥ नवमींचसदादेव्यामूर्तिर्दैत्यविनाशिनी॥अतएवहिपूज्यासाअष्टमीनवमीयुतेति॥ अत्रैवग्रथांतरेविशेषउक्तः ॥ यथा ॥ मूलेनागमनंदेव्याः पूर्वाषाढासुपूजनम् ॥ उत्तरासुबलिंदद्याच्छ्रवणेचापराजितेति ॥ एवंनवमीयुक्ताष्टम्यांदेवींसंपूज्योदयव्यापिन्यांनवम्यांबलिंदद्यात्॥तदुक्तंदेवीपुराणे ॥ सूर्योदयेपरंरिक्तापूर्णास्यादपरायादि ॥ बलिदानंप्रकर्त्तव्यंतत्रदेशशुभावहम् ॥ बलिदानेकृतेऽष्टम्यांपुत्रभंगोभवेन्नृपेति ॥ तथाच ॥ अष्टम्यामुदितेसूर्येदिनांतेनवमीभवेत् ॥ प्रभातेबलिदानेचकियन्मात्रापिलभ्यते ॥ नवम्यांतत्रसंपूज्यादुर्गादुर्गविनाशिनी ॥ नन्वत्रविरुद्धानिवाक्यानि श्रूयंते ॥ यथा ॥ अहंभद्राचभद्राहंनावयोरंतरंक्वचित् ॥ सर्वसिद्धिंप्रदास्यामिभद्रायामर्चिताप्यहम् ॥ भद्रायाभद्रकाल्याश्चमध्येस्यादर्चनक्रिया ॥ तस्माद्वैसप्तमीविद्धाकार्यादुर्गाष्टमीबुधैरिति ॥ तथा ॥ विधिंत्यक्त्वामहाष्टम्यांममपूजांकरोतियः ॥ तस्यपूजाफलंनस्यात्तेनाहमवमानितेत्यादिभिर्वाक्यैः सप्तमीविद्धायामेवदुर्गोत्सवविधानाद्विरोधइतिचेत् ॥ सत्यम् ॥ याष्टमीसप्तमीविद्धासतीद्वितीयदिनेतिथिक्षयवशान्नवर्धयतेतद्विषयत्वात्पूर्वविद्धाविधायकवाक्यानाम् ॥ तदुक्तंस्मृतिसंग्रहे ॥ यदासूर्योदयेनस्यान्नवमीचापरेऽहनि ॥ तदाष्टमीं

[1] वज्रमित्यपिपाठः।

प्रकुर्वीतसप्तम्यासहितांनृपेति ॥ तथाचदुर्गोत्सवे ॥ उत्तरास्तिथयो यत्रक्षयंयांतिनराधिप ॥ पूर्वाष्टमींतदाकुर्यादन्यथात्वशुभंभवेदिति ॥ यानिपुनः सप्तम्यामुदितेसूर्येपरतोयाष्टमीभवेत् ॥ तत्रदुर्गोत्सवंकुर्यान्नकुर्यादपरेहनि ॥ यदाष्टमींतुसंप्राप्यअस्तंयातिदिवाकरः ॥ तत्र दुर्गोत्सवंकुर्यान्नकुर्यादपरेहनि॥दुर्भिक्षंतत्रजानीयान्नवम्यांयत्रपूज्यतइ त्यादीनि नवमीयुक्ताष्टमीनिषेधकवाक्यानि॥ तानिकृष्णपक्षनवमीवि हितेदेवीप्रबोधविषयाणि तदंगत्वेनकृष्णाष्टम्यां क्रियमाणदेवीपूजावि षयाणि ॥ कृष्णपक्षेष्टमीचैवकृष्णपक्षेचतुर्दशीत्यादिवाक्यैःकृष्णाष्ट म्याःपूर्वविद्धायाएवप्राशस्त्यविधानात् ॥कृष्णपक्षनवम्यांदेवीप्रबोध नमष्टम्यांदेवीपूजनंचदेवीपुराणएवोक्तम्॥ यथा ॥ कन्यायांकृष्णपक्षे तुपूजयित्वार्द्रभेऽपिवा ॥ नवम्यांबोधयेद्देवींगीतवादित्रनिःस्वनैरिति॥ अत्रपूजयित्वेतिपूजनक्रियायाःसमानकर्तृकायाःपूर्वकालइतिक्त्वाप्र त्ययस्यनवम्यांप्रबोधयेदितिबोधनक्रियाकालान्नवमीरूपात्पूर्वकाले नवमीरूपात्पूर्वकालेष्टमीरूपविधानात् ॥ क्त्वाप्रत्ययसामर्थ्यादेवाष्ट म्यांपूजानिश्चीयते ॥ आर्द्रभेपिवेत्यार्द्रानक्षत्रसहयोगाभिधानात् ॥ आर्द्रानक्षत्रस्यचाष्टम्यामेवसंभवादष्टम्यांपूजा नवम्यांप्रबोधइत्यर्थः सिद्धोभवति ॥ एवमन्यान्यप्येवंविधानिवाक्यानिउक्तविषयएवयोज्या नीत्यविरोध ॥ किंचः ॥ अष्टमीद्वयेपिपूजनमविशेषेणदेवीमाहात्म्ये प्रोक्तम् ॥ यथा ॥ अष्टम्यांचचतुर्दश्यांनवम्यांचैकचेतसः ॥ स्तोष्यंतिचैवयेभक्त्यामममाहात्म्यमुत्तमामिति॥अत्राष्टम्यामित्यवि शेषेणाष्टम्यामुपादानात्स्तोत्रपाठस्यचपूजापूर्वकत्वात्कृष्णाष्टम्या- मपिदेवीपूजादेवीमाहात्म्यस्तोत्रपाठश्चप्राप्तः ॥ अतश्चविरुद्धवाक्या निकृष्णपक्षाष्टमीविषयाण्येवेत्यलमतिप्रपंचेन ॥ दुर्गोत्सवरूपनारा यणभोजराजीयादिनीर्णयग्रंथेष्वेतान्यांतरालिककृतानिस्मृतिविरुद्ध त्वादनादरणीयानीत्युक्तम् ॥ ननुरूपनारायणीयभोजराजीयादिवा

क्येभ्योविश्वरूपनिबंधलिखितमुनिवचनानांवैशिष्ट्यात्प्रागल्भ्यमि
तिचेत्॥ न ॥तत्रतेषांवचनानांमुनिप्रणीतत्वमेवसंदिग्धम्॥यदिताानि
मुनिवचनानिस्युस्तर्हिवचनानीवतत्प्रणेतृमुनीनांनामापिलिख्येत ॥
नचलिखितमितितेषांमुनिप्रणीतत्वेसंदेहः॥इयंग्रंथशैली यन्मुनिना
मपुरःसरंवचनानिलिख्यंते ॥ किंच ॥ संतुवामुनिवचनानि ॥ तथापि
नसप्तमीविधपराणि ॥तथाहि॥ महाष्टम्याश्विनेमासिशुक्लाकल्याणका
रिणी ॥ सप्तम्यापियुताकार्यामूलेनतुविशेषतइतियद्वचनम् ॥इदंयत्र
सप्तमीविद्धाष्टमीपूर्वदिने परदिनेकियन्मात्रापिनवर्धते ॥ सकला
नवम्येवतद्विषयम् ॥ किंच॥मूलेनतुविशेषतइतिमूलयोगवैशिष्ट्यवि
धिरयम् ॥सप्तम्यापियुताकार्येतिनिषिद्धापिसप्तमीयुतामूलेनयुताचेत्
कार्य्येतिमूलयोगवैशिष्ट्यविधेरर्थवादरूपमित्यपिशब्दात्प्रतीयते ॥
यथावैश्वदेवेतुनक्षत्रेपूजितादुःखदाभवेदित्युत्तराषाढायोगंनिषिध्यावि
श्वयुक्तापिकर्त्तव्याअष्टमीनवमीयुतेति नवमीयुताविधेः प्रशंसार्थंपु
नर्विधिः ॥ एवमत्रापि सप्तमीशल्यसंविद्धावर्जनीयासदाष्टमीतिसप्तमी
विद्धायानिषेधेपिमूलयोगविधेःप्रशंसार्थंपुनर्विधिः ॥किंच ॥ सप्तमीवि
द्धाविधिःकृष्णपक्षेसिद्धत्वादनुवाद्यः मूलयोगप्राशस्त्यविधेःसांनि
ध्यस्यसिद्ध्यर्थमुपादिश्यते ॥ तथाचोक्तं मीमांसैकदेशिना ॥ भूतभ
व्यसमुच्चारणेभूतंभव्यायोपादिश्यतइति ॥ भूतमनुवाद्यंभव्यंसा
ध्यंतयोःसमुच्चारणेसहाभिधानेभूतभव्यासिद्ध्यर्थमुपादिश्यतइत्यर्थः॥
तथाचयत्परःशब्दःसशब्दार्थइत्यनुवाद्यस्यविधेयएवतात्पर्याभिधा
नात्सप्तमीविद्धाविधेर्मूलयोगवैशिष्ट्यविधिपरत्वमेवन्याय्यम्॥ नसप्त
मीविद्धाविधानार्थत्वम् ॥ यच्चवचनम्॥ महाष्टम्यांभगवतिभद्रायाम
पिपूजिता ॥ ददातिचायुरारोग्यंयतोभद्रास्वरूपिणीति ॥ अत्रापिभ
द्राशब्दोनसप्तमीवचनः ॥ किंतुविष्टिकरणवचनः ॥ तत्रसंपूर्णाष्ट
म्यांदिवाविष्टिसंभवाद्दिवारात्रिविहितेपूजाद्वयेतावद्दिवापूजासकल

कार्येविरुद्धेपिविष्टिकरणेकार्येत्यर्थः ॥ तदतिक्रमणेप्रत्यवायश्रव
णात् ॥ यथा ॥ विष्टिंत्यक्त्वामहाष्टम्यांममपूजांकरोतियः ॥ तस्य
पूजाफलंनस्यात्तेनाहमवमानितेति ॥ पूजाद्वयविधानंचपुराणप्रसि
द्धं यथाभविष्योत्तरे ॥ तत्राष्टम्यांभद्रकालीदक्षयज्ञविनाशिनी ॥
प्रादुर्भूतामहाघोरायोगिनीकोटिभिःसह ॥ हितार्थंपूजनीयासातस्मि
न्नहनिमानवैरिति ॥ अत्राहनीतिश्रवणात्दिवापूजाप्रतीयते ॥तथा
निशायांपूजितादेवीवैष्णवीपापनाशिनी ॥ तस्मात्सर्वप्रयत्नेनअष्ट
म्यांनिशिपूजयेदिति ॥ यत्तुभोजराजीयवचनम् ॥ नदिवाननिशासु
चविष्टिहतानचसप्तमिशल्यसमोपहतेति ॥ इदंसप्तमीशल्यनिषेधप
रम् ॥ सप्तमीविद्धायाएवदिवारात्रौचविष्टिहतत्वसंभवात् ॥ नकेलं
दिवाविष्टिहता ॥ रात्रावपिविष्टिहतानकार्येत्यर्थः ॥ इदंचसंभवा
भिप्रायंवेदितव्यम् ॥ अतश्चयान्यन्यान्यप्येवंविधानिवाक्यानि
तान्युक्तविषयेष्वेवयोजनीयानीति ॥ नकिंचिद्विश्वरूपवाक्यानांवै
शिष्ट्यम् ॥रूपनारायणादिभिरष्टमीसामान्यनिर्णयवाक्यान्येवलिखि
तानि नमहाष्टमीविशेषनिर्णयवाक्यानीतिचनाशंकनीयम् ॥ यतः ॥
आश्वयुक्शुक्लपक्षेतुयाष्टमीमूलसंयुतेति ॥ कन्यागतेसवितरिशुक्ल
पक्षेष्टमीतुयेति॥ तथा ॥ मूलेनापिहिसंयुक्तासदात्याज्याष्टमीबुधैः ॥
लेशमात्रेणसप्तम्याअपिस्याद्यदिदूषितेति ॥ इत्यादिवाक्यानितत्रैव
लिखितानि तानिनसामान्यनिर्णयपराणि ॥ आश्वयुजीति क
न्यागतइति मूलयुक्तेत्यादिविशेषलिंगैर्महाष्टम्याएवप्रतिपादनात्॥
तथा अनंतभट्टीयादिषु महाष्टम्यादिविशेषनिर्णयो नकृत इति
चनाशंकनीयम् ॥ तेषांग्रथकर्तॄणामियंशैली यत्रसामान्यनिर्ण
येनैवविशेषनिर्णयोदीपोत्सवमहाष्टम्यादिषुसतुनप्रपंचितः ॥ तत्रतुन
सामान्येनविशेषसिद्धिः ॥ तत्रजन्माष्टम्यादौविशेषनिर्णयःप्रपंचित
इति ॥ अतश्चतदनुक्तःकश्चिद्विशेषोनाधुनिकनिबंधकारैःकृतइति

मंतव्यम् ॥ एवंसतिचिरंतनानंतभट्टादिनिर्णयानांस्मृतिमूलत्वात्॥
तद्विरुद्धनिर्णयस्त्वप्रामाणिकत्वादुपेक्षणीयइत्यलमतिविस्तरेण ॥ ॥
अथात्रैवकश्चिद्विशेषोलिख्यते ॥ यदुक्तंविश्वरूपनिबंधे ॥ आश्वि
नस्यसितेपक्षेप्रारब्धेनवरात्रके ॥ शावेसूतेसमुत्पन्नेक्रियाकार्याकथं
बुधैरितिप्रश्ने सूतकंवर्तमानेचेत्तत्रोत्पन्नंयदाभवेत् ॥ देवीपूजाप्रक
र्त्तव्यापशुयज्ञविधानतः ॥ तत्रनवरात्रेवर्तमानेसूतकंयदोत्पन्नंभवेदि
त्यन्वयः ॥ यथा ॥ सूतकेपूजनंप्रोक्तंदानंचैवविशेषतः ॥ देवीमु
द्दिश्यकर्त्तव्यंतत्रदोषोनविद्यतइति ॥ अत्रप्रारब्धेदेवीपूजादिकेसू
तकादौप्राप्तेसतिस्वयमेवपूजादिकुर्यादितिविधानादर्थात्प्राप्तप्रारब्धमे
ग्निहोत्रादिवत्कारयितव्यमिति ॥ ॥ अथनवरात्रेदेवीपूजाविधिक्रिया
लिख्यते ॥ ॥ यथा ॥ आश्विनशुक्लप्रतिपदिकृतस्नानएकभक्ता
दिनियमंगृहीत्वानवमींयावद्वक्ष्यमाणलक्षणेमंडपेवक्ष्यमाणलक्षणांदे
वींसंस्थाप्यवक्ष्यमाणविधिनादेव्यामहापूजांकुर्यात् ॥ तत्रमंडपल
क्षणंभविष्योत्तरेप्रोक्तम् ॥ दुर्गागृहंप्रकर्त्तव्यंचतुरस्रंसुशोभनम् ॥ रह
स्यंस्वस्तिकाद्यैश्चार्चितंवस्त्रादिमंडितम् ॥गौरमृद्गोमयाभ्यांचलिप्तंश
स्त्रसमन्वितम्॥तन्मध्येवेदिकाकार्याचतुर्हस्तसमाशुभा ॥तस्यांसिंहा
सनंक्षौमकंबलाजिनसंयुतम् ॥तत्रदुर्गांप्रतिष्ठाप्यसर्वलक्षणसंयुताम् ॥
सर्वदेवमयींप्रौढांयौवनोन्मादशालिनीम् ॥भुजैश्चतुर्भीरुचिरैर्दशभिर्वा
विभूषिताम् ॥ तप्तहाटकवर्णांगींत्रिनेत्रांशशिशेखराम् ॥ पीताम्बरपरि
धानांनीलकौशेयसंयुताम् ॥ ग्रैवेयहारकेयूरनूपुराभरणान्विताम् ॥
नानारत्नविचित्रेणमुकुटेनाविराजिताम् ॥ अनेककुसुमाकीर्णाकपर्देन
सुशोभिताम् ॥ नितम्बबिंबसंबद्धकिंकिणीक्काणनादिनीम् ॥ शूलच
क्रगदाशक्तिवज्रचापासिधारिणीम् ॥ घण्टाक्षमालाकरकपानपात्रल
सत्कराम् ॥ तदग्रेछिन्नशिरसंमहिषं रुधिरप्लुतम् ॥ निःसृतार्ध
तनूकंठनालंचर्मासिधारिणम्॥देवीकरधृतग्रीवंशूलेनोरसिताडितम् ॥

१ चतुर्हस्ता समा शुभेत्यपि पाठः ।

दैत्यंकरालदंष्ट्रास्यंविद्युत्कपिशमूर्धजम् ॥ नागपाशेनविक्षिप्तंहर्यक्षेणा पिविद्रुतम् ॥ वमद्रुधिरवक्त्रेणधुन्वन्नूर्ध्वसटंरुषा ॥ ऊर्ध्वलांगूलदंडेन देव्यधिष्ठानशोभिना ॥ सर्वतोमातृचक्रेणसेव्यमानांसुरैस्तथा ॥ पूजयेत्प्रयतोदेवींनरोनियममास्थितइति ॥ अत्रनियमाश्चदेवीपुराणे एवोक्ताः ॥ कन्यासंस्थेरवौशक्रशुक्लामारभ्यनंदिकाम् ॥ अयाची ह्यथवैकाशीनक्ताशीवाथवाग्यतः ॥ नन्दिकाम्प्रतिपदम् ॥ मार्कण्डे यपुराणेपि ॥ निराहारोयतात्मानावित्युक्तत्वात् ॥ शक्तौसत्यां निराहारोवास्यात्॥विध्यंतरंचदुर्गोत्सवेप्रोक्तम् ॥ भूमौशयीतचामंत्र्य कुमारीर्भोजयेन्मुदा ॥ वस्त्रालंकारदानैश्चसंतोष्याः प्रतिवासरम् ॥ बलिंचप्रत्यहंदद्यादोदनंमांसमाषवत् ॥ त्रिकालंपूक्षयेद्देवींजपस्तोत्र परायणइति ॥ जपोगुरूपदिष्टविधिनामंत्रस्य ॥ स्तोत्रंसप्तशति कादि ॥ तत्रसप्तशतिकायाःपाठविधिर्दुर्गोत्सवेप्रोक्तः ॥ यथा ॥ सुस्नातःप्रक्षालितवस्त्रंपरिधायचंदनमृगमदकुंकुमैः सर्वांगमनुलि प्यत्रिपुंड्रंकृत्वापूर्वाभिमुखोदेवीमुखोवामसुखोवासम्यगुपविश्यसोपग्र हपाणिराचम्याभिमतकामनाप्राप्त्यर्थंसप्तशतिकापाठंकरिष्यइतिसंक ल्प्यैकाग्रमनाःसंभाषणादिपरिहरन्दिशोनवलोकयन्देवींमनसाध्या त्वासंपूर्णवर्णस्वरोच्चारतत्परःपदमात्राविभक्तिविवेकज्ञानवान्पठेदि ति॥नवरात्रेशुक्लप्रतिपदमारभ्यनवमीपर्यंतंप्रतिदिनमेकैकांकुमारीमे कोत्तरवृद्ध्याद्विगुणवृद्ध्यावाप्रतिदिनंनवनवापिवा वैभवानुसारेणसं पूज्यभोजयेत्॥तदुक्तंस्कंदपुराणे ॥एकैकांपूजयेत्कन्यामेकवृद्ध्यात थैवच॥ द्विगुणंद्विगुणंवापिप्रत्येकंनवकंतुवा ॥नवभिर्लभतेभूमिमैश्वर्यं द्विगुणेनच ॥ एकवृद्ध्यालभेत्क्षेममेकैकेनाश्रियंलभेत्॥एकवर्षातुया कन्यापूजार्थंतांविवर्जयेत् ॥गंधपुष्पफलादीनांप्रीतिस्तस्यानविद्यते॥ द्विवर्षकन्यामारभ्यदशवर्षावधिक्रमात् ॥ पूजयेत्सर्वकार्येषुयथावि ध्युक्तमार्गतः॥कुमारिकाद्विवर्षाचत्रिवर्षाचत्रिमूर्तिनी ॥ चतुर्वर्षातुक

ल्याणीपंचवर्षातुरोहिणी ॥ षड्वर्षातुभवेत्कालीसप्तवर्षातुचंडिका ॥
अष्टवर्षाशांभवीतुदुर्गातुनवभिःस्मृता ॥ दशवर्षासुभद्रेतिनाम्नातु
परिकीर्तिता ॥ अतऊर्ध्वंतुयाकन्यासर्वकार्येषुवर्जिता ॥ दुःखदारि
द्र्यनाशायशत्रूणांनाशनायच ॥ आयुष्यबलवृद्ध्यर्थंकुमारींपूजयेन्नरः॥
आयुष्कामास्त्रिमूर्तिंतुत्रिवर्गस्यफलाप्तये ॥ अपमृत्युव्याधिपीडादुः
खानामपनुत्तये ॥ सर्वसौख्यधनारोग्यपुत्रपौत्रादिवृद्धये ॥ कल्या
णींपूजयेद्धीमान्नित्यंकल्याणवृद्धये ॥ आरोग्यसुखकामीचजयका
मीतथैवच ॥ यशःकामीनरोनित्यंरोहिणींपरिपूजयेत् ॥ विद्यार्थीचज
यार्थीचराज्यार्थीचविशेषतः॥शत्रूणांचविनाशार्थंकालिकांपूजयेन्नरः॥
ऐश्वर्यंशुभकामीचस्वर्गकामीचयोनरः ॥ संग्रामेजयकामीचचंडि
कांपरिपूजयेत् ॥ दुःखदारिद्र्यनाशायनृपसंमोहनायच ॥ महापापवि
नाशायशांभवींचप्रपूजयेत् ॥ सबलोत्कटशत्रूणामुग्रसाधनकर्माणि ॥
दुर्गांदुर्गविनाशायपूजयेत्सततंबुधः ॥ सौभाग्यधनधान्यादिवांछि
तार्थफलाप्तये ॥ सुभद्रांपूजयेन्मर्त्योदासीदासविवृद्धये ॥ अथपूजामं
त्राश्चतत्रैवोक्ताः॥ प्रातःकालेविशेषेणकृताभ्यंगोविशेषतः॥ आवाहये
त्ततःकन्यांमंत्रेणानेनभार्गव॥आवाहनमंत्रः॥ मंत्राक्षरमयींलक्ष्मींमातृ
णांरूपधारिणीम्॥नवदुर्गामिमांसाक्षात्कन्यामावाहयाम्यहम् ॥ ततः
संपूजयेद्धीमान्मंत्रैरेभिःपृथक्पृथक्॥ जगत्पूज्येजगद्वंद्येसर्वशक्तिस्वरू
पिणि ॥ पूजांगृहाणकौमारिजगन्मातर्नमोस्तुते ॥ इतिकुमारीपूजा ॥
त्रिपुरांत्रिपुराधारांत्रिवर्गज्ञानरूपिणीम् ॥ त्रैलोक्यवंदितांदेवींत्रिमूर्त्तिं
पूजयाम्यहम् ॥ इतित्रिमूर्त्तिपूजा ॥ कलात्मिकांकलातीतांकारुण्य
हृदयांशिवाम् ॥ कल्याणज्ञानदांनित्यंकल्याणींपूजयाम्यहम् ॥ इति
कल्याणीपूजा॥अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम् ॥अनंतश
क्तिकांलक्ष्मींरोहिणींपूजयाम्यहम् ॥ इतिरोहिणीपूजा ॥ कामचारां
शुभांकांतांकालचक्रस्वरूपिणीम् ॥ कामदांकरुणोदारांकालींसं० ॥

इतिकालीपूजामंत्रः ॥ चंडवीरांचंडमायांचंडमुंडप्रभंजनीम् ॥ पूजयामिसदादेवींचंडिकांचंडविक्रमाम् ॥ चंडिकापूजामंत्रः ॥ सदानंदकरींशांतांसर्वदेवनमस्कृताम् ॥ सर्वभूतात्मिकांलक्ष्मींशांभवींपू० ॥ इतिशांभवीपूजामंत्रः ॥ दुर्गमेदुस्तरेकार्येभवदुःखविनाशनीम् ॥ पूजयामिसदाभक्त्यादुर्गांदुर्गार्तिनाशिनीम्॥इतिदुर्गापूजामंत्रः ॥ सुंदरींस्वर्णवर्णाभां सुखसौख्यप्रदायिनीम्॥सुभद्रजननींदेवींसुभद्रांपूजयाम्यहम्॥इतिसुभद्रापूजामंत्रः॥एवमभ्यर्चनंकुर्यात्कुमारीणांप्रयत्नतः॥ कंचुकैश्चैववस्त्रैश्चगंधपुष्पाक्षतादिभिः ॥ नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिरिति ॥ पूज्यापूज्यकुमारीस्वरूपंचतत्रैवनिरूपितम् ॥ हीनाधिकांगींकुष्ठांगींविशीलकुलसंभवाम् ॥ग्रंथिस्फुटितशीर्णांगींरक्तपूयव्रणार्दिताम्॥जात्यंधांकेकरांकाणींकुरूपांतनुलोमशाम् ॥ संत्यजेद्रोगिणींकन्यांदासीगर्भसमुद्भवाम्॥ अरोगिणींसुपुष्टांगींसुरूपांव्रणवर्जिताम्॥ एकवंशसमुद्भूतांकन्यांसम्यक्प्रपूजयेत् ॥ ब्राह्मणींसर्वकार्येषुजयार्थेनृपवंशजाम्॥ लाभार्थेवैश्यवंशोत्थांसुतार्थेशूद्रवंशजाम् ॥ दारुणेचांत्यजातीनांपूजयेद्विधिनानरइति ॥ नवरात्रेदेवीपूजाकरणासमर्थैमहाष्टम्यामेवकुर्यात्॥ तदुक्तंब्रह्मांडपुराणे॥अत्राष्टम्यांभद्रकाली दक्षयज्ञविनाशिनी ॥ प्रादुर्भूतामहाघोरायोगिनीकोटिभिःसह ॥ अतोर्थंपूजनीयासातस्मिन्नहनिमानवैः ॥ उपोषितैर्वस्त्रधूपदीपैर्माल्यानुलेपनैः॥आमिषैर्विविधैःशाकैर्होमैर्ब्राह्मणतर्पणैः॥बिल्वपत्रैः श्रीफलैश्चचंदनेनघृतेनच ॥ नवम्यांतुकृतस्नानैःसर्वैःपूज्यास्तुब्राह्मणाइति ॥ अथाश्ववद्भिर्नृपैराश्विनशुक्लप्रतिपदमारभ्य महानवमींयावदश्वशांत्यर्थंलोहाभिसारिकंकर्मकार्यम् ॥ यथोक्तंदेवीपुराणे ॥ आश्वयुक्शुक्लप्रतिपत्स्वातियोगेशुभेदिने ॥ पूर्वमुच्चैःश्रवानामप्रथमंश्रियमावहेत् ॥ तस्मात्साश्वैर्नरैस्तत्रपूज्योऽसौश्रद्धयासदा ॥पूजनीयाश्चतुरगानवमींयावदेवहि ॥ शांतिःस्वस्त्ययनंकार्यंतदातेषांदिनेदिने ॥

धान्यंभल्लातकंकुष्ठंवचासिद्धार्थकास्तथा॥पंचवर्णेनसूत्रेणग्रंथितेषांतु
बंधयेत् ॥ वायव्यैर्वारुणैःसौरैःशाक्तैर्मंत्रैःसवैष्णवैः ॥ वैश्वदेवैस्तथा
ग्नेयैर्होमःकार्योदिनेदिने॥तुरगारक्षणीयास्तुपुरुषैःशस्त्रपाणिभिः॥नच
ताड्याःक्वचित्तत्रनचवाह्याःकथंचनेति ॥ भविष्योत्तरेविशेषउक्तः ॥
कन्यागतेसवितरिशुक्लपक्षेष्टमीतुया ॥ मूलनक्षत्रसंयुक्तासामहानव
मीस्मृता ॥ तस्यांसदापूजनीयाचामुंडामुंडमालिनी ॥ तस्यांयेह्युप
युज्यंतेप्राणिनोमहिषादयः ॥ सर्वेतेस्वर्गतिंयांतिघ्नतांपापंनविद्यते ॥
यावन्नचालयेद्गात्रंपशुस्तावन्नहन्यते ॥ नतथाबलिदानेनपुष्पधूप
विलेपनैः ॥ यथासंतुष्यतेमेषैर्महिषैर्विंध्यवासिनी ॥ बलिदानंचमांस
समाषसहितौदनेनक्रियमाणम् ॥ एवंचविंध्यवासिन्यांनवरात्रोपवासि
नः॥एकभुक्तेननक्तेनस्वशक्त्यायाचितेनवा॥ पूजनीयाजनैर्देवीस्थाने
स्थानेपुरेपुरे ॥ स्नातैःप्रमुदितैर्हृष्टैर्ब्राह्मणैःक्षत्रियैर्नृप ॥ वैश्यैःशूद्रै
र्भक्तियुक्तैर्म्लेंच्छैरन्यैश्चमानवैः ॥ स्त्रीभिश्चकुरुशार्दूलतद्विधानमिदं
शृणु ॥ जयाभिलाषीनृपतिःप्रतिपत्प्रभृतिक्रमात् ॥ लोहाभिसारिकं
कर्मकारयेद्यावदष्टमी॥लोहाभिसारिकविधानंतत्रैवोक्तम् ॥ प्रागुदक्प्र
वणेदेशेपताकाभिरलंकृतम् ॥ मंडपंकारयेद्दिव्यंनवसप्तकरंवरम् ॥
षोडशहस्तप्रमाणमित्यर्थः ॥ आग्नेय्यांकारयेत्कुंडंहस्तमात्रंसुशोभ
नम् ॥ मेखलात्रयसंयुक्तंयोन्याश्वत्थदलाभया ॥ राजचिह्नानिसर्वाणि
शस्त्राण्यस्त्राणियानिच ॥ आनीयमंडपेतानिसर्वाण्यत्राधिवासयेत् ॥
ततस्तुब्राह्मणःस्नातःशुक्लांबरधरःशुचिः ॥ ओंकारपूर्वकैर्मंत्रैस्तल्लिंगै
र्जुहुयाद्घृतम्॥लोहनामाऽभवत्पूर्वंदानवस्तुमहाबलः॥सदेवैःसमरेक्रु
द्धैर्बहुधाशकलीकृतः॥तदंगसंभवंसर्वंलोहंयद्दृश्यतेक्षितौ॥शस्त्रास्त्रमंत्रै
र्होतव्यंपायसंघृतसंयुतम्॥हुतशेषंतुरंगाणांराजानमुपहारयेत् ॥लोहा
भिसारिकंकर्मतेनैतदृषिभिःस्मृतम् ॥ धृतपल्याणकानश्वान्गजांश्चस
मलंकृतान्॥भ्रामयेन्नगरेनित्यंनंदिघोषपुरस्कृतान्॥प्रत्यहंनृपतिःस्ना

१ असिलोमेतिपाठांतरम्।

त्वासंपूज्यपितृदेवताः॥पूजयेद्राजचिह्नानिफलमाल्यविलेपनैः॥तस्या भिसरणाद्राज्ञोविजयःसमुदाहृतः॥पूजामंत्रान्प्रवक्ष्यामिपुराणोक्तानहं तव॥यैःपूजिताःप्रयच्छंतिकीर्तिमायुर्यशोबलमिति॥तत्रादौछत्रमंत्रः॥ यथांबुदाश्छादयंतिशिवायेमांवसुंधराम्॥ तथाच्छादयराजानंविजया रोग्यवृद्धयइति ॥ अथचामरमंत्रः ॥ शशांककरसंकाशक्षीरपिंडीरपां डुर॥प्रोत्सारयाशुदुरितंचामरामरदुर्लभेति ॥अथाश्वमंत्रः ॥ गंधर्वकु लजातस्त्वंमाभूयाःकुलदूषकः ॥ ब्रह्मणःसत्यवाक्येनसोमस्यवरु णस्यच ॥ प्रभावाच्चहुताशस्यवर्धयत्वंतुरंगमान् ॥ तेजसाचैवसूर्य स्यमुनीनांतपसातथा ॥ रुद्रस्यब्रह्मवीर्येणपवनस्यबलेनच ॥ स्मर त्वंराजपुत्रत्वंकौस्तुभंचमणिंस्मर ॥ यांगतिंब्रह्महागच्छेन्मातृहापि तृहातथा॥भूमिहाऽनृतवादीचक्षत्रियश्चपराङ्मुखः॥सूर्याचन्द्रमसौवा युर्यावत्पश्यंतिदुष्कृतम् ॥ व्रजाश्वतांगतिंक्षिप्रंतच्चपापंभवेत्तव ॥ निकृत्तोयदिवाछिन्नोयुधेध्वानितुरंगम ॥ रिपून्विजित्यसमरेसहभर्त्रा सुखीभवेति ॥ अथध्वजमंत्रः ॥ शक्रकेतोमहावीर्यश्यामवर्णार्चया म्यहम् ॥ पत्रिराजनमस्तेस्तुतथानारायणध्वज ॥ गरुत्मन्मारुतग तेत्वयिसंनिहितान्यतः ॥ सारवंत्यायुधान्यत्ररक्षत्वंचरिपुंदहेति ॥ ॥ अथपताकामंत्रः ॥ हिरण्यकशिपोर्युद्धेयुद्धेदेवासुरेतथा ॥ का लनेमिवधेयद्वद्यद्वत्त्रिपुरघातने ॥ शोभितासितथैवाद्यशोभयास्मांश्च संस्मर ॥ पूतनारेवतीनाम्नीकालरात्रिश्चयास्मृता ॥ दहस्याशुरिपू न्सर्वान्पताकेत्वंमयार्चितेति ॥ अथहस्तिमंत्रः ॥ कुमुदैरा वणौपद्मःपुष्पदंतोऽथवामनः॥सुप्रतीकोंजनोनीलएतेष्टौदेवयोनयः ॥ तेषांपुत्राश्चपौत्राश्चवनान्यष्टौसमाश्रिताः॥मंद्रोभद्रोगजश्चैवराजासंकी र्णएवच ॥ वनेवनेप्रसूतास्तेयूथानितुमहांतिच ॥ पांतुत्वांवसवोरुद्रा आदित्याःसमरुद्गणाः ॥ भर्तारंरक्षनागेंद्रस्वामीचप्रतिपाल्यताम् ॥ अवाप्नुयाज्जयंयुद्धेगमनेस्वास्तितोव्रजेति ॥ अथखड्गमंत्रः ॥

स्वयंभुवासमःखङ्गस्तीक्ष्णधारोदुरासदः॥श्रीगर्भोविजयश्चैवधर्माधार
स्तथैवच ॥ इत्यष्टौतवनामानिस्वयमुक्तानिवेधसा ॥ हिरण्यस्वश
रीरंतेधातादेवोजनार्दनः ॥ पितामातामहादेवतन्मेपालयसर्वदेति ॥
॥ अथचापमंत्रः ॥ सर्वायुधमहामात्रसर्वदेवारिसूदन ॥ चापमांस
वेदारक्षसाकंसायकसत्तमेति ॥ धृतंकृष्णेनरक्षार्थंसंहारार्थंहरेणच ॥
त्रयीमूर्तिगतंदेवंचतुरस्त्रंनमाम्यहम् ॥ अथच्छुरिकामंत्रः ॥ सर्वायुधा
नांप्रथमानिर्मितासिपिनाकिना ॥ शूलायुधाद्विनिष्कृष्यकृत्वामुष्टि
ग्रहंशुभम्॥चंद्रिकायाःप्रदत्तासिसर्वदुष्टनिबर्हिणी ॥ तथाविस्तारिता
चासिदेवानांप्रतिपादिता ॥ सर्वसत्वांगभूतासिसर्वाशुभनिवारिणी ॥
छुरिकेरक्षमांनित्यंशान्तियच्छनमोस्तुतइति॥ अथकनकदंडमंत्रः ॥
प्रोत्सारणायदुष्टानांसाधूनांरक्षणायच ॥ ब्रह्मणानिर्मितश्चासिव्य
वहारप्रसिद्धये ॥ यशोदेहिसुखंदेहिजयदोभवभूपतेः ॥ ताडयस्व
रिपून्सर्वान्हेमदण्डनमोस्तुतइति ॥ अथदुंदुभिमंत्रः ॥ दुंदुभेत्वंसपत्ना
नांघोरोहृदयकंपनः ॥ भवभूमिपसैन्यानांतथाविजयवर्धनः॥यथाजी
मूतघोषेणप्रहृष्यंतिचबर्हिणः ॥ तथास्तुतवशब्देनहर्षोस्माकंमुदावह
इति ॥ अथशंखमंत्रः ॥ पुण्यस्त्वंशंखपुण्यानांमंगलानांचमंगलम् ॥
विष्णुनाविधृतोनित्यमतःशांतिप्रदोभवेति ॥ अथसिंहासनमं
त्रः ॥ विजयोजयदोयंतारिपुघातीशुभंकरः ॥ दुर्वहोधर्मदःशां
तः सर्वारिष्टविनाशनः ॥ एतेष्टौसंनिधौयस्मात्तवसिंहामहाबलाः ॥
तेनसिंहासनेतित्वंमंत्रैर्वैदैश्चगीयसे ॥ नमस्तेसर्वतोभद्रभद्रदोभवभू
पतेः ॥ त्रैलोक्यजयसर्वस्वसिंहासननमोस्तुतइति ॥ तथैवकर्मचि
ह्नानिस्वानिपूज्यानिशिल्पिभिः ॥ लोहाभिसारिकंकर्मकृत्वैवंमंत्र
पूर्वकम् ॥ नियमंकृत्वातथाष्टम्यांपूर्वाह्णेस्नानमाचरेत् ॥ कुंकुमचं
पकचंदनचतुःसमैःशलपिष्टैश्च ॥ चर्चितगात्रांदेवींकुसुमैरभ्यर्चये
द्बहुभिः ॥ कुमुदैःसपद्मपुष्पैःसधूपदीपैःसनैवेद्यैः ॥ मांसैर्बल्युप

हारैर्मंगलशब्दैःसमुच्चलितैः ॥ चिह्नितछत्रैर्यानैःस्यंदनासितशस्त्र धारिजनलोकैः ॥ तुष्टैरश्वास्त्रादितुनिवेद्यतेसर्वमेवभगवत्यै ॥ अथपूजामंत्रः ॥ जयंतीमंगलाकालीभद्रकालीकपालिनी ॥ दुर्गाक्षमा शिवाधात्रीस्वाहास्वधानमोस्तुते ॥ अथबिल्वपत्रीमंत्रः ॥ अमृतोद्भवंश्रीवृक्षंमहादेवप्रियंसदा ॥ बिल्वपत्रंप्रयच्छामिपवित्रंतेसुरेश्वरि ॥ दुर्गासापूजनीयाचतद्दिनेद्रोणपुष्पकैः ॥ सचाभीष्टःसुरेशान्यास्तस्यारूढायतोग्रतः ॥ ततःखड्गंनमस्कृत्यशत्रूणांवधसिद्धये ॥ इच्छेतविजयंराज्यंसुभिक्षंचात्मनोनृपः ॥ पुनःपुनःप्रणम्यार्यांसंस्मरेद्धृदयेशिवाम्॥सर्वंकृत्वेतिकौरव्यह्यष्टम्यांजागरंनिशि॥नटनर्तकगीतैश्चकारयेत्सुमहोत्सवम् ॥ एवंहृष्टैर्निशांनीत्वाप्रभातेअरुणोदये॥ घातयेन्महिषान्मेषानटदुन्नतकंधरान्[१] ॥ शतमर्धंशतंवापितदर्धंवायथेच्छया ॥ सुरासवभृतैःकुंभैस्तर्पयेत्परमेश्वरीम् ॥कापालिकेभ्यस्तद्देयंज्वलद्भिर्दीपवृक्षकैः ॥ कश्चिच्चोपोषितोधीरोविधृतोन्येनखड्गवान्॥भूतेभ्यस्तुबलिंदद्यान्मंत्रेणानेनसामिषम् ॥ सरक्तंसजलंचान्नंगंधपुष्पाक्षतैर्युतम् ॥ त्रींस्त्रीन्वारान्सशूलेनदिविदिक्षुकिरेद्बलिम् ॥ मंत्राश्च॥बलिंगृह्णंत्विमंदेवाआदित्यावसवस्तथा ॥ मरुतश्चाश्विनौरुद्रासुपर्णाःपन्नगाग्रहाः ॥ असुरायातुधानाश्चपिशाचोरगराक्षसाः ॥ डाकिन्योयक्षवेतालायोगिन्यःपूतनाःशिवाः ॥ वीराश्चभैरवाश्चैवपूतनामातृमंडलम् ॥ दिक्पालालोकपालाश्चयेचविघ्नविनायकाः ॥ जगतांशांतिकर्तारोब्रह्माद्याश्चमहर्षयः ॥ माविघ्नंमाचमेपापंमासंतुपरिपंथिनइति ॥ महानवम्यांसंतुष्टाःकृत्वादुर्गामहोत्सवम् ॥ तेसर्वेपापनिर्मुक्तायांतिभागवतींपुरीम् ॥ इत्येतत्तेसमाख्यातंदुर्गादेव्यामहोत्सवम् ॥ पठतांशृण्वतांचापिसर्वाशुभनिवारणमिति ॥ ॥ इतिमहाऽष्टमीनिर्णयः ॥ ॥ अथदुर्गोत्सवप्रसंगाद्दशम्यामपराजितापूजाविधिः ॥ ॥ यथा ॥ दशम्यांपूजयित्वातुमृन्मयींचापराजिताम् ॥

१ रुदतोनतकंधरानितिपाठः ।

कलशिकांतोयसंपूर्णांजयंतीपल्लवाननाम् ॥ चतुर्वर्णैस्तदायात्राक र्त्तव्यासाधनेनच ॥ दशम्यांचबलंराजापूजयित्वापराजिताम् ॥ दशदिक्षुमनोयोगाद्यात्रांकृत्वाथवैनृपः ॥ नीराजनंस्वस्यकृत्वाततो नीराजयेद्बलमिति ॥ नीराजनमंत्रः ॥ चतुरंगंबलंमह्यंनिररिष्टंव्रजत्विह ॥ विजयोममसर्वत्रअस्तुयोगिप्रसादतः॥ ॥इतिदुर्गोत्सवः॥ अथकार्तिकशुक्लाष्टमीगोपाष्टमी॥तत्रगोपूजाकार्या ॥ तदुक्तंकूर्मपुराणे॥ शुक्लाष्टमीकार्त्तिकेतुस्मृतागोपाष्टमीबुधैः ॥ तत्रपूजांगवांकुर्याद्गोग्रासंगोप्रदक्षिणाम् ॥ गवानुगमनंकार्यंसर्वान्कामानभीप्सतेति॥ अथ पौषशुक्लाष्टमी ॥ साचबुधवारेणयुक्तामहाभद्रेत्युच्यते ॥ तत्र महेश्वरपूजादिकंकार्यम् ॥ तदुक्तंभविष्योत्तरपुराणे ॥ पौषेमासियदादेविशुक्लाष्टम्यांबुधोभवेत् ॥ तदातुसामहापुण्यामहाभद्रेतिकीर्त्तिता ॥ तस्यांस्नानंजपोहोमस्तर्पणंब्रह्मभोजनम् ॥ मत्प्रीतयेमहादेविपूज्योहंविधिवद्बुधैरिति ॥ इयमेवभरणीनक्षत्रयोगेनतुजयंती प्रोच्यते ॥ यथाभविष्योत्तरे ॥ पौषेमासियदादेविअष्टम्यांनगजे शुभे ॥ नक्षत्रंजायतेपुण्यंयल्लोकेरौद्रमुच्यते ॥ तदातुसामहापुण्याजयंतीअष्टमीशुभा ॥ तस्यांस्नानंतथादानंजपोहोमश्चतर्पणम्॥ सर्वंकोटिगुणंदेविकृतंभवतिकृत्स्नशइति ॥ रौद्रंभरणी ॥ वराहमिहिरेणयथाभाणि ॥ रौद्राणिपूर्वाभरणीपित्र्याणीति ॥ ॥अथ माघशुक्लाष्टमीसाचभीष्माष्टमीत्युच्यते ॥ तत्रभीष्मतर्पणंश्राद्धंचकार्यम् ॥ यथा ॥ माघमासिसिताष्टम्यांसतिलंभीष्मतर्पणम् ॥ श्राद्धंचयेसकृत्कुर्युस्तेस्युःसंततिभागिनइति ॥ अथफाल्गुनशुक्लाऽष्टम्यांलक्ष्मीःसीताचपूज्या ॥ यदेवान्नादिकंब्राह्मणेभ्योदत्तंतदेव भोज्यंनान्यत् ॥ तदुक्तंब्रह्मपुराणे ॥ प्रदत्तभुग्भिरष्टम्यांसुस्नातैः समलंकृतैः ॥ लक्ष्मीस्सीताचसंपूज्यागंधमाल्यादिभिस्तथा ॥ ततःप्रदोषसमयेदीपादेयाःसहस्रशः॥ दत्ताशिष्टंतदाभोज्यंभक्षितव्यंच

बंधुभिः॥ ॥अथबुधाष्टमी॥तस्यांसंपूर्णायांशुक्लाष्टम्यांयदायदाबुधवारोभवतितदातदाकल्पोक्तविधिनाएकभक्तव्रतंकार्यम् ॥ तदुक्तंभविष्योत्तरे॥यदायदासिताष्टम्यांबुधवारोभवेद्यदि ॥ तदातदातुसाग्राह्या एकभक्ताशनेनृप ॥ बुधाष्टमीतुसंपूर्णायथोक्तफलदायिनी॥ ॥अथयानिषिद्धातामाह ॥ ॥संध्याकालेतथारात्रौप्रसुप्तेचजनार्दने॥बुधाष्टमीन कर्त्तव्याहंतिपुण्यंपुराकृतामिति॥ ॥अथसिद्धविरुद्धादिकंचलिख्यते॥ अष्टमीभौमेनसिद्धा ॥ भौमेषष्ठीतृतीयास्यादष्टमीचत्रयोदशीति सिद्धत्वमुक्तम् ॥ गुरुणातुविरुद्धा ॥ यथा ॥ जीवेष्टमीचतुर्थीति॥ अत्रतृतीयावत्संग्रामबलोपयोगीनिकर्माणिकुर्यात् ॥ यथा ॥ जयासुविदधीताजिबलकार्याणिनिर्वृतइति ॥ अत्रतैलस्नानंमांसभक्षणंनारिकेरभक्षणंचनिषिद्धम् ॥यथा॥नार्कारवारेनचसंक्रमेपिनवैधृतौनव्यतिपातयोगे ॥नपक्षमध्येनचविष्टिषष्ठ्योरभ्यंगइष्टोनचपर्वसूक्तः॥ पक्षमध्येष्टम्याम्॥तथापलमष्टमीष्विति ॥तथाच॥अष्टम्यादिषुनाद्यादूर्ध्वगतीच्छुःकदाचिदपिविद्वान्॥शीर्षकपालांत्राणिचनखचर्मातिलानिचक्रमशइति॥अयमर्थः॥अष्टम्यांशीर्षनारिकेलंनाद्यात्॥नवम्यांकपालंतुंबीफलम्॥दशम्यामंत्रंनालीशाकम्॥एकादश्यांनखानिशणपुष्पाणि॥ द्वादश्यांचर्मबिल्वम् ॥ त्रयोदश्यांतिलान् वार्त्ताकंचनाद्यादित्यर्थः ॥ तेषांभक्षणंशीर्षादिभक्षणतुल्यमित्यभिप्रायः ॥ तथाऽष्टम्यांदिवानभोक्तव्यम् ॥ तदुक्तम् ॥ भूताष्टम्योर्दिवाभुक्त्वारात्रौ भुक्त्वातुपर्वणि ॥ एकादश्यामहोरात्रंभुक्त्वाचांद्रायणंचरेदिति ॥ अत्रचतुर्दश्यष्टमीचैवअमावास्याचपूर्णिमा ॥ पर्वाण्येतानिराजेंद्ररविसंक्रांतिरेवचेत्यत्राष्टमीद्वयमेकंपर्व चतुर्दशीद्वयमेकममावास्यापूर्णिमासंक्रांतिश्चेतिपंचपर्वाणिकालादर्शोक्तत्वात् ॥ भूताष्टम्योरपि पर्वत्वेतयोःपृथगुपादानात्पर्वणीतिभूताष्टमीव्यतिरिक्तंपर्वगृह्यते ॥ अथवा ॥ शुक्लाष्टमीकृष्णचतुर्दशीचदर्शोथराकारविसंक्रमश्चेतिग्रंथा

१ चैत्रइतिपाठांतरम्।

तरे ॥ शुक्लाष्टमीकृष्णचतुर्दश्योरेवपर्वत्वाभिधानात् ॥ कृष्णाष्टमी शुक्लचतुर्दश्योरपिदिवाभोजननिषेधप्राप्त्यर्थं पर्वणीत्युक्त्वापि भूता ष्टम्योरितिपुनर्वचनम् ॥ पक्षद्वयगतासुसर्वास्वष्टमीषुतिथिषुतिथिप तित्वाच्छिवःपूज्यः ॥ अष्टम्यांचचतुर्दश्यामित्याद्युक्तमेव ॥ अष्टमी दशमीचक्रूरग्रहेतुलास्थितेसातिशुभकार्येषुवर्ज्या ॥ पराःपरेषामित्यु क्तमेव ॥ तथामिथुनकन्यास्थेरवावष्टमीदग्धा ॥ मिथुनावलयोरि त्याद्युक्तमेव॥अष्टम्यामीशान्यांदिशियोगिन्यःप्रतिवसंति ॥ अतस्तत्र यात्रानकार्या॥वायव्येशान्ययोरित्याद्युक्तमेव ॥ ॥ इतिश्रीसूर्यसेनम हीमहेंद्रविरचितेनिर्णयामृतेअष्टमीनिर्णयः ॥ ॥ अथनवमीनिर्णयः ॥ नवमीतिथिरुपवासादिष्वष्टमीयुक्तैवग्राह्या ॥ यदुक्तम् ॥ वसुरंध्रयो रिति ॥ अथलघुतिथिनिर्णयः पद्मपुराणे ॥ अष्टम्यासहिताग्राह्या नकदाचित्परायुता॥चामुंडापूजनंकृत्वापारणंचततःपरमिति ॥ तथा देवीपुराणेप्युक्तम् ॥ अष्टम्यामुदितेसूर्येदिनांतेनवमीभवेत् ॥ पारणे सातिथिःप्रोक्ताबलिदानंपरेहनीति ॥ तथामत्स्यपुराणेपि ॥ अष्टम्या सहितारिक्ताकर्त्तव्यासर्वदाबुधैः ॥ पूर्णायुक्तांतदाकुर्यात्क्वचिन्नास्त्यष्ट मीयुतेति ॥ तथाचब्रह्मवैवर्त्ते॥ अष्टम्यानवमीविद्धाकर्त्तव्याफलकांक्षि भिरित्यष्टमीविद्धनवमीविधानात् ॥ तथा ॥ नकुर्यान्नवमींतात दशम्यांतुकदाचन ॥ तथा ॥ नवमीदशमीचैवनोपोष्यापरसं युतेतिपरविद्धानिषेधाच्च॥नवम्यष्टमीयुतैवोपोष्येतिसिद्धांतः ॥ ॥अ थवैशाखमासेउभयनवम्योरुपवासंकुर्याच्चंडिकांचपूजयेत् ॥ तदुक्तंभ विष्योत्तरे ॥ वैशाखेमासिराजेन्द्रनवम्यांपक्षयोर्द्वयोः ॥ उपवा सपरोभक्त्यापूजयानस्तु चंडिकाम् ॥ हंसकुंदेंदुसंकाशस्ते जसा[1]बुधसंनिभः ॥ विमानवरमारूढोदेवलोकेमहीयत इति ॥ ज्येष्ठशुक्लनवम्यांब्रह्माणीनाम्नीमुमां संपूज्यब्राह्म[2]णीःकुमारीश्चयथाश क्तिभोजयेत् ॥ तदुक्तंभविष्योत्तरे ॥ उपवासपरोभक्त्यानवम्यां

---

१ ध्रुवसन्निभइतिपाठांतरम् । २ ब्राह्मणानितिपाठांतरम् ।

पूजयेदुमाम्॥ब्रह्माणींत्विवितिवैनाम्नींश्वेतरूपेणरूपिणीम् ॥ज्येष्ठमासि नृपश्रेष्ठकृत्वानक्तस्यवैविधिम्॥ शाल्यन्नंपायसोपेतंस्वयंभुंजीतवाग्यतः॥कुमारीभोजयेच्चापिस्वशक्त्याब्राह्मणीस्तथेति॥अथापाढ्प्युभयाष्टम्योःपंचगव्यस्नातउपोषितोनवम्योर्हैमैरावणगतामैंद्रीनाम्नींदेवींपूजयित्वानक्तंकुर्यात् ॥ तदुक्तंभविष्योत्तरे ॥ उपवासपरोभक्त्या नवम्यांपक्षयोर्द्वयोः ॥ आषाढेमासिराजेंद्रयःकुर्यान्नक्तभोजनम्॥पूजयेच्छ्रद्धयादुर्गामैंद्रीनाम्नींतुनामतः ॥ ऐरावणगतांसुभ्रांश्वेतरूपेणरूपिणीम्॥ स ऐरावणमारुह्यइंद्रस्यानुचरोभवेदिति ॥ ॥अथश्रावणनवम्योःकौमारीनाम्नींदुर्गासंपूज्यक्षीरान्नंनक्तंभुंजीत ॥ तदुक्तंभविष्योत्तरे ॥ श्रावणेमासिराजेंद्रयःकुर्यान्नक्तभोजनम् ॥क्षीरपाष्टिकभुक्तेन सर्वभूतहितेरतः॥ उपवासपरोवीरनवम्यांपक्षयोर्द्वयोः ॥कौमारीमितिनाम्नींचचंडिकांपूजयेत्सदा ॥कृत्वारौप्यमयींभक्यावोरांवैपापनाशिनीम् ॥करवीरैश्चकुसुमैर्गंधैश्चागुरुचन्दनैः ॥ धूपेनचदशांगेनमोदकैश्चापिपूजयेत्॥ कुमारीभोंजयेद्भक्यास्त्रियोविप्रांश्चशक्तितः॥भुंजीतवाग्यतःपश्चाद्बिल्वपत्रकृताशनः॥एवंयःपूजयेदार्यांश्रद्धयापरयान्वितः॥ सयातिपरमंस्थानंयत्रदेवोवृषध्वजइति ॥ ॥ अथभाद्रशुक्लनवम्यां नंदानाम्नींदुर्गासंपूज्यविष्णुलोकंप्राप्नोति॥ तदुक्तंभविष्योत्तरे॥मासि भाद्रपदेयातुनवमीबहुलेतरा ॥ सातुनंदामहापुण्याकीर्तितापापनाशिनी ॥ तस्यांयःपूजयेद्दुर्गांविधिवत्कुरुनन्दन ॥ सोऽश्वमेधफलंविंद्याद्विष्णुलोकंचगच्छतीति ॥ अत्रैवकृष्णपक्षेनवम्यांदेवींबोधयेत्॥ तदुक्तंदेवीपुराणे ॥ कन्यायांकृष्णपक्षेतुपूजयित्वार्द्रभेपिवा ॥ नवम्यांबोधयेद्देवींगीतवाद्यादिनिःस्वनैरिति ॥ ॥अथाश्विनशुक्लनवमीमन्वादिः ॥ तदुक्तम् ॥ आश्वयुक्शुक्लनवमीति ॥ ॥अथकार्तिकशुक्लनवमीयुगादिः ॥ तदुक्तम् ॥ नवम्यूर्जेयुगादयइति ॥ ॥ अथमार्गशीर्षशुक्लनवमीनंदिनीत्युच्यते ॥ तस्यांत्रिरात्रोपोषितोदेवींसंपूज्याश्व

मेधफलंप्राप्नोति ॥ तदुक्तं भविष्योत्तरे ॥ मासिमार्गशिरेवीरशु
क्लपक्षेतुयाभवेत् ॥ सानंदिनीमहापुण्यानवमीपरिकीर्तिता ॥ यस्त
स्यांपूजयेद्देवींत्रिरात्रोपोषितोनरः ॥ सोऽश्वमेधमवाप्येहविष्णुलोके
महीयतइति ॥ अथमाघशुक्लनवमीमहानंदाप्रोक्ता ॥ तस्यांस्ना
नदानादिकृतमक्षय्यंभवति ॥ तदुक्तंभविष्योत्तरे ॥ माघमासेतु
याशुक्लानवमीलोकपूजिता॥महानंदेतिसाप्रोक्तासदानंदकरीनृणाम् ॥
तस्यांस्नानंतथादानंजपोहोमउपोषितम् ॥ सर्वंतदक्षयंप्रोक्तंयद
स्यांक्रियतेनरैरिति ॥ सर्वासुनवमीषुतिथिपतित्वेनसरस्वतीपूज्या ॥
तदुक्तम् ॥ सरस्वत्यानवम्यांचेति ॥ अथसिद्धविरुद्धादिकंलि
ख्यते ॥ नवमीशनिवारेणसोमवारेणचासिद्धा ॥ यदुक्तम् ॥ शनौच
तुर्थीनवमीति ॥ तथा ॥ सोमेतुनवमीपुष्यःश्रवणोरोहिणीमृगः ॥
एतानिसर्वदावत्ससिद्धिदानिस्वकर्मस्विति ॥ बुधवारेणविरुद्धा ॥
तृतीयानवमीत्याद्युक्तमेव ॥ नवम्यांशत्रुवधबंधनाद्युग्रकर्मका
र्यम् ॥ तदुक्तम् ॥ चतुर्दश्यांचतुर्थ्यांतुनवम्यांचारिमर्दनमित्यादि ॥
अत्रामलकस्नानंनकुर्यात् ॥ तदुक्तम् ॥ सप्तम्यांनिंदुनवमीषुचेत्या
दि ॥ अत्रदंतकाष्ठमपिवर्जयेत् ॥ तदुक्तंव्यासेन ॥ प्रतिपत्पर्व
षष्ठीषुनवम्यांहरिवासरे ॥ दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलमि
ति ॥ अत्रापिप्रतिपदीवयोगिनीसांमुख्यात्पूर्वदिशियात्रानकार्या ॥
वृश्चिकस्थेक्रूरग्रहेनवमीचाशुभाभवति ॥ उक्तंच ॥ पराःपरेषा
मित्यादि ॥ नवम्यांतुंबीफलंनभक्षयेदित्युक्तमेव ॥ ॥ इति
श्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेनवमीनिर्णयः ॥ ॥ अथ
दशमीनिर्णयः ॥ ॥ दशमीतिथिरुपवासादिषु नवमीयुतैव
ग्राह्या ॥ तदुक्तंपैठीनासिना ॥ पंचमीसप्तमीचैवदशमीचत्रयोदशी ॥
प्रतिपन्नवमीचैवकर्त्तव्यासंमुखीतिथिः ॥ आपस्तंबेनाप्युक्तम् ॥
अष्टमीनवमीविद्धाकर्तव्याफलकांक्षिभिः ॥ दशमीतुप्रकर्त्तव्यासदुर्गा

द्विजसत्तमेति ॥ यत्तुवचनम् ॥ संपूर्णादशमीकार्यापरयापूर्वयाथवा॥ युक्तानदूषितायस्मादतःसासर्वतोमुखीति॥ तत्तुपूर्वविद्धायाअलाभेउ दयकालव्यापिनीग्राह्येत्येवपरम्॥ अथैवैकादशीव्रतांगत्वेनाक्रियमाण दशम्यामेकभक्तादिकंपरविद्धायांकार्यमितिसिद्धांतः ॥अथचैत्रशुक्लद शम्यांयमपूजाकार्या॥यथादेवीपुराणे चैत्रमासतिथिकृत्यप्रक्रमे॥ धर्म राजंदशम्यांतुपूजयित्वासुगंधकैः ॥ विगतारिर्निरातंकइहचांतपरंपद मिति प्राप्नुयादितिशेषः ॥ अथज्येष्ठशुक्लदशमीदशहरेत्युच्यते॥यथा स्कंदपुराणे॥ज्येष्ठस्यशुक्लदशमीसंवत्सरमुखीस्मृता ॥ तस्यांस्नानंप्र कुर्वीतदानंचैवविशेषतः॥यांकांचित्सरितंप्राप्यदद्याद्दर्भतिलोदकम् ॥ मुच्यतेदशभिःपापैःसमहापातकोपमैरिति ॥ अत्रैवब्रह्मपुराणेविशेष उक्तः ॥ ज्येष्ठमासिसितेपक्षेदशमीहस्तसंयुता ॥ हरतेदशपापानित स्माद्दशहरास्मृतेति॥भविष्योत्तरेत्वन्योविशेषउक्तः ॥यथा॥ ज्येष्ठेशु क्लदशम्यांचभवेद्भौमदिनंयदि ॥ ज्ञेयाहस्तर्क्षसंयुक्तासर्वपापहरातिथि रिति ॥ वराहपुराणेऽपि ॥ दशम्यांशुक्लपक्षेतुज्येष्ठमासिकुजेऽहनि ॥ अवतीर्णायतःस्वर्गाद्धस्तर्क्षेचसरिद्वरा ॥ हरतेदशपापानितस्माद्दश हरास्मृतेति॥स्कंदपुराणेतुदशहरायांदशयोगाउक्ताः ॥यथा॥ज्येष्ठमा सिसितेपक्षेदशम्यांबुधहस्तयोः॥ व्यतीपातेगरानंदेकन्याचंद्रेवृषेरवा विति ॥ अत्रवाराहपुराणेकुजवारयोगउक्तः ॥ स्कंदपुराणेबुधवार योगइतिविरोधः ॥ सचकल्पव्यवस्थयापरिहरणीयः ॥ यथा ॥ अव तीर्णासरिद्वरेति अस्यांदशम्यांगंगावतारातिथित्वात्कस्मिंश्चित्कल्पे भौमवारयुक्तायांदशम्यांगंगावतीर्णा॥ कस्मिंश्चिद्बुधवारयुक्तायामित्य विरोधः ॥ दशपापानिचमनुनाप्रोक्तानि ॥ परद्रव्येष्वभिध्या नंमनसाऽनिष्टचिंतनम् ॥ वितथाभिनिवेशश्चमानसंत्रिविधंस्मृतम् ॥ पारुष्यमनृतंचैवपैशुन्यंचापिसर्वशः ॥ असंबद्धप्रलापश्चवाङ्मयंस्या च्चतुर्विधम् ॥ अदत्तानामुपादानंहिंसाचैवाविधानतः॥परदारोपसेवाच

कायिकंत्रिविधंस्मृतम्॥इयंदशहरायत्रैवयोगबाहुल्यंसैवकार्या ॥ इति दशहरानिर्णयः॥ ॥अस्यांदशम्यांगंगाजलेस्थितोदशवारान्स्कंदपुराणोक्तदशहरास्तोत्रपाठपूर्वकंस्नानंकुर्यात् ॥ तदुक्तंस्कंदपुराणे ॥ तस्यांदशम्यामेतच्चस्तोत्रंगंगाजलेस्थितः॥यःपठेद्दश कृत्वस्तुदरिद्रोवापिचाक्षमः॥सोपितत्फलमाप्नोतिगंगांसंपूज्ययत्नतइति ॥ गंगायाअसंभवेतीर्थांतरेष्वप्यनेनैवविधिनास्नानंकार्यम् ॥ नद्यांनद्यंतरंस्मृतमितिनिषेधस्तुगंगाव्यतिरिक्तविषयः ॥ यच्चोक्तंस्कंदपुराणे ॥ स्नानकालेऽन्यतीर्थेषुजप्यतेजाह्नवीजनैः ॥ विनाविष्णुपदींक्वान्यत्समर्थमघशोधनइति॥अघमर्षणविधौश्रुतिरप्याह ॥इमंमेगंगेयमुनेसरस्वतीति॥अतश्चगंगायमुनासरस्वतीशतद्रूणांस्मरणंतीर्थांतरेपिनदुष्यति॥ आश्विनशुक्लदशम्यांनवमीयुक्तायांश्रवणर्क्षयुक्तायां चापराजितापूजांकृत्वाप्रस्थानंकुर्यात्॥यदुक्तम्॥दशम्यांतुनरैःसम्यक्पूजनीयापराजिता॥ईशानींदिशमाश्रित्यअपराह्णेप्रयत्नतः ॥ तथापि ॥ संपूर्णानवमीयुक्तातस्यांपूज्यापराजिता ॥ क्षेमार्थंविजयार्थंचप्रसिद्धविधिनानरैः॥ नवमीशेषयुक्तायांदशम्यामपराजिता ॥ ददातिविजयंदेवीपूजिताजयवर्धिनी ॥ आश्विनेशुक्लपक्षेतुदशम्यांपूजयेन्नरः ॥ एकादश्यांनकुर्वीतपूजनंचापराजितम् ॥ स्कंदपुराणेपि॥दशमींयःसमुल्लंघ्यप्रस्थानंकुरुतेनृपः ॥ तस्यसंवत्सरंराज्येनक्वापिविजयोभवेत् ॥ इतिवचनाद्दशम्यामेवप्रस्थानंकार्यम् ॥ नचालस्यादिनादशमीमुल्लंघ्यैकादश्यांकार्यमितिनियमार्थम्॥नवमीयुक्तत्वंश्रवणासंभवेवेदितव्यम्॥श्रवणसंभवेतुश्रवणयुक्तायामेवदशम्यांप्रस्थानमपराजितापूजांच॥तदुक्तम् ॥ श्रवणर्क्षेतुपूर्णायांकाकुत्स्थःप्रस्थितोयतः ॥ उल्लंघयेयुः सीमानंतद्दिनर्क्षेततोनराइति ॥तथा॥श्रवणेचापराजितेतिच ॥ श्रवणाभावेतुकेवलदशम्यामेवकार्यम् ॥ तदुक्तंलल्लेनतिथेःप्राशस्त्ये ॥ तिथिःशरीरंतिथिरेवकारणंतिथिःप्रमाणंतिथिरेवसाधनमिति ॥ इतिविजयाद

शमीनिर्णयः ॥ ॥ पक्षद्वयगतासुसर्वास्वपिदशमीषुतिथिपतित्वेनां
तकःपूज्यः ॥ यदुक्तम् ॥ दशम्यामंतकस्यापीति ॥ अथसिद्धवि
रुद्धादिकंलिख्यते ॥ दशमीगुरुवारेणसिद्धा ॥ यथा ॥ गुरौदशमी
पंचम्याविति ॥ दशम्यांभौमवारेणक्रकचयोगः॥दशम्यांपंचमीवन्मां
गल्यविवाहयात्रादिकंकार्यमित्युक्तमेव ॥ सिंहकन्यातुलावृश्चिकरा
शिस्थितेक्रूरग्रहेदशमीअशुभाभवतीत्युक्तमेव ॥ एषांचतुर्णामपिपंच
मीस्यादितिप्रागुक्तम्॥सिंहवृश्चिकस्थितेसूर्येदशमीदग्धाभवति ॥मृगे
न्द्रकौप्योरित्युक्तम्॥दशम्यांक्षत्रियादित्रयोवर्णाअभ्यंगस्नानंनकुर्युः ।
उक्तंच ॥ त्रयोदश्यांद्वितीयायांदशम्यामित्यादि॥ नालीकशाकंसर्वोऽ
पिनाद्यात् ॥ उक्तंच ॥ शीर्षकपालांत्राणीति ॥ दशम्यांयोगिनीसांमु
ख्यादुदग्दिग्गमनंनकुर्युः ॥ इति श्रीसूर्यसेनमहीमहेंद्रविरचितेनि
र्णयामृतेदशमीनिर्णयोजातः ॥ ७ ॥ ॥ अथैकादशीनिर्णीयते ॥

एकादशीतिथिरुपवासादिषुरुद्रेणद्वादशीयुक्तेतियुग्मवाक्याद्यद्यपि
द्वादशीयुतैवप्रशस्ता ॥ तथापिवृद्धिह्रासाभ्यांप्रपञ्चःप्रदर्शयिष्यते ॥
नन्वत्रैकादशीव्रतविषयेनित्यत्वविधायकानिकाम्यत्वविधायकानिच
बहूनिवाक्यानिश्रूयंते ॥ तत्रनित्यत्वेयथा॥गरुडपुराणे ॥ उपोष्यैका
दशीनित्यंपक्षयोरुभयोरपीति ॥ तथासनत्कुमारेणोक्तम् ॥ एका
दशीसदोपोष्यापक्षयोःशुक्लकृष्णयोरिति ॥ विष्णुरहस्येपि ॥ द्वा
दशीनप्रमोक्तव्यायावदायुःसुवृत्तिभिरिति ॥ आग्नेयपुराणेपि ॥
उपोष्यैकादशीराजन्यावदायुःसुवृत्तिभिरिति ॥ कण्वोपि ॥ एका
दशीमुपवसेन्नकदाचिदतिक्रमेदिति ॥ विष्णुस्मृतिरपि ॥ एकाद
श्यांनभुंजीतकदाचिदपिमानवइति ॥ तथा ॥ परमापदमापन्नोहर्षे
वासमुपस्थिते ॥ सूतकेमृतकेवापिनत्याज्यंद्वादशीव्रतमिति ॥ अ
करणेप्रत्यवायोपिसनत्कुमारेणदर्शितः ॥ यथा ॥ नकरोतिहियोमूढ
एकादश्यामुपोषणम् ॥ सनरोनरकंयातिरौरवंतमसावृतमिति ॥

तथा ॥ एकादश्यांमुनिश्रेष्ठयोभुंक्तेमूढचेतनः ॥ प्रतिग्रासम सौभुंक्तेकिल्बिषंश्वादिविट्समिति ॥ तथा ॥ मद्यपानान्मुनिश्रे ष्ठयोनैवनरकंव्रजेत् ॥ एकादश्यन्नकामस्तुपितृभिःसहमज्जतीति ॥ ॥ नारदीयेपि ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ अन्न माश्रित्यतिष्ठंतिसंप्राप्तेहरिवासरे ॥ तानिपापान्युपाश्नातिभुंजानो हरिवासरइति ॥ स्कंदपुराणेपि ॥ मातृहापितृहाचैवभ्रातृहागुरु हा तथा ॥ एकादश्यांतुयोभुंक्तेपक्षयोरुभयोरपीति ॥ तथा ॥ वरंस्वमातृगमनंवरंगोमांसभक्षणम् ॥ वरंहत्यासुरापानंनैकादश्यां तुभोजनमिति ॥ उपक्रम्याकरणेपिविष्णुरहस्येदोषउक्तः ॥ समा दायविधानेनद्वादशीव्रतमुत्तमम् ॥ तस्यभंगंनरःकृत्वारौरवंनरकं व्रजेदित्यादीनिनित्यत्वविधायकवाक्यानि ॥ अथकाम्यत्वविधाय कवाक्यानि ॥ यथाह विष्णुरहस्ये ॥ यदीच्छेद्विष्णुसायुज्यंशु भांसंपदमात्मनः ॥ एकादश्यांनभुंजीतपक्षयोरुभयोपीति ॥ का त्यायनोपि ॥ संसारसागरोत्तारमिच्छेद्विष्णुपरायणः ॥ ऐश्वर्यसं ततिंस्वर्गंमुक्तिंचान्यद्यदिच्छति ॥ एकादश्यांनभुंजीनपक्षयोरुभयोर पीति ॥ स्कांदेपि ॥ यदीच्छेद्विपुलान्भोगान्मुक्तिंचात्यंतदुर्लभाम् ॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपीत्यादिकाम्यत्वविधायकानि वा क्यानि॥ एवंचसतीदमेकादशीव्रतंनित्यत्वविधायकवाक्यश्रवणादक रणेप्रत्यवायश्रवणाच्च किंनित्यंकिंवाकाम्यत्वविधायकवाक्यश्रवणा त्काम्यमिति ॥ अत्रकश्चिदाहनित्यंकाम्यमितितन्नयुक्तिसहंनित्यंका म्यमितियदेवनित्यंतदेवकाम्यमितिकर्मधारयसमासस्यार्थः॥तन्नोपप द्यते॥नित्यत्वंनामफलानपेक्षत्वम्॥काम्यत्वंचफलापेक्षत्वम् ॥ नह्येक स्यैवफलापेक्षत्वंतदनपेक्षत्वंचसंभवाति॥ भावाभावयोःसामानाधिकर ण्याभावात् ॥ अतश्चएकादश्यांनित्यंकाम्यंचेतिव्रतद्वयंविधीयते ॥ नन्वेकत्वैकस्मिन्नेकादशीरूपेकाले व्रतद्वयस्यविधानमशक्यमिति

चेन्न ॥ कर्तृभेदेनशक्यत्वात् ॥ तथाच ॥ पूर्वामुपवसेत्कामी निष्कामस्तूत्तरांसदेत्यग्रेवक्ष्यते ॥ एकव्रतत्वेदिनद्वयविधानंकदाचिन्नोपपद्यते ॥ तथा ॥ एकादशीव्रतांगनियमेपि ॥ जह्याद्भुक्तद्वयं नित्ये काम्येभुक्त्वाचतुष्टयमितिभेदःप्रकीर्त्तितः ॥ अतश्चनिष्कामोनित्यविधिनानित्यैकादशीव्रतंकुर्य्यात् ॥ सकामस्तुकाम्यविधिनाकाम्यैकादशीव्रतंकुर्यादितिसिद्धम् ॥ अथैकादशीव्रताधिकारिणः प्रदर्श्यंते ॥ कात्यायनः ॥ अष्टवर्षाधिकोमर्त्योह्यशीतिन्यूनवत्सरः ॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपीति ॥ एवंपक्षद्वयेप्येकादशीव्रतस्यसर्वत्रप्राप्तौव्यवस्थयाविशेषःकालादर्शेभिहितः॥तथा ॥ विधवायावनस्थस्ययतेश्चैकादशीद्वये ॥ उपवासोगृहस्थस्यशुक्लायामेवपुत्रिणः ॥ भुजेर्निषेधःकृष्णायांसिद्धंतस्यततोव्रतमिति ॥ अतश्चपक्षद्वयैकादशींवनस्थयतिविधवाःकुर्युः ॥ विधवावनस्थयतिसमानधर्मत्वं गारुडपुराणेप्रोक्तम् ॥ यथा ॥ पुनःप्रभातसमयेघटिकैकादशमीभवेत् ॥ तत्रोपवासोविहितोवनस्थस्ययतेस्तथा ॥ विधवायास्तुतत्रैवपरतोद्वादशीनचेदिति ॥ सकामःपुत्रवान्गृहस्थस्तुशुक्लामुपवसेत् ॥ कृष्णायामशननिवृत्तिमात्रंकुर्यात् ॥ तदुक्तम् कूर्मपुराणे ॥ एकादश्यांनभुंजीतपक्षयोरुभयोरपि ॥ वनस्थयतिधर्मोयंशुक्लामेवसदा गृहीति ॥ स्कंदपुराणेपि ॥ एकादश्यांनभुंजीतपक्षयोरुभयोरपि ॥ वानप्रस्थोयतिश्चैवशुक्लामेवसदागृहीति ॥ अतःकृष्णैकादश्यांपुत्रवान्गृहीउपवासनिषेधादशननिवृत्तिमात्रमेवकुर्यान्नोपवासमितिगम्यते॥ कृष्णैकादश्यांपुत्रिणउपवासनिषेधः ॥ कूर्मपुराणे यथा ॥ संक्रांत्यां कृष्णपक्षेचरविशुक्रदिनेतथा ॥ एकादश्यांनकुर्वीतउपवासंच पारणमिति ॥ अत्रपुत्रवानित्यनुषज्जते ॥ कात्यायनोपि ॥ एकादशीषुकृष्णासुरविसंक्रमणेतथा ॥ चंद्रसूर्योपरागेचनकुर्यात्पुत्रवान्व्रतमिति ॥ व्रतमुपवासइत्यर्थः ॥ गौतमोपि ॥ आदित्येहनिसंक्रांता

वसितैकादशीषुच ॥ व्यतीपातेकृतेश्राद्धेपुत्रीनोपवसेद्गृहीति ॥ नन्वेषुवचनेषु तथा एकादश्यांतुकृष्णायांसंक्रमेग्रहणेपिवा ॥ उपवासंनकुर्वीतगृहीपुत्रधनक्षयादित्यादिवाक्येषुचसंक्रांतिरविवारादियुक्तायांशुक्लैकादश्यामपिपुत्रिणोगृहिणउपवासनिषेधःप्रतीयतइतिचेन्न ॥ संक्रांत्यादिनिषेधस्तुसंक्रांत्यादिविहितोपवासविषयः ॥ नतुतद्युक्तैकादश्युपवासविषयः ॥ तदुक्तंजैमिनिना॥ तन्निमित्तोपवासस्यनिषेधोयमुदाहृतः ॥ नानुषंगकृतोग्राह्योयतोनित्यमुपोषणमिति॥तन्निमित्तस्यसंक्रांत्यादिनिमित्तस्योपवासस्यनिषेधः॥नत्वनुषंगकृतःसंक्रांत्यादियोगकृतएकादश्युपवासेनिषेधोनभवतीत्यर्थः॥यतोनित्यमुपोषणम्॥ काम्यसंक्रांत्याद्युपवासनिषेधोनित्यैकादश्युपवासविषयोनभवतीत्यर्थः ॥ अतश्चकृष्णपक्षैकादश्यांपुत्रवान्गृहीनित्योपवासंनकुर्यात् ॥ काम्योपवासेतुविशेषोवक्ष्यते ॥ नन्वेषुवाक्येषुकृष्णैकादश्यामुपवासोनिषिद्धोनतुभोजननिवृत्तिरुक्ता ॥ तत्कथमुच्यते कृष्णैकादश्यामशननिवृत्तिमात्रमिति ॥ सत्यम् ॥ कूर्मपुराणादिवचनबलात् ॥ यथा ॥ नशंखेनपिबेत्तोयंनखादेत्कूर्मसूकरौ ॥ एकादश्यांनभुंजीतपक्षयोरुभयोरपीति ॥ विष्णुधर्मोत्तरेपि सब्रह्महा सगोघ्नश्चस्तेयीचगुरुतल्पगः॥ एकादश्यांचयोभुंक्तेपक्षयोरुभयोरपीत्यादिवाक्यैर्भोजननिवृत्तेः पक्षद्वयैकादश्योरपिप्रतिपादितत्वात् ॥ ॥ तथा ॥ संक्रांत्यांकृष्णपक्षेचेत्यादिवाक्यैःकृष्णपक्षउपवासनिषेधाच्च॥शुक्लामेवसदागृहीत्यादिवाक्यैःशुक्लैकादश्यामुपवासविधानाच्च॥ सकामैर्गृहिभिःशुक्लैकादश्यामुपवासव्रतंकार्य्यम् ॥ कृष्णैकादश्यामशननिवृत्तिमात्रमितिसिद्धम्॥ शयनीबोधिनीमध्येतुगृहस्थमात्रेणकृष्णैकादश्यामप्युपवासव्रतंकार्यम्॥तदुक्तम् ॥ शयनीबोधिनीमध्येयाकृष्णैकादशीभवेत्॥सैवोपोष्यागृहस्थेननान्याकृष्णाकदाचनेतिपुत्रीनोपवसेद्गृहीतिपुत्रवतोगृहस्थस्यकृष्णैकादश्यामुपवासनिषेधात्सोऽ

पिशयनीबोधिनीमध्येकृष्णैकादशीषुकिंचिद्भक्ष्यंकल्पयित्वोपवासं कुर्यात् ॥ तदुक्तमनंतभट्टीये ॥ उपवासनिषेधेतुकिंचिद्भक्ष्यंप्रकल्पयेत् ॥ भक्ष्यंचविद्वाविषयेदर्शितम् ॥ अविद्वानामलाभेतुपयोदधिफलानिच॥सकृदेवाल्पमश्नीयादुपवासस्ततोभवेदिति ॥ वायुपुराणेत्वत्रैवविशेषउक्तः ॥ नक्तंहविष्यान्नमनोदनंवाफलंतिलाःक्षीरमथांबुवाज्यम् ॥ पश्चाद्गव्यंयदिवापिवायुःप्रशस्तमत्रोत्तरमुत्तरंचेति ॥ यानिपुनः॥यथोत्तरेदक्षिणेवाअयनेपरिकीर्तिते ॥ तुल्यंफलमवाप्नोति द्वादश्योरुभयोरपीति ॥तथा॥ सोमसूर्यग्रहौपुण्यौयथावैमुनिभिःस्मृतौ ॥ तथासितासितेपुण्येद्वादश्यौविष्णुतुष्टिदइति कूर्मपुराण नारदपुराणादिवाक्यानिपक्षद्वयेप्युपवासविधायकानि तानियतिवानप्रस्थविषयाणिज्ञेयानि ॥ कर्तृविशेषाभिधानात् ॥ अन्यथा ॥ शुक्लामेवसदागृहीत्यादिवाक्यविरोधःस्यात् ॥ अयंनित्यैकादश्युपवासनिर्णयोगृहस्थस्य॥काम्येतुकामनानुसारेणनिर्णयः॥सतिचोभयैकादश्युपवासेअन्यतरैकादश्युपवासेचभिन्नानिफलानि॥यथाकूर्मपुराणे॥ यदीच्छेद्विष्णुसायुज्यंश्रियंसंततिमात्मनः ॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपीति ॥ गोभिलोपि ॥ एकादश्यांसितेपक्षेयश्चकुर्यादुपोषणम् ॥सविष्णुलोकंव्रजतितृष्णयाप्रविमुच्यतइत्यादिवाक्यैःफलविशेषाभिधानात्तत्तत्फलापेक्षयोभयैकादश्योरन्यतरैकादश्यांवा काम्योपवासंकुर्यादित्यलमतिविस्तरेण ॥ ॥ अथोपवासस्वरूपंनिरूप्यते ॥ यदुक्तंविष्णुधर्मोत्तरे ॥ उपावृत्तस्यपापेभ्योयस्तुवासोगुणैःसह ॥ उपवासःसविज्ञेयःसर्वभोगविवर्जितइति अत्रपापेभ्योनिवृत्तस्येत्युक्तम् ॥ तानिकानिपापानीत्यत्रसुमंतुराह ॥ विहितस्याननुष्ठानमिंद्रियाणामनिग्रहः ॥ निषिद्धसेवनंजैह्म्यंवर्जनीयंप्रयत्नतइति ॥ हारीतोपि ॥ पतितपाखंडिनास्तिकादिसंभाषणमनृताश्लीलादिकमुपवासादिनेवर्जयेदिति ॥ विष्णुपुराणे ॥ तस्मात्पाखंडिभिः

पापैरालापस्पर्शनेत्यजेत् ॥ विशेषतःक्रियाकालेयज्ञादौवापिदीक्षितइति ॥ कूर्मपुराणे ॥ बहिर्ग्रामात्त्यजेत्पूर्वंपतितंचरजस्वलाम् ॥ नस्पृशेन्नाभिभाषेतनेक्षेतव्रतवासरइति ॥ पाखंड्यादिस्पर्शनविषयेप्रायश्चित्तमपिविष्णुपुराणएवोक्तम् ॥ यथा ॥ स्पर्शनेचनरःस्नात्वाशुचिरासूर्यदर्शनादिति ॥ संभाष्यताञ्छुचिषदंचिंतयेदच्युतंबुधः ॥ तेषामालोकनेसूर्यंप्रपश्येन्मतिमान्नरइति॥शुचिषदंशुद्धिप्रदम् ॥ विष्णुधर्मोत्तरे ॥ असंभाष्यान्समाभाष्यतु[३]लस्यतासिकादलम् ॥ आमलक्याःफलंवापिपारणेप्राश्यशुद्ध्यतीति ॥ गुणैःसहवासइतिचोक्तम्॥ तत्रगुणाश्चापिविष्णुधर्मोत्तरएवोक्ताः ॥ यथा ॥ तज्जपश्चापितद्ध्यानंतत्कथाश्रवणादिकम् ॥ तदर्चनंचतन्नामकीर्तनश्रवणादयः ॥ उपवासकृतामेतेगुणाःप्रोक्तामनीषिभिरिति ॥ तच्छब्देनात्रप्रकृतत्वाद्विष्णुरेवाभिधीयते ॥ अथोपवासकृतांनियमाउच्यंते ॥ उपवासव्रतीदंतधावनंहिंसनानृतम् ॥ चौर्यमसकृज्जलपानंसकृत्तांबूलभक्षणम् ॥ स्त्रीसंयोगंदिवास्वापंमांसंचवर्जयेत्सदा ॥ तदुक्तंवृद्धवसिष्ठेन ॥ उपवासेतथाश्राद्धेनकुर्याद्दंतधावनम् ॥ दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलमिति ॥ उपवासादिषुदंतकाष्ठनिषेधेऽनुकल्पोव्यासेनोक्तः ॥ यथा ॥ अलाभेदंतकाष्ठानांनिषिद्धायांतिथावपि ॥ अपांद्वादशगंडूषैर्पत्रैर्वादंतधावनमिति ॥ दंतधावनेप्रायश्चित्तंविष्णुधर्मेप्युक्तम् ॥ श्राद्धोपवासदिवसेखादित्वादंतधावनम् ॥ गायत्र्याशतशःपूतमनुप्राश्यविशुध्यतीति ॥ हिंसाचौर्ययोःप्रायश्चित्तंस्मृतिसंग्रहेप्रोक्तम् ॥ स्ते[३]नहिंसकयोःसख्यंकृत्वास्तैन्यंचहिंसनम् ॥ प्रायश्चित्तंव्रतीकुर्याज्जपेन्नामशतत्रयमिति ॥ नाम विष्णुनाम ॥ मिथ्यावाददिवास्वापसकृज्जलपानादिषुप्रायश्चित्तंकात्यायनेनोक्तम् ॥ मिथ्यावादेदिवास्वापेबहुशोंबुनिषेवणे ॥ अष्टाक्षरंव्रतीजप्त्वाशतमष्टोत्तरंशुचिरिति ॥

---

१ बहिर्मार्गात्यजान्सूतीपतितंचरजस्वलामितिपाठान्तरम् ॥ २ प्राश्नीयातकदलीफलमितिपाठः ॥ ३ सूनिहिंसकयोरितिपाठः ॥

अष्टाक्षरमंत्रः ॐनमोनारायणायेति ॥ तांबूलचर्वणेस्त्रीसंभोगेमांसनिषेवणेषुपैठीनसिनाप्रायश्चित्तमुक्तम् ॥ तांबूलचर्वणेस्त्रीसंभोगेमांसनिषेवणे ॥ व्रतलोपोनवैकुर्यात्कृष्णेतद्बुजिवर्जितमिति ॥ अत्रसामान्येनस्त्रीसंभोगइत्युक्तेपिस्वदारेषुऋतुकालगमनादिषुव्रतलोपोनास्ति ॥ तदुक्तंकात्यायनेन ॥ रेतःसेकात्मसंभोगमृतेन्यत्रक्षयःस्मृतइति ॥ रेतःसेकऋतुकालेगर्भाधाननिमित्तंतदात्मकंसंभोगंवर्जयित्वान्यत्रअन्यनिशासुसंभोगेव्रतस्यक्षयइत्यर्थः ॥ ऋतुकालेपिषोडशनिशातिक्रमेदोषश्रवणात् ॥ व्रतदिवसेनकृतेपिगर्भाधानेषोडशनिशापर्यंतंकालांतरेपिकर्त्तुंशक्यत्वान्नातक्रमेदोषः ॥ अतश्चषोडशनिशात्मकएवऋतुकालेरेतःसेकेव्रतभंगोनास्तीत्यर्थः ॥ स्वदारव्यतिरिक्तासुस्त्रीषुप्रेक्षणस्पर्शनादिभिरपिब्रह्मचर्यभंगोभवति ॥ यथा ॥ स्त्रीणांसंप्रेक्षणस्पर्शात्ताभिःसंकथनादपि ॥ भिद्यते ब्रह्मचर्यंतुस्वदारेष्वृतुसंगमादिति ॥ अत्रसंप्रेक्षणादिकंसरागमेव॥ अतश्चमात्रादिदर्शनेतत्पादस्पर्शनेचनदोषः ॥ ऋतुसंगमादिति ॥ ऋतुरपिषोडशनिशायाअर्वाचीनःसावकाशएवऋतुकालोज्ञेयः ॥ अन्यथाकात्यायनवचनविरोधःस्यात् ॥ अतश्चस्वदाराणांस्पर्शनादिभिरपिब्रह्मचर्यभंगोनास्तीत्यर्थः ॥ मांसविषयेव्यासेनविशेषोदर्शितः ॥ वर्जयेत्पारणेमांसंव्रताहेप्यौषधंसदेति ॥ औषधात्मकमपिमांसंव्रताहेवर्जयेदित्यर्थः ॥ इत्युक्तनियमसहितःप्रातःस्नानानंतरमुपवाससंकल्पंकृत्वोपवासंकुर्वीत ॥ तत्रनित्येमनसैवमंत्रेणसंकल्पयेत्॥मंत्रश्च॥एकादश्यांनिराहारःस्थित्वाद्यमपरेहनि॥भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युतेति ॥काम्येतूपवासेजलपूर्णताम्रपात्रंहस्तेनगृहीत्वोदङ्मुखःसन्पूर्वोक्तमंत्रेणसंकल्पमुच्चरेत्॥तदुक्तंदेवलेन॥ गृहीत्वोदुंबरंपात्रंवारिपूर्णमुदङ्मुखः॥उपवासंतुगृह्णीयाद्यथासंकल्पयेद्बुध इति ॥ अत्रयथासंकल्पयेदित्यनेनसंकल्पानांबाहुल्यंद्योत्यते ॥ अतश्चकाम्यादिपदाभावेप्ययंकाम्योपवासविधिरितिज्ञायते॥नित्येसं

कल्पभेदाभावाद्यथासंकल्पयेदित्यसंगतमेवस्यात् ॥ अथोपवास नियमेनित्यकाम्यभेदेचविशेषांतरमुच्यते ॥ नित्योपवासेकेवलमे कादश्यांसायंप्रातश्चभोजनंवर्जयेत् ॥ दशमीद्वादश्योर्नैकभक्त नियमः ॥ तदुक्तंकात्यायनेन ॥ नित्योपवासीयोमर्त्यःसायंप्रा तर्भुंजिक्रियाम् ॥ संत्यजेन्मतिमान्विप्रःसंप्रातेहरिवासरइति ॥ विप्रइ तिसर्ववर्णोपलक्षणम् ॥ काम्योपवासेतुदशम्यांद्वादश्यांचैकभक्तं कार्यमेकादश्यांचोपवासःकार्यः ॥ तदुक्तंदेवलेन ॥ सायमाद्यंतयो रह्नोःसायंप्रातश्चमध्यमे ॥ उपवासफलंप्रेप्सुर्जह्याद्भक्तचतुष्टयमिति ॥ अत्रफलंप्रेप्सुरित्यनेनैवास्यसकामविषयत्वंज्ञायते ॥काम्यएवविशेषां तरंकात्यायनेनोक्तम् ॥अष्टाक्षरेणमंत्रेणत्रिजप्तेनाभिमंत्रितम्॥उपवा सफलंप्रेप्सुःपिबेत्पात्रगतंजलमिति ॥ काम्योपवासेदशम्यादिदिनत्रयं कांस्यादीनिवर्जयेत् ॥ तदुक्तंमत्स्यपुराणे ॥ कांस्यंमांसंसुरांक्षौद्रं तैलंवितथभाषणम् ॥ व्यायामंचप्रवासंच दिवास्वापंचमैथुनम् ॥ तिलपिष्टंमसूरंचदशम्यादिषुवर्जयेदिति ॥ विष्णुधर्मोत्तरेपि ॥ कां स्यंमांसंमसूरंचपुनर्भोजनमैथुने ॥ द्यूतंमद्यांबुपानंचफलंप्रेप्सुर्विवर्जये दिति ॥ अत्रमांसमद्ययोर्येषामेवप्राप्तिस्तेषामेवनिषेधः ॥ अन्येषांनप्रा प्तिर्नानिषेधः ॥ अम्बुपानमत्रासकृन्निषिद्धम् ॥ स्कंदपुराणेपि ॥ कांस्यंमांसंमसूरंचचणकंकोरदूषकम् ॥ शाकंमधुपरान्नंचहन्युरष्टा विमेफलमिति ॥ शाकमुपोदकी ॥ व्रतप्रारंभश्चबहिरंतःशोधनं प्रायश्चित्तंकृत्वाकार्यः ॥अत्रायंमंत्रः ॥ शरीरमंतःकरणोपघातंवाचश्च विष्णुर्भगवानशेषम् ॥ शमंनयत्वाशुममेहशर्मभूयादनंतेहृदिसंनिवि ष्टे ॥ अंतःशुद्धिंबहिःशुद्धिंशुद्धोधर्ममयोच्युतः ॥ सकरोतुममैत स्मिञ्छुचिरेवास्मिसर्वदेति॥ अनेनमंत्रेणशुद्धिंकृत्वोक्तनियमोपेतउप वासंकुर्यात् ॥इदानीमुपवासानुष्ठानसिद्ध्यर्थंशुद्धाविद्धाविभेदेनएका दश्याअष्टादशभेदाउच्यंते ॥ ॥ तत्रशुद्धैकादशीसमतान्यूनताधिक्य योगात्रिविधात्रिविधा ॥सापिद्वादशीसाम्यन्यूनताधिक्ययोगात्प्रत्येकं

१ शिलापिष्टम् इ० पा० ॥ २ शुद्धिः इ० पा० ॥ ३ त्वमले इ०पा० ॥

त्रिविधाभवति ॥ एवंशुद्धायानवभेदाः ॥ यथा शुद्धसमाद्वादशीसमा १ शुद्धसमाद्वादशीन्यूना २ शुद्धसमाद्वादश्यधिका ३ शुद्धन्यूनाद्वादशीसमा ४ शुद्धन्यूनाद्वादशीन्यूना ५ शुद्धन्यूनाद्वादश्यधिका ६ शुद्धाधिकाद्वादशीसमा ७ शुद्धाधिकाद्वादशीन्यूना ८ शुद्धाधिकाद्वादश्यधिकाचेति ९ एवंविद्धापिसाम्यन्यूनताधिक्ययोगात्रिविधा ॥ सापिद्वादशीसाम्यन्यूनताधिक्ययोगात्प्रत्येकंत्रिविधा ॥ एवंविद्धायाअपिनवभेदाः ॥ यथा ॥ विद्धसमाद्वादशीसमा १ विद्धसमाद्वादशीन्यूना २ विद्धसमाद्वादश्यधिका ३ विद्धन्यूनाद्वादशीसमा ४ विद्धन्यूनाद्वादशीन्यूना ५ विद्धन्यूनाद्वादश्यधिका ६ विद्धाधिकाद्वादशीसमा ७ विद्धाधिकाद्वादशीन्यूना ॥८॥विद्धाधिकाद्वादश्यधिकाचेति ॥ ९ ॥ एवंमिलित्वाअष्टादशभेदाभवंति ॥ अत्रसर्वेष्वपिभेदेष्वेकादशीद्वादश्योःसमत्वंनामपष्टिघटिकात्मकत्वम् ॥ ततोन्यूनत्वेन्यूनत्वम् ॥ आधिक्येअधिकत्वंचज्ञेयम् ॥ ॥ अत्रशुद्धसमाद्वादशीसमादिपड्भेदेषुसर्वैर्गृहियतिभिःपूर्वैवोपोष्या ॥ तदुक्तंस्कंदपुराणे ॥ शुद्धायदासमाहीनासमाक्षीणाधिकोत्तरा ॥ एकादशीमुपवसेन्नशुद्धांवैष्णवीमिति ॥ शुद्धाएकादशीसमाउत्तराद्वादशीसमाक्षीणाधिकाच ॥ तथाशुद्धायदाहीनाउत्तराच पुनस्तथाएवंत्रिविधेपिशुद्धसमाभेदत्रयेशुद्धन्यूनाभेदत्रयेचैकादशीमुपवसेत् ॥ नशुद्धांवैष्णवींद्वादशीमित्यर्थः ॥ यत्तुब्रह्मपुराणवचनम् ॥ एकालुप्ताचसंयुक्तायदिवृद्धिपरातिथिः ॥ अथवैकादशीनास्तिदशम्यावाप्यसंगता॥द्वादशीतुकलाकाष्ठायादिस्यादपरेहनि ॥ द्वादशद्वादशीर्हितिपूर्वस्यांपारणंकृतमिति॥अस्यार्थः॥ तिथिवृद्धिपरत्वेचएकादशीपरेदिनेलुप्तावास्ति अथवाअपरादिनेवास्तितत्रोभयत्रापित्रयोदश्यांद्वादशीसद्भावाच्छुद्धद्वादश्यामेवोपवसेदिति ॥ इदंतुविद्धासमायाद्वादश्याधिक्ययुक्तायाविषयेसार्थकम् ॥ नतुशुद्धसमाशुद्ध

हीनाविषयम् ॥ अन्यथानशुद्धांवैष्णवीमितिवचनविरोधःस्यात् ॥ द्वादशीसाम्ययुक्ताशुद्धाधिकाद्वादशीहानियुक्ताशुद्धाधिकाचपूर्वागृहस्थैरुपोष्या॥यतिभिस्तूत्तरेतिव्यवस्थितम्॥ तदुक्तंमार्कंडेयपुराणे॥ संपूर्णैकादशीयत्रप्रभातेपुनरेवसा ॥ पूर्वामुपवसेत्कामीनिष्कामस्तूत्तरांसदेति ॥ अत्रकामिनिष्कामपदाभ्यांगृहियतीउच्येते प्रायेणगृहिणांसकामत्वाद्यतीनांनिष्कामत्वाच्च ॥ तथा ॥ एकादशीप्रवृद्धाचेच्छुक्लेकृष्णेविशेषतः॥ तत्रोत्तरांयतिःकुर्यात्पूर्वामुपवसेद्गृहीति॥स्कंदपुराणेपि ॥ संपूर्णैकादशीयत्रप्रभातेपुनरेवसा ॥ त्रयोदशीउषःकाले उपोष्यातत्रिकाभवेत्॥उपोष्येद्वेतिथीतत्रविष्णुप्रीणनतत्परैरिति॥ अत्रापिद्वेतिथीउपोष्येइतिगृहियतिभेदेनव्यवस्थाविज्ञेया॥ शुद्धाधिकाद्वादश्यधिकातुसर्वैरप्युत्तरैवोपोष्या ॥ तदुक्तंनारदेन ॥ संपूर्णैकादशीयत्रप्रभातेपुनरेवसा ॥ तत्रोपोष्याद्वितीयातुपुत्रपौत्रप्रवार्धिनीति ॥ गरुडपुराणेपि ॥ संपूर्णैकादशीयत्रप्रभातेपुनरेवसा ॥ तत्रोपोष्यापरापुण्यापरतोद्वादशीयदि ॥ स्मृत्यंतरेपि ॥ संपूर्णैकादशीयत्रप्रभातेपुनरेवसा ॥ वैष्णवीचत्रयोदश्यांघटिकैकापिदृश्यते ॥ गृहस्थोपिपराङ्कुर्यात्पूर्वान्नोपवसेत्तदेति ॥ ॥ अथ विद्धाभेदेषूच्यते ॥ तत्रद्वादशीसाम्ययुक्ताविद्धसमा द्वादशीहानियुक्ताविद्धसमा पूर्वागृहस्थैरुपोष्यापरायतिभिरितिव्यवस्था ॥ तदुक्तंपुराणसमुच्चये ॥ दशमीमिश्रितापूर्वाद्वादश्यांचविलुप्यते ॥ एकादश्यांतदाब्रह्मन्नुपवासःकथंभवेदितिप्रश्ने ॥ शुद्धैवद्वादशीराजन्नुपोष्यामोक्षकांक्षिभिः ॥ सकामैर्गृहिभिःपूर्वाविद्धापीतिविनिश्चयइति ॥ विद्धसमायांद्वादश्याधिक्यवत्यांतुद्वादश्यामेकादशीसद्भावात्सर्वेषांपरत्रैवोपवासः ॥ तथाचस्मर्यते ॥ कलार्द्धेनापिविद्धांस्याद्दशम्यैकादशीयदि ॥ तदाप्येकादशींत्यक्त्वाद्वादशींसमुपोषयेदिति ॥ विद्धहीनाद्वादशीसमाविद्धहीनाद्वादशीहीनाविद्धहीनाद्वाद

श्यधिकाचसर्वैरपिपूर्वैवोपोष्या ॥ शुद्धैकादश्याअलाभेनगत्यन्ता राभावात् ॥ तदुक्तंस्मृत्यंतरे ॥ एकादशीनलभ्येतसकलाद्वादशी भवेत् ॥ उपोष्यादशमीविद्धाऋषिरुद्दालकोब्रवीदिति ॥ ऋष्य शृङ्गोपि ॥ सर्वत्रैकादशीकार्यादशमीमिश्रितानरैः ॥ प्रातर्भवतुमा वाभूद्यस्मान्नित्यमुपोषणमिति ॥ विद्धाधिकाद्वादशीसमाविद्धाधि काद्वादश्यधिकाचसर्वैरेवोपोष्या ॥ तदुक्तं विष्णुधर्मोत्तरे ॥ एकादश्य ष्टमीचैवद्वितीयाचचतुर्दशी ॥ अमावास्यातृतीयाचउपोष्यास्युःप रान्विताइति ॥ अत्रभेदद्वयेद्वितीयदिनेएकादशीसद्भावात्परत्रैवोपवा सः ॥ दशमीवेधस्यनिषेधाच्च ॥ तदाहनारदः ॥ नोपोष्यादश मीविद्धासदैवैकादशीतिथिः ॥ तामुपोष्यनरोजह्यात्पुण्यंत्रयंश तोद्भवमिति ॥ तथाच ॥ दशम्यानुगतायत्रतिथिरेकादशीभवे त् ॥ तस्यपुण्यंविनष्टंस्यात्परेत्यनरकंव्रजेदिति ॥ दशमीशेषसं युक्तागांधार्यासमुपोषिता ॥ तस्याःपुत्रशतंनष्टंतस्मात्तांपरिवर्जयेत्॥ एवंविद्धहीनात्रयेपिदशमीवेधनिषेधोनाशंकनीयः ॥ तत्रत्रयोदश्यांपा रणपर्याप्तद्वादश्यसंभवात् ॥तदुक्तमृष्यशृंगेण॥पारणायनलभ्येतद्वाद शीयदिकुत्रचित्॥तदानींदशमीविद्धाउपोष्यैकादशीतिथिरिति ॥ हा रीतोपि॥त्रयोदश्यांयदानस्याद्वादशीघटिकाद्वयम् ॥ दशम्यैकादशी मिश्रासैवोपोष्यासदातिथिरिति ॥ अत्रापिघटिकाद्वयमितिपारणपर्या प्तत्वोपलक्षणम् ॥ वायुपुराणेपि ॥ एकादशीयदाविद्धाद्वादशीचक्षयंग ता॥दशमीमिश्रितातत्रउपोष्यामुनिसत्तमेति ॥ विद्धानिषेधवाक्यानि तुसर्वाण्यपिद्वादश्याधिक्यवत्यांविद्धसमायांविद्धाधिकायांचज्ञातव्या नि ॥ नतुद्वादशीसाम्यवत्यांद्वादशीहानिमत्यांचाविद्धहीनायां त्रयोद श्यांपारणयोग्यद्वादश्याअभावाद्विद्धायामेवोपवासेउपपद्यते ॥ द्वाद श्याधिक्यवत्यांविद्धहीनायांतुत्रयोदश्यांपारणयोग्यद्वादशीसंभवा- च्छुद्धद्वादश्यामेवोपवासोस्त्विवतिचेत् ॥सत्यम्॥तस्यविकल्पासहत्वे नोपवासयोग्यत्वान्नस्वीकारः॥यथा॥किंसूर्योदयादर्वाचीनेद्वादशीभा गेउपवासः॥किंचोदयादुत्तरस्मिन्द्वादशीभागे ॥ नाद्यः ॥ तस्यैका

दशीप्रत्यासन्नपरत्वेप्युपवासयोगपरत्वात् ॥ नापिद्वितीयः ॥ तस्योपवासयोग्यत्वेप्येकादश्याःप्रत्यासन्नत्वात् ॥ अतश्चविद्धानिषेधवाक्यान्युक्तविद्धायामप्येवेत्यनवद्यम् ॥ विद्धाधिकद्वादशीहीनातुगृहस्थैःपूर्वैवोपोष्यायातिभिरुत्तरेतिव्यवस्था॥तदुक्तम् ॥ एकादशीद्वादशीचरात्रिशेषेत्रयोदशी ॥ त्रितिथिस्पृगहोरात्रंनोपोष्यंतुसुतार्थिभिरिति ॥ तथाच ॥एकादशीद्वादशीचरात्रिशेषेत्रयोदशी ॥ उपवासंनकुर्वीतपुत्रपौत्रसमन्वितः॥ इति गृहिणःपरत्रोपवासनिषेधात् ॥ उपवासस्यचनित्यत्वेनावश्यकत्वात्पूर्वत्रैवोपवासःप्रतीयते ॥ परविद्धाविधायकवाक्यसामर्थ्याद्यतीनांपरत्रैवोपवासोवसीयते ॥ यथाभविष्योत्तरे॥द्वादशीसंगतायत्रभवत्येकादशीकला॥ दिनक्षयेपिसापुण्यानदशम्यायुताक्वचिदिति॥तथाच ॥ त्रिस्पृगेकादशीयत्रतत्रसंनिहितोहरिः॥पुण्यंक्रतुशतंप्रोक्तंत्रयोदश्यांतुपारणमिति ॥तथाच ॥ कलाप्येकादशीयत्रद्वादश्यानुगताभवेत् ॥ दिनक्षयेपिसापुण्यायतीनामुत्तरातिथिरिति॥यत्त्वनंतभट्टैरत्रवाक्येयतिपदंगृहस्थस्याप्युपलक्षणंनेतरव्यावृत्त्यर्थम् ॥ तथासतिप्राप्त्यभावेनपुत्रवतोगृहस्थस्योपवासनिषेधानुपपत्तिरित्युक्तम्॥तद्भागवतमतपक्षपातेनैवेतिगम्यते ॥ यतः सर्वेषांशब्दानांसजातीयोपलक्षकत्वादेवयतिपदस्यविजातीयगृहस्थोपलक्षकत्वेप्रसिद्धिविरोधः॥ किंच ॥ नित्यंमद्यंब्राह्मणोवर्जयेदित्यादौवाक्यांतराप्राप्तमपिकामतःप्राप्तमेवमद्यपानादिकंनिषिध्यते ॥ एवमत्रापिपुत्रतोगृहस्थस्यवाक्यांतराप्राप्तोपिकामतःप्राप्तस्त्रिस्पृगुत्तरदिनोपवासोनिषिध्यतइतिनिषेधोप्युपपद्यते॥किंच॥अनन्तेनैवसंपूर्णैकादशीत्यादिविज्ञानेश्वरसंग्रहसंमतिंदर्शयित्वास्वपक्षविरुद्धायद्येषापूर्वविद्धाभवतीतितस्यैवसंमतिर्दर्शिता ॥ तेचसंमतिश्लोकालिख्यंते ॥ शुद्धाविद्धादशम्याक्वचिदपिचततोद्वैधमेकादशीयंप्रत्येकञ्चात्रिधासौपुनरपिसमतान्यूनताधिक्ययोगात् ॥ पक्षाःप्रत्येकभिन्नाःपुनरपिषडमी

द्वादशीन्यूनताद्यैःसंबन्धादेवमष्टादशखलुमिलिताःकल्पनाःसंभवन्ति ॥ १ ॥ संपूर्णैकादशीयानभवतिपरतःसासमावासमावान्यूनावाना स्तिवास्यांव्रजतिहरिदिनंद्वादशीसापिचोर्ध्वम् ॥ सर्वेकुर्युःपरस्ता दुपवसनमथद्वादशीनोर्ध्वमेतिप्रव्राडत्रद्वितीयामुपवसतुजनाःपूर्वम न्येतुसर्वे ॥ २ ॥ यद्येषापूर्वविद्धाभवतिचपरतः सासमावा समावासेवंकुर्युर्द्वितीयामथहरिदिवसः पूर्वविद्धोपियायात् ॥ द्वा दश्यांसात्रिसंस्पृग्यदिभवतिपरंमोक्षिणःपूर्वमन्येयद्वाविद्धानचोर्ध्वंप- रमुपरिभवेत्तत्रसर्वेपरस्तात् ॥ ३ ॥ पूर्वविद्धाथवासानभवतिप रतोद्वादशीसापिचोर्ध्वंकुर्यात्तत्रोपरिष्टान्मुनिजननिकरःपूर्वमन्येचस र्वे ॥ विद्धंप्रातर्दशम्याहरिदिनमथवाद्वादशीरात्रिशेषेसर्वःपूर्वंदतानी मुपवसतुजनः प्रीतयेकेशवस्येति ॥ ४॥ अतएवभागवतमतानुसारे णानंतभट्टव्याख्यानमितिप्रतीयते॥ स्मार्त्तमतेतुविज्ञानेश्वरोक्तैवगृहि यत्योर्व्यवस्थाग्राह्येत्यलमतिप्रपंचेन॥अथप्रकृतमनुसंधीयते ॥ नन्वे कादशीयदाविद्धाद्वादशीचक्षयंगता ॥क्षीणासाद्वादशीज्ञेयानक्तंतत्रवि धीयते ॥ तथाच ॥ एकादशीयदाविद्धाद्वादशीचक्षयंगता ॥ त्रिदिनं तत्रविज्ञेयंयत्रपुण्यमनर्थकम् ॥ दानंवाप्येकभक्तंवायथाकुर्यादया चितमितिचद्वादशीक्षयेनक्तादिकंविहितंतत्कथंगृहियतिविषयत्वेन व्यवस्थेतिचेत् ॥ सत्यम् ॥ एकादशीव्रतस्यानित्यत्वाद्व्यवस्थासि द्धिः ॥ तदुक्तम्॥अविद्धाह्यनिषिद्धाचेन्नलभ्येतयदातिथिः॥मुहूर्तैःपंच भिर्विद्धाग्राह्याप्येकादशीभवेदितिपंचमुहूर्तविद्धायाअपिग्रहणात् ॥ नक्तैकभक्तादिविधयस्त्वशक्तविषयनक्तादिविध्यनुवादकाइत्याविरो- धः ॥ ननुयतीनामुत्तरैकादश्यामुपवासइत्युक्तंतदात्रयोदश्यांपारणं स्यात्तच्चानिषिद्धम् ॥ तदुक्तम्॥कलाकाष्ठामुहूर्त्तोवायादिचेन्नपरेहनि ॥ द्वादशद्वादशीर्हंतित्रयोदश्यांतुपारणमिति ॥ तथाच ॥ एकादशी मुपोष्यैवद्वादश्यांपारणंस्मृतम् ॥ त्रयोदश्यांनतत्कुर्याद्वादशद्वाद

शीक्षयादित्यादिभिर्मत्स्यकूर्मपुराणादिवाक्यैस्त्रयोदश्यांपारणनिषे-
धात्कथमुत्तरत्रोपवासइतिचेत् ॥ सत्यम् ॥ त्रयोदशीपारणविधाय
कबलादितिब्रूमः ॥ तदुक्तंवायुपुराणे ॥ कलाप्येकादशीयत्रपरतो
द्वादशीनचेत् ॥ पुण्यंक्रतुशतस्योक्तंत्रयोदश्यान्तुपारणमिति ॥
स्कंदपुराणेपि ॥ एकादश्यांतुविद्धायांनोपवासार्चनादिकम् ॥ द्वा
दश्यामेवतत्कुर्यात्त्रयोदश्यांतुपारणम् ॥ शतयज्ञाधिकंपुण्यंमुक्तिरेव
परंफलमिति ॥ तर्हिविरोधोभविष्यतीतिचेन्न ॥ त्रयोदशीपारणविधि
र्निष्कामविषयः द्वादशीपारणविधिस्तुसकामविषयइत्यविरोधः॥तदु
क्तंस्कंदपुराणे ॥ पारणंतुत्रयोदश्यांनिष्कामानांविमुक्तिदमिति ॥
गरुडपुराणेपि ॥ पारणंतुत्रयोदश्यांनकर्त्तव्यंफलार्थिभिरिति ॥
नन्वेवंव्यवस्थितास्वेकादशीषुपारणव्यवस्थाप्यस्तु यत्रतुद्वादशीसा
म्यवत्यांविद्धाधिकायांगृहियत्योरुत्तरत्रैवोपवासः ॥ तत्रकथमुपपत्ति
रितिचेत् ॥सत्यम् ॥ तत्रतूत्तरत्रैकादशीविधायकवाक्यबलादेवत्रयो
दश्याम्पारणोपपत्तिरितिनाकिञ्चित्कष्टम्॥यद्वा ॥ त्रयोदशीपारणनिषे
धवाक्यानिपारणापर्याप्तद्वादशीसंभवे तामतिक्रम्यत्रयोदश्यांपारणंन
कार्यमित्येवंपरत्वेनवर्णनीयामिति ॥ तदतिक्रमेदोषश्रवणात् ॥
यथा ॥ यदिकिंचित्त्रयोदश्यांद्वादशीचोपलभ्यते ॥ द्वादश्यांपारणं
तत्रवर्जयित्वात्रयोदशीम् ॥ महाहानिकरीत्येषाद्वादशीलंघिता
नरैः ॥ करोतिधर्महरणमस्नातेवसरस्वती ॥ननुयदाद्वादशीघटिकामा
त्राद्विघटिकावाभवतितदाद्वादश्यांप्रातर्माध्याह्निककर्मानुष्ठानासंभ-
वात्कथंद्वादश्यांपारणोपपत्तिरितिचेत् ॥ सत्यम्॥माध्याह्निकंकर्मापि
प्रातरेवापकृष्यकृत्वापारणंकार्यम्॥ तदुक्तंगरुडपुराणे ॥ यदास्वल्पा
द्वादशीस्यादपकर्षोभुजेर्भवेत् ॥ विधेर्माध्याह्निकस्यापितत्रस्याद
पकर्षणमिति ॥ स्कंदपुराणेपि ॥ यदाभवेदतीवाल्पाद्वादशी
पारणादिने ॥ उषःकालेद्वयंकुर्यात्प्रातर्माध्याह्निकंतदेति ॥यद्वा ॥ अ

ल्पायांद्वादश्यामद्भिःपारणंकृत्वानित्यकर्मानुष्ठानानंतरंभोजनंकुर्यात् ॥ तदुक्तंकात्यायनेन ॥ विध्यादिकंभवेन्नित्यंपारणन्तुनिमित्ततः॥ अद्भिस्तुपारयित्वातुनैत्तिकान्तेभुजिर्भवेत्॥ देवलोपि ॥ संकटेविषमे प्राप्तेद्वादश्यांपारयेत्कथम् ॥ अद्भिस्तुपारणंकुर्यात्पुनर्भुक्तेनदोषकृदिति॥पारणंतुमंत्रपूर्वकमुपवासंहरयेनिवेदनंकुर्यात्॥ तदाहकात्यायनः ॥ मंत्राज्ञपित्वाहरयेनिवेद्योपोषणंव्रती ॥ द्वादश्यांपारणंकुर्याद्वर्जयित्वाह्युपोदकीमिति ॥ उपोदकीशाकविशेषः ॥ मंत्रस्तु ॥ अज्ञानतिमिरांधस्यव्रतेनानेनकेशव ॥ प्रसीदसंमुखोभूत्वाज्ञानदृष्टिप्रदोभव ॥ कृष्णकृष्णकृपालोत्वमगतीनांगतिप्रद ॥ संसारार्णवमग्नानांप्रसीदसुमुखोभवेति ॥ द्वादश्याश्चाद्याःपंचदशनाडिका हरिवासरसंज्ञकाः ताअतिक्रम्यपारणंकुर्यात् ॥ तदुक्तंविष्णुधर्मोत्तरे ॥ द्वादश्याःप्रथमःपादोहरिवासरसंज्ञकः ॥ तमतिक्रम्य कुर्वीतपारणंविष्णुतत्परइति ॥ उपवासेत्वशक्तोवृद्धातुरादिरुपवासानुकल्पमेकभक्तादिकंकृत्वाद्वादश्यामेवोपवासव्रतंसमापयेत् ॥ तदाहकात्यायनः ॥ उपवासेत्वशक्तानामशीतेरूर्ध्वजीविनाम् ॥ एकभक्तादिकंकार्यमाहबौधायनोमुनिरिति ॥ कूर्मपुराणेपि ॥ एकभक्तेननक्तेनक्षीणवृद्धातुरःक्षपेत् ॥ नातिक्रमेद्द्वादशींतुउपवासव्रतेन चेदिति ॥ मार्कण्डेयेऽपि ॥ एकभक्तेननक्तेनतथैवायाचितेनच ॥ उपवासेनदानेननानिर्द्वादशिकोभवेदिति ॥ वायुपुराणेपि ॥ अथ वाविप्रमुख्येभ्योदानंदत्त्वास्वशक्तितः ॥ उपवासफलंतस्यसमग्रंतु भविष्यतीति ॥ तत्रभोजनदोषोपितत्क्षणादेवनश्यतीति ॥ एकभक्तादिष्वशक्तउपवासादिव्रतेभार्यादीन्विनियोजयेत् ॥ तदुक्तं स्कंदपुराणे ॥ असामर्थ्येशरीरस्यव्रतेचसमुपास्थिते ॥ कारयेद्धर्मपत्नींवापुत्रंवाविनयान्वितम् ॥ भ्रातरंभगिनींशिष्यंब्राह्मणंदाक्षिणादिभिः ॥ दक्षिणामंतरेणापिमातृगुर्वाद्यर्थमुपोषणेद्वयोरप्युपवास

फलंतुल्यम् ॥ यदाहकात्यायनः ॥ पितृमातृपतिभ्रातृगुर्वर्थेचविशेषतः ॥ उपवासंप्रकुर्वाणःपुण्यंशतगुणंलभेत् ॥ दक्षिणाचप्रदातव्याशुश्रूषाविहिताहिंसेति ॥ तथाच ॥ नारीचपतिमुद्दिश्यएकादश्यामुपोषिता ॥पुण्यंशतगुणंयायादितिबौधायनोब्रवीत् ॥ उपवासफलंतस्याःपतिःप्राप्नोत्यसंशयम्॥ तथाराजन्क्षत्रियार्थेचैकादश्यामुपोषितः ॥ पुरोधाःक्षत्रिणासार्द्धंफलंप्राप्नोतिनिश्चितम् ॥ उपवासफलंताभ्यांसममेवसमाप्यते ॥ क्षत्रिणेतिच्छांदसःशब्दः ॥ पितामहादीनुद्दिश्यएकादश्यामुपोषणम् ॥ कृतेतुतत्फलंविप्राःसमग्रंसमवाप्नुयुः ॥ कृत्वा[1]शतगुणंपुण्यंफलंप्राप्नोत्यसंशयमिति ॥ इदमेकादशीव्रतंसूतकेदानार्चनादिवर्जितंकुर्यात् ॥ तदुक्तंवाराहपुराणे ॥ सूतकेतुनरःस्नात्वाप्रणम्यमनसाहरिम् ॥एकादश्यांनभुंजीतव्रतमेवंनलुप्यते ॥ यथा ॥ पूर्वसंकल्पितंयच्चव्रतंसुनियतव्रतैः ॥ तत्कर्त्तव्यंनरैःशुद्धंदानार्चनविवर्जितम् ॥ मृतकाशौचेत्वेकादश्याममभोजनंकृत्वा द्वादश्यांस्नात्वाभुंजीत ॥ तदुक्तंवाराहपुराणे ॥ मृतकेह्निनभुंजीतएकादश्यांसदानरः ॥ द्वादश्यांतुसमश्नीयात्स्नात्वाविष्णुंप्रणम्यचेति ॥ कूर्मपुराणेपि ॥ काम्योपवासेप्रक्रांतेत्वंतरामृतसूतके ॥ काम्यंनामव्रतंकुर्याद्दानार्चनविवर्जितमिति ॥ सूतकेवर्जितंदानादिकंतदंतेकुर्यात् ॥ तदुक्तंमत्स्यपुराणे ॥ सूतकान्तेनरःस्नात्वापूजयित्वाजनार्दनम् ॥ दानंदत्त्वाविधानेनव्रतस्यफलमश्नुते ॥ स्त्रीणांतुव्रतविषयेविशेषोलिख्यते ॥ नारीभर्तृपितृसुताद्यनुज्ञयैवव्रताधिकारिणीनान्यथा ॥ तदाहकात्यायनः॥ भार्याभर्तृमतेनैवव्रतादीनाचरेदिति ॥ मनुरपि॥ नास्तिस्त्रीणांपृथग्यज्ञोनव्रतन्नाप्युपोषणमिति ॥ विष्णुरपि ॥ पत्यौजीवतियानारीउपवासव्रतंचरेत्॥ आयुष्यंहरतेभर्तुर्नरकंचैवगच्छतीति ॥ मार्कंडेयोपि ॥ नारीयात्वननुज्ञाताभ्रात्रापित्रासुतेनवा ॥ निष्फ

१ कर्त्तादशगुणंपुण्यामि० वा पा०।

लंतुभवेत्तस्यायत्करोतिव्रतादिकमिति ॥ स्त्रीणांव्रतेदंतधावनादिकं नदुष्टम् ॥ तथाचमनुःस्त्रीधर्मप्रकरणे ॥ पुष्पालंकारवस्त्राणिगन्धधूपानुलेपनम् ॥ उपवासेनदुष्यंतिदंतधावनमञ्जनम् ॥ रजस्वलातुयानारीभर्तारंपुत्रभागिनी ॥ भ्रातरंवाप्रार्थनया पुत्रंवापिनियोजयेत् ॥ दक्षिणांदत्त्वाब्राह्मणंवास्वयंचनभुंजीत ॥ तदाह पैठीनसिः ॥ भार्यापत्युर्व्रतंकुर्याद्भार्यायाश्चपतिर्व्रतम् ॥ असामर्थ्येपरंताभ्यांव्रतभंगोनजायते ॥ स्कंदेपि ॥ पुत्रंवाविनयोपेतंभगिनींभ्रातरंतथा ॥ एषामभावएवान्यंब्राह्मणंवानियोजयेत् ॥ यत्तु ॥ एकादश्यांनभुंजीतनारीदृष्टेरजस्यपि ॥ तथा ॥ संप्रवृत्तेपिरजसि नत्याज्यंद्वादशीव्रतम् ॥ तथा ॥ प्रारब्धदीर्घतपसांनारीणांयद्रजोभवेत् ॥ नतत्रापिव्रतस्यस्यादुपरोधःकदाचनेत्यादिवाक्यैरजस्वलायाअपिव्रतमुक्तम् ॥ तत्तुपत्यादिनाव्रतंकारयितव्यम् ॥ तेनकृतेपितस्याव्रतफलंभवति ॥ अन्यथा शुचिनाकर्मकर्तव्यमितिवचन विरोधःस्यात् ॥ शुचित्वञ्चतस्याःपंचमेऽह्नि ॥ यथा ॥ पंचमेऽहनिशुद्धास्याद्दैवेपित्र्येचकर्मणीति ॥ अतश्चरजस्वलानारीपत्यादिकंव्रतेनियोजयेत् ॥ एकादश्यांनभुंजीतनारीदृष्टेरजस्यपीतिपुलस्त्यवचनात्स्वयमपिनभुंजीत ॥ रजस्वलापिसूतकन्यायेनपंचमेऽहनिदानार्चनंकुर्वीतेतिसिद्धम् ॥ एकादश्यांसांवत्सरिकादिश्राद्धेसंप्राप्तेपितृशेषंसमाघ्रायोपवासंकुर्यात् ॥ तेनश्राद्धकर्तुर्विहितंभोजनमेकादश्यांविहितमभोजनञ्चकृतंभवति ॥ तदाहकात्यायनः ॥ उपवासोयदानित्यःश्राद्धंनैमित्तिकंभवेत् ॥ उपवासंतदाकुर्यादाघ्रायपितृसेवितमिति ॥ तथाश्रुतिरपि ॥ अवघ्रेयमेवतन्नैवप्राशितंनैवाप्राशितमिति ॥ एवमेकादश्याःस्मार्तमतेननिर्णयउक्तः ॥ अत्रविज्ञानेश्वरसंग्रहश्लोकाःपूर्वमेवोक्ताः ॥ इदानींविश्वरूपनिबंधोक्ताःसंग्रहश्लोकाउच्यन्ते ॥ यथा ॥ शुद्धात्रेधातथाविद्धाभेदैर्न्यूनसमाधिकैः ॥ प्रत्येकंचपुनस्त्रेधाद्वाद

श्यूनसमाधिकैः॥ आद्यासुषट्सुपूर्वैवव्यवस्थानंतरद्वयेः॥ गृहमेधिय तीनाश्चनवमीचापरेहनि ॥ आद्यास्तिस्रस्तुपूर्वाःस्युर्व्यवस्थानंतर द्वये ॥ अपरेहनिशेषाःस्युःसप्तमीचव्यवस्थयेति ॥ तथाग्रंथांतरे ॥ हीनाहीनाधिकाशुद्धाहीनाहीनाधिकापरा ॥ एवञ्चैकादशीविद्धाचात्र निर्णयसंग्रहः ॥ शुद्धषट्केतथाविद्धेत्रिकेपूर्वाव्यवस्थिता ॥ द्वयेद्वयेस प्तमेचशेषेष्वेकादशीपरेति ॥ यत्रैकादश्यामुपवासउक्तः सचचतु र्विधः ॥ यथोक्तंभविष्योत्तरपुराणे ॥ सतांबूलमतांबूलंसभोजनमभो जनम् ॥ साहारश्चनिराहारंचतुर्विधमुपोषणमिति ॥ अत्रसतांबूलंस भोजनंसाहारंचेतित्रयोभेदाः ॥ चतुर्थस्त्वतांबूलादिपदैःसर्वगतःके वलोपवासः॥ चतुर्णामपिस्वरूपंतत्रैवोक्तम् ॥ यथा ॥ यावत्कृ ताह्निकोनस्याद्यावन्नार्चयतेहरिम् ॥ तावदश्नातितांबूलंसतांबूलंतदु च्यते ॥ पूजयित्वाच्युतंपूर्वंपूर्णंभुक्त्याभुनक्तियः॥ भक्तामुक्तौपुनर्भु क्तेतत्सभोजनमुच्यते ॥ श्राद्धंकृत्वापितॄंस्तर्प्यसंतर्प्यज्ञातिबांधवा न्॥सार्ववर्णिकमाभोज्यसपत्नीब्रह्मभोजने॥ समुपाघ्रायपित्रान्नंगोभ्यो दद्यात्प्रयत्नतः ॥ न्यूनोपवासनियमेतत्संहारंप्रकीर्त्तितमिति ॥ एतेत्र योभेदादेशविशेषविषयाअधिकारिविशेषविषयाश्चज्ञातव्याः॥ चतुर्थ स्तुसर्वसाधारणः ॥ अत्रशुद्धाविद्धाभेदेननिर्णयउक्तः ॥ तत्रकी दृशीशुद्धा ॥ कीदृशीविद्धेत्यत्रसूर्यसिद्धांतउक्तम् ॥ यथा ॥ सर्वा ह्येताश्चतिथयउदयादुदयांस्थिताः ॥ शुद्धाइतिविनिश्चेयाषष्टिनाड्यो हिवैतिथिरिति ॥ नारदीयेप्युक्तम् ॥ आदित्योदयवेलायामारभ्यष ष्टिनाडिका ॥ यातिथिस्सातुशुद्धास्यात्सार्वतिथ्योह्ययंविधिरिति ॥ अतश्चसूर्योदयमारभ्यपुनःसूर्योदयपर्यंतंस्थितातिथिःशुद्धादिवस- स्यादावंतेचान्यातिथियुक्ताविद्धेत्यर्थः ॥ नन्वरुणोदयवेलायांदशमी युतैकादशीविद्धेतिकैश्चिदुक्तम् ॥ अरुणोदयकालश्चस्कंदपुराणेप्रो क्तः ॥ यथा ॥ उदयात्प्राक्चतस्रस्तुनाडिकाअरुणोदयः ॥ तत्र

स्नानंप्रशस्तंस्यातद्धिपुण्यतमंस्मृतमिति॥ तत्रारुणोदयकालेदशमी विद्धानोपोष्या ॥ यथाभविष्योत्तरे ॥ अरुणोदयकालेतुदशमीय दिदृश्यते ॥ साविद्धैकादशीतत्रपापमूलमुपोषणमिति ॥ सौरधर्मे च ॥ आदित्योदयवेलायांप्राङ्मुहूर्तद्वयान्विता ॥ एकादशीतुसं पूर्णाविद्धान्यापरिकीर्तितेति ॥ इत्यादीन्यरुणोदयवेधनिषेधकान्य न्यान्यपिवचनानिवैष्णवविषयाणिज्ञातव्यानि ॥ तदुक्तंगरुडपुराणे ॥ दशमीशेषसंयुक्तोयदिस्यादरुणोदयः ॥ नैवोपोष्यावैष्णवैस्तुतत्रचै कादशीव्रतमिति ॥ वैष्णवस्वरूपञ्चस्कन्दपुराणेनिरूपितम् ॥ ॥ यथा ॥ परमापदमापन्नेहर्षेवासमुपस्थिते ॥ नैकादशींत्यजेद्य स्तुयस्यदीक्षातुवैष्णवी ॥ समात्मासर्वजीवेषुनिजाचारादविप्लुतः ॥ विष्णवर्पिताखिलाचारःसहिवैष्णवउच्यतइति ॥ अतश्चारुणोदयवेधे पिदीक्षितैःपरमभागवतैर्नोपवासःकार्यः ॥ अन्येषांस्मार्तमतानुसारि णांसर्वेषामप्युक्तनिर्णयानुसारेणैवोपवासइतिसिद्धांतः ॥ अथचैत्रा द्येकादशीषुकृत्यविशेषोलिख्यते ॥ ॥ तत्रचैत्रैकादश्यांस्त्रीभीरु क्मिणीपूज्या ॥ तदुक्तंब्रह्मपुराणे ॥ एकादश्यांततःस्त्रीभिर्देवी पूज्याचरुक्मिणी ॥ पुष्पालंकारधूपान्नवस्त्रब्राह्मणतर्पणैरिति ॥ तत्रैवापराह्णेवास्तुपूजाकार्या ॥ तदुक्तंब्रह्मपुराणे ॥ तत्रापराह्णे वास्तुर्वैवेश्मनांवंशधारकः ॥ अर्घ्यैर्माल्यैश्चवस्त्रैश्चपूज्योरंगैःसुचित्रि तैरिति ॥ तत्रैवरात्रौसलक्ष्मीकोवासुदेवःसोत्सवमांदोलनीयः॥तदुक्तं ब्रह्मपुराणे ॥ चैत्रमासस्यशुक्लायामेकादश्यांतुवैष्णवैः ॥ आंदोलनी योदेवेशःसलक्ष्मीकोमहोत्सवैः ॥ दमनेनार्चयित्वाचरात्रौजागरणंच रेदित्यादि॥ ॥इतिचैत्रैकादशी ॥ ॥अथज्येष्ठशुक्लैकादशीनिर्जलाप्रसि द्धा ॥ तत्रनिर्जलमुपवासंकुर्यात् ॥ तदुक्तंस्कंदपुराणे ॥ ज्येष्ठेमासि नृपश्रेष्ठयाशुक्लैकादशीभवेत् ॥ निर्जलंसमुपोष्याथजलकुंभान्सशर्क रान् ॥ प्रदायविप्रमुख्येभ्यस्तापत्रयविवर्जितः ॥ विष्णुलोकमवाप्ये

ह्मोदतेविष्णुसंनिधाविति ॥ ॥ इतिनिर्जलैकादशी ॥ ॥ अथाषाढशुक्लैकादशीदेवशयनीतत्रस्वशक्त्यावक्ष्यमाणलक्षणांसुवर्णादिनिर्मितांलक्ष्मीनारायणप्रतिमांक्षीराब्धौशेषपर्यंकेसुप्तीकृत्वासंपूज्य रात्रौजागरणाद्युत्सवंकुर्यात् ॥ तदुक्तंब्रह्मपुराणे ॥ एकादश्यांतुशुक्लायामाषाढेभगवान्हरिः ॥ भुजङ्गशयनेशेतेयदाक्षीरार्णवेसदा ॥ तदा तत्प्रतिमाकार्यासर्वलक्षणसंयुता ॥ सुप्तासुशेषपर्यंकेशैलमृद्भिःसुवारिभिः॥ताम्रारकूटरजतैस्तथाचित्रपदेषुवा॥ लक्ष्म्याउत्संगहस्तेषुविन्यस्तचरणांबुजा ॥ नानाविधोपकरणैः पूज्याचविधिपूर्वकम्॥उपवासः प्रकर्तव्योरात्रौजागरणंतथा ॥तस्यांरात्र्यांव्यतीतायांद्वादश्यांपूजयेत्तथा॥त्रयोदश्यांततोनृत्यंगीतवाद्येर्निवेदयेदिति ॥ पुराणसमुच्चयेप्युक्तम् ॥आषाढस्यासितेपक्षेएकादश्यामुपोषितः॥स्वापयेत्प्रतिमांविष्णोः शंखचक्रगदाधराम्॥पीताम्बरधरांसौम्यांपर्यंकेस्वास्तृतेशुभे॥शुक्लवस्त्रसमाच्छन्नेसोपधानेयुधिष्ठिर ॥ इतिहासपुराणज्ञोविष्णुभक्तोथवापुमान् ॥ स्नापयित्वादधिक्षीरघृतक्षौद्रजलैस्तथा ॥ समालभ्यशुभैर्गंधैर्धूपैर्वस्त्रैरलंकृताम् ॥ पूजयित्वासुमैःशुक्लैर्मंत्रेणानेनपांडव ॥ मंत्रश्च ॥ सुप्तेत्वयिजगन्नाथजगत्सुप्तंभवेदिदम्॥ विबुद्धेत्वयिबुद्धंतजगत्सर्वंचराचरमिति ॥ एवंसंपूज्यदेवस्याग्रेउपोषितश्चातुर्मास्यव्रतंकुर्यात् ॥ सनत्कुमारोप्याह ॥ एकादश्यांतुगृह्णीयात्संक्रांतौकर्कटस्यच ॥ आषाढ्यांवैनरोभक्त्याचातुर्मास्योदितव्रतमिति ॥ व्रतारंभेमंत्रश्च सनत्कुमारेणोक्तः ॥ इदंव्रतंमयादेवगृहीतंपुरतस्तव ॥ निर्विघ्नंसिद्धिमायातुप्रसन्नेत्वयिकेशव ॥ गृहीतेस्मिन्व्रतेदेवयद्यपूर्णेम्रियाम्यहम्॥तन्मेभवतुसंपूर्णंत्वत्प्रसादाज्जनार्दनेति ॥अत्रैवविशेषोवृद्धगार्ग्येणोक्तः॥ नशैशवंनमौढ्यंवाशुक्रगुर्वोर्नवातिथेः ॥ खंडंचचिंतयेज्जातुचातुर्मास्यव्रतेनरइति॥इतिशयनीयैकादशी ॥ ॥ अथभाद्रपदशुक्लैकादश्यांशयनैकादश्यामिवपूजोत्सवादिकंकृत्वादेवस्यपार्श्वपरिवर्तनंकुर्यात्

॥ तदुक्तंभविष्योत्तरे ॥ प्राप्तेभाद्रपदेमासिएकादश्यांसितेहनि ॥ कटदानंभवेद्विष्णोर्महापूजांप्रवर्तयेदिति॥कटदानंपार्श्वपरिवर्तनम् ॥ इतिभाद्रपदैकादशी ॥ ॥ अथाश्विनशुक्लैकादश्यामुपवास जागरणादिकंकृत्वाद्वादश्यादिषुविष्णुपूजांकुर्यात् ॥ तदुक्तंभविष्यो त्तरे आश्विनतिथिप्रक्रमे ॥ सोपवासैश्चकर्तव्याएकादश्यांप्रजाग रः ॥ द्वादश्यांवासुदेवश्चपूजनीयस्तुसर्वदा ॥ यात्रोत्सवश्चकर्तव्यस्त्र योदश्यांतुवैष्णवैः ॥ उपवासश्चतुर्दश्यांपौर्णमास्यांहरिंयजेदिति ॥ ॥ इत्याश्विनैकादशी ॥ ॥ अथकार्तिकशुक्लैकादश्यांप्रसुप्तं देवंपूजाजागरोत्सवादिभिर्मंत्रेणप्रबोध्यरथयात्रोत्सवंकुर्यात् ॥ तदुक्तं ब्रह्मांडपुराणे ॥ एकादश्यांचशुक्लायांकार्तिकेमासिकेशवम् ॥ प्रसु प्तंबोधयेद्रात्रौश्रद्धाभक्तिसमन्वितः ॥ नृत्यैर्गीतैस्तथावाद्यैर्ऋग्यजुःसा ममंगलैः ॥ वीणावेणुप्रशब्दैश्चपुराणश्रवणेनवा ॥ वासुदेवकथाभिश्च स्तोत्रैरन्यैश्चवैष्णवैः ॥ पुष्पैर्धूपैश्चनैवेद्यैर्दीपैर्भक्ष्यैःसुशोभनैः ॥ होमै रम्यैरपूपैश्चफलैःशार्करपायसैः ॥हृद्याभ्यांश्वेतरक्ताभ्यांचन्दनाभ्यांच सर्वदा ॥ कुंकुमालक्तकाभ्यांचरक्तसूत्रैःसकंकणैः ॥ तस्यांरात्र्यांव्य तीतायांद्वादश्यामरुणोदये ॥ आदौघृतेनैक्षवेणमधुनास्नापयेत्ततः ॥ दध्नाक्षीरेणचततः पंचगव्येनशास्त्रवित् ॥ उद्वर्तनंमाषचूर्णमसूरामल कानिच॥ सर्षपाश्चप्रियंगुश्चमातुलिंगरसस्तथा ॥ सर्वौषध्यःसर्वगंधाः सर्वबीजानिकांचनम् ॥ मंगलानियथाकामंरत्नानिचकुशोदकम् ॥ एवंसंशोध्यदेवेशंदद्याद्गोरोचनांशुभाम् ॥ ततस्तुकलशादेयायथाप्रा प्ताःस्वलंकृताः ॥ जातीपल्लवसंयुक्ताःसकलाश्चसकांचनाः॥पुण्याहवे दशब्देनवीणावेणुरवेणवा॥एवंसंस्नाप्यगोविंदंस्वनुलिप्तंस्वलंकृतम् ॥ सुवाससंपूजयेच्चसुमनोभिःसकुंकुमैः ॥ धूपैर्दीपैर्मनोज्ञैश्चपायसेनच भूरिणा॥पात्रायान्नदानैश्चहोमैःपुष्पैःसदक्षिणैः॥ वासोभिर्भूषणैरन्यैर्गो भिरश्वैर्मनोजवैः ॥ ब्राह्मणाःपूजनीयाश्चविष्णोरीड्याश्चमूर्तयः ॥ यत्तु

१ ब्रह्मपुराणे इ० पा० । २ ब्रह्मपुराणेच इ० पा० ।

सामीदामिवादितवदनाथ ॥ बुध्यस्वदेवेशजगन्निवासमंत्रप्रभावेणसु
खेनदेवेति ॥तथाच॥ इयंचद्वादशीदेवप्रबोधार्थंतुनिर्मिता॥ त्वयैवसर्व
लोकानांहितार्थंशेषशायिना॥उत्तिष्ठोत्तिष्ठगोविंदत्यजनिद्रांजगत्पते॥
त्वयिसुप्तेजगत्सुप्तमुत्थितेह्युत्थितंजगत् ॥ एवमुत्थाप्यमंत्रेणपुष्पाञ्ज
लिंदद्यात्॥मन्त्रस्तु॥चरणंपवित्रमितिवैदिकः ॥पौराणिकस्तु गतामे
घावियच्चैवनिर्मलंनिर्मलादिशः ॥शारदानिचपुष्पाणिगृहाणममकेशव
इति ॥ समुत्थितेततोविष्णौ क्रियाः सर्वाःप्रवर्त्तयेत् ॥ महातूर्यरवैरा
त्रौभ्रामयेत्स्यंदनेस्थितम् ॥ उत्थितंदेवदेवेशंनागरैःप्रार्थितः स्वयम् ॥
रात्रौजागरणंकुर्यादेकादश्यांसुरालये ॥ प्रभातेविमलेस्नात्वाभोज
यित्वाद्विजोत्तमान् ॥ आचान्तेभ्यस्ततो दद्यात्त्यक्तंयत्किंचिदेवहि ॥
त्यक्तंचातुर्मास्येऽभ्यंजनादिकम् ॥ तदुक्तम् ॥ चातुर्मासेतुयत्त्यक्तंभ
क्ष्यभोज्यादिकंचयत्॥चतुरोवार्षिकान्मासान्नियमंयत्स्वयंकृतम् ॥क
थयित्वाद्विजेभ्यश्चदद्याद्भक्त्यासदक्षिणम्॥ दत्त्वाविसर्जयेद्विप्रांस्ततो
भुंजीतवैर[2]स्वयमिति ॥व्रतसमापनेमंत्रश्चसनत्कुमारेणोक्तः॥इदंव्रतंमया
देवकृतंप्रीत्यैतवप्रभो ॥ न्यूनंसंपूर्णतांयातुत्वत्प्रसादाज्जनार्दनेति
॥ ॥ इति प्रबोधिन्यैकादशी ॥ ॥ मार्गशीर्षादिशुक्लैकादशीषुवराह
पुराणोक्तधरणीव्रतान्युच्यंते ॥ यथा ॥ दुर्वासाःसत्यतपसंप्रत्याह ॥
यदामार्गशिरेमासिदशम्यांनियतात्मवान् ॥ कृत्वादेवार्चनंधीमान
ग्निकार्यंयथाविधि ॥ शुचिवासाः प्रसन्नात्माहं[3]व्यमन्नंसुसंस्कृतम् ॥
भुक्त्वापंचपदंगत्वापुनःशौचंतुपादयोः ॥ कृत्वाष्टांगुलमात्रंतुक्षीरवृ-
क्षसमुद्भवम् ॥ भक्षयेद्दंतकाष्ठंतुततश्चाचम्ययत्नतः ॥ स्पृष्ट्वाच
खानिसर्वाणिचिरंध्यात्वाजनार्दनम् ॥ शंखचक्रगदापाणिंकिरीटपी-

---

१ शिष्टामृतंपश्चादिति पा० । २ निश्चितः इ० पा० । ३ वन्यमिति पा० ।

तवाससम् ॥ प्रसन्नवदनंदेवंसर्वलक्षणलक्षितम्॥ध्यात्वापुनर्जलंहस्ते गृह्यभानुंजनार्दनम् ॥ध्यात्वार्घ्यंदापयेत्तस्यकरतोयेनमानवः॥ एवमुच्चारयेद्वाचंतस्मिन्कालेमहामुने॥एकादश्यांनिराहारःस्थित्वाहमपरेहनि ॥ भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत ॥ एवमुक्त्वाततोरात्रौ देवदेवस्यसन्निधौ ॥ जपन्नारायणायेतिस्वपेत्तत्रविधानतः॥ ततः प्रभातेविमलांनदींगत्वासमुद्रगाम् ॥ इतरांवातडागंवागृहेवानियमात्मवान् ॥ आनीयमृत्तिकांशुद्धांमंत्रेणानेनमानवः ॥ धारणंपोषणंत्वत्तोभूतानांदेविसर्वदा ॥ तेन[१]सत्येनमेपापंयावन्मोचयसुव्रते ॥ ब्रह्मांडोदरतीर्थानिकरैःस्पृष्टानितेरवे ॥ तैरिमांमृत्तिकांस्पृष्ट्वामालभामित्वयैधिताम् ॥ त्वयिसर्वेरसानित्याःस्थितावारुणसर्वदा ॥ तैरिमांमृत्तिकांप्लाव्यपूतांकुरुचमाचिरम् ॥ एवंमृदंतथातोयंप्रसाद्यात्मानमालभेत् ॥ त्रिःकृत्वाशेषमृदयाकुंडमालिख्यवैजले ॥ ततस्तस्मिन्नरःसम्यग्यथाविध्युपचारतः ॥ स्नात्वाचावश्यकंकृत्वापुनरेवगृहंव्रजेत्॥तत्राराध्यमहादेवंयोगनारायणंहरिम्॥पूजामन्त्राः ॥ केशवाय नमःपादौकटिंदामोदरायच॥ऊरुयुग्मंनृसिंहायचोरःश्रीवत्सधारिणे ॥ कंठेकौस्तुभनाथायवक्षःश्रीपतयेतथा ॥ त्रैलोक्यविजयायेतिबाहूसर्वात्मनेशिवः॥रथांगधारिणेचक्रंशंकरायेतिवारिजम् ॥ गंभीरायेतिचगदामंभोजंशांतमूर्तये॥ एवमभ्यर्च्यदेवेशंदेवंनारायणंप्रभुम् ॥ पुनस्तस्याग्रतःकुंभांश्चतुरःस्थापयेद्बुधः॥जलपूर्णान्समाल्यांश्चसितचंदनलेपितान् ॥ चूतपल्लवसंयुक्तान्सितवस्त्रावगुंठितान् ॥ संयुक्तांस्ताम्रपात्रैश्चतिलपूर्णैःसकांचनैः॥चत्वारस्तेसमुद्रास्तुकलशाःपरिकीर्तिताः॥ तेषामधःशुभंपीठंस्थापयेद्वस्त्रगर्भितम् ॥ तस्मिन्सौवर्णरौप्यंवा ताम्रंवादारुजंतथा ॥ अलाभेसर्वपात्राणांपालाशंपात्रमिष्यते ॥ तोयपूर्णंचतत्कृत्वातस्मिन्पात्रेततोन्यसेत् ॥ सौवर्णमत्स्यरूपेणकृत्वादेवंजनार्दनम् ॥ वेदवेदांगसंयुक्तंश्रुतिस्मृतिविभूषितम् ॥ तत्राने

१ तेनसत्येनमांपृथ्विपापान्मोचयमृत्तिके इ० वा पा० ।

कविधैर्भक्ष्यैःफलैःपुष्पैश्चशोभितम् ॥ गंधपुष्पैश्चवस्त्रैश्चअर्चयित्वा यथाविधि ॥ रसातलगतावेदायथादेवत्वयोद्धृताः ॥ मत्स्यरूपे णतद्वन्मांभवादुद्धरकेशव ॥ एवमुच्चार्यतस्याग्रेजागरंतत्रकारयेत् ॥ यथाविभवसारेणप्रभातेविमलेतथा ॥ चतुर्णांब्राह्मणानाञ्चचतुरो दापयेद्घटान् ॥ पूर्वंचबह्वृचेदद्याच्छंदोगेदक्षिणांतथा ॥ यजुःशा खाच्युतेदद्यात्पश्चिमंघटमुत्तमम् ॥ उत्तरंकामठेदद्यादेषदानविधिः स्मृतः ॥ ऋग्वेदःप्रीयतांपूर्वैःसामवेदस्तुदक्षिणैः ॥ यजुर्वेदःपश्चि मंतस्त्वथर्वाचोत्तरेणतु ॥ अनेनक्रमयोगेनप्रीयतामितिवाचयेत् ॥ मत्स्यरूपंतुसौवर्णमाचार्यायनिवेदयेत् ॥ वस्त्रगन्धादिधूपैश्चसंपू ज्यविधिवत्पुमान् ॥ यस्त्विमंशंखहस्तंचमन्त्रेणैवोपपादयेत् ॥ विधिनातस्यतद्दानंभवेत्कोटिगुणोत्तरम् ॥ प्रतिपद्यगुरुंयस्तुमोहा द्विप्रतिपद्यते ॥ सजन्मकोटिनरकेपच्यतेपुरुषाधमः ॥ विधानस्य प्रदाताव्योगुरुरित्युच्यतेबुधः ॥ एवंदत्त्वाविधानेनद्वादश्यांविष्णुम र्चयेत् ॥ विप्राणांभोजनंदद्याद्यथाशक्त्याचदक्षिणाम् ॥ परमान्नघृ तेनैवततःपश्चात्स्वयंनरः ॥ भुञ्जीतसहितोविप्रैर्वाग्यतःसंयतेन्द्रियः॥ अनेनविधिवायस्तुधरणीव्रतकृन्नरः ॥ तस्यपुण्यफलंचाग्र्यंशृणुतत्त्व विदांवर ॥ यदिवक्त्रसहस्राणांसहस्राणिभवेदिह ॥ आपुश्चब्रह्मणस्तु ल्यंभवेद्यदिमहाव्रतम् ॥ तदानीमस्यसर्वस्यफलंकथयितुंभवेत् ॥ यइमंश्रावयेद्भक्त्याद्वादशीफलमुत्तमम् ॥ शृणोतिवासपापैस्तुसर्वै रेवप्रमुच्यते ॥ ॥ इतिधरणीव्रतेषुमत्स्यद्वादशीव्रतम् ॥ अथ पौषमासस्यैकादश्यांपूर्ववन्नियतः स्नानादिकंकृत्वा कूर्मरूपिणंदेवं संपूज्यद्वादश्यामाचार्यायदद्यात् ॥ कलशपात्रादिविधिस्तुमार्ग शीर्षैकादश्यामुक्तएवकार्यः ॥ तदुक्तंवाराहपुराणे ॥ तथैवपौ षमासेतुअमृतंमथितंसुरैः ॥ तत्रकूर्मोभवेद्देवःस्वयमेवजनार्दनः ॥ तस्येयंतिथिरुद्दिष्टाविष्णोर्वैकूर्मरूपिणः ॥ पौषमासस्यया शुद्धा

द्वादशीशुक्लपक्षतः॥तस्यांप्राग्वत्तुसंकल्पंप्राग्वत्स्नानादिकाःक्रियाः॥ निर्वृत्याराधयेद्भक्त्यामेकादश्यांजनार्दनम् ॥ पृथङ्मंत्रैर्मुनिश्रेष्ठादेव देवंजनार्दनमिति॥ कूर्मायपादंप्रथमंप्रपूज्यनारायणायेतिहरेःकटिंच॥ संकर्षणायेत्युदरंविशोकेत्युरोभवायेतितथैवकंठम् ॥ सुबाहवेचेति भुजौशिरस्तुनमोविशालायरथांगशंखौ ॥स्वनाममंत्रेणसुगन्धपुष्पैर्ना नानिवेद्यैर्विविधैःफलैश्च ॥ अभ्यर्च्यदेवंकलशंतदग्रेसंस्थाप्यमाल्यैः सितकंठदाम ॥ तंरत्नगर्भंतुपुरेवकृत्वास्वशक्तितोहेममयंतुदेवम् ॥ समंदरंकूर्मरूपेणकृत्वासंस्थाप्यताम्रेघृतपूर्णपात्रे ॥ पूर्णेवटस्योपरि संनिवेश्यतंब्राह्मणायैवतुसंप्रदद्यादिति ॥ दानब्राह्मणभोजनादिवि धिःपूर्वोक्तएवग्राह्यः ॥ ॥ इतिकूर्मद्वादशीव्रतम् ॥ ॥ एवंमाघशुक्ले कादश्यां सौवर्णवाराहरूपिणंदेवं सर्वबीजसंपूर्णकलशस्योपरिस्थापि तसौवर्णादिपात्रेस्थापयित्वासंपूज्यद्वादश्यांब्राह्मणायदद्यात् ॥ पूजा विधिस्तुमार्गशीर्षैकादश्युक्तएव ॥ तदुक्तंवाराहपुराणे ॥ एवंमाघ सितेपक्षेद्वादशींधरणीभुज॥वाराहस्यशृणुष्वार्चांमुनेपरमधार्मिकेत्युप क्रम्य ॥ वाराहायेतिपादौतुमाधवायेतिवैकटिम् ॥ क्षेत्रज्ञायेतिजठरेवि श्वरूपेत्युरोहरेः ॥ सर्वज्ञायेतिकंठंतुप्रजानांपतयेशिरः ॥ प्रद्युम्ना येतिचभुजौदिव्यास्त्रायसुदर्शनम् ॥ अमृतोद्भवायशंखंतुएवमेवार्च नेविधिरिति ॥ प्रतिमास्वरूपंतु ॥ यथाशक्तितुसौवर्णंवाराहंका रयेद्बुधः ॥ दंष्ट्रयोद्धिभ्रतंपृथ्वींसपर्वतवनद्रुमाम् ॥ माधवंमधुहंतारं वाराहंरूपमास्थितम् ॥ सर्वबीजभृतेपात्रेरत्नगर्भंवटोपरि ॥ स्थापयेत्परमंदेवंजातरूपमयंहरिमिति ॥ दानार्चनविधिःपूर्वोक्तए व ॥ इतिवाराहद्वादशीव्रतम् ॥ अथफाल्गुनशुक्लैकादश्यांपूर्ववदुपो ष्यसौवर्णंनृसिंहंसौवर्णादिपात्रेकलशोपरिसंस्थाप्यपूजयित्वाद्वादश्यां ब्राह्मणायनिवेदयेत् ॥ अन्यःसर्वोपिविधिःपूर्वोक्तएव ॥ तदुक्तं

---

१ तुवरेणलिख्वा इ० वा पा० । २ चतुर्भुजायेति इ० वा पा० ।

वाराहपुराणे ॥ तद्वत्फाल्गुनमासेतुशुक्लपक्षेतुद्वादशीम् ॥ उपोष्यप्रोक्तविधिनाहरिमाराधयेत्सुधीः ॥ नरसिंहायपादौतुगोविंदायेत्युरूतथा ॥ कटिंविश्वभुजेपूज्यअनिरुद्धेत्युरस्तथा ॥ कंठंतुशितिकंठायहृषीकेशायवैशिरः ॥ असुरध्वंसनायेतिचक्रंतोयात्मनेतथा ॥ शंखमित्येवसंपूज्यगंधपुष्पफलैस्तथेति ॥ ॥ इतिनृसिंहद्वादशीव्रतम् ॥ इयमेवामर्दकी ॥ तत्रामर्दकवृक्षस्थितंविष्णुंसंपूज्यप्रदक्षिणांकुर्यात् ॥ तदुक्तंभविष्योत्तरे ॥ ॥ फाल्गुनेमासिशुक्लायामेकादश्यांजनार्दनः॥ वसत्यामलकीवृक्षेलक्ष्म्यासहजगत्पतिः॥तत्रसंपूज्यदेवेशंशक्त्याकुर्यात्प्रदक्षिणाम् ॥ उपोष्यविधिवन्मर्त्योविष्णुलोकेमहीयते ॥ इत्यामर्दकी ॥ अथचैत्रशुक्लैकादश्यामुपोष्यसौवर्णवामनंसंपूज्यच्छत्रिकादिसंयुक्तंद्वादश्यांब्राह्मणायदद्यात् ॥ तदुक्तंवाराहपुराणे ॥ एवमेवमुनेमासिचैत्रेसंकल्प्यद्वादशीम्॥उपोष्याराधयेत्पश्चाद्देवदेवंजनार्दनमिति ॥ वामनायेतिवैपादौविष्णवेकटिमर्चयेत् ॥ वासुदेवेतिजठरंउरःसंकर्षणायच ॥ कंठेविश्वहृ[1]तेपूज्यशिरोवैव्योमरूपिणे ॥ बाहूविश्वजितेपूज्यसुनाम्नाशंखचक्रके ॥ प्रागुक्तपात्रेसंस्थाप्यवामनंकांचनंबुधः ॥ यथाशक्त्याकृतंहृस्वंसितयज्ञोपवीतिनम् ॥ कुंडिकांस्थाप्यपार्श्वेतुच्छत्रिकांपादुकेतथा ॥ अक्षमालांचसंस्थाप्यमुद्रिकांचविशेषतः ॥ एतैरुपस्करैर्युक्तंप्रभातेसुद्विजायतम् ॥दापयेत्प्रीयतांविष्णुर्हृस्वरूपीत्युदीरयेत् ॥ मासनाम्नातुसंयुक्तंप्रादुर्भावविधानकम् ॥ प्रीयतामितिसर्वत्रविधिरेषप्रकीर्तित इति ॥ मत्स्यरूपीकेशवः प्रीयतां कूर्मरूपीकेशवःप्रीयतामित्यादिप्रयोगःसर्वत्रद्रष्टव्यः ॥ ॥ इतिवामनद्वादशीव्रतम् ॥ ॥ अथवैशाखशुक्लैकादश्यामुपोष्यसौवर्णपरशुरामंसंपूज्यद्वादश्यांब्राह्मणायदद्यात् ॥ तदुक्तं वराहपुराणे ॥ वैशाखेप्येवमेवंतुसंकल्प्यविधिनानरइत्युपक्रम्य जामदग्न्यायपादौतु

---

१ सृजे इ० वा पा०।

ह्युदरंसर्वधारिणे ॥ मधुसूदनायेतिकटिमुरःश्रीवत्सधारिणे ॥
शिरःसहस्रशीर्षायशंखचक्रेस्वनामतइति ॥ प्रतिमास्वरूपंतु ॥
जामदग्न्येतिविख्यातंनाम्नाक्लेशविनाशनम् ॥ दक्षिणेपरशुंहस्ते
तस्यदेवस्यकारयेत् ॥ वैणवेनतुपात्रेणतस्मिन्संस्थापयेद्धरिमि
ति ॥ इतिजामदग्न्यद्वादशीव्रतम् ॥ ॥ अथज्येष्ठशुक्लैकादश्यां
सौवर्णरामलक्ष्मणौसंपूज्यद्वादश्यांब्राह्मणायदद्यात् ॥ विधिस्तुप्रागु
क्तएव ॥ मंत्रेषुविशेषः ॥ तदुक्तंवाराहपुराणे ॥ ज्येष्ठेमासेप्येवमेवसं
कल्प्यविधिनानरः ॥ अर्चयेत्परमंदेवंपुष्पैर्नानाविधैःशुभैः ॥ नमो
रामाभिरामायपादौपूर्वंसमर्चयेत् ॥ त्रिविक्रमायेतिकटिंधृतविश्वाय
चोदरम् ॥ उरःसंवत्सरायेतिकंठंसंवर्तकायच ॥ सर्वास्त्रधारिणेबाहूस्वना
म्नाचरथांगके ॥ सहस्रशिरसेभ्यर्च्यशिरस्तस्यमहात्मनः ॥ पीताम्बरयु
गच्छन्नौसौवर्णौरामलक्ष्मणौ ॥ अर्चयित्वाविधानेनप्रभातेब्राह्मणाय
तौ ॥ दातव्यौमनसाकाममीहतापुरुषेणतु इति ॥ ॥ इतिरामद्वादशी
व्रतम् ॥ आषाढशुक्लैकादश्यामुपोष्यपूर्वोक्तविधिनाचतुर्व्यूहंवासुदे
वंसंपूज्यद्वादश्यांब्राह्मणायदद्यात् ॥ मंत्रेषुविशेषः ॥ तदुक्तंवराह
पुराणे ॥ वासुदेवायपादौतुकटिंसंकर्षणायच ॥ प्रद्युम्नायेतिजठरं
त्वनिरुद्धायवैउरः ॥ चक्रपाणयेतिभुजौकंठंभूपतयेतथा ॥ स्व
नाम्नाशंखचक्रेतुपुरुषायेतिवैशिरः ॥ कांचनंवासुदेवंतुचतुर्व्यूहंसना
तनम् ॥ तमभ्यर्च्यविधानेनगंधपुष्पादिभिःक्रमात् ॥ प्राग्वत्तंब्राह्म
णेदद्याद्देवादिनिसुव्रते ॥ वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाश्चतुर्व्यूहाः ॥
इतिवासुदेवद्वादशीव्रतम् ॥ ॥ अथश्रावणशुक्लैकादश्यांदामोद
रनामानंदेवमभ्यर्च्यपूर्वोक्तविधानेनद्वादश्यांब्राह्मणायदद्यात् ॥ मंत्रे
षुविशेषः ॥ तदुक्तंवाराहपुराणे ॥ दामोदरायपादौतुहृषीकेशायवै
कटिम् ॥ सनातनायेतिजठरमुरःश्रीवत्सधारिणे ॥ चक्रपाणेतिभु
जौकंठंचहरयेतथा ॥ मुंजकेशायचशिरोभद्रायेतिललाटकम् ॥ स्वना

१ केशि इ० वा पा० । २ समंलक्ष्मणसंयुतम् । रामायपादौ संपूज्य राघवायेति जानुनी इ० पा० । ३ सर्वज्ञाय इ० वा पा० ।

आशंखचक्रेतुपूजयेत्परमेश्वरम् ॥ कांचनंदेवदेवंतुदामोदरसनाम
कम्॥ प्राग्वत्तंब्राह्मणेदद्याद्वेदवेदांगपारगे॥ इति दामोदरद्वादशी॥ ॥
अथभाद्रपदशुक्लैकादश्यांसौवर्णंकल्किरूपिणंपूर्वविधिनासमभ्यर्च्य
द्वादश्यांब्राह्मणायदद्यात् ॥ पूजामंत्रास्तुवराहपुराणे ॥ नमो
स्तुकल्किनेपादौहृषीकेशायवैकटिम् ॥म्लेच्छप्रध्वंसनायेतिजगन्मूर्ते
तथोदरम् ॥ शितिकंठायकंठंतुखड्गपाणेतिवैभुजौ ॥ चतुर्भुजायेतिह
स्तौविश्वमूर्तेतथाशिरः ॥ एवमभ्यर्च्यमेधावीप्राग्वत्तस्याग्रतोघट
म् ॥ विन्यसेत्कल्किनंदेवंसौवर्णंतत्रकारयेत् ॥ दद्यात्प्रभातेविप्रा
यवेदवेदाङ्गवेदिने ॥ ॥ इतिकल्किद्वादशीव्रतम् ॥ ॥ एवमा
श्विनशुक्लैकादश्यां पद्मनाभरूपंदेवंसंपूज्य द्वादश्यांब्राह्मणायदद्यात्॥
विधिस्तुपूर्वएव ॥ मंत्रेषुविशेषोयथा वाराहपुराणे ॥ तद्वदाश्व
युजेमासिद्वादशीशुक्लपक्षतः ॥ संकल्प्याभ्यर्चयेद्देवंपद्मनाभंसना
तनम् ॥ पद्मनाभायपादौतुकटिंवैपद्मयोनये ॥ उदरंसर्वदेवायपु
ष्कराक्षायवैउरः ॥ अव्ययायतथापाणिंप्राग्वदस्त्राणिपूजयेत् ॥ प्र
भवायशिरःपूज्यप्राग्वदग्रेघटंन्यसेत् ॥ तस्मिन्सौवर्णकंदेवंपद्मना
भंतुविन्यसेत् ॥ एवमेवतुसंपूज्यगंधपुष्पादिभिःक्रमात् ॥ प्रभाता
यांतुशर्वर्यांब्राह्मणायनिवेदयेदिति॥ ॥इतिपद्मनाभद्वादशी॥ ॥अथका
र्त्तिकशुक्लैकादश्यांसौवर्णंयोगीश्वरंयोगनिद्रास्थितंसंपूज्यद्वादश्यां
ब्राह्मणायदद्यात् ॥ तदुक्तंवराहपुराणे ॥ शृणुराजन्महाबाहोकार्त्ति
केमासिद्वादशीम् ॥ उपोष्यविधिनायेनयच्चास्याःप्राप्यतेफलम् ॥ प्रा
ग्विधानेनसंकल्प्यतद्वत्स्नानंतुकारयेत् ॥ विभवेनार्चयेद्देवंनारायण
मकल्मषम् ॥ नमःसहस्रशिरसेशिरःसंपूजयेद्धरेः ॥ पुरुषायेतिच
भुजौकंठंवैविश्वरूपिणे ॥ज्ञानास्त्रायेतिचास्त्राणिश्रीवत्सायतथाउरः ॥
जगद्ग्रसिष्णवेपूज्यमुदरंदिव्यमूर्तये ॥ कटिंसहस्रपादायपादौदेवस्य

१ नानास्त्राय इ० वा पा०।

पूजयेत् ॥ आनुलोम्येनदेवेशंपूजयित्वाविचक्षणः ॥ नमोदामोदरा येतिसर्वांगंपूजयेद्धरेः ॥ एवंसंपूज्यविधिनातस्याग्रेचतुरोघटान् ॥ स्थापयेद्रत्नगर्भांस्तुसितचंदनचर्चितान् ॥ स्रग्दामबद्धसुग्रीवान्सि तवस्त्रावगुंठितान् ॥ शोभितांस्ताम्रपात्रैस्तुतिलपूर्णैःसकांचनैः ॥ चत्वारःसागराश्चैवकल्पितााराजसत्तम ॥ तन्मध्येप्राग्विधानेनसौवर्णं स्थापयेद्धरिम् ॥ षोडशारेतथाचक्रेस्रग्भिर्बहुभिरूर्जिते॥ योगीश्वरंयो गनिद्राशयानंपीतवाससम् ॥ तमप्येवंतुसंपूज्याजागरंतत्रकारयेत् ॥ कुर्यात्तुवैष्णवंयागंयजेद्योगीश्वरंहरिम् ॥ एवंकृत्वाप्रभातेतुब्राह्मणाय निवेदयेदिति ॥ ॥ इतियोगीश्वरैकादशीव्रतम् ॥ इतिधरणीव्रतानि समाप्तानि॥ अथसिद्धविरुद्धादिकंलिख्यते ॥ ॥ एकादशीशुक्रवारेण सिद्धा ॥ तदुक्तम् ॥ शुक्रेणप्रतिपत्पष्ठीएकादश्येत्यादि ॥ सोमवा रेणविरुद्धा ॥ तदुक्तम् ॥ चंद्रेचित्रोत्तराषाढापूर्वाषाढाविशाखिका॥ए कादशीत्रयोदश्योर्नष्टयोगाःप्रकीर्त्तिताइति ॥ एकादश्यांनर्तकादि कर्मकार्यम् ॥ नंदासुनर्तनंनक्षत्रेइत्युक्तमेव ॥ एकादश्यांशणपुष्पा णिनखादेत् ॥ तथाचोक्तमेव ॥ नखचर्मतिलानीति ॥ पौषशुक्ले कादशीमन्वादिः ॥ तथाचोक्तम् ॥ एकादशीचपौषइति ॥ सर्वा स्वेकादशीषुतिथिपतित्वेनशिवःपूज्यः ॥ तदुक्तम् ॥ एकादश्यां शिवस्यचेति ॥ धनुस्थेक्रूरग्रहेएकादश्यशुभा ॥ उक्तंच ॥ परतस्तथै वेति ॥ एकादश्यामाग्नेय्यांदिशियोगिनीसांमुख्याद्यात्रानकार्या ॥

॥ इति श्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतएकादशीनिर्णयः ॥

॥ अथद्वादशीनिर्णीयते ॥ द्वादशीतिथिरुपवासादिषुएकादशीयु तैवग्राह्या ॥ तदुक्तंनिगमे ॥ रुद्रेणद्वादशीयुक्तेतियुग्मवाक्यात् ॥ कूर्मपुराणे त्रयोदशीविद्धानिषिद्धा ॥ यथा ॥ नागविद्धातुयाष ष्ठीरुद्रविद्धोदिवाकरः ॥ कामविद्धाभवेद्विष्णुर्नग्राह्यास्तेतुवासराइ ति ॥ विष्णुर्द्वादशी ॥ कामस्त्रयोदशी ॥ वर्षद्वादशीकृत्यंधरणी

व्रतेष्वेवोक्तम् ॥ विशेषस्तुलिख्यते॥ ॥ भाद्रपदशुक्लद्वादशीश्रवणनक्षत्रयुक्ताश्रवणद्वादशी ॥ सायद्येकादश्यामेवस्यात्तदाविष्णुशृंखलाख्ययोगःस्यात् ॥ तत्रैकेनोपवासेनैकादशीव्रतंश्रवणद्वादशीव्रतंचद्वयमपिकृतंभवति ॥ तदुक्तंमत्स्यपुराणे ॥ द्वादशीश्रवणर्क्षंचस्पृशेदेकादशींयदि ॥ सएववैष्णवोयोगोविष्णुशृंखलसंज्ञकः ॥ तस्मिन्नुपोष्यविधिवन्नरःप्रक्षीणकल्मषः ॥ प्राप्नोत्यनुत्तमांसिद्धिंपुनरावृत्तिदुर्लभामिति ॥ यदाद्वादशीश्रवणर्क्षयुतायामेकादश्यामुपोषितायांद्वादश्यां श्रवणर्क्षंवर्द्धतेद्वादशीचऋक्षन्यूनाभवतितदातिथ्यन्तोनापेक्षणीयः ॥ तदुक्तम् ॥ तिथिनक्षत्रसंयोगेउपवासोयदाभवेत्॥तावदेवनभोक्तव्यंयावदेकस्यसंक्षयः ॥ विशेषेणमहीपालश्रवणंवर्द्धतेयदि॥ तिथिक्षयेनभोक्तव्यंद्वादशींनैवलंघयेदिति ॥ यदाएकादशीपूर्णाद्वादशीश्रवणनक्षत्रयुक्ता ॥ तदैकादश्यामुपोष्यश्रवणद्वादश्यांपृथगुपवासःकार्यः ॥ ननुपारणंचोपवासपरिसमाप्तिस्तदभावेपूर्वव्रतासमाप्तौव्रतांतरंकर्तुमयुक्तम्॥ यथा ॥ असमाप्तेव्रतेपूर्वेनैवकुर्याद्व्रतान्तरमिति॥अतःश्रवणद्वादश्युपवासः कथंस्यादितिचेत् ॥सत्यम् ॥उभयोर्व्रतयोरेकदैवत्वान्नदोषः ॥ तदुक्तम् ॥ एकादशीमुपोष्यैवद्वादशींसमुपोषयेत् ॥ नचात्रविधिलोपःस्यादुभयोर्दैवतंहरिरिति ॥ यद्युपवासद्वयकरणेअसमर्थःस्यात्तदैकादश्यां भुक्त्वाश्रवणद्वादश्यामुपवासंकुर्यात् ॥ तस्याअलभ्ययोगत्वेनप्राशस्त्यात् ॥ एकादश्युपवासफलप्रापकत्वाच्च ॥ तदुक्तम् ॥ उपोष्यद्वादशींपुण्यांविष्णुऋक्षेणसंयुताम् ॥ एकादश्युद्भवंपुण्यंनरःप्राप्नोत्यसंशयमिति ॥ यथा ॥ एवमेकादशींभुक्त्वाद्वादशीसमुपोषणात् ॥ पूर्वोपवासजंपुण्यंसर्वंप्राप्नोत्यसंशयमिति ॥ यदातुद्वितीयदिनेश्रवणंवर्द्धतेतदाऋक्षांतोनापेक्षणीयः ॥ ऋक्षांतेपारणंकुर्याद्विनाश्रवणरोहिणीमितिवचनात् ॥ यदाचएकादश्यामेवश्रवणनक्षत्रंस्यान्नद्वादश्यां तदैकादश्यामेवश्रवणद्वादशीव्रतंकार्यम्॥

तदुक्तम् ॥ याःकाश्चित्तिथयःप्रोक्ताःपुण्यानक्षत्रयोगतः ॥ तास्वेवतद्व्रतंकुर्याच्छ्रवणद्वादशींविनेति ॥ भविष्योत्तरेपि ॥ एकादशीयदातुस्याच्छ्रवणेनसमन्विता ॥ विजयानामसाप्रोक्ताभक्तानांविजयप्रदेति ॥ एतावांस्तुविशेषः ॥ श्रवणैकादश्यांवामनावतारकृष्णपूजाश्रवणद्वादश्यांजनार्दनपूजेति ॥ विधिस्त्वेकएव ॥ अत्रतीर्थस्नानादिकञ्चानंतफलंभवति ॥ तदुक्तं विष्णुधर्मोत्तरे ॥ नभस्यशुक्लद्वादश्यांनक्षत्रंश्रवणंयदि ॥ तस्यांतीर्थेषुयत्स्नानंतदनंतफलंभवेत् ॥ देवतापूजनंविप्रभोजनंश्राद्धमेवच॥ एकजप्यात्सहस्रस्यजपस्यफलमश्नुते ॥ दानंचमहदल्पंवासहस्रगुणितंभवेदिति ॥ भविष्योत्तरेविशेषोदर्शितः ॥ बुधश्रवणसंयुक्तासैवचेद्द्वादशीभवेत् ॥ अतीवमहतीतस्यांसर्वंकृतमथाक्षयम् ॥ तथा ॥ बुधश्रवणसंयुक्ताद्वादशीसंगमोदकम् ॥ दानंदध्योदनंशतमुपवासःपरोविधिरिति ॥ द्वादशीश्रवणोपेतायदाभवतिभारत॥संगमेसरितांस्नात्वाजाह्नवीस्नानजंफलम् ॥ सोपवासःसमाप्नोतिनात्रकार्याविचारणेति ॥ ॥ इतिश्रवणद्वादशीव्रतम् ॥ ॥ भाद्रपदशुक्लद्वादश्यामेवइंद्रध्वजोत्थापनंकार्यम् ॥ तदुक्तंमत्स्यपुराणे ॥ द्वादश्यांतुसितेपक्षेमासिभाद्रपदेतथा ॥ शक्रमुत्थापयेद्राजातद्ध्वजञ्चसमाहितइति ॥ लिंगपुराणेपि॥कन्यार्केशुक्लद्वादश्यांविश्वादित्यर्क्षसंयुजि॥शक्रमुत्थापयेद्देवंतद्ध्वजंचमहीपतिरिति ॥ इतिभाद्रपदद्वादशी ॥ ॥ कार्तिककृष्णद्वादश्यांगोधूलिककालव्यापिन्यांगोवत्सपूजाकार्य्या ॥ तस्यास्तत्कालएवविधानात् ॥ दिनद्वयेपितत्कालव्यापित्वेपूर्वत्रैवकार्यम् ॥तदुक्तम्॥ वत्सपूजावटश्चैवकर्तव्याप्रथमेहनीति ॥ ॥ इतिवत्सपूजाद्वादशी ॥ ॥ माघकृष्णद्वादशीतिलद्वादशी ॥ तस्यांतिलैःस्नात्वातिलैर्विष्णुमभ्यर्च्यातिलतैलेनदीपंतिलनैवेद्यंतिलहोमंतिलदानञ्चकृत्वातिलान्भक्षयेत् ॥ तदुक्तंब्रह्मपुराणे ॥ माघेतुकृष्णद्वादश्यांयमोहिभगवान्पुरा ॥ तिला

१ कामिनाम् इ० पा० ।

लानुत्पादयामासतपःकृत्वासुदारुणम् ॥ राजादशरथोभूमौतस्यां तानवतारयत् ॥ तिलानामाधिपत्येतुविष्णुस्तत्रकृतःसुरैः ॥ तस्यामुपोषितःस्नातस्तिलैस्तस्यांयजेद्धरिम् ॥ तिलतैलेनदीपाश्च देयादेवगृहेषुच ॥ निवेदयेत्तिलानेवहोतव्याश्चतथातिलाः ॥ तिलान्दत्त्वाचविप्रेभ्योभक्षयेच्चतथातिलानिति ॥ ॥ इतितिलद्वादशी ॥ अथसिद्धविरुद्धादिकंलिख्यते ॥ द्वादशीबुधवारेणसिद्धा ॥ तथाचोक्तम् ॥ बुधवारेद्वितीयाचद्वादशीति ॥ तस्यांरविवारेणक्रकचाख्यो विरुद्धयोगोभवति ॥ सूर्योविशाखाभरणीद्वादश्यथचतुर्दशी ॥ मघानुराधाज्येष्ठाचवर्जनीयाःप्रयत्नतइति ॥ द्वादश्यांव्रतपौष्टिकादिकर्म कार्यम् ॥ तच्चोक्तमेवव्रतपौष्टिकेद्वितीयाद्वादश्योरिति ॥ तत्रबिल्वफलंनभक्षयेत् ॥ नखचर्मतिलानिचेतिप्रागुक्तमेव ॥ दंतकाष्ठंचवर्जयेत् ॥ तच्चोक्तम् ॥ नवमीद्वादशीषुचेति ॥ क्रूरग्रहेमकरस्थेसतिद्वादशीपूर्णिमाचाशुभाभवति॥परतस्तथैवेत्युक्तमेव॥सूर्येतुलामकरस्थे द्वादशीदग्धाभवति ॥ तच्चोक्तम् ॥ तुलामकरयोश्चदग्धाइति ॥ द्वादश्यांयोगिनीसांमुख्यान्नैर्ऋत्येयात्रानकार्या॥ सर्वद्वादशीषुतिथिपरत्वे नविष्णुःपूज्यः ॥ ॥ इतिश्रीसूर्यसेनमहीमहेन्द्रविरचितेनिर्णयामृते द्वादशीनिर्णयः॥ ॥ अथत्रयोदशीनिर्णयः॥ ॥तत्रशुक्लत्रयोदशीपूर्वविद्धैवोपोष्या ॥ तदुक्तंब्रह्मवैवर्ते॥ त्रयोदशीप्रकर्त्तव्याद्वादश्यासहितामुने॥भूतविद्धानकर्त्तव्यादर्शपूर्णाकदाचनेति ॥ पैठीनसिरप्याह ॥ पंचमीसप्तमीचैवदशमीचत्रयोदशी॥प्रातिपन्नवमीचैवकर्त्तव्यासंमुखीतिथिरिति ॥ अनयोर्वाक्ययोःशुक्लपक्षपदाभावेपिकृष्णपक्षत्रयोदश्याःपरविद्धायाएवविधानात् ॥ पूर्वविद्धाविधानंशुक्लत्रयोदशीविषयमितिपरिशेषप्रमाणेनगम्यते ॥ तथा ॥ षष्ठ्यष्टमीअमावास्याकृष्णपक्षेत्रयोदशी ॥ एताः परयुताःपूज्याःपराःपूर्वेणसंयुताः॥तथाच ॥ एकादश्यष्टमीषष्ठीद्वितीयाचचतुर्दशी ॥ त्रयोदशीअमावास्याउपोष्याःस्युःपरा

न्विताइति ॥ अत्राप्यमावास्यासाहचर्याभिधानात्त्रयोदशीकृष्णैवग्रा
ह्या ॥ ॥इतित्रयोदशीसामान्यनिर्णयः॥ ॥ अथचैत्रशुक्लत्रयोदश्यनं
गत्रयोदशी ॥ साचपूर्वैवोपोष्या॥तदुक्तंसंवर्तेन ॥कृष्णाष्टमीस्कन्दष
ष्ठीसावित्रीवटपैतृकी ॥ अनंगत्रयोदशीरंभाउपोष्याःपूर्वसंयुताइ
ति ॥ अनंगत्रयोदश्यांकामदेवपूजाच भविष्योत्तरपुराणे चैत्र
मासतिथिप्रक्रमेप्रोक्ता ॥ यथा ॥ अस्यांस्नात्वात्रयोदश्यामशो
काख्यंनगंलिखेत्॥सिंदूररजनीरंगैरतिप्रीतिसमन्वितम् ॥ कामदेवंवसं
तंचवाजिवक्त्रंझषध्वजम् ॥ मध्याह्नेपूजयेद्भक्त्याभक्ष्यैर्गन्धैःस्रगंबरैः॥
मंत्रेणानेनकौन्तेयनवभार्यासमन्वितम्॥मन्त्रश्चनमोरामायकामायदेव
देवस्यमूर्तये ॥ ब्रह्मविष्णुशिवेंद्राणांनमःक्षेमंकरायवै इति ॥ ततस्त
स्याग्रतोदेयामोदकाघृतपाचिताः॥ नानाप्रकारभक्ष्याश्चकामोमेप्रीय
तामिति ॥ स्वपतिंपूजयेन्नारीवस्त्रमाल्यविभूषणैः॥कामोयमितिसंचिं
त्यप्रहृष्टेनांतरात्मना ॥ रात्रौजागरणंकुर्यात्सुखरात्रिर्यथाभवेत् ॥
पूजयेद्द्विप्रदांपत्यंवस्त्रालंकारभूषणैः ॥ एवंयःकुरुतेपार्थवर्षेवर्षेमहो
त्सवम् ॥ वसंतसमयेप्राप्तेहृष्टपुष्टःसदाभवेत् ॥ कूर्मपुराणेतुविशे
षउक्तः ॥ मधुशुक्लत्रयोदश्यांमदनंचंदनात्मकम् ॥ कृत्वासंपूज्ययत्ने
नप्रीणयेद्व्यजनेनच ॥ ततःसंधुक्षितःकामःपुत्रपौत्रसमृद्धिदइति ॥[१]
इत्यनंगत्रयोदशी ॥ अथवापक्षद्वयगतासुसर्वमासत्रयोदशीषुकामःपू
ज्योविष्णोर्यात्रोत्सवःकार्यः॥ तदुक्तंमत्स्यपुराणे ॥त्रयोदशीषुसर्वासु
कामःपूज्योथवाजनैः॥ यात्रोत्सवश्चविधिवत्कर्तव्यश्चाथवैष्णवैरिति॥
भाद्रपदकृष्णत्रयोदशीयुगादिः॥तदुक्तम्॥नभस्येचत्रयोदशीति॥सैव
रवौहस्तनक्षत्रेस्थितेचंद्रेमघास्थेगजच्छायेत्युच्यते॥तदुक्तम् ॥ यदीं
दुःपितृदैवत्येहंसश्चैवकरेस्थितः ॥ त्रयोदशीगजच्छायाश्राद्धेपुण्यैरवा
प्यते॥अत्रमधुघृतसंयुक्तेनपायसेन श्राद्धंकुर्यात् ॥ तथापितृगाथा ॥
अपिनःस्वकुलेजायाद्योनोदद्यात्त्रयोदशीम्॥ पायसंमधुसर्पिभ्यांवर्षासु

१ सर्वकामसमृद्धये इ० पा० ।

चमघासुचेति ॥ कार्तिकेकृष्णत्रयोदश्यां निशामुखेगृहाद्बहिर्य
मायदीपंदद्यात् ॥तदुक्तंस्कंदपुराणे ॥ कार्तिकस्यासितेपक्षेत्रयो
दश्यांनिशामुखे ॥ यमदीपंबहिर्दद्यादपमृत्युर्विनश्यति ॥
दीपमंत्रः ॥ मृत्युना पाशहस्ताभ्यांकालेनशामयासह॥ त्रयोदश्यांदी
पदानात्सूर्यजःप्रीयतामिति ॥ याकाचित्रयोदशीप्रदोषव्यापिनीशनि
वारयुक्ताभवति ॥ तत्रप्रदोषेशिवंसंपूज्यनक्तव्रतंकुर्यात् ॥ तथाच
स्कंदपुराणे ॥ श्रीदेव्युवाच ॥ देवकेनविधानेनप्रदोषव्रतमुत्तमम् ॥
विधातव्यंनरैःस्त्रीभिःसंतानफलसिद्धये ॥ ईश्वरउवाच ॥ यदा
त्रयोदशीशुद्धामंदवारेणसंयुता ॥ आरब्धव्यंव्रतंतत्रसंतानफलसि
द्धये ॥ आयुरारोग्यसिद्ध्यर्थंभानुवारेणसंयुतेति॥ ऋणनिर्मोचनार्थं
तुभौमवारेणसंयुता ॥ सौभाग्यश्रीसमृद्ध्यर्थंशुक्रवारेणसंयुताइति ॥
अथकालज्ञानंकृत्वापुत्रादिकामइदंव्रतंकरिष्येइतिसंकल्प्येमंमंत्रमुदी
रयेत् ॥ एकवत्सरपर्यंतंप्रतिपक्षत्रयोदशीम् ॥ प्रदोषेशिवमभ्य
र्च्यनक्तंभोक्ष्यामिशंकरेति ॥ ततस्तुलोहितेभानौस्नात्वासुनियतोव्र
ती ॥ पूजास्थानंततोगत्वाप्रदोषेशिवमर्चयेत् ॥ पूजांगुरूपदिष्टवि
धिनाआगममंत्रैर्वैदिकमंत्रैर्वापंचामृतस्नपनादिषोडशोपचारैर्यथावि
भवंकुर्यात् ॥ ततश्चभवादिनामभिःपूजयेत् ॥ ॐभवायनमइत्यादिप्र
योगक्रमेणप्रतिनाम्नाशिवायपुष्पाणिसमर्पयेत् ॥ नामानिच ॥भवाय
भयनाशायमहादेवायधीमते॥रुद्रायनीलकंठायशर्वायशशिमौलिने॥
उग्रायोग्राघनाशायभीमायभयहारिणे ॥ ईशानायनमस्तुभ्यंपशूनां
पतयेनमः ॥ इतिपूजयित्वाअनेनमंत्रेणप्रार्थयेत् ॥ यथाभवान्स
मस्तानांपशूनांपाशमोचकः ॥ तथाव्रतेनसंतुष्टःपुत्रंदेहिसुलक्षण-
मिति ॥ सांयावकंचनैवेद्यंसाज्यंसफलशर्करम् ॥ दत्त्वाथोमुखवासं
चतांबूलंक्रमुकादिकम् ॥ समर्प्याष्टसुदिक्ष्वष्टदीपानाज्यपरिप्लुतान् ॥
भवाद्यैर्नामभिर्दत्त्वातैरेवाष्टप्रदक्षिणाः ॥ नमस्काराष्टकंकृत्वाजप्त्वापू

जांसमर्प्यैच ॥ वृषराजंसमभ्यर्च्यवृषमन्त्रेणमंत्रवित् ॥ मंत्रश्च ॥
धर्मस्त्वंवृषरूपेणजगदानन्दकारण ॥ अष्टमूर्तैरधिष्ठानह्यतःपाहिस
नातनेति ॥ वृषायदूर्वांचणकंपानीयंचानिवेद्यच ॥ वृषस्यवृषणंस्पृ
ष्ट्वाशृङ्गयोर्मध्यतःशिवम् ॥ विलोक्यसहितंदेव्यापूजितंप्रार्थयेच्छिवम्
॥ प्रार्थनामंत्रश्च ॥ ऋणरोगादिदारिद्र्यपापक्षुदपमृत्यवः ॥ भयशो
कमनस्तापानश्यंतुममसर्वदेति ॥ पृथिव्यांयानितीर्थानिसागरांता
नियानिच ॥ अंडमाश्रित्यतिष्ठंतिप्रदोषेगोवृषस्यतु ॥ स्पृष्ट्वातुवृषणौ
तस्यशृङ्गमध्यंविलोक्यच ॥ पुच्छंचककुदंचैवसर्वपापैःप्रमुच्यते ॥
निवेद्यकर्मजातंतुदद्याद्वित्तानुसारतः ॥ दक्षिणांब्राह्मणेभ्यश्चततो
मौनंविसर्जयेत् ॥ एवंसंवत्सरंकुर्यात्त्रयोदश्यामिदंव्रतम् ॥ अथवा
मंदवारेणयुक्तामेवत्रयोदशीम् ॥ चतुर्विंशतिकुर्वीतसोभीष्टफलमाप्नु
यात् ॥ इतिशनित्रयोदशीव्रतम् ॥ ॥अथसिद्धविरुद्धादिकंलिख्यते॥
त्रयोदशीभौमवारेणसिद्धाउक्ता ॥ भौमेषष्ठीतृतीयास्यादष्टमी
चत्रयोदशीति ॥ सोमवारेणविरुद्धा ॥ यथा ॥ चन्द्रेचित्रोत्तराषा
ढापूर्वाषाढाविशाखिका ॥ एकादशीत्रयोदश्यौनष्टयोगाःप्रकीर्तिता
इति ॥ त्रयोदश्यांतृतीयावत्संग्रामबलोपयोगीनिकर्माणिकुर्यात् ॥
तदुक्तम् ॥ जयासुविदधीताजिबलकार्याणिनिर्वृतइति ॥ त्रयोदश्यां
क्षत्रियादिवर्णैर्मलापहंस्नानंनकार्यम् ॥ तथाच ॥ स्नातुर्जनस्यदश
मीतनयांचत्रयोदशीत्यादिमलापहस्नाननिषेधश्चोक्तएव ॥ त्रयोदश्यां
दक्षिणदिशियोगिनीसांमुख्याद्यात्रानकार्या ॥ क्रूरग्रहेकुंभस्थिते
त्रयोदशीशुभकार्येषुवर्ज्या ॥ त्रयोदश्यांवृंताकानिनभक्षयेत् ॥
॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेत्रयोदशीनिर्णयः ॥
॥ अथचतुर्दशीनिर्णयः ॥ तत्रचतुर्दश्युपवासादिषुपूर्णिमायुक्तैवग्रा
ह्या ॥ तदुक्तंयुग्मवाक्ये ॥ चतुर्दश्याचपूर्णिमेति ॥ बृहस्पति
नाप्युक्तम् ॥ एकादश्यष्टमीषष्ठीपौर्णमासीचतुर्दशी ॥ अमावास्यातृ

तीयाचताउपोष्याःपरान्विताइति ॥ तथा ॥ शुक्लपक्षेष्टमीचैवशु क्लपक्षेचतुर्दशी ॥ पूर्वविद्धानकर्त्तव्याकर्त्तव्यापरसंयुताइति ॥ कृष्ण पक्षेचतुर्दशीतुपूर्वविद्धाग्राह्या ॥ तदुक्तम् ॥ कृष्णपक्षेष्टमीचैवकृष्ण पक्षेचतुर्दशी ॥ पूर्वविद्धातुकर्तव्यापराविद्धानकुत्रचिदिति ॥ चैत्रशुक्ल चतुर्दश्यांकर्पूरकुंकुमागुरुचंदनादिभिर्दमनकेनचशिवपूजाकार्या ॥ तदुक्तंदेवीपुराणे ॥ चतुर्दश्यांतुकर्त्तव्याकर्पूरागुरुचंदनैः॥कुंकुमैर्भोग वस्त्रैश्चपूजातुमहतीशिवे ॥ वितानध्वजछत्रादिदेयंपूज्यास्तुमातरः ॥ महत्पुण्यमवाप्नोतिअश्वमेधशताधिकमिति ॥ तथा ॥ मधुमासे तुसंप्राप्तेशुक्लपक्षेचतुर्दशी ॥ प्रोक्तादमनपूजेतिसिद्धिदातुमहोत्स वेति ॥ अत्रैवलिंगपुराणेविशेषउक्तः ॥ मदनेनत्रयोदश्यांतालवृन्ता निलेनतु ॥ हंसयानसमारूढःकाममंत्रप्रवर्द्धितः ॥ नारीभिर्वर्द्धित श्चैवत्रैलोक्योन्मादमाचरेत् ॥ तन्निर्वापणकामेनचतुर्दश्यांमहामुने ॥ ततोत्यर्थंमयाप्रोक्तानार्यश्चाथनरास्तथा ॥ कुर्वंतिकर्दमेनैवआत्म नस्तनुलेपनम् ॥ निर्वापितानंगपीडाभवत्येवंममाज्ञया ॥ एतदर्थं सदाकार्यंकर्दमेनचक्रीडनम् ॥ प्रातःप्रहरमात्रंतुकर्त्तव्यंक्रीडनंनरैः ॥ प्रक्षाल्यांगंततःकृत्वागंधमाल्यानुलेपनम् ॥ वस्त्रतांबूलगीतादिरथ्या ट्टादिषुचाचरेत् ॥ चर्चरीयोषितैश्चैवकृत्वानित्यंशिवाग्रतः ॥ सर्व कामसमृद्धस्तुवसेच्छिवपुरंनरः ॥ स्वयंभूलिंगमेकंतुदृष्ट्वातस्मिन्दि नेनरः ॥ ज्ञानंलब्ध्वाशिवःसम्यग्भवेदेवनसंशयइति ॥ इतिचैत्रच तुर्दशी ॥ ॥ ज्येष्ठशुक्लचतुर्दश्यांसर्वस्मिन्दिनेपंचतपाःसायंशिवप्री तयेहेमधेनुंदद्यात् ॥ तदुक्तंमत्स्यपुराणे ॥ ज्येष्ठेपंचतपाःसायंहेमधे नुप्रदोदिवम् ॥ यातिशुक्लचतुर्दश्यांरुद्रव्रतमिदंस्मृतामिति ॥ इति ज्येष्ठचतुर्दशी ॥ भाद्रपदशुक्लचतुर्दश्यामनंतव्रतंकुर्यात् ॥ साचउदय व्यापिनीग्राह्या ॥ यथाचोक्तम् ॥ चतुर्दश्याचपूर्णिमेति ॥ शुक्लपक्षेच तुर्दशीति ॥ भविष्योत्तरेपि ॥ तथाभाद्रपदस्यांतेचतुर्दश्यांद्विजो

१ अर्चयेद्योषितश्चैव इ० पा०।

त्तम ॥ पौर्णमास्यासमायोगेव्रतंचानंतकंचरेदिति ॥ तथाचस्कंद पुराणे ॥ मुहूर्तमपिचेद्भाद्रेपूर्णिमायांचतुर्दशी ॥ सम्पूर्णातांविदुस्तस्याम्पूजयेद्विष्णुमव्ययम् ॥ अत्रकेचिदाहुः ॥ मध्याह्नेभोज्यवेलायांसमुत्तीर्यसरित्तटे ॥ ददर्शशीलासास्त्रीणांसमूहंरक्तवाससाम् ॥ चतुर्दश्यामर्चयंतंभक्त्यादेवंपृथक्पृथगिति ॥ व्रतकल्पे मध्याह्नेपूजाभिहिता ॥ अतोमध्याह्नव्यापिन्यांचतुर्दश्यामनंतव्रतं कुर्यादिति ॥ नैतद्युक्तिसहम् ॥ यतइदमितिहासमात्रंनविधिः ॥ विधिवाचकानां व्रतंकुर्यात्करोतुकर्तव्यमित्यादिलिङ्लोट्तव्यप्रत्ययानामभावात् ॥ अन्यथा ॥ सापिशीलाव्रतंचक्रेकरेबद्धासुदोरकम् ॥ पाथेयशेषंविप्रायदत्त्वाभुक्त्वातथैवचेतितत्रैवोक्तत्वाच्छीलयामध्याह्नेप्रारब्धमिति ॥ व्रतप्रारम्भोपिमध्याह्नएवप्रसज्येत सचनिषिद्धः ॥ व्रतस्यप्रातरेवारभ्यकार्यत्वात् ॥ तदुक्तम् ॥ प्रातरारभ्यमतिमान्कुर्यान्नक्तव्रतादिकम् ॥ नापराह्णेनमध्याह्नेपितृकालौहितौ स्मृताविति ॥ अन्येत्वाहुः॥ अनंतव्रतस्यैकभक्तरूपत्वान्मध्याह्नव्यापिन्यामेवकार्यमिति॥ तदपिन ॥चतुरस्रमिवप्रतिभाति ॥ अत्रैकभक्तं कुर्यादित्येकभक्तस्याविधानात् ॥ किंतु ॥ पक्त्वाप्रस्थंघृतेनैवगोधूमान्नंप्रयत्नतः॥ अर्द्धंविप्रायदातव्यमर्धमात्मनिभोजनमितिअनन्तपूजांगत्वेनभोजनमात्रंविहितम् ॥अतश्चात्रानंतपूजनस्यैवप्राधान्यम् ॥तस्य चपूर्वाह्णोवैदेवानामितिदैविकत्वात्पूर्वाह्णएवविधानंसिद्धम् ॥ अतश्च स्वल्पायामप्युदयकालव्यापिन्यांचतुर्दश्यामुपक्रम्यपूर्णिमाभावेपिपूजादिकंकार्यम् ॥ उदयव्यापिन्यास्तिथेर्दैवकृत्येषुसंपूर्णत्वाभिधानात्॥तदुक्तंकण्वेन ॥ उपवासव्रतादीनांघटिकैकापियाभवेत् ॥ उदयेसा तिथिर्ज्ञेयाविपरीतातुपैतृकइति ॥ आदिशब्दादेकभक्तायाचितनक्तानामुपसंग्रहः ॥ तथाच उदयन्नेवसवितायांतिथिंप्रतिपद्यते ॥ सातिथिः सकलाज्ञेयादानाध्ययनकर्मस्विति ॥ सुमंतुरपि ॥ उदितेदैविकंभा

नौपित्र्यंचास्तंगतेरवौ ॥ द्विस्त्रिर्मुहूर्तमह्नोयासातिथिर्हव्यकव्ययोरिति ॥ अस्यार्थः ॥ यातिथिर्भानावुदितेअह्नोद्विमुहूर्तंव्याप्नोतितस्यां दैविकंकार्यम् ॥ उदयानन्तरंद्विमुहूर्तव्यापिन्यांदैविकंकार्यमित्यर्थः॥ यातिथिर्भानावस्तंगतेअह्नोद्विमुहूर्तंव्याप्नोतितस्यांपित्र्यंकार्यं अस्तमयात्प्राक्त्रिमुहूर्तव्यापिन्यांपित्र्यंकार्यमित्यर्थः ॥ अतश्चपूर्णिमायुक्तायामुदयकालव्यापिन्यांचतुर्दश्यामनंतव्रतंकार्यमितिसिद्धम्॥ इत्यनन्तचतुर्दशी ॥ अथकार्त्तिककृष्णचतुर्दशीमहाचतुर्दशीप्रेतचतुर्दशी ॥ तत्रोषस्यभ्यंगस्नानंचकृत्वायमतर्पणादिकंकृत्वामाषपत्रभोजनं शैवतपोधनपूजनंदीपदानादिकंचकुर्यात् ॥ तदुक्तं भविष्योत्तरे ॥ कार्तिकेकृष्णपक्षेतुचतुर्दश्यांदिनोदये ॥ अवश्यमेवकर्त्तव्यंस्नानंनरकभीरुभिः ॥ तथा ॥ पूर्वविद्धचतुर्दश्यांकार्तिकस्यासितेतरे ॥ पक्षेप्रत्यूषसमयेस्नानंकुर्यात्प्रयत्नतइति ॥ ब्रह्मपुराणे ॥ तैलेलक्ष्मीर्जलेगंगादीपावल्याश्चतुर्दशीम् ॥ प्रातःस्नानंतुयःकुर्याद्यमलोकंनपश्यति॥ अपामार्गमथोतुंबींप्रपुन्नाटमथापरम्॥ भ्रामयेत्स्नानमध्येतुनरकस्यक्षयायवै इति ॥ तथाच ॥ अपामार्गस्यपल्लवान्भ्रामयेच्छिरसोपरि ॥ ततश्चतर्पणंकार्यंयमराजस्यनामभिः ॥ अपामार्गभ्रामणमंत्रस्तु ॥ सीतालोष्टसमायुक्तसकण्टकदलान्वित ॥ हरपापमपामार्गभ्राम्यमाणःपुनःपुनरिति ॥ यमनामानिच ॥ यमायधर्मराजायमृत्यवेचांतकायच ॥ वैवस्वतायकालायसर्वभूतक्षयायच ॥ औदुंबरायदध्नायनीलायपरमेष्ठिने ॥ वृकोदरायचित्रायचित्रगुप्तायतेनमइति॥ यमतर्पणंतुसव्येनवापसव्येनकार्यम्॥ यतस्तस्यदेवत्वंपितृव्यत्वंच ॥ तदुक्तंस्कंदपुराणे ॥ दक्षिणाभिमुखोभूत्वातिलैःसव्यंसमाहितः॥देवतीर्थेनदेवत्वात्तिलैःप्रेताधिपोयतइति ॥ तथाच ॥ यज्ञोपवीतिनाकार्यंप्राचीनावीतिनाथवा ॥ देवत्वंचपितृत्वंचयमस्यास्तिद्विरूपतेति ॥ ततः प्रदोषसमयेदीपान्दद्या

न्मनोरमान् ॥ ब्रह्मविष्णुशिवादीनांभवनेषुमठेषुच ॥ प्राकारो द्यानवापीषुप्रतोलीनिष्कुटेषुच ॥ मंदुरासुविविक्तासुहस्तिशाला सुचैवहीति॥ लिंगपुराणेपि ॥ ततःप्रेतचतुर्दश्यांभोजयित्वातपोधना न् ॥ शैवान्विप्रांस्त्वथपरान्शिवलोकेमहीयते ॥ दानंदत्त्वातुतेभ्य श्चयमलोकंनगच्छतीति ॥ तथाच ॥ माषपत्रस्यशाकेनभुक्त्वातत्र दिनेनरः ॥ प्रेतचतुर्दशीकालेसर्वपापैःप्रमुच्यतइति ॥ तथा ॥ नक्तंप्रे तचतुर्दश्यांयःकुर्याच्छिवतुष्टये॥ नतत्क्रतुशतेनापिप्राप्यतेपुण्यमीदृ शम् ॥ कुमार्योबटुकाःपूज्यास्तथाशैवास्तपोधनाः॥ राजसूयफलंते नप्राप्यतेनात्रसंशयइति ॥ इयंभौमवारयुक्ताचित्राख्या ॥ तदुक्तं पुष्करपुराणे ॥ कार्तिकेभौमवारेणचित्राकृष्णचतुर्दशी ॥ तस्यांभूते शमभ्यर्च्यगच्छेच्छिवपुरंनरइति ॥ कार्तिकेशुक्लचतुर्दशीपाषाणचतु र्दशी ॥ तदुक्तंदेवीपुरणे ॥ कार्तिकेशुक्लपक्षेचयापाषाणचतुर्दशी ॥ तस्यामाराधयेद्गौरींनक्तंपाषाणभक्षकः ॥ ऐश्वर्यसौख्यसौभाग्यरूपा णिप्राप्नुयान्नरइति ॥ इतिकार्तिकचतुर्दशी ॥ ॥ माघशुक्लचतुर्दशी आरटंत्याख्या ॥ तत्रानर्कोदयेनद्यादौस्नात्वायमंसंपूज्यतस्मैसप्तभि र्नामभिःसप्तसप्ततिलोदकांजलीन्दत्त्वा तिलहोमादिकंकृत्वा पितॄणां श्राद्धंकृत्वाब्राह्मणेभ्यः कृसरादिभोजनंदत्त्वास्वयमपिकृसरंभुक्त्वास र्वपापैःप्रमुच्यते ॥ तदुक्तंब्रह्मपुराणे ॥ माघशुक्लचतुर्दश्यांविष्णो र्देहान्मरीचयः ॥ निश्चेरुस्तिलकाकाराःशतशोथसहस्रशः ॥ अन र्काभ्युदितेकालेसत्सुतारांशुकेष्वपि ॥ राजाचतत्रसंपूज्योयमःप्रलय भास्करः ॥ सर्वाङ्गसंधिसंभूतानद्योविष्णोश्चतत्रवै ॥ अरुणोदयवे लायामारटंत्योपिनित्यशः ॥ नियुक्ताविष्णुनासर्वाःकस्यपापंपु नीमहे ॥ निमित्तंपंचतारेयंतत्रप्रोक्तंयतोभुवि ॥ तदासापिनिशाज्ञे यातारारात्रिःसुदारुणा ॥ तत्रोपोष्यत्रयोदश्यांसंप्राप्तेतुनिशाक्षये ॥ स्नात्वापूज्योजगद्भर्त्ताहरिःपूज्याश्चतारकाः ॥ यमोनद्यश्चतीर्थानिदे

१ श्चविद्रुषः इ० पा० ।

वताःपितरस्तथा नैवेद्यैर्विविधाकारैःकृसरेणतुभूरिणा वह्निःपूज्य श्चभगवान्घृताक्तैस्तिलतंडुलैः ॥ नमःप्रणवसंयुक्तान्सतिलांश्चजलां जलीन् ॥ यमायसप्तवितरेद्धर्मराजायसप्तच ॥ मृत्यवेसप्तवितरेत्तथा सप्तांतकायच ॥ वैवस्वतायसप्तैवसप्तकालायचैवहि ॥ सप्तदेयाश्चवि धिवत्सर्वप्राणहरायच ॥ कृसरंभोजनीयाश्चब्राह्मणास्तदनंतरम् ॥ श्राद्धंदत्त्वापितृभ्यश्चविमुक्तःसर्वपातकैः ॥ ततोविभज्य बंधुभ्यः कृसरंभक्षयेत्स्वयमिति ॥ इत्यारटंतीचतुर्दशी ॥ ॥ अथशिवरात्रिर्निर्णीयते ॥ ॥ शिवरात्रिचतुर्दशीप्रदोषव्यापिन्येव प्रायेणोपोष्या ॥ तदुक्तम् ॥ प्रदोषव्यापिनीग्राह्याशिवरात्रिःशिवप्रि यः॥रात्रौजागरणंयस्मात्तस्मात्तस्यामुपोषणमिति ॥अत्रप्रदोषश्चतुर्ना ड्यात्मकएवग्राह्यः॥ साचद्विविधा ॥ शुद्धाविद्धाच ॥ शुद्धात्वेकवि धैवसूर्योदयमारभ्यपुनःसूर्योदयपर्याप्तव्यापित्वात् ॥ विद्धातुषड्वि धा॥ यापूर्वदिनएवप्रदोषव्यापिनीनद्वितीयदिवसेसाप्रथमा॥द्वितीयदि नएवप्रदोषव्यापिनीनप्रथमदिनेसाद्वितीया ॥ याप्रथमदिनेप्रदोषमधि कंव्याप्नोति ॥ द्वितीयदिनेप्रदोषंस्वल्पंस्पृशतिसातृतीया॥ याद्विती यदिनेप्रदोषमधिकंव्याप्नोतिपूर्वदिनेस्वल्पंस्पृशति साचतुर्थी ॥ योभयत्रसंपूर्णप्रदोषंव्याप्नोतिसापंचमी ॥ यानोभयत्रप्रदोषंव्याप्नोति साषष्ठी ॥ एवंसप्तविधा ॥ तत्रशुद्धायामविवादः ॥ विद्धाभेदेषुतु पूर्वदिनेएवप्रदोषव्यापिनीप्रथमा ॥ द्वितीयदिनएवप्रदोषव्यापिनीद्वि तीयाच प्रदोषव्यापिन्येवोपोष्या ॥ तदुक्तंशिवपुराणे ॥ प्रदोषव्या पिनीग्राह्याशिवरात्रिःशिवप्रियैः ॥ रात्रौजागरणंयस्मात्तस्मात्तस्या मुपोषणमिति॥पूर्वदिनेअधिकप्रदोषव्यापिनीतृतीयासातुपूर्वैवोष्या॥ अधिकप्रदोषव्यापित्वात् ॥ तदुक्तम् ॥ माघफाल्गुनयोर्मध्येयास्या च्छिवचतुर्दशी ॥ ॥ अनंगेनसमायुक्ताकर्तव्यासासदातिथिरिति ॥ ॥ तथाच ॥ त्रयोदश्यस्तगेसूर्येचतसृष्वेवनाडिषु ॥ भूतविद्धातुया

तत्रशिवरात्रिव्रतंचरेदिति ॥ नन्वेवंसति ॥ भवेद्यत्रत्रयोदश्यांभूतव्या सामहानिशा ॥ शिवरात्रिव्रतंतत्रकुर्याज्जागरणंतथेत्यादिवचनविरोधःस्यादितिचेत् ॥ महानिशावेधोपिग्राह्यः॥ किमुत॥ चतुर्नाड्यात्मकवेधइत्येवंपरत्वादित्यादिवाक्यानांनकश्चिद्विरोधः॥ तथाच ॥ श्रावणीदुर्गनवमीतथा[१]दूर्वाष्टमीचया ॥ पूर्वविद्धातुकर्तव्याशिवरात्रिर्बलेर्दिनमिति ॥ नन्वस्यांचतुर्दश्यामुपोषितायांपरदिनेचतुर्दश्याःकिंचित्प्रदोषस्पर्शित्वाद्रात्रौतिथ्यंतोभवति ॥ अतोरात्रौतिथ्यंतेपारणंप्रसज्येत ॥ तच्चनिषिद्धम् ॥ तदुक्तंकालादर्शे ॥ सर्वेष्वेवोपवासेषुदिवापारणमिष्यते॥ अन्यथापुण्यहानिःस्याद्दतेधारणपारणमिति॥ तथाच॥ अन्यतिथ्यागमोरात्रौतामसस्तैजसोदिवा ॥ तामसेपारणंकुर्वंस्तामसींगतिमाप्नुयादित्यादि ॥ अमावास्यायांचरात्रौभोजनंनिषिद्धम् ॥ यथा ॥ भूताष्टम्योर्दिवाभुक्त्वारात्रौभुक्त्वाचपर्वणि ॥ एकादश्यांदिवारात्रौभुक्त्वाचांद्रायणंचरेदिति ॥ अतश्चपरदिनेतिथ्यन्ताभावेनपारणासंभवेकथंपूर्वत्रोपवासइतिचेत्॥सत्यम् ॥अत्रातिथ्यंताभावेपिदिवैवपारणंकुर्यात् ॥ तदुक्तम् सात्वस्तमयपर्यंतंव्यापिनीचेत्परेहनि ॥ दिवैवपारणंकुर्यात्पारणेनैवदोषभागिति ॥ नन्वेवमप्यत्रदिवापारणंनसंभवति ॥ चतुर्दश्यास्तमयादूर्ध्वमपिप्रदोपस्पर्शित्वादस्तमयपर्यंतव्यापित्वादितिचेत्सत्यम् ॥ अत्रसात्वस्तमयपर्यंतेतिवचनंदिवातिथ्यंताभावप्रतिपादनपरम् ॥ नत्वस्तमयादूर्ध्वंतिथिसद्भावनिषेधपरम् ॥ एकस्यवचनस्यार्थद्वयाभिधानानुपपत्तेरित्यलमतिप्रपञ्चेन ॥ यामत्रयोर्ध्वगामिन्यांप्रातरेवहिपारणमित्यादिवाक्यान्यप्यस्मिन्नेवविषयेयोज्यानि ॥द्वितीयदिनेधिकप्रदोषव्यापिनीचतुर्थीतुपरैवोपोष्या॥ तदुक्तंस्मृतिसंग्रहे ॥ शिवःपरोनिशायाश्चेदमाचाह्निभुजिक्षयइति ॥ उभयत्रप्रदोषव्यापिनीपञ्चमीतुपरैवोपोष्या ॥ तदुक्तम् ॥ माघासिते भूतदिनंहिराजन्नुपैतियोगंयदिपंचदश्याः ॥ जयाप्रयुक्तांनतुजातुकु

[१] दूर्वाचैवहुताशनी इ० पा० ।

यांच्छिवस्यरात्रिंप्रियकृच्छिवस्येति ॥ तथा ॥ शिवरात्रिव्रतेभूतां कामविद्धांविवर्जयेदिति ॥ ननुपूर्वदिनेचतुर्दश्याःसकलरात्रिव्यापित्वात्तत्रैवकुतोनोपवासउक्तइतिचेत् ॥ सत्यम् ॥ पूर्वदिनेउपोषितेपरदिने तिथ्यंताभावेनपारणासंभवात् ॥ अत्रापि सात्वस्तमयपर्यंतव्यापिनी चेत्परेहनि ॥ दिवैवपारणंकुर्यादितिन्यायोस्त्विवतिचेत् ॥ न ॥ अत्रपरदिनेपिसंपूर्णप्रदोषव्यापित्वेनोपवासस्यविधानात्॥नोभयत्रप्रदोषव्यापिनीषष्ठीतुपूर्वैवोपोष्या ॥ तदुक्तंब्रह्मवैवर्ते॥ सूर्यास्तेनवनाडीषुभूतविद्धात्रयोदशी ॥ शिवरात्रिव्रतंतत्रकुर्याज्जागरणंतथेति ॥ तथा च ॥ त्रयोदशीयदापूर्वदिनेभुक्तिप्रमाणतः ॥ जागरेशिवरात्रिःस्यान्निशिपूर्वाचतुर्दशी ॥ अस्यार्थः ॥ यस्यांत्रयोदश्यामुपोषितायां द्वितीयदिनेदिवापारणपर्याप्ततिथ्यंतोलभ्यतेसैवोपोष्या ॥ तथाच ॥ कृष्णाष्टमीस्कंदषष्ठीशिवरात्रिश्चतुर्दशी॥ एताःपूर्वयुताःकार्यास्तिथ्यंतेपारणंभवेत् ॥ तथा ॥ जन्माष्टमीरोहिणीचशिवरात्रिस्तथैवच ॥ पूर्वविद्धैवकर्तव्यातिथिभांतेचपारणामिति ॥ तत्रापिदिवातिथ्यंतपारणसंभवेतिथ्यंतेपारणंकार्यम् ॥ असंभवेतुतिथ्यंताभावेपिदिवैव पारणंकार्यम् ॥ अतश्चात्रयान्यपिपूर्वविद्धाप्रतिपादकानिवाक्यानितानिपरदिनेअस्तमयोर्ध्वभाविचतुर्नाड्यव्याप्तिविषयाणिदिवापारणपर्याप्ततिथ्यंतसद्भावपराणिच ॥ यानिपुनःपरविद्धाप्रतिपादकानि तानिपरदिनेस्तमयोर्ध्वभाविचतुर्नाडीव्याप्तिविषयाणिदिवातिथ्यंताभावविषयाणिचवेदितव्यानीतिसिद्धांतः ॥ इतिशिवरात्रिनिर्णयः ॥

अथसिद्धविरुद्धादिकंलिख्यते ॥ चतुर्दशीशनिवारेणसिद्धा ॥ शनौ चतुर्थीनवमीचतुर्दश्यथरोहिणीत्याद्युक्तमेव ॥ रविवारेणविरुद्धा ॥ सूर्येविशाखाभरणीद्वादश्यथचतुर्दशीत्युक्तम्॥ चतुर्दश्यांशत्रुवधादिकंकार्यम् ॥ तदुक्तम्॥ चतुर्दश्यांचतुर्थ्यांतुनवम्यांचारिमर्दनमिति ॥ अत्रक्षौरक्रियांविवर्जयेत् ॥ सर्वत्रयात्रांचवर्जयेत् ॥ विशेषतोयो

गिनीसांमुख्याद्वायव्यांयात्रानकार्या ॥ मीनस्थेक्रूरग्रहेचतुर्दशीपूर्णि माचाशुभास्यात् ॥ दंतधावनंचवर्ज्यम् पर्वत्वात् ॥ सर्वत्रचतु र्दशीषुतिथिपत्वाच्छिवःपूज्यः ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविर चितेनिर्णयामृतेचतुर्दशीनिर्णयः ॥ ॥ अथपूर्णिमानिर्णीयते ॥ सा वटसावित्रीव्यतिरिक्तव्रतादिषुपरान्वितैवोपोष्या ॥ तदुक्तम् ॥ एका दश्यष्टमीषष्ठीपौर्णमासीचतुर्दशी ॥ अमावास्यातृतीयाचताउपो ष्याःपरान्विताइति ॥ ब्रह्मवैवर्तेपि ॥ भूतविद्धानकर्त्तव्योदर्शःपू र्णाकदाचन ॥ वर्जयित्वामुनिश्रेष्ठसावित्रीव्रतमुत्तममिति ॥ एतेन सावित्रीव्रतेपूर्णिमापूर्वविद्धैवग्राह्याइतिगम्यते ॥ तदुक्तंब्रह्मवैवर्ते ॥ प्रतिपत्पञ्चमीभूतासावित्रीवटपूर्णिमा ॥ नवमीदशमीचैवनोपोष्याः परसंयुताइति ॥ युग्मवाक्येपि ॥ चतुर्दश्याचपूर्णिमेति ॥ यत्तु ब्रह्मपुराणे ॥ षष्ठ्येकादश्यमावास्यापूर्वविद्धातथाष्टमी ॥ पूर्णिमा परविद्धाचनोपोष्यांतिथिपञ्चकमिति ॥ इदमपिसावित्रीव्रतविषयम् ॥ सावित्रीव्रतंचभाद्रपदपूर्णिमायांवक्ष्यते ॥ अथचैत्रपूर्णिमायामिंद्रपूजा कार्या ॥ तदुक्तंदेवीपुराणे चैत्रातिथिप्रक्रमे ॥ पूर्णिमायांतथाका र्यासर्वकामसमृद्धये ॥ अर्चेंद्रायससाध्यायकामिकंलभतेफलमिति ॥ चित्रानक्षत्रयुक्तायामस्यांचित्रवस्त्रंदद्यात् ॥ तदुक्तंविष्णुस्मृतौ ॥ चैत्रीचित्रायुताचेत्स्यात्तस्यांचित्रवस्त्रप्रदानेनसौभाग्यमाप्नोति ॥ इय मेवशनिरविगुरुवारेषुमहापुण्या ॥ तदुक्तंब्रह्मपुराणे ॥ मंदेवार्केगु रौवापिवारेष्वेतेषुचैत्रिकी ॥ तत्राश्वमेधिकंपुण्यंस्नानेनलभतेनरः ॥ दानमक्षय्यतांयातिपितॄणांतर्पणंतथेति ॥ अस्यांसर्वान्देवान्दमन केनाभ्यर्च्यसंवत्सरकृतपूजायाःफलंप्राप्नोति ॥ तदुक्तंलिङ्गपुराणे ॥ चैत्रेमासिसितेपक्षेपञ्चदश्यांयथाविधि ॥ दमनेनार्चयेद्देवानष्टमीभूत योर्कतेइति ॥ वायुपुराणेपि ॥ संवत्सरकृतार्चायाःसाफल्यायाखि लान्सुरान् ॥ दमनेनार्चयेच्चैत्र्यांविशेषेणसदाशिवमिति ॥ ॥ इति

चैत्रपूर्णिमा ॥ वैशाखपूर्णिमायांकृष्णमृगाजिनदानंकार्यम् ॥ यथा यमगाथासु ॥ यस्तुकृष्णाजिनंदद्यात्सखुरंशृंगसंयुतम् ॥ तिलैःप्र च्छाद्यवासोभिःसर्ववस्त्रैरलंकृतम् ॥ वैशाख्यांपौर्णमास्यांतुविशाखा सुविशेषतः ॥ ससमुद्रगुहातेनसशैलवनकानना ॥ सप्तद्विपान्वि तादत्तापृथिवीनात्रसंशयः ॥ तथाचविष्णुः॥कृष्णाजिनेतिलान्कृत्वा हिरण्यंमधुसर्पिषी ॥ ददातियस्तुविप्रायसर्वंतरतिदुष्कृतामिति ॥ इतिवैशाखपूर्णिमा ॥ ज्येष्ठमासिपूर्णिमायांतिलदानंछत्रोपानहा दिदानंचकुर्यात् ॥ तदुक्तमादित्यपुराणे ॥ ज्येष्ठेमासितिलान्दद्या त्पौर्णमास्यांविशेषतः ॥ अश्वमेधस्ययत्पुण्यंतत्प्राप्नोतिनसंशयइ ति ॥ विष्णुरपि॥ज्यैष्ठीज्येष्ठायुताचेस्यात्तस्यांछत्रोपानत्प्रदानेननरो नराधिपत्वमाप्नोति ॥ इतिज्येष्ठपूर्णिमा ॥ आषाढपूर्णिमायांचतुर्दश्या मुपोष्यहरिपूजाकार्या ॥ तदुक्तंब्रह्मपुराणे ॥ चतुर्दश्यामुपोष्याथपौर्ण मास्यांयजेद्धरिमिति॥अस्यामेवपूर्वाषाढानक्षत्रयुक्तायामन्नपानादिकं दानंदद्यात्॥तथाचविष्णुः॥आषाढ्यामाषाढयुक्तायामन्नपानादिदाने नतदेवाक्षय्यमाप्नोति॥ ॥इत्याषाढपूर्णिमा ॥ श्रावणपूर्णिमायांश्रव णनक्षत्रयुक्तायांस्नानंजलक्रीडादिकंसामवेदश्रवणंचकुर्यात् ॥ तदुक्तं ब्रह्मपुराणे ॥ श्रावण्यांश्रवणेचैवपूर्वंहयशिराहरिः ॥ जगादसामवेदंतु सर्वकिल्बिषनाशनम् ॥ सिंधुर्नदीवितस्तायांप्रविष्टातत्रचैवाहि ॥ अ तोर्थंश्रवणेतत्रस्नानंसर्वार्थसिद्धिदम् ॥ कृत्वासंपूजयेद्विष्णुंशंखचक्र गदाधरम् ॥ श्रोतव्यान्यथसामानिपूज्याविप्राश्चसर्वदा ॥ क्रीडितव्यं चभोक्तव्यंतत्रैवस्वजनैःसह ॥ जलक्रीडातुकर्त्तव्यानारीभिर्भर्तृलब्ध या इति ॥ ॥अथोपाकर्मनिर्णीयते॥ ॥तत्रयजुःशाखाध्यायिनःश्रावण पौर्णमास्यामुदयकालव्यापिन्यां ग्रहसंक्रातिदोषरहितायां व्रीह्याद्यौष धिप्रादुर्भावेसतिउपाकर्मकुर्युः ॥ बह्वृचाःश्रावणमासस्यश्रवणनक्षत्रे धनिष्ठानक्षत्रयुक्तेकुर्युः ॥ सामवेदिनःश्रावणमासस्यहस्तनक्षत्रयु

क्तपंचम्यांकुर्युः ॥ ग्रहणादिदोषराहित्यमोषधिप्रादुर्भवश्चसर्वेषांतु ल्यम् ॥ तदुक्तंयाज्ञवल्क्येन ॥ अध्यायानामुपाकर्मश्रावण्यांश्रवणेऽ पिवा ॥ हस्तेनौषधिभावेवापंचम्यांश्रावणस्यात्विति ॥ अत्राध्याया नामिति शाखाभिप्रायेणबहुवचनम् ॥ निगमेपि ॥ श्रावण्यांश्राव णीकर्मयथाविधिसमाचरेत् ॥ उपाकर्मतुकर्तव्यंकर्कटस्थेदिवाकरे ॥ हस्तेनशुक्लपंचम्यांश्रावण्यांश्रवणेनचेति ॥ तथाचगोभिलः ॥ पर्व ण्यौदयिकेकुर्युःश्रावणंतैत्तिरीयकाः ॥ बहृचाःश्रवणर्क्षेतुहस्तर्क्षेसा मवेदिनः ॥ केवलहस्तनक्षत्रेवाचित्रानक्षत्रयुक्तेवा ॥ तथाचगार्ग्यः ॥ पर्वण्यौदयिकेकुर्युःश्रावणंतैत्तिरीयकाः ॥ बहृचाःश्रवणेकुर्युर्ग्रहसंक्रां तिवर्जितइति ॥ चतुर्दशीयुक्तस्यपर्वणोनिषेधः ॥ तदुक्तंकालिकापु राणे ॥ चतुर्दश्यांसमुत्पन्नावसुरौमधुकैटभौ ॥ वेदान्स्वीकुरुतःपद्म योनेस्तौजह्रतुःश्रुतीः ॥ हत्वातावसुरौदेवःपातालतलवासिनौ ॥ आ हृत्यताःश्रुतीस्तस्मैददौलोकगुरुःस्वयम् ॥ संप्राप्तवाञ्छ्रुतीर्ब्रह्मा पर्वण्यौदयिकेपुनः ॥ अतोभूतयुतेतस्मिन्नोपाकरणमिष्यते ॥ आसु रंवर्जयेत्कालंवेदाहरणशंकयेति ॥ यत्तुवचनं॥श्रावणीदुर्गनवमीदूर्वा चैवहुताशनी ॥ पूर्वविद्धातुकर्तव्याशिवरात्रिर्बलेर्दिनामिति॥तत् श्राव ण्यांविधीयमानहिरण्यगर्भपवित्रारोपणविषयम् ॥ उपाकर्मांगभूता भ्युदयिकश्राद्धविषयंवा ॥ अत्रतैत्तिरीयकपदमन्येषामपियजुःशाखि नामुपलक्षकम्॥तेषांकालांतरानभिधानात् ॥व्यासोपि॥ ॥श्रवणेनतु यत्कर्मउत्तराषाढसंयुतम् ॥संवत्सरकृतोध्यायस्तत्क्षणादेवनश्यति ॥ धनिष्ठासंयुतंकुर्याच्छ्रावणंकर्मयद्भवेत् ॥तत्कर्मसफलंविद्यादुपाकरण संज्ञकमिति॥ परिशिष्टेपि ॥ धनिष्ठाप्रतिपद्युक्तंत्वाष्ट्रऋक्षसमन्वितम्॥ श्रावणंकर्मकुर्वीरन्नृग्यजुःसामपाठकाइति ॥ तथाचस्मृत्यंतरे ॥ उपाकर्मप्रकुर्वन्तिक्रमात्सामर्ग्यजुर्विदः ॥ ग्रहसंक्रांत्ययुक्तेषुहस्तश्र वणपर्वस्विति ॥ संक्रांतौग्रहणेचैवसूतकेमृतकेतथा ॥ गणस्नानं

नकुर्वन्तिनारदस्यवचोयथा ॥ अथचेद्दोषसंयुक्तेपर्वणिस्यादुपाक्रिं या ॥ दुःखशोकामयग्रस्ताराष्ट्रेतस्मिन्द्विजातयइति ॥ संक्रांतिग्रहणदोषस्तुअर्द्धरात्रादर्वाङ्गतुपरतः ॥ तथाहगार्ग्यः ॥ अर्द्धरात्रादधस्ताच्चेत्संक्रांतिर्ग्रहणन्तथा॥ उपाकर्मनकुर्वीतपरतश्चेन्नदोषकृत्॥ तथा ॥ यद्यर्धरात्रादर्वाक्तुग्रहःसंक्रमएववा ॥ नोपाकर्मतदाकुर्याच्छ्रावण्यांश्रवणेपिवेति ॥ ग्रहसंक्रांत्यादिदोषेतुभाद्रपदपौर्णमास्यांयजुःशाखिनोवाजसनेयिव्यतिरिक्ताःकुर्युः॥वाजसनेयिनस्तुश्रावणशुक्लपंचम्यामिति ॥यदुक्तंस्मृतिमहार्णवे॥संक्रांतिर्ग्रहणंवापिपौर्णमास्यांयदाभवेत्॥उपाकृतिस्तुपंचम्यांकार्यावाजसनेयिभिरिति ॥तथाच॥ यदिस्याच्छ्रावणंपर्वग्रहसंक्रांतिदूषितम् ॥ स्यादुपाकरणंशुक्लपंचम्यांश्रावणस्यतु ॥ संक्रांतिर्ग्रहणंवापियदिपर्वणिजायते ॥ तन्मासेहस्तयुक्तायांपंचम्यांवातदिष्यते ॥ एतच्चवाजसनेयाभिप्रायमितिकेचिदाहुः श्रावणशुक्लपंचम्यामेवेति ॥ तदयुक्तम् ॥ तथासतिमन्वादिवाक्यानां निरर्थकतास्यात् ॥ बह्वृचास्तन्मासश्रवणर्क्षेछंदोगास्तन्मासहस्तर्क्षेकुर्युः ॥ तथाहमनुः ॥ श्रावण्यांप्रौष्ठपद्यांवाप्युपाकृत्ययथाविधि ॥ युक्तःछंदांस्यधीयीतमासान्विप्रोर्द्धपंचमानिति ॥ अर्द्धः पंचमोमासोयेषांतेअर्द्धपंचमाः ॥ उपाकर्मप्रभृतिसार्द्धचतुरोमासान्स्वाध्यायदिनेष्वधीयेतेत्यर्थः ॥ अपिशब्दाद्भाद्रपदसंबंधिश्रावणहस्तपंचमीनामुपसंग्रहः ॥ तथाच ॥ बह्वृचगृह्यपरिशिष्टकारिका ॥ यदाचौषधयस्तस्मिन्मासेतुनभवंतिचेत् ॥ तदाभाद्रपदेमासिश्रवणेनतदिष्यतइति ॥ अत्रौषध्यभावःसंक्रांत्यादिदोषाणामुपलक्षकः ॥ गोभिलोपि ॥ प्रौष्ठपदींहस्तेनोपाकरणमिति ॥ प्रौष्ठपदींप्राप्येत्यर्थः ॥ यत्तुबौधायनवचनम् ॥ श्रावण्यांपौर्णमास्यामाषाढ्यांवोपाकृत्यच्छंदांस्यधीयीतेति॥तत्तुप्रौष्ठपद्यामपिसदोषायामाषाढ्यांकुर्वीतेत्येतत्परम्॥यत्तुकैश्चिदुक्तम् ॥ आषाढ्याविधानंयजुःशाखिनामे

वतन्न ॥ सर्वशाखाधिकरणन्यायेनकर्मणएकत्वाद्बौधायनोक्तत्वेन यन्नाम्नातंस्वशाखायांपारक्यमविरोधियत् ॥ विद्वद्भिस्तदनुष्ठेयमाग्निहोत्रादिकर्मवदितिवचनाच्चसर्वेषामपि नातोयजुःशाखिनामेवापाढ्यामुपाकर्मवेदितव्यम् ॥ बह्वृचांसामगानांचकस्मिंश्चिच्छाखाविशेषेआषाढमास्युपाकर्मणिविध्यदर्शनादिति ॥ तन्नयुक्तिसहम् ॥ तेषामपिकचिच्छाखाविशेषेश्रृंगग्राहितयानिषेधाभावात्पारक्यमविरोधियादिति न्यायेनैवाषाढ्यांतन्मासिश्रवणर्क्षेहस्तेवाउपाकर्मप्राप्तम् ॥ अन्यथातेषांविहिताकरणेनप्रत्यवायःप्रसज्येत ॥ तदुक्तंस्मृत्यर्थसारे ॥ कस्मिंश्चिद्दिनेग्रहणसंक्रांतिवर्जितेकार्यम् ॥ कर्मणोनलोपोनोत्कर्षइति॥ अथात्रकर्तव्यमुच्यते ॥ ॥ तत्रकार्ष्णाजिनिः ॥ उपाकर्मणिचोत्सर्गेयथाकालंसमेत्यच॥ ऋषीन्दर्भमयान्कृत्वापूजयेत्तर्पयेत्ततइति ॥ बृहत्प्रचेताश्च ॥ भवेदुपाकृतिः पौर्णमास्यांपूर्वाह्णएवतु ॥ ब्राह्मणान्भोजयेत्तत्रपितॄनुद्दिश्यदेवताइति ॥ बौधायनोपि ॥ गौतमादीनृषीन्सप्तकृत्वादर्भमयान्पुनः ॥ पूजयित्वायथाशक्तिवन्दयेदृचमुच्चरेदिति ॥ तत्रगौतमादीनितिस्वस्वशाखोक्तऋषीणामुपलक्षणम् ॥ ऋचामित्यपिवेदान्तराणाम् ॥ भविष्योत्तरेपि ॥ संप्राप्तेश्रावणस्यांतेपौर्णमास्यांदिनोदये ॥ स्नानंकुर्वीतमतिमाञ्छ्रुतिस्मृतिविधानतः ॥ ततोदेवान्पितॄंश्चैवतर्पयेत्परमांभसा ॥ उपाकर्मदिवैवोक्तमृषीणांचैव तर्पणम् ॥ कुर्वीतब्राह्मणैःसार्धवेदानुद्दिश्यशक्तितः ॥ कालवृद्धौतु उपाकर्मणोप्युत्कर्षोभवति ॥ तदुक्तंकात्यायनेन ॥ उत्कर्षःकालवृद्धौस्यादुपाकर्मादिकर्मणि ॥ अभिषेकादिवृद्धीनांनतूत्कर्षोयुगादिष्विति ॥ ननु दशहरासुनोत्कर्षश्चतुर्ष्वपियुगादिषु ॥ उपाकर्मणिचोत्सर्गेह्येतदिष्टंवृषादितिऋष्यश्रृंगवचनेपूर्वोक्तकात्यायनवचनेनचनविरोध इतिचेत् न ॥ ऋष्यश्रृंगवचनस्यछंदोगाविषयत्वात् ॥ यतस्तेषां

---

१ ब्राह्मणः श्राद्धं देवान् इ०पा० ।

कालवृद्धावपिसिंहार्कएवोपाकर्म ॥ यथाहगार्ग्यः॥ सिंहेरवौतुपुष्यर्क्षे पूर्वाह्णेविचरेद्बहिः॥ छंदोगामिलिताःकुर्युरुत्सर्गंस्वस्वछंदसाम्॥ शुक्लपक्षेतुहस्तेनउपाकर्मापराह्णिकमिति ॥ सिंहेरवौहस्तेनापराह्णिकमुपाकर्मपुष्यर्क्षेपूर्वाह्णेउत्सर्जनमित्यन्वयः॥ ननुपर्वणिग्रहणेसतित्रयोदश्यांचतुर्दश्यांवाश्रवणर्क्षेग्रहणवेधदूषितत्वाबह्वृचैस्तूपाकर्मनकार्यम्। वेधश्चस्मृत्यन्तरेउक्तः॥यथा॥ त्रयोदश्यादितोवर्ज्यंदिनानांनवकंध्रुवम्॥ मांगल्येषुसमस्तेषुग्रहणेशशिसूर्ययोः ॥ तथा ॥ द्वादश्यादितृतीयांतोवेधइन्दुग्रहेस्मृतः ॥ एकादश्यादितःसौरेश्चतुर्थ्यंतःप्रकीर्तितः ॥ खंडग्रहेतयोःप्रोक्तमुभयत्रदिनद्वयमिति ॥ दिनद्वयग्रहणात्पूर्वमुत्तरं च ॥ अतश्चतुर्दश्यामपिश्रवणर्क्षेवेधदूषितत्वादुपाकर्मनकार्यमितिचेन्न॥उपाकर्मणिवेधदोषाभावात् ॥ तथा ॥ नित्येनैमित्तिकेजप्येहोमयज्ञक्रियासुच ॥ उपाकर्मणिचोत्सर्गेग्रहवेधोनविद्यतइति ॥ ॥ इत्युपाकर्म ॥ ॥ अथोत्सर्जनमुच्यते ॥ ॥ तदुक्तंयाज्ञवल्क्येन ॥ पौषमासस्यरोहिण्यामष्टकायामथापिवा ॥जलांतेछंदसांकुर्युरुत्सर्गंविधिवद्बहिरिति॥ मनुरपि ॥ पुष्येतुछंदसांकुर्याद्बहिरुत्सर्जनंद्विजः ॥ माघशुक्लस्यवाप्राप्तेपूर्वाह्णेप्रथमेहनीति ॥ अत्रमाघशुक्लस्येति भाद्रपदपौर्णमास्यामुपाकर्मविषयम् ॥ तदामाघशुक्लप्रतिपदएवसार्द्धचतुर्मासत्वसंभवात्॥ हारीतोपि ॥ सार्धपंचमान्मासानधीत्योर्ध्वमुत्सृजेदिति ॥ पंचार्द्धषष्ठान्वेति अत्रसार्द्धपंचमासानित्ययंपक्षआषाढ्यांकृतोपाकर्मविषयम् ॥ तदा ॥ पौषमासशुक्लपक्षस्यसार्धपंचमासत्वसंभवात् ॥ तथाचगोभिलः ॥ छंदोगानिहिताःकुर्युःप्रातरौत्सर्गिकांक्रियाम्॥ अपराह्णेह्युपाकर्मपुष्यहस्तर्क्षयोर्द्विजाइति ॥ अत्रहस्तर्क्षेअपराह्णेउपाकर्म ॥ पुष्येप्रातरुत्सर्जनंकुर्यादित्यर्थः ॥ इत्युत्सर्जनम् ॥ ॥ अत्रैवोपाकर्मानंतरमपराह्णेभद्रारहित्येसतिरक्षाविधिंकुर्यात् ॥ भद्रायांतस्यनिषेधात् ॥ तदुक्तंस्मृतिसंग्रहे ॥ ॥ भद्रा

यद्दिनेकर्तव्येश्रावणीफाल्गुनीतथा ॥ श्रावणीनृपतिंहंतिग्रामंदह
तिफाल्गुनीति ॥ अत्रश्रावणीतिश्रावण्यांक्रियमाणंरक्षाबंधनादि
कर्मगृह्यते ॥ नतूपाकर्म तस्यपृथगुपादानात् ॥ यथानिगमे ॥
श्रावण्यांश्रावणीकर्मयथाविधिसमाचरेत् ॥ उपाकर्मतुकर्तव्यंकर्कट
स्थेदिवाकरेइति ॥ उपाकर्मतुसतिसंभवेभद्रांतएवकार्यम् ॥ असंभवे
तुभद्रायामपिदिनेएवकार्यंनतुरात्रौतस्यासर्वकार्येषुनिषिद्धत्वात् ॥
रक्षाविधिंतुसतिसंभवेभद्रान्तेकुर्यात् दिवाभद्रायांसत्यांतदंतेरात्रौवा
कुर्यात् ॥ नतथोपाकर्म तस्यपूर्वाह्णएवविधानात् ॥ तदुक्तंभविष्यो
त्तरपुराणे ॥ उपाकर्मदिनेप्रोक्तमृषीणांचैवतर्पणम् ॥ ततोपराह्ण
समयेरक्षापोटलिकांशुभाम् ॥ कारयेदक्षतैःशस्तैःसिद्धार्थैर्हेमभूषि
ताम् ॥ वस्त्रैर्विचित्रैःकार्पासैःक्षौमैर्वामलवर्जितैः ॥ विचित्रपक्ष्मग्र
थितांस्थापयेद्भाजनोपरि ॥ उपलिप्तेगृहमध्येदत्तचतुष्केन्यसेच्छुभं
पीठम् ॥ तत्रोपविशेद्राजासामात्यःसपुरोहितःससुहृत् ॥ तदनु
पुरोधानृपतेरक्षांबध्नीतमंत्रेण ॥ मंत्रश्च ॥ येनबद्धोबलीराजादानवेंद्रो
महाबलः ॥ तेनत्वामनुबध्नामिरक्षेमाचलमाचलेति ॥ ब्राह्मणैःक्ष
त्रियैर्वैश्यैःशूद्रैरन्यैश्चमानवैः ॥ कर्त्तव्योरक्षिकाचारोद्विजान्संपूज्यय
त्नतः ॥ अनेनविधिनायस्तुरक्षाबंधंसमाचरेत् ॥ ससर्वदोषरहितःसुखं
संवत्सरंवसेदिति ॥ आषाढ्यांश्रावण्यांप्रौष्ठपद्यांवासर्वदेवानांपवित्रा
रोपणंकार्यम् ॥ तदुक्तंमत्स्यपुराणे ॥ आषाढ्यामथवाष्टम्यांचतु
र्दश्यामुमापतिम् ॥ पवित्रैरर्चयेद्भक्त्याश्रावण्यांचेतरान्सुरानिति ॥
इतिश्रावणीनिर्णयः ॥ ॥ अथभाद्रपदपौर्णमास्यांसावित्रीव्रतम् ॥
सुवासिनीनारीभर्तुरायुर्वृद्धयेसावित्रीव्रतंकुर्यात् ॥ तथाभविष्यो
त्तरे ॥ श्रूयतांपांडवश्रेष्ठसावित्रीव्रतमादरात् ॥ कथयामियथाची
र्णंतयासत्यायुधिष्ठिर ॥ त्रयोदश्यांभाद्रपदेदंतधावनपूर्वकम् ॥ त्रिरा
त्रनियमंकुर्यादुपवासस्यभारत ॥ अशक्तातुत्रयोदश्यांनक्तंकुर्या

ज्जितेंद्रिया ॥ अयाचितंचतुर्दश्यामुपवासेनपूर्णिमामित्यादिविधिस्तुप्रसिद्धएव वटसावित्र्यमावास्यायांवक्ष्यते ॥ अत्रैवलोकपालपूजांकुर्यात् ॥ तदुक्तंब्रह्मपुराणे ॥ पूर्वभाद्रपदायोगेपौर्णमास्यांपितामहम् ॥ शक्राग्नियमयात्वंभोवायुवित्तेशशंकरान् ॥ लोकपालांस्तुरक्षार्थंत्रैलोक्यस्याभिपूजयेत् ॥ पृथिव्याधारणार्थायतथानंतंचभोगिनम् ॥ तस्मात्तत्रलिखेत्पद्ममष्टपत्रंसकर्णिकम् ॥ कर्णिकायांलिखेत्तत्रसानंतंकमलोद्भवम् ॥ प्राच्यादिषुचपत्रेषुवासवाद्यांश्चसायुधान् ॥ ततःक्रमेणतेनैवसंस्थाप्यकलशाञ्छुभान् ॥ पश्चात्संपूजनीयास्तुभक्त्याब्रह्मादयःसुराइति॥ ॥ इतिभाद्रपदपूर्णिमा ॥ अथाश्विनपूर्णिमाकृत्यम् ॥ तदुक्तंब्रह्मपुराणे ॥ आश्वयुज्यांपौर्णमास्यांनिकुंभोवालुकार्णवान् ॥ आयातिसेनयासार्द्धंकृत्वायुद्धंसुदारुणम् तस्मात्तत्रनरैर्मार्गाःस्वगेहस्यसमीपगाः॥ शोधितव्याः[१]प्रयत्नेनभूषितव्याश्चमंडनैः॥वेश्मानिभूषितव्यानिनानारंगैर्विशेषवत्॥सुस्नातैरनुलिप्तैश्चनरैर्भाव्यंसबालकैः ॥ दिवातत्रनभोक्तव्यंमानुषैश्चविवेकिभिः॥स्त्रीवृद्धमूर्खबालैश्चभोक्तव्यंपूजितैःसुरैः ॥ पूज्याश्चसफलैःपत्रैस्तथाद्वारोर्द्ध्वभित्तयः ॥ द्वारोपांतेप्रदीप्तस्तुसंपूज्योहव्यवाहनः ॥ यवाक्षतघृतोपेतैस्तंडुलैश्चसुतर्पिताः ॥ सुपूजनीयःपूर्णेंदुःपयसापायसेनच॥रुद्रःसभार्यःस्कंदश्चतथानंदीश्वरोमुनिः ॥ गोमद्भिःसुरभीपूज्याछागवद्भिर्हुताशनः॥उरभ्रवद्भिर्वरुणोगजवद्भिर्विनायकः ॥ पूज्यःसाश्वैश्चरैमद्भिर्यथाविभवविस्तरैः ॥ ततःपूज्योनिकुंभश्चसमांसैस्तिलतंडुलैः ॥ सुगंधिभिर्घृतोपेतैःकासराक्षैश्चभूरिभिः ॥ कासराक्षोमहिषाक्षगुग्गुलः ॥ ब्राह्मणान्भोजयित्वातुभोक्तव्यंमांसवर्जितमिति॥ अस्यामेवाश्विनीनक्षत्रयुक्तायांघृतपूर्णसुवर्णपात्रंदद्यात् ॥ यदाहविष्णुः ॥ आश्वयुज्यामश्विनीगतेनचंद्रमसाघृतपूर्णंताम्रभाजनंसुवर्णयुतंविप्रायदत्त्वादीप्ताग्निर्भवतीति ॥ इयमेवकौमुदीप्रोक्ता ॥

१ भव इ० पा० । २ निषेक्तव्यामण्डितव्या इ० पा० ।

अस्यामिंद्रंलक्ष्मींचपूजयेत् ॥ तदुक्तंमहाभारते ॥ पूर्णि
माश्वयुजेमासिकौमुदीपरिकीर्त्तिता ॥ कौमुद्यांपूजयेल्लक्ष्मीमिंद्रंचै
रावतस्थितम् ॥ निशिजागरणंकृत्वापरेद्युरुत्सवमाचरेदिति
॥ ॥ इत्याश्विनपूर्णिमानिर्णयः ॥ अथकार्तिकपूर्णिमा ॥ ॥
तत्रक्षीरसागरदानम् ॥ तदुक्तंब्रह्मपुराणे ॥ पौर्णमास्यांतुसंपूज्योभ
क्त्यादामोदरःसदा ॥ ततश्चंद्रोदयेपूज्याःक्षीराब्धेःकृत्तिकास्तुषट् ॥
कार्तिकेयस्तथाखड्गोवरुणश्चहुताशनः ॥ धान्यैःसशूकैर्द्वारोर्द्ध्वं भूषि
तव्यंनिशागमे ॥ माल्यैर्धूपैस्तथागंधैर्भक्ष्यैरुच्चावचैस्तथा ॥ परमा
न्नैःफलैःशाकैर्वह्निब्राह्मणतर्पणैः ॥ एवंदेवांस्तुसंपूज्यदीपोदयोगृहाद्ब
हिः ॥ दीपोपांतेतथागर्तश्चतुरस्रोमनोहरः ॥ चतुर्विंशांगुलःकार्यःसि
क्तश्चंदनवारिणा ॥ गवांक्षीरेणसंपूर्णःसमंतात्परिरक्षितः॥ तत्रहेममयो
मत्स्योमुक्तानेत्रोमनोहरः ॥ प्रक्षेप्तव्योविधानेननमोस्तुहरयेपठेत् ॥
ब्राह्मणायाथयोग्यायदद्यात्तंक्षीरसागरमिति ॥ अत्रैवकाम्यवृषोत्सर्गः
कार्यः ॥ तदुक्तंभविष्योत्तरे ॥ कार्तिक्यांतुवृषोत्सर्गोविवाहःपुण्यल
क्षणैः ॥ कार्यःकुरुकुलश्रेष्ठहरेर्नीराजनंतथा ॥ गजाश्वघृतदानञ्च
घृतधेन्वादयस्तथा ॥ प्रदेयाःपुण्यकृद्भिस्तुतास्ताःसंकल्प्यदेवता
इति ॥ मत्स्यपुराणेपि ॥ कार्त्तिक्यांतुवृषोत्सर्गंकृत्वानक्तंसमाचरे
त्॥शैवंपदमवाप्नोतिशिवव्रतमिदंस्मृतमिति॥ अत्रैवनीलवृषभदानमु
क्तंब्रह्मपुराणे॥यथा ॥नीलंतुवृषभंदद्याच्चतुर्वत्सतरीयुतम् ॥ सर्वसस्य
चरंरम्यंसर्वगंधसमन्वितम् ॥ सुवाससंब्राह्मणायमहाकांतारतारकम्॥
यावंतितस्यरोमाणिशरीरेसंतिसंख्यया॥तावद्युगसहस्राणिस्वर्गेवसति
तत्प्रदः ॥ पूजयित्वाततोविष्णुंरक्तमाल्यानुलेपनैः ॥ भोक्तव्यंगोरस
प्रायंस्वप्तव्यंस्थंडिलेततइति ॥ स्कंदपुराणेतुविशेषउक्तः ॥ नंदि
केश्वरउवाच ॥ स्वामिन्नहंपराधीनःशंभोःसेवापरायणः ॥ नावकाशो
स्तिमेकर्तुंव्रतानिनियमांस्तथा॥ तन्ममैकंसमाचक्ष्वव्रतंव्रतविदांवर॥

१ रंगैर्विचित्रैः इ० पा० ।

येनचीर्णेनभगवन्प्राप्यतेसुमहत्फलम्॥ स्कंदउवाच॥ अस्तिकोजाग
रंनामव्रतानामुत्तमंव्रतम्॥यत्कृत्वासमवाप्नोतिजंतुर्लोकाननुत्तमान्॥
नित्यमाश्वयुजेमासिपूज्यमानोगणेश्वर॥ ऐरावणसमारूढःशक्रोलोका
नुकंपया॥परिभ्रमतिलोकांस्त्रीन्पश्यन्नक्षान्वरप्रदः॥ कोजागरविधानेन
समाराधयतीत्युत॥ तेनकोजागरंनामव्रतंलोकेषुविश्रुतम्॥ विधानंत
स्यवक्ष्यामिशृणुष्वैकाग्रमानसः॥ पूर्णिमाश्वयुजेमासिकौमुदीपरिकी
र्त्तिता॥तत्राराध्यमहालक्ष्मीमिंद्रंचैरावणस्थितम्॥ उपवासंप्रकुर्वीतदी
पान्दद्याच्चभक्तितः॥लक्षंतदर्धमयुतंसहस्रंशतमेववा॥ घृतेनदीपयेद्दी
पांस्तिलतैलेनवाव्रती॥ रात्रौजागरणंकुर्यान्नृत्यगीतपुरःसरम्॥यथावि
भवतोदेयाःपुरवीथीषुदीपकाः॥ चैत्येषुदेवायतनेष्वारामेषुगृहेषुच॥
ततःप्रभातेसुस्नातःसंपूज्यचशतक्रतुम्॥ ब्राह्मणान्भोजयेत्क्षीरघृतश
र्करपायसैः॥ वासोभिर्दक्षिणाभिश्चततस्तान्पूजयेद्द्विजान्॥ यथाश
क्तिचदातव्यादीपाःस्वर्णविनिर्मिताः॥एवंनिवर्त्यविधिवत्ततः पारणमा
चरेत्॥ व्रतस्यास्यविधानेनकल्पान्वैदीपसंख्यकान्॥ अप्सरोभिः
परिवृतःसूर्यलोकेमहीयते॥ इहचायुष्यमारोग्यंपुत्रपौत्रादिसंपदः॥भ
वंतिव्रतमाहात्म्यात्कुलश्रेष्ठचगणेश्वर॥ इतिश्रीस्कंदपुराणेकोजाग
गरव्रतंसंपूर्णम्॥ कृत्तिकादिनक्षत्रयोगेब्रह्मपुराणेअस्यामहत्त्वमुक्तम्॥
यथा॥ आग्नेयंतुयदाऋक्षंकार्त्तिक्यांभवतिक्वचित्॥महतीसातिथिर्ज्ञे
यास्नानदानेषुचोत्तमा॥ यदायाम्यंतुभवतिऋक्षंतस्यांतिथौक्वचि
त्॥ तिथिःसापिमहापुण्यामुनिभिःपरिकीर्त्तिता॥प्राजापत्यंयदाऋक्षं
तिथौतस्यांनराधिप॥ सामहाकार्त्तिकीप्रोक्तादेवानामपिदुर्लभेति॥ इ
यमेवकृत्तिकागतबृहस्पतिचंद्रमोभ्यांसनाथामहाकार्त्तिकी॥तथा॥ पु
ण्यामहाकार्त्तिकीस्याज्जीवेंद्वोःकृत्तिकास्थयोरिति॥ अस्यामेवविशा
खास्थितेसूर्येकृत्तिकास्थितेचंद्रेचपद्मकयोगउत्पद्यते॥ सचपुष्करेषु
दुर्लभः॥ ॥ यथा॥ विशाखासुयदाभानुःकृत्तिकासुचचंद्रमाः॥

सयोगःपद्मकोनामपुष्करेष्वातिदुर्लभः॥ इयंमन्वादिरपि ॥तदुक्तम् ॥ आषाढीकार्त्तिकीचतद्वदिति ॥ ॥ इतिकार्त्तिकीपौर्णमासीनिर्णयः ॥ अथमार्गशीर्षपौर्णमास्यांचंद्रपूजा ॥ तदुक्तंब्रह्मपुराणे मार्गशीर्षांतिथिप्रक्रमे ॥ वामनेत्रंहियद्विष्णोस्तदेवभुवनत्रयम्॥ अनसूयात्मजश्चंद्रस्त्वमृतेनाभ्यषेचयत् ॥ पौर्णमास्यांतुतस्मात्तंपूजयेत्तत्रसर्वदा॥शुक्लैःपुष्पैश्चपयसाश्रद्धयापरयामुदा ॥ धूपैर्दीपैश्चमालिभिर्होमैर्ब्राह्मणतर्पणैः॥ गोभ्यंश्चलवणंदेयंतास्मिन्नहनिसर्वदा ॥ यस्मात्तुलवणंचन्द्राद्दक्षशापाद्विनिःसृतम् ॥ मातास्वसाचदुहितासंपूज्याश्चकुलांगनाः ॥ कांतंरूपंभवेत्स्त्रीणांपूर्णेन्दोःपूजनादिति ॥ अस्यामेवमृगशिरोनक्षत्रयुतायांससुवर्णचूर्णितलवणदानंविष्णुनोक्तम् ॥ यथा ॥ मार्गशीर्षशुक्लपंचदश्यांमृगशिरोनक्षत्रयुक्तायां चूर्णितलवणस्यसुवर्णनाभंप्रस्थमेकंचन्द्रोदयेब्राह्मणायप्रतिपादयेत् ॥ अनेनकर्मणारूपसौभाग्यलाभोजायतइति ॥ ॥ इतिमार्गशीर्षपूर्णिमानिर्णयः ॥ ॥अथपौषीनिर्णयः ॥ तस्यांपुष्यनक्षत्रयुक्तायामलक्ष्मीनाशनंस्नानादिकंकार्यम् ॥ तदुक्तंब्रह्मपुराणे ॥ इदंजगत्पुरालक्ष्म्यात्यक्तमासीत्ततोहरिः ॥ पुरंदरश्चसोमश्चतथापुष्यबृहस्पती ॥ पंचैतेपुष्ययोगेनपौर्णमास्यांतपोबलात् ॥ अलंकृतंपुनश्चक्रुःसौभाग्योत्सवलक्ष्मिभिः ॥ तस्मान्नरैःपुष्ययोगेतत्रसौभाग्यवृद्धये ॥ गौरसर्षपकल्केनसमालभ्यस्वकांतनुम् ॥ कृतस्नानैस्ततःकार्यमलक्ष्मीनाशनंपरम्॥ उद्वर्त्यदेवंचतथासर्वौषधियुतैर्जलैः ॥ स्नापयित्वानवंवस्त्रंगृहीत्वाच्छादनंततः ॥ द्रष्टव्यंमंगलशतंधूपस्रग्माल्यशोभितम् ॥ ततोनारायणःशक्रश्चंद्रःपुष्यबृहस्पती ॥ संपूज्याःपुष्पधूपैश्चनैवेद्यैश्चपृथक्पृथक्॥प्रशस्तैर्वैदिकैर्मंत्रैःकृत्वाग्निहवनंशुभम् ॥ धनैर्विप्रांश्चसंतर्प्यनवैर्वस्त्रैश्चशोभितान् ॥ ततःपुष्टिकरंहृद्यंभोक्तव्यंघृतपायसम्॥ पुष्ययोगेनकर्तव्यंराज्ञास्नानंतुसर्वदेति॥ इतिपौषीपौर्णमासीनिर्णयः॥ ॥ अथमाघपौर्णमासी ॥ ॥अस्यांम

१ भाग्यंदेयंचलवणम् इतिपाठान्तरम् ।

घायुक्तायांतिलैः श्राद्धंतिलपात्रदानंकुर्यात् ॥ ॥ तत्रविष्णुः ॥माघी मघायुताचेत्स्यात्तस्यांतिलैःश्राद्धंकृत्वापूतोभवेदिति ॥ भविष्योत्तरे पि॥माघ्यांमघासुतिलैःसंतर्प्यापितॄदेवताः॥तिलपात्राणिदेयानितिलां श्चापितिलौदनम् ॥ कार्पासदानमत्रैवतिलदानंतुशस्यते ॥ कंबला जिनरत्नानिमोचकौपानकञ्चुकौ ॥ उपानद्दानमत्रैवकथितंसर्वकाम दम् ॥ यत्रवातत्रवास्नानंदानंवित्तानुरूपतइति ॥ भविष्योत्तरे ऽपि ॥ पौर्णमास्यांतुयोमाघेपूजयेद्विधिवच्छिवम् ॥सोऽश्वमेधमवाप्ये हविष्णुलोकेमहीयतइति ॥ ॥ इतिमाघीपौर्णमासीनिर्णयः ॥ अथ फाल्गुनपूर्णिमानिर्णयेहोलिकानिर्णीयते ॥ सासायाह्नव्यापिनीपूर्व विद्धाग्राह्या ॥ तदुक्तम् ॥ सायाह्नेहोलिकांकुर्यात्पूर्वाह्णेक्रीडनंगवाम्॥ दीपंदद्यात्प्रदोषेतुएषधर्मःसनातनइति ॥ तथा ॥ श्रावणीदुर्गनव मीदूर्वाचैवहुताशनी॥पूर्वविद्धैवकर्तव्याशिवरात्रिर्बलेर्दिनमिति ॥ तत्र भद्रायांहोलिकांनदीपयेत् ॥ तदुक्तम् ॥ भद्रायांदीपिताहोलीराष्ट्रभं गंकरोतिवै॥नगरस्यचनैवेष्टातस्मात्तांपरिवर्जयेदिति ॥ तथाचस्मृत्य न्तरे॥भद्रायांद्वेनकर्त्तव्येश्रावणीफाल्गुनीतथा॥श्रावणीनृपतिंहन्तिग्रा मंदहतिफाल्गुनी॥दिनार्द्धात्परतोपिस्यात्फाल्गुनीपूर्णिमायदि॥रात्रौ भद्रावसानेचहोलिकांतत्रदीपयेत् ॥ इति ॥ परदिनेदिनार्द्धात्परतोपि पूर्णिमायांविद्यमानायांपूर्वविद्धायामेवरात्रौभद्रावसानेहोलिकादीपित व्येत्यर्थः ॥ यदासूर्यास्तमयादारभ्यसूर्योदयपर्यंतंभद्रावसानाभा वेसर्वथानिर्णयंकर्त्तुमशक्येकालेभद्रायामपिहोलिकादीपनस्यप्रतिप्र सवमाह ॥ रत्नकोशे ॥ विवादेशत्रुसंहारेभयात्तौराजदर्शने ॥ रोगा र्त्तौवैद्यगमनेभद्राज्ञेयाशुभावहा ॥ रक्षाबंधेऋतुस्नानेकार्त्तिक्यांचरजो त्सवे ॥ देवीपूजासुसर्वासुविष्टेर्दोषोनविद्यते ॥ उत्सर्गेद्विमुखीदाने जातकर्मणिमंगले ॥ प्रसादेषुनरेंद्रस्यविष्टेर्दोषोनविद्यते ॥ राज मार्त्तंडे ॥ सूतिकामंगलस्थानेरोगमुक्तिषुमज्जने ॥ श्रवणेषुपुराणानां

विष्टेर्दोषोनविद्यते ॥ हरिप्रियार्चनेऽष्टम्यांहुताशन्यांतथैवच ॥ आश्विन्यांचचतुर्दश्यांविष्टेर्दोषोनविद्यते ॥दानेवाशयनेचैवघातपाता दिकर्मणि ॥ पराश्वप्रसवेभव्याविष्टिदोषोनविद्यते ॥ ज्योतिःसार समुच्चये ॥ दीक्षायांहोमयज्ञेषुदेवताराधनेषुच ॥ विषारिघातनेनित्यं सिद्धिदाविष्टिरेवहि ॥ दिनभद्रायदारात्रौरात्रिभद्रायदादिने ॥ न त्याज्याशुभकार्येषुप्राहुरेवंपुरातनाः ॥ रात्रिभद्रायदाऽह्निस्यादिवाभ द्रायदानिशि॥नतत्रभद्रादोषःस्यात्सर्वकार्येषुसिद्धिदा ॥ तथाप्युत्सव कार्येषुपराधीनेचसंकटे ॥भद्रायांविपरीतायांनदोषःकार्यसाधनइत्ययं ज्योतिर्निबंधः॥ तथाचज्योतिःपराशरः ॥ रात्रिभद्रायदाह्निस्यादिवा भद्रायदानिशि॥नत्याज्याशुभकार्येषुइतिगर्गोब्रवीन्मुनिरिति ॥तस्मा द्भद्रायांहोलिकादोषोनसंभावनीयः ॥ यदापुनःपरदिनेपूर्णिमासार्द्ध यामत्रयव्यापिनीप्रतिपच्चवृद्धिगामिनीतदातत्रैवहोलिकाकार्या॥ तदु क्तंभविष्योत्तरे ॥ सार्द्धयामत्रयंवास्याद्वितीयदिवसेयदा ॥ प्रतिपद्वर्ध मानातुतदासाहोलिकास्मृतेति ॥ यत्तुवचनम् ॥ वह्नौवह्निपरित्य जेदिति ॥ वह्नौहोलिकायांवह्निंप्रतिपदंवर्जयेदित्यर्थः ॥ तत्तुसा यंकालेभद्रारहितपूर्णिमासंभवेतामतिक्रम्य प्रतिपदिनकर्त्तव्येत्येत त्परम् ॥ अन्यथाभविष्योत्तरवाक्यस्यानिरर्थकतास्यात् ॥ अथा त्रकर्त्तव्यमुच्यते ॥ भविष्योत्तरेयथोत्सवेषुतैलाभ्यंगेनिर्दोषतांदर्श यति ॥ श्रावण्यांबलिराज्येचवसंतेविजयोत्सवे ॥ तैलाभ्यंगेनदोषः स्यात्संक्रांतिग्रहणेष्वपि ॥ राजानंप्रतिपौरवाक्यम् ॥ अस्माकंहिगृहे कापिढुंढानामेहराक्षसी ॥ दिवारात्रौसमागम्यबालान्पीडयतेबलात्॥ रक्षयादंडकेनापिभेषजैर्वानराधिप ॥ मंत्रज्ञैःपरमाचार्यैःसानियंतुं नशक्यते ॥ एतत्सर्वंसमाख्यातंढुंढायाश्चरितंनृप ॥ इतिपौर वचःश्रुत्वाराज्ञापृष्टोथनारदः ॥ नारदउवाच ॥ सांप्रतंकथयिष्या मियेनोपायेनहन्यते ॥ अद्यपंचदशीशुक्लाफाल्गुनस्यनराधिप ॥

शीतकालोविनिष्क्रांतःप्रातर्ग्रीष्मोभविष्यति ॥ अभयप्रदानंलोकानां दीयतांपुरुषोत्तम ॥ यथानिःशंकितालोकारमंतिचहसंतिच ॥ दारुजानिचखड्गानिगृहीत्वासमरोत्सुकाः ॥ योधाइवविनिर्यांतुशिशवः संप्रहर्षिताः ॥ संचयंशुष्ककाष्ठानामुपलानांचकारयेत् ॥ तत्राग्निंविधिवद्धुत्वारक्षोघ्नैर्मंत्रविस्तरैः ॥ततःकिलकिलाशब्दैस्तालशब्दैर्मनोहरैः ॥ तमग्निंत्रिष्परिक्रम्यगायंतिचहसंतिच ॥ जल्पंतःस्वेच्छयालोकानिःशंकंलज्जयोज्झिताः ॥ तेनशब्देनसापापामोहेनैचनिराकृता ॥ अदृष्टघातैर्डिंभानांराक्षसीक्षयमेष्यति ॥ ततःप्रभृतिलोकेऽस्मिन्होलिकाख्यातिमागता ॥ सर्वदुष्टापहोहोमःसर्वरोगोपशांतिदः ॥ क्रियतेऽस्यांद्विजैःपार्थतेनसाहोलिकास्मृता ॥ सर्वसारातिथिश्चेयंपौर्णमासियुधिष्ठिर ॥ सारत्वात्फल्गुरित्येषापरमानंददायिनी ॥ अस्यांनिशागमेपार्थसंरक्ष्याःशिशवोगृहे ॥ गोमयेनोपलितेचसचतुष्केगृहांगणे ॥ आकारयेच्छिशुप्रायान्खड्गव्यग्रकरान्नरान् ॥ तेकाष्ठखड्गैःसंस्पृश्यशब्दैर्हास्यकरैः शिशून् ॥ रक्षंतितेषांदातव्यंगुडंपक्वान्नमेवच ॥ एवंढुंढेतियातस्याःसदोषःप्रशमंव्रजेत् ॥ बालानांरक्षणंकार्यंतस्मात्तस्मिन्निशागमेइति ॥ ॥ इतिहोलिकानिर्णयः ॥ ॥फाल्गुनीमन्वादिरपि ॥ ॥ अथचैत्रादिमासपूर्णिमासुचित्राद्यृक्षेषुचंद्रगुरूयदिस्याताम् ॥ तदामहाचैत्र्यादयःप्रोक्ताः ॥ तदाहगार्ग्यः ॥ माससंज्ञेयदाऋक्षेचंद्रःसंपूर्णमंडलः ॥ गुरुणायातिसंयोगंसातिथिर्महतीस्मृतेति ॥ संपूर्णमंडलइत्यनेनपूर्णिमायोगोभिधीयते॥शंकरगीतास्वपि ॥एकराशिगतौस्यातांयदागुरुनिशाकरौ ॥ सापौर्णमासीमहतीसर्वपापहरास्मृतेति ॥ ज्येष्ठपूर्णिमायांगार्ग्येण विशेषउक्तः ॥ ऐन्द्रेगुरुःशशीचैवप्राजापत्येरविस्तथा॥पूर्णिमाज्येष्ठमासस्यमहाज्यैष्ठीप्रकीर्त्तितेति॥तथाच ॥वृषेवामिथुनेभानौजीवचंद्रौतथैंद्रभे ॥ पौर्णमासीगुरोर्वारेमहाज्यैष्ठीप्रकीर्त्तिता ॥ माघपूर्णिमायांतेनै

---

१ होमेन इ० पा०

वविशेषउक्तः॥ मेषराशौयदासौरिः सिंहेचंद्रबृहस्पती ॥ भास्करःश्रव णर्क्षेचमहामाघीचसास्मृतेति ॥ एतामहाचैत्रमासादयःशालग्रामादि तीर्थेषुस्नानदानादिषुपुण्यतमाः ॥ यदाहगार्ग्यः ॥ महामाघीप्रयागेतु नैमिषेफाल्गुनीतथा ॥ शालग्रामेमहाचैत्रीकृताःस्युःपुण्यहेतवः॥ गं गाद्वारेतुवैशाखीज्यैष्ठीचपुरुषोत्तमे॥ आषाढीवैकनखलेकेदारेश्रावणी तथा॥बदर्यांचप्रौष्ठपदीगंगायामाश्विनीतथा ॥ पुष्करेकार्त्तिकीपुण्या कुब्जेमार्गशिरीतथा ॥ अयोध्यायांमहापौषीकृताःस्युस्तामहाफलाइ ति ॥शालग्रामादिरिक्तस्थानेष्वपिमहाचैत्र्यादिषुकृतंस्नानदानादिक मनंतफलंभवति ॥ तदाहगार्ग्यः ॥ आशुयत्क्रियतेश्राद्धंयच्चदानादि कंपुनः॥ उपवासादिकंयच्चतदनंतफलंस्मृतम्॥ अथसिद्धविरुद्धादिकं लिख्यते॥ पूर्णिमागुरुवारेणसिद्धा॥गुरौदशमिपंचम्योःपौर्णमासीति ॥ अत्रपंचमीवद्विवाहयात्रोत्सवादिकंकार्यम् ॥ अत्रैवतिथिपत्वाच्चन्द्रः पूज्यः ॥ तदुक्तम्॥पर्वणींदोरिति ॥ क्रूरग्रहेधनुरादिराशिचतुष्कस्थेपू र्णिमाशुभाभवति ॥ योगिनीसंमुख्यादत्रैशान्यांयात्रानकार्या ॥ इति पूर्णिमानिर्णयः ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेपूर्णिमा निर्णयः॥ ॥श्रीसूर्यसेनभूभृद्विमलयशःक्षीरसागरादुदिते ॥ इतिनिर्ण यामृतेऽस्मिन्पूर्णिमायानिर्णयोपूरि॥श्रीमत्पंडितसिद्धलक्ष्मणसुतःश्री सिद्धलक्ष्मीपदद्वंद्वाराधनसुप्रसिद्धमहिमायःसिद्धसारस्वतः ॥ आदे शादकृतैषसूर्यमहसःश्रीसूर्यसेनप्रभोर्वैधेकर्मणिकालनिर्णयमसावल्ला टनाथःसुधीः ॥ ॥ अथप्रतिपदादिष्वमावास्यानिर्णीयते ॥ तत्रोपवा सादिषुअमावास्याप्रतिपद्युक्तैवग्राह्या ॥ तदुक्तंयुग्मवाक्ये ॥ प्रतिपद्य प्यमावास्येति॥ तदुक्तम्॥अमावास्यातृतीयाचताउपोष्यापरान्विता इति ॥ निगमेपि॥षष्ठ्यष्टमीअमावास्येति॥चतुर्दशीविद्धायांनिषेधश्च निगमे॥भूतविद्धाह्यमावास्यानिष्फलंस्यात्त्रयंत्विदमिति॥स्कंदपुराणे पि॥भूतविद्धाप्यमावास्यानग्राह्यामुनिपुंगववर्जयित्वा तु सावित्रीव्रतंतु

१ कुब्जादौतुमहाश्विनी इ०पा०।

शिखिवाहन ॥ शुक्लात्रयोदशीरंभानोपोष्याःपरसंयुताइति॥अतश्चवट
सावित्रीव्यतिरिक्तव्रतेष्वमावास्यापरयुतैवग्राह्येतिसिद्धांतः ॥ज्येष्ठमा
सामावास्यायांपूर्वविद्धायांवटसावित्रीव्रतंकुर्यात् ॥तत्रायंविधिः ॥ज्ये
ष्ठकृष्णत्रयोदशीमारभ्यत्रिरात्रोपोषितानारी अशक्तात्रयोदश्यांनक्तं
चतुर्दश्यामयाचितममावास्यायामुपवासंकृत्वा कस्मिंश्चित्पात्रेप्रस्थ
मात्रांवालुकांयवादिधान्यंचादायतस्योपरिवस्त्रयुग्मवेष्टितेवंशपात्रेस्व
शक्त्यानिर्म्मितांसौवर्णींमृन्मयींवासावित्रीप्रतिमांसंस्थाप्यवटमूलेपूज
यित्वाब्राह्मणायदद्यात् ॥ तदुक्तंभविष्योत्तरे ॥ अमायांतुतथा
ज्येष्ठेवटमूलेमहासतीम् ॥ त्रिरात्रोपोषितानारीविधिनानेनपूजयेत् ॥
अशक्तातुत्रयोदश्यांनक्तंकुर्याज्जितेंद्रिया ॥ अयाचितंचतुर्द
श्याममायांसमुपोषणम् ॥ गृहीत्वावालुकांपात्रेप्रस्थमात्रांयु
धिष्ठिर ॥ ततोवंशमयेपात्रेवस्त्रयुग्मेनवेष्टिते ॥ सावित्रीप्रतिमां
कुर्यात्सर्वावयवशोभिनीम् ॥ सौवर्णींमृन्मयींवापिस्वस्यशक्त्यावि
निर्मितम् ॥ सार्द्धंसत्यवतासाध्वींफलनैवेद्यदीपकैः ॥ वटावलंबि
तंकृत्वाकाष्ठभारंयुधिष्ठिर ॥ विरूढैःसप्तधान्यैश्चबहुधासंप्रकल्पि
तैः ॥ रजन्याकंठसूत्रैश्चशुभैःकुंकुमकेसरैः ॥ सावित्र्याख्यानकंवा
पिवाचयीतद्विजोत्तमम् ॥ रात्रौजागरणंकृत्वानृत्यगीतपुरःसरम् ॥
ततःप्रभातेविधिनापूर्वोक्तेननरोत्तम ॥ तामपिब्राह्मणेदद्यात्प्रणि
पत्यक्षमापयेत् ॥ दानमंत्रश्च ॥ सावित्रीयंमयादत्तासहिर
ण्यामहासती ॥ ब्रह्मणःप्रीणनार्थायब्राह्मणप्रतिगृह्यतामिति ॥ एवं
दत्त्वाद्विजेंद्रायसावित्रींतांयुधिष्ठिर ॥नैवेद्यादिचतत्सर्वंब्राह्मणस्यगृहंन
येत्॥ स्वयंदशपदंगच्छेत्स्ववेश्मपुनराविशेत्॥ तत्रभुक्त्वाहविष्यान्नं
ब्राह्मणैर्बांधवैःसह ॥ विसर्जयेत्ततोविप्रान्सावित्रीप्रीयतामिति ॥
व्रतेनानेनराजेंद्रवैधव्यंनाप्नुयात्क्वचित् ॥ ॥ इतिवटसावित्रीव्रतम् ॥
॥ अथकार्तिक्यमावास्यासुखरात्रिरुच्यते ॥ तस्यांलक्ष्मीपूजनादि

कंनववस्त्रधारणादिकंकुर्यात्॥ ॥ तदुक्तंब्रह्मपुराणे॥ ॥अमावास्या यांदेवास्तुकार्तिकेमासिकेशवात् ॥ अभयंप्राप्यसुप्तास्तुसुखंक्षीरोद सानुषु॥लक्ष्मीर्दैत्यभयान्मुक्तासुखंसुप्ताम्बुजोदरे॥ अतोर्थंविधिवत्का र्यांमनुष्यैः सुखसुप्तिका ॥ दिवातत्रनभोक्तव्यमृतेबालातुराक्षमान् ॥ प्रदोषसमयेलक्ष्मींपूजयित्वायथाक्रमम् ॥ दीपवृक्षास्तथाकार्याःश क्त्यादेवगृहेषुच ॥ दीपमालापरिक्षिप्तेप्रदोषेतदनंतरम् ॥ ब्राह्मणा न्भोजयित्वादौविभोज्यचबुभुक्षितान् ॥ अलंकृतेनभोक्तव्यंनववस्त्रोप शोभिना ॥ स्निग्धैर्मुग्धैर्विदग्धैश्चबांधवैर्निर्वृतैःसहेति ॥ अत्रैवराजाकौ मुदीमहोत्सवंकुर्यात्॥तदुक्तम्॥ ततोऽपराह्णसमयेघोषयेन्नगरेनृपः ॥ सर्वराज्यंबलंलोकान्यथेष्टंचेष्टतामिति॥लोकैश्चापिपुरेहृद्येसुधाधवलि ताजिरे ॥ वृक्षचंदनमालाद्यैश्चर्चितेचगृहेगृहे ॥ द्यूतपानरतोद्युक्त नरनारीमनोहरे ॥ नृत्यवादित्रसंघुष्टेसंप्रज्वलितदीपके ॥ दीपमा लाकुलेरम्येविध्वस्तध्वांतसंचये ॥ प्रदोषेदोषरहितेशस्तेदोषागमेशु भे ॥ वेश्याविलासिनीसार्थस्वस्तिमंगलकारिणि॥ ॥ गृहाद्गृहंव्र जन्तीचपादाभ्यंगप्रदायिनि॥ ततोर्द्धरात्रसमयेस्वयंराजापुरंव्रजेत्॥ अवलोकयितुरम्यंपद्भ्यामेवशनैःशनैः॥ततःप्रत्यूषसमयेनारीभिर्गृहा दलक्ष्मीर्निष्कास्यते॥तदुक्तम्॥ एवंगतेनिशीथेतुजनेनिद्रार्द्धलोचने॥ तावन्नगरनारीभिःशूर्पडिंडिमवादनैः॥ निष्कास्यतेप्रहृष्टाभिरलक्ष्मीः स्वगृहांगणादिति॥ ॥ इतिकौमुदीमहोत्सवः॥ माघामावास्यायांसावि त्रीसहितंब्रह्माणंपूजयित्वानवनीतधेनुंब्राह्मणायदद्यात्॥तदुक्तंब्रह्मपुरा णे॥अमायांमाघमासस्यपूजयित्वापितामहम् ॥ गायत्र्यासहितंदेवंवेद वेदांगभूषितम्॥नवनीतमयींधेनुंफलैर्नानाविधैर्युताम्॥ सहिरण्यांसव स्त्रांचब्राह्मणायनिवेदयेदिति ॥ माघामावास्यायांशतभिषानक्षत्रयु तायांश्राद्धादिकंमहातृप्तिप्रदंपितॄणांभवति ॥ तदुक्तंविष्णुपुराणे ॥ माघासितेपंचदशीकदाचिदुपैतियोगंयदिवारुणेन ॥ ऋक्षेणकालसः

परःपितॄणांनह्यल्पपुण्यैर्नृपलभ्यतेसाविति ॥ अस्यामेवपूर्वभाद्रपदा
युक्तायांश्राद्धादिनासहस्रयुगपर्यंततृप्तिर्भवति ॥ तत्रैवचेद्भाद्रपदास्तु
पूर्वाकालेयदातत्क्रियतेपितृभ्यः ॥ श्राद्धंपरांतृप्तिमवाप्नुवंतियुगान्स
हस्रंपितरश्चतेनेति ॥ इयमेवधनिष्ठायुक्तावर्षायुतंपितॄणांतृप्तिदाभव
ति ॥ तदुक्तंमहाभारतेमाघामावास्याप्रक्रमे ॥ कालेधनिष्ठायदि
नामतस्मिन्भवंतिभूपालतदापितृभ्यः ॥ दत्तंजलान्नंप्रददातितृप्तिंवर्षा
युतंतत्कुलजैर्मनुष्यैः॥इति ॥माघपौषयोरमावास्यारविवारश्रवणनक्ष
त्रव्यतीपातयोगयुक्ताचेदसावर्द्धोदयाख्यःकोटिग्रहणसंनिभोयोगः॥त
दुक्तंमहाभारते ॥ अमार्कपातश्रवणैर्युक्ताचेत्पौषमाघयोः ॥ अर्द्धोदयः
सविज्ञेयःकोटिसूर्यग्रहैःसमः ॥ दिवैवयोगःशस्तोयंनचरात्रौकदाचने
ति ॥ स्कंदपुराणेपि ॥ अर्द्धोदयेतुसंप्राप्तेसर्वंगंगासमंजलम् ॥ शु
द्धात्मानोद्विजाःसर्वेभवेयुर्ब्रह्मसंनिभाः ॥यत्किंचिद्दीयतेदानंतद्दानंमेरु
संनिभमिति ॥ तथातत्रैवदानादौविशेषउक्तः ॥ चतुःषष्टिपलंमुख्य
ममत्रंतत्रकारयेत् ॥ चत्वारिंशत्पलंवाथपंचविंशतिमेववा ॥
निधायपायसंतत्रपद्ममष्टदलंलिखेत् ॥ पद्मस्यकर्णिकायांतुकर्षमा
त्रंसुवर्णकम् ॥ तदभावेतदर्द्धंवातदर्द्धंवापिकारयेत् ॥ कृत्वातुतं
डुलैःशुद्धैःपद्ममष्टदलंशुभम् ॥ अमत्रंस्थापयेत्तत्रब्रह्मविष्णुशिवा
त्मकम् ॥ तेषांप्रीतिकरार्थायश्वेतमाल्यैःसुशोभनैः ॥ वस्त्रादि
भिरलंकृत्यब्राह्मणायनिवेदयेत् ॥ दानमंत्रश्च ॥ सुवर्णपायसामत्रं
यस्मादेतत्त्रयीमयम् ॥ आवयोस्तारकंयस्मात्तद्गृहाणद्विजोत्तमे
ति ॥ समुद्रमेखलांपृथ्वींसम्यग्दत्तस्ययत्फलम् ॥ तत्फलंल
भतेमर्त्यःकृत्वादानममत्रकमिति ॥ इत्यर्द्धोदयविधिः ॥ याकाचि
दमावास्यानुराधाविशाखास्वातियुक्ताश्राद्धेनपितॄणामष्टवार्षिकींतृप्तिं
करोति ॥ तदुक्तम् ॥ विष्णुपुराणे ॥ अमावास्यायदामैत्रविशा
खास्वातियोगिनी ॥ श्राद्धेपितृगणस्तृप्तिंतदाप्नोत्यष्टवार्षिकीमिति ॥

आर्द्रापुनर्वसुपुष्यर्क्षयुक्ताद्वादशाब्दिकींतृप्तिंकरोति॥तदुक्तंविष्णुपुराणे ॥ अमावास्यायदापुष्येरौद्रर्क्षेचपुनर्वसौ ॥ द्वादशाब्दींतदातृप्तिं प्रयांतिपितरोर्चिताइति ॥ सोमवारयुताअमावास्यासूर्यग्रहणसमा ॥ तत्रश्राद्धादिकंकृतमक्षयफलंभवति ॥ तदुक्तंशंखेन ॥ अमावास्यातुसोमेनसप्तमीभानुनासह ॥ चतुर्थीभूमिपुत्रेणसोमपुत्रेणचाष्टमी ॥ चतस्रस्तिथयस्त्वेतासूर्यग्रहणसंनिभाः ॥ स्नानंदानंतथाश्राद्धंसर्वंतत्राक्षयंभवेदिति ॥ फाल्गुनामावास्यायांतुलिंगपुराणेफाल्गुनतिथिप्रक्रमेविशेषउक्तः॥अमावास्यायांपूज्यश्चरुद्रोग्निर्ब्राह्मणस्तथा ॥ माषोदनैःपोलिकाभिःपूज्यश्चात्मासबांधवइति ॥ याकाचिदमावास्याश्रवणाश्विनीधनिष्ठार्द्राश्लेषामृगशीर्षनक्षत्रेष्वन्यतमेनरविवारेणचयुक्ताचेद्भवतितदाव्यतीपाताख्योलभ्यथयोगोभवति ॥ तदुक्तंभविष्योत्तरे ॥ श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः॥ अमाचेद्रविवारेणव्यतीपातःसउच्यते ॥ तत्रदत्तंहुतंजप्तंसर्वंकोटिगुणंभवेत् ॥ इति श्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेअमावास्यानिर्णयः ॥ श्रीसूर्यसेनभूभृद्विमलयशःक्षीरसागरादुदिते ॥ इतिनिर्णयामृतोस्मिन्नमायाश्चनिर्णयोजातः ॥ श्रीमत्पंडितसिद्धलक्ष्मणसुतःश्रीसिद्धलक्ष्मीपदद्वंद्वाराधनसुप्रसिद्धमहिमायःसिद्धसारस्वतः ॥ आदेशादकृतैपसूर्यमहसःश्रीसूर्यसेनप्रभोर्वैधेकर्मणिकालनिर्णयमसावल्लाटनाथःसुधीः ॥ अथयागानुष्ठानसिध्यर्थंपूर्णिमामावास्ययोर्निर्णयःप्रारभ्यते ॥ ॥ तस्यचपर्वप्रतिपत्संधिनिबंधनत्वात्संधेश्चमध्याह्नमध्याह्नापूर्वंपरतःसंगवमध्याह्नयोरंतरेत्यादिवक्ष्यमाणत्वान्मध्याह्नादिस्वरूपपरिज्ञानार्थमह्नःपंचधाविभागउच्यते ॥तत्रपंचधाविभागोव्यासेनोक्तः॥ यथा॥ मुहूर्तत्रितयंप्रातस्तावानेवतुसंगवः ॥ मध्याह्नस्त्रिमुहूर्तःस्यादपराह्णस्तुतादृशः ॥ सायाह्नस्त्रिमुहूर्तश्चसर्वकर्मसुगर्हितइति ॥ अस्यार्थः ॥ उदयान्मुहूर्तत्रयंप्रातःकालः॥ तदनंतरंमुहूर्तत्रयंसंगवः ॥ ततः

परंमुहूर्तत्रयंमध्याह्नः ॥ ततःपरंमुहूर्तत्रयमपराह्णः ॥ तदनंतरंमुहूर्तत्रयंसायाह्नइति॥त्रिंशद्घटिकात्मकस्याह्नःषड्भिर्घटिकाभिरेकैकस्मिन्कालेसतिपंचधाविभागोभवति ॥ पराशरोप्याह ॥ उदयाद्यादिवे यावत्रिमुहूर्तंगतोरविः ॥ प्रातःकालःसविज्ञेयोदिनभागःसपंचमः ॥ तस्मात्प्रातःस्तनात्कालात्त्रिमुहूर्तस्तुसंगवः॥ त्रिमुहूर्तस्तुमध्याह्नस्तस्मात्संगवकालतः॥तस्मान्माध्याह्निकात्कालादपराह्णस्तथाविधः ॥ अपराह्णात्त्रिमुहूर्तःकालःसायाह्नउच्यतेइति ॥ ननुविषुवेऽह्नःपंचदशमुहूर्तात्मकत्वात्पंचधाविभागेसत्येकैकस्यकालस्य त्रिमुहूर्तात्मकत्वमुपपद्यते ॥ यदापुनरयनवशादह्नोवृद्धिह्रासौभवतः तदाकथंप्रातरादिकालस्यत्रिमुहूर्तात्मकत्वंसंभवतीतिचेत् ॥ सत्यम्॥ अत्रत्रिमुहूर्तमित्यह्नःपंचधाभागस्योपलक्षणम् ॥ अतश्चाह्नोवृद्धौवृद्धिनाडीनामपिपंचधाविभागेप्रातरादिकालस्यापित्रिमुहूर्ताधिकत्वंकल्पनीयम् ॥ ह्रासेपुनस्त्रिमुहूर्तान्न्यूनत्वमितिसुस्थम् ॥ केचित्तुपंचदशधाह्नोविभागमाहुः ॥ तदुक्तंव्यासेन ॥ रौद्रश्चैत्रश्चमैत्रश्चतथाचारभटःस्मृतः ॥ सावित्रश्चजयंतश्चगांधर्वःकुतुपस्तथा ॥ रौहिणश्चविरिंचिश्चविजयोनैर्ऋतस्तथा ॥ माहेंद्रोवरुणश्चैवभागाःपंचदशस्मृताइति ॥ अत्रापि दिनमानस्यपंचदशांशोमुहूर्तोज्ञेयस्तदुक्तंरत्नमालायाम् ॥ दिनस्ययः पंचदशोविभागोरात्रेस्तथातद्धिमुहूर्तमानमिति॥ कैश्चित्त्रिधाविभागउक्तः॥तदाहशातातपः॥ पूर्वाह्णोमध्याह्नोऽपराह्णः॥ पूर्वाह्णोदेवानांमध्याह्नोमनुष्याणामपराह्णःपितॄणामिति ॥ स्कंदपुराणेतुद्विधाभागउक्तः ॥ आवर्तनात्तुपूर्वाह्णोह्यपराह्णस्ततःपरमिति ॥ इतिप्रसंगतः कालविभागमुक्त्वाप्रकृतमुच्यते ॥ तत्रपर्वप्रतिपत्संधिर्यदामध्याह्न एवमध्याह्नात्पूर्वंवास्यात्तदासंधिदिनात्पूर्वदिनेऽन्वाधानंसंधिदिनेयागोभवति ॥ तदुक्तंगोभिलेन ॥ आवर्तनेयदासंधिःपर्वप्रतिपदोर्भवेत्॥ तदहर्यागइष्येतपरतश्चेत्परेऽहनीति ॥ यथा ॥ पर्वप्रतिपदोःसं

धिरर्वागावर्तनाद्यदि ॥ तस्मिन्नहनियष्टव्यंपूर्वेद्युःस्यादुपक्रमइति ॥ आवर्त्तनंमध्याह्नः ॥ लौगाक्षिरपि ॥ पूर्वाह्णेचाथमध्याह्नेयदिपर्वस माप्यते ॥ उपोष्यतत्रपूर्वेद्युस्तदहर्यागइष्यतइति ॥ मध्याह्नात्परतः पर्वप्रतिपत्संधौतुसंधिदिनात्परदिनेयागः॥संधिदिनेऽन्वाधानंकार्यम् ॥ तदाहलौगाक्षिः॥अपराह्णेथवासायंयदिपर्वसमाप्यते ॥उपोष्यतस्मिन्न हनिश्वोभूतेयागइष्यतइति ॥ गोभिलोपि ॥ आवर्तनात्परःसंधिर्यदित स्मिन्नुपक्रमः ॥ परेद्युरिष्टिरित्येषपर्वद्वयविनिर्णयइति ॥ अत्रपर्वद्वय निर्णयइत्युक्तत्वादयंपूर्णिमामावास्ययोःसाधारणोनिर्णयः ॥ ॥ विशे षस्तूच्यते ॥ ॥ अत्रपूर्णिमाप्रतिपत्संधिःसंगवादूर्ध्वंमध्याह्नात्पूर्वं यदाभवति ॥ तदातत्रैवान्वाधानंयागंचकुर्यात् ॥ तदाहकात्यायनः॥ संधिश्चेत्संगवादूर्ध्वमर्वागावर्तनाद्भवेत् ॥ सापौर्णमासीविज्ञेयासद्यः कालविधौतिथिः ॥ नन्वेवंसतिपूर्वेद्युरन्वाधानंपरेद्युर्यष्टव्यमिति विधिविरोधःस्यादितिचेन्न ॥ सद्यःकालविधेरपिदर्शनात् ॥ तथाचापस्तंबः ॥ पौर्णमास्यांत्वन्वाधानंपरिस्तरणोपवासः सद्यो वासद्यःकालायांसर्वंक्रियतइति ॥ ननु तथापि पर्वप्रतिपदोःसंधि रर्वागावर्तनाद्यदि ॥ तस्मिन्नहनियष्टव्यंपूर्वेद्युःस्यादुपक्रमइ तिगोभिलवचनेनविरोधोभविष्यतीतिचेन्न ॥ संगवात्पूर्वमपिसंधे रावर्तनादर्वाचीनत्वात्तद्विषयत्वंगोभिलवाक्यस्य ॥ कात्यायनवा क्यस्यतु संगवोर्ध्वभाविमध्याह्नादर्वाचीनसंधिर्विषयः ॥ यद्वा ॥ गोभिलवचनंपर्वद्वयसामान्यविषयंनपूर्णिमामात्रविषयम् ॥ पूर्णि मामात्रविषयंकात्यायनवचनमितिविशेषवचनेनसामान्यबाधइत्यवि रोधः ॥ ॥ अमायांतुविशेषउक्तः ॥ ॥ यदाप्रतिपदिद्वितीयात्रि मुहूर्तात्मकमपराह्णंव्याप्नोति ॥तत्रचंद्रदर्शनस्यसंभाव्यमानत्वाच्चतुर्द श्यामन्वाधायामावास्यायांयागःकार्यः ॥ तदुक्तंशातातपेन ॥ द्विती यात्रिमुहूर्ताचेत्प्रतिपद्यपराह्णिकी ॥ अन्वाधानंचतुर्दश्यांपरतःसो

मदर्शनादिति॥सोमदर्शनेयागनिषेधोवृद्धवसिष्ठेनोक्तः॥ आदौनिरुक्ते हविषिपरस्तादुदितेविधौ ॥ यद्वैगुण्यंहुतेतस्मिन्पश्चादपिहितद्भवेदिति॥ननुपर्वप्रतिपदोःसाम्येसंधिषुबोधोभवति॥प्रतिपदिवृद्धिगामिन्यां क्षीणायांवाकथंसंधिज्ञानमितिचेत्॥सत्यम् ॥ प्रतिपद्वृद्धिनाडिकाद्विधाविभज्यपर्वणिसंयोज्यसंधिःकल्पनीयः ॥तथैवप्रतिपत्क्षयनाडिकाश्चाद्विधाविभज्यार्द्धम्पर्वणिवियोज्यसंधिःकल्पनीयः तदाहलौगाक्षिः ॥ तिथेःपरस्याघटिकाश्चयाःस्युर्न्यूनास्तथैवाभ्यधिकाश्चतासाम्॥ अर्द्धं वियोज्यंचतथाप्रयोज्यंह्रासेचवृद्धौप्रथमेदिनेस्यादिति ॥ कात्यायनोऽपि ॥ परेह्निघटिकान्यूनास्तथैवाभ्यधिकाश्चयाः ॥ क्षिप्त्वातदर्द्धंपूर्वस्मिन्ह्रासवृद्धीप्रकल्पयेत् ॥ ॥ अथयागकालउच्यते ॥ तत्रपर्वणश्चतुर्थोभागः प्रतिपदआद्यास्त्रयोभागायागकालः ॥ तदाहयाज्ञवल्क्यः ॥ पंचदश्याः परोभागःपक्षादेःप्रथमास्त्रयः॥ कालःपार्वणयागेस्यादन्यथातुनविद्यते ॥ वृद्धशातातपोपि ॥ पर्वणोयश्चतुर्थांश आद्याःप्रतिपदस्त्रयः ॥ यागकालःसविज्ञेयःप्रातरुक्तोमनीषिभिरिति ॥ पर्वप्रतिपत्सन्धावपराह्णेसतिपरदिनेचतुर्थेपिप्रतिपद्भागेयागः कार्यः ॥ तदाहशातातपः॥ संधिर्यदापराह्णेस्याद्यागःप्रातःपरेहनि॥ कुर्वाणःप्रतिपद्भागेचतुर्थेपिनदुष्यतीति ॥ यत्तुवचनम्॥नयष्टव्यश्चतुर्थांशेयागैःप्रतिपदःक्वचित्॥रक्षांसितद्विलुंपंतिश्रुतिरेपासनातनीति ॥ इदमाद्यांशत्रयेयागकालेसंभवत्यालस्यादिनातमतिक्रम्यचतुर्थंशेन यष्टव्यमित्येवंपरम् ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेपर्वद्वयनिर्णयः॥ ॥ अथानध्यायतिथयउच्यंते ॥ ॥ तदाहयाज्ञवल्क्यः ॥ पंचदश्यांचतुर्दश्यामष्टम्यांराहुसूतके ॥ ऋतुसंधिषुभुक्त्वावाश्राधिकंप्रतिगृह्यचेति ॥ गौतमोऽपि ॥ पक्षद्वयेचतुर्दश्योरष्टमीद्वितयेतथा ॥ पक्षादावपिपक्षांतेब्रह्मनाधीयते नरैरिति ॥ ब्रह्मवेदः ॥ मनुरपि ॥ अमायांचचतुर्दश्यांपौर्णमा

स्यष्टकासुच ॥ अमावास्यागुरुंहंतिशिष्यंहंतिचपूर्णिमा ॥ ब्रह्महं त्यष्टमीभूतातस्मात्तांपरिवर्जयेत् ॥ बौधायनोपि ॥ महानि शातुविज्ञेयामध्येमध्यमयामयोः ॥ तस्यांस्नानंनकुर्वीतस्वा ध्यायंपितृतर्पणमिति॥ मध्यमयामयोर्मध्यमितिद्वितीययामस्यांत्यघ टिकाद्वयं ॥ तृतीययामस्याद्यघटिकाद्वयमितिचतस्रोनाडिकामहा निशा ॥ तदुक्तंतेनैव ॥ प्रातःसंध्यात्रिनाडीस्यात्सायंसंध्याच तादृशी ॥ महानिशाचविज्ञेयाचतस्रोघटिकास्तुयाइति ॥ ॥ वृद्ध मनुरपि ॥ ॥ त्रयोदश्यांचसप्तम्यांचतुर्दश्यार्धरात्रतः ॥ अर्वाङ् नाध्ययनंकुर्याद्यदीच्छेत्तस्यधारणमिति ॥ तत्रैवविशेषोगार्ग्येणोक्तः॥ रात्रौयामद्वयादर्वाक्सप्तमीचत्रयोदशी ॥प्रदोषःसतुविज्ञेयःसर्वविद्यावि गर्हितः॥ भीष्मः ॥ चातुर्मास्यद्वितीयासुमन्वादिषुयुगादिषु ॥ विषुवायनयोर्द्वंद्वेशयनेबोधनेश्रुतौ ॥ पक्षाधिकत्रयोदश्यांतस्याएवो त्तरातिथिः ॥ दर्शस्पृक्चेद्दिवैवस्यादनध्यायःश्रुतावपीति ॥ अस्या र्थः ॥ पक्षेतिथिवृद्ध्यायाधिकात्रयोदशीसाऽनध्यायदिनम् ॥ पक्षेद्वितीयादित्रयोदश्यंतानामेकादशस्वाध्यायानामेवविधानात् ॥ किंच ॥ यस्यास्त्रयोदश्याउत्तरातिथिश्चतुर्दशीदिवैवदर्शस्पृशति साचानध्यायदिनमित्यर्थः॥ श्रुतिःश्रवणद्वादशी ॥ चातुर्मास्यद्विती याश्चगार्ग्येणोक्ताः ॥ शुचाऊर्ज्जेतपस्येचद्वितीयाचविधुक्षये ॥ चातुर्मास्यद्वितीयास्ताःप्रवदंतिमहर्षयइति ॥ तथाच ॥ पूर्वे चोर्ध्वमनध्यायमहःसंक्रमणेनिशि ॥ दिवापूर्वोत्तरारात्रिरितिवेदविदो विदुः ॥ मनुरपि ॥ जननादशरात्रंचशावेचसमुपस्थिते ॥ नाधी यीतद्विजोनित्यंनचैवाकालिकेषुच ॥ महागुरौद्वादशाहंवेदस्याध्ययनं त्यजेदिति ॥ ॥ याज्ञवल्क्योपि ॥ ॥ त्र्यहंप्रेतेष्वनध्यायःशि ष्यर्त्विग्गुरुबंधुषु ॥ उपाकर्मणिचोत्सर्गेस्वशाखाश्रोत्रियेमृते ॥ संध्यागर्जितनिर्घातभूकंपोल्कानिपातने ॥ समाप्यवेदंद्युनिशमा

रण्यकमधीत्यचेति ॥ तथाच ॥ पशुमंडूकनकुलश्वाहिमार्जारमूषकैः ॥ कृतेंतरेत्वहोरात्रंशक्रपातेतथोच्छ्रयइति ॥ शक्रपातइति शक्रध्वजोद्वासनदिनेउच्छ्रयदिनेच ॥ अन्यश्चविशेषः शिष्टाचारतोवगन्तव्यः ॥ अनध्यायदिनेष्वध्ययनेप्रत्यवायस्तुस्मृतिचंद्रिकायामुक्तः ॥ अनध्यायेष्वध्ययनेप्रज्ञामायुःप्रजांश्रियम् ॥ ब्रह्मवीर्यंश्रियंतेजोनिकृन्ततियमःस्वयमिति ॥ अन्यश्चविशेषःस्मृत्यर्थसारेप्रोक्तः ॥ चतुर्दश्यष्टमीपर्वप्रतिपत्सुचसर्वदा ॥ दुर्मेधानामनध्यायस्त्वंतरागमनेषुच ॥ तथाविस्मृतिशीलानांबहुवेदप्रपाठिनामिति ॥ अन्यश्चविशेषोपरार्केप्रोक्तः ॥ चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितेषुच ॥ वेदांगन्यायमीमांसाधर्मशास्त्राणिचाभ्यसेदिति ॥ तथाचस्मृतिचंद्रिकायाम् ॥ उदयेस्तमयेवापिमुहूर्तत्रयगामियत् ॥ तद्दिनंतदहोरात्रंनानध्यायविधौविधिरिति ॥ यत्तुवचनम् ॥ तावदेवत्वनध्यायोनतन्मिश्रादिनांतरे ॥ उपवासव्रतादीनांतिथिमाहुस्तथैवतइति ॥ इदंचदेशाचारतोव्यवस्थापनीयम् ॥ क्वचिद्देशेयावदेवानध्यायतिथिनाडिकास्तावदेवानध्यायंकुर्वंति ॥ वृद्धिसाम्येक्षयेषूक्तास्त्रिचतुःपंचभिःक्रमात् ॥ षट्तुस्तिसृभिःसायमनध्यायस्यनिर्णयइति ॥ ॥ इत्यनध्यायनिर्णयः ॥ ॥ इतिश्रीसूर्यसेनमहीमहेन्द्रसूनुविरचितेनिर्णयामृते सर्वतिथिनिर्णयः समाप्तः ॥ ॥ अथमासकृत्यानि ॥ ॥ तत्रादौचैत्रमासकृत्यम् ॥ ॥ तदुक्तंमत्स्यपुराणे ॥ ॥ वर्जयित्वामधौयस्तुदधिक्षीरघृतेक्षवम् ॥ दद्याद्वस्त्राणिसूक्ष्माणिरसवस्तुयुतानिच ॥ संपूज्यविप्रमिथुनंगौरीमेप्रीयतामिति ॥ एतद्गौरीव्रतंनामभवानीलोकदायकमिति ॥ ॥ भविष्योत्तरेपि ॥ ॥ चैत्रेत्रिरात्रंनक्ताशीनद्यांस्नात्वाददातियः ॥ अजाःपंचपयस्विन्योदरिद्रायकुटुंबिने ॥ नजायतेपुनरसौजीवलोकेकदाचनेति ॥ ॥ वामनपुराणेतु ॥ ॥ चैत्रेमासिविचित्राणिशयनान्यासनानिच ॥ विष्णोःप्रीत्यर्थमेतानिदेयानिब्राह्मणेष्व

१ मासिमधुदधिघृतैक्षवम् इ० पा०।

थेति॥ ॥इतिचैत्रकृत्यम्॥ ॥अथवैशाखकृत्यम्॥ ॥तदुक्तंमहाभारते॥ निस्तरेदेकभक्तेनवैशाखंयोजितेंद्रियः ॥ प्रातःस्नायीनरःस्त्रीवाज्ञा तीनांश्रेष्ठतांव्रजेदिति ॥ वामनपुराणेपि ॥ गंधान्माल्यानिचतथावै शाखेसुरभीणिच ॥ देयानिद्विजमुख्येभ्योमधुसूदनतुष्टयइति ॥ ॥ ॥इतिवैशाखकृत्यम् ॥ ॥अथज्येष्ठकृत्यम् ॥ ॥ तदुक्तं भविष्योत्तरे ॥ पिष्टेनकंजजंकृत्वाज्येष्ठेमासिसवेदिकम् ॥ पुष्पैःसं पूज्यगंधाद्यैर्नानावस्त्रविभूषणैः ॥ वर्षकोटिशतंसाग्रंसूर्यलोकेमहीय तइति ॥ कंजजोब्रह्मा ॥ वामनपुराणेपि ॥ उदकुंभांबुधेनुंचता लवृंतंसचंदनम् ॥ त्रिविक्रमस्यप्रीत्यर्थंदातव्यंज्येष्ठमासिवेति ॥ ॥ ॥ इतिज्येष्ठमासकृत्यम् ॥ ॥ अथाषाढकृत्यम् ॥ तदु क्तंमहाभारते ॥ आषाढमेकभक्तेनस्थित्वामासमतंद्रितः ॥ बहु धान्योबहुधनोबहुपुत्रश्चजायते ॥ वामनपुराणेऽपि ॥ उपानद्यु गुलंछत्रंलवणामलकानिच ॥ आषाढेवामनप्रीत्यैदातव्यानितुभक्तित इति ॥ इत्याषाढकृत्यम् ॥ अथश्रावणकृत्यम् ॥ तदुक्तंमहा भारते ॥ श्रावणंनियतोमासमेकभक्तेनयःक्षिपेत् ॥ यत्रतत्राभिषे केणपूज्यतेज्ञातिवर्द्धनइति ॥ वामनपुराणेऽपि ॥ घृतंचक्षीरकुंभां श्चघृतधेनुंफलानिच ॥ श्रावणेश्रीधरप्रीत्यैदातव्यानिविपश्चितेति ॥ ॥ ॥इतिश्रावणकृत्यम् ॥ ॥अथभाद्रपदकृत्यम् ॥ ॥ तदु क्तंमहाभारते ॥प्रौष्ठपद्यंतुयोमासमेकाहारोभवेन्नरः॥ धनाढ्यःस्फी तमतुलमैश्वर्यंप्रतिपद्यतइति ॥ वामनपुराणेपि ॥ ॥मासिभाद्रप देदद्यात्पायसंमधुसर्पिषी ॥हृषीकेशप्रीणनार्थंलवणंसगुडौदनमिति ॥ ॥ ॥इतिभाद्रपदकृत्यम् ॥ ॥अथाश्विनकृत्यम् ॥ ॥ तदा हयमः ॥ घृतमाश्वयुजेमासिनित्यंदद्याद्द्विजातये ॥ प्रीणयित्वाश्वि नौदेवौरूपभागभिजायतइति ॥ वामनपुराणेपि ॥ तिलांस्तुरंगं वृषभंदधिताम्रवशादिकम् ॥ प्रीत्यर्थंपद्मनाभस्यदेयमाश्वयुजेनरैः

रिति ॥ वशाधेनुः ॥ इत्याश्विनकृत्यम् ॥ अथकार्तिककृत्यम् ॥ तदाहविष्णुः ॥ कार्तिकेमासिसकलेसायङ्कालेतिलतैलेनआकाशदीपं दद्यात् ॥ तदुक्तंपुष्करपुराणे॥ कार्त्तिकेतिलतैलेनसायंकालेसमागते॥ आकाशदीपंयोदद्यान्मासमेकंहरिंप्रति ॥महतींश्रियमाप्नोतिरूपसौभाग्यसंपदइति ॥ तदाहविष्णुः॥ कार्तिकंसकलंमासंप्रातःस्नायीजितेंद्रियः ॥ जपन्हविष्यभुग्दांतःसर्वपापैःप्रमुच्यते॥ वामनपुराणेपि॥ रजतं कनकंदीपान्मणिमुक्ताफलादिकम् ॥ दामोदरस्यप्रीत्यर्थंप्रदद्यात्कार्तिकेनरइति ॥ ॥ इतिकार्त्तिककृत्यम् ॥ ॥ अथमार्गशीर्षकृत्यम् ॥ ॥ तदुक्तंमहाभारते ॥ मार्गशीर्षंतुयोमासमेकभक्तेन संक्षिपेत् ॥ भोजयेच्चद्विजाञ्छक्त्यामुच्यतेव्याधिकिल्बिषात्ः ॥कृषिभागीबहुधनोबहुधान्यश्चजायते इति ॥ वामनपुराणेपि ॥ खरोष्ट्राश्वतरीगावःशकटानिह्यजाविकम् ॥ दातव्यंकेशवप्रीत्यैमासिमार्गशिरे नरैः ॥ ॥ इतिमार्गशीर्षकृत्यम् ॥ ॥ अथपौषकृत्यम् ॥ ॥ तदुक्तंमहाभारते ॥ पौषंमासंतुकौन्तेयएकभक्तेनयःक्षिपेत् ॥ सुभगोदर्शनीयश्चयशोभागीचजायतइति ॥ वामनपुराणेपि ॥ प्रासाद नगरादीनिगृहप्रावरणानिच ॥ नारायणस्यतुष्ट्यर्थंपौषेदेयानियत्नतः ॥ ॥इतिपौषकृत्यम् ॥ ॥ अथमाघकृत्यम् ॥ ॥ तदाहविष्णुः ॥ माघेमास्यग्निप्रत्यहंतिलैर्हुत्वासघृतकृसरंब्राह्मणान्भोजयित्वादीप्ताग्निर्भवतीति ॥ भविष्योत्तरेपि ॥ पौणमास्याममायां चप्रारभ्यस्नानमाचरेत् ॥ त्रिंशद्दिनानिपुण्यानिमकरस्थेदिवाकरइति ॥ तथाच ॥ अप्रावृतशरीरस्तुयःकष्टंस्नानमाचरेत् ॥ पदेपदेऽश्वमेधस्यफलंप्राप्नोतिमानवः ॥ एवंस्नानस्यावसानेभोज्यंदेयमवादिकम् ॥ भोजयेद्द्विजदांपत्यंभूषयेद्वस्त्रभूषणैरिति॥वामनपुराणेपि॥ माघेमासितिलाःशस्तास्तिलधेनोश्चदानतः ॥ इध्मेन्धनादयश्चान्येमाधवप्रीणनायत्विति ॥ ॥ इतिमाघमासकृत्यम् ॥ ॥

१ तुलायां इ० पा० ।

अथफाल्गुनकृत्यम् ॥ ॥ तदुक्तंस्कंदपुराणे ॥ एकभक्तंतुकुर्वाणः फाल्गुनेमासिनित्यशः ॥ स्त्रीपुंसौभाग्यमाप्नोतिस्त्रियाश्चपरमप्रियः ॥ ॥ वामनपुराणेपि ॥ फाल्गुनेव्रीहयोगावोवस्त्रंकृष्णाजिनान्वितम् ॥ गोविंदप्रीणनार्थायदातव्यंपुरुषर्षभेति॥ ॥ इतिफाल्गुनकृत्यम् ॥ ॥ अथागस्त्यार्घविधिः ॥ तदुक्तंमत्स्यपुराणे ॥ प्रत्यूषसमयेविद्वान्कुर्यात्तस्योदयेनिशि ॥ स्नानंशुक्लतिलैस्तद्वच्छुक्लमाल्याम्बरोगृही ॥ स्थापयेदव्रणंकुंभंमाल्यवस्त्रविभूषितम् ॥ पंचरत्नसमोपेतंघृतपात्रेण संयुतम् ॥ नानाभक्ष्यफलैर्युक्तंताम्रपात्रसमान्वितम् ॥ अंगुष्ठमात्रंपुरुषंतथैवसौवर्णमत्यायतबाहुदंडम् ॥ चतुर्भुजंकुंभमुखेनिधायधान्यानि सस्यांकुरसंयुतानि ॥ सकाशपत्राक्षरयुक्तियुक्तंमंत्रेणदद्याद्द्विजपुंगवाय ॥ उत्क्षिप्तलंबोदरदीर्घबाहुमनन्यचेतायमदिङ्मुखस्थः ॥ श्वेतांश्चदद्याद्यदिशक्तिरस्तिरौप्यैः खुरैर्हेमविषाणयुक्ताम्[१] ॥ धेनुंबहुक्षीरवतींप्रणम्यसवस्त्रघंटाभरणांद्विजाय॥आसन्नमात्रादुदयेर्घ्यमस्यदातव्यमेतत्सकलंनरेण ॥ यावत्समास्सप्तदशाथवास्युरथोर्ध्वमप्येववदंतिकेचित् ॥ अर्घ्यमंत्रश्च ॥ काशपुष्पप्रतीकाशवह्निमारुतसंभव ॥ मित्रावरुणयोः पुत्रकुंभयोनेनमोस्तुते ॥ विंध्यवृद्धिक्षयकरमेघतोयविषापह ॥ रत्नवल्लभदेवेशलंकावासनमोस्तुते ॥ वातापिर्भक्षितोयेनसमुद्रःशोपितःपुरा ॥ लोपामुद्रापतिःश्रीमान्योसौतस्मैनमोनमः ॥ अनेनविधिना यस्तुपुमानर्घ्यंनिवेदयेत् ॥ इंद्रलोकमवाप्नोति भवेदारोग्यसंयुतः ॥ सप्तैवलोकानाप्नोतिसप्तार्घ्यान्यःप्रयच्छति॥ ॥ इत्यगस्त्यार्घ्यविधिः॥ ॥अथचातुर्मास्यव्रतानि ॥ ॥ तदुक्तंभविष्योत्तरे ॥ श्रीकृष्णउवाच॥ चतुरोवार्षिकान्मासान्देवस्योत्थापनावधि ॥ स्त्रीवानरोवामद्भक्तो धर्मार्थंसुदृढव्रतः॥ गृह्णीयान्नियमानेतान्दंतधावनपूर्वकम् ॥तेषांफलानिवक्ष्यामितत्कर्तॄणांपृथक्पृथक् ॥ मधुरस्वरोभवेद्राजन्पुरुषोगुडवर्जनात् ॥ तैलस्यवर्जनात्पार्थसुंदरांगःप्रजायते ॥ मधूकतैलस्यागे

१ हेममुखीं सवत्साम् ॥ सकांस्यदोहाश्च पयस्विनींच इ० पा० ।

नसौभाग्यमतुलंलभेत् ॥ कटुतैलपरित्यागाच्छोकनाशमवाप्नुयात् ॥ पुष्पा[1]दिभोगत्यागेनस्वर्गेविद्याधरोभवेत्॥योगाभ्यासीभवेद्यस्तुसब्रह्म पदमाप्नुयात् ॥कट्वम्लतिक्तमधुरक्षारकाषायजान्रसान् ॥ योवर्जयेतवै रूप्यंवैगंध्यंतस्यनक्वचित् ॥ तांबूलवर्जनाद्भोगीरक्तकंठश्चजायते ॥ घृतत्यागात्सलावण्यःसर्वस्निग्धवपुर्भवेत् ॥ फलत्यागेनमतिमान्ब हुपुत्रश्चजायते॥शाकपत्राशनाद्रोगीअपक्वादोऽमलोभवेत् ॥ पादाभ्यं गपरित्यागेशिरोभ्यंगाच्चपार्थिव ॥ दीप्तिमान्दीप्तकिरणोराजाद्रव्यपति र्भवेत् ॥ दधिदुग्धादिनियमात्स्वर्गलोकंलभेन्नरः ॥ भूमौप्रस्तरशायी चिवष्णोरनुचरोभवेत् ॥ सदामुनिःसदायोगीमधुमांसस्यवर्जनात् ॥ निर्व्याधिर्नीरुगोजस्वीसुरामिषविवर्जनात् ॥ एकांतरोपवासेनब्रह्मलो केमहीयते ॥ धारणान्मुखरोम्णान्तुगंगास्नानंदिनेदिने ॥ मौ नव्रतीभवेद्यस्तुतस्याज्ञाऽस्खलिताभवेत् ॥ भूमौभुंक्तेसदायस्तुसपृ थिव्याःपतिर्भवेत् ॥ नमोनारायणायेतिजप्त्वाऽनशनजंफलम् ॥ पादा भिवंदनाद्विष्णोर्लभेद्गोदानजंफलम् ॥ विष्णुपादांबुजस्पर्शात्कृत कृत्योभवेन्नरः ॥ विष्णुदेवकुलेकुर्यादुपलेपनमार्जने ॥ कल्पस्थायी भवेद्राजन्सनरोनात्रसंशयः ॥ प्रदक्षिणाशतंयस्तुकरोतिस्तुतिपाठ कः ॥ हंसयुक्तविमानेनसचाविष्णुपदंव्रजेत् ॥ कृत्वाप्रेक्षणकंदिव्यंस्था नमाप्सरसंलभेत् ॥ तीर्थजांबुहरेःस्नानान्निर्मलंदेहमाप्नुयात् ॥ पञ्चग व्याशनात्पार्थचांद्रायणफलंलभेत्॥ नक्तभोजीसमग्रंतुतीर्थयात्राफलं लभेत् ॥ अयाचितेनचाप्नोतिवापीकूपक्रियाफलम् ॥ षष्ठांशकाल भोज्येनस्वर्गस्थायीनरोभवेत् ॥ नित्यस्नायीनरोयस्तुनरकंनचप श्यति ॥ भाजनंवर्जयेद्यस्तुसस्नानंपौष्करंलभेत् ॥ पर्णेषुयोनरोभुं क्तेकुरुक्षेत्रफलंलभेत् ॥ शिलायांभोजनान्नित्यंस्नानंप्रयागजंलभेत्॥ यामद्वयंजलत्यागान्नरोगैःपरिभूयते ॥ एवमादिव्रतैःपार्थतुष्टिमायाति केशवइति ॥ मत्स्यपुराणेतुविशेषउक्तः ॥ ॥ आषाढादिचतुर्मास

१ गन्धपुष्पादित्यागेन इ० पा० ।

मभ्यंगंवर्जयेन्नरः॥भोजनोपस्करंदद्यात्सयातिभवनंहरेः॥ जनप्रीतिकरंनृणांप्रीतिव्रतमिहोच्यते ॥ आषाढादिषुवैयस्तुवर्जयेन्नखकृंतनम् ॥ वार्ताकंचचतुर्मासंमधुसर्पिर्घटान्वितम् ॥ कार्त्तिकान्तेपुनर्हैमंब्राह्मणायनिवेदयेत् ॥ सवैष्णवंपदंयातिविष्णुव्रतमिदंस्मृतम् ॥ महाफलानियस्त्यक्त्वाचातुर्मास्यंद्विजातये ॥ हैमानिकार्त्तिकेदद्याद्गोप्रदानसमंफलम् ॥ एतत्फलव्रतंनामसूर्यलोकफलप्रदम् ॥ उक्तंच ॥ चातुर्मास्यव्रतारंभःशुक्रगुरुमौढ्यादिष्वपिकार्यः॥तदाहवृद्धगार्ग्यः॥नशैशवंनमौढ्यंचशुक्रगुर्वोर्नवातिथेः॥ खंडंचचिंतयेज्जातुचातुर्मास्याविधौनर इति ॥ अकरणेप्रत्यवायश्चमहाभारतेप्रोक्तः ॥ वार्षिकांश्चतुरोमासान्वाहयेत्केनचिन्नरः ॥ व्रतेननोचेदाप्नोतिकल्मषंवत्सरोद्भवमिति ॥ उपक्रमकालश्चसनत्कुमारेणोक्तः ॥ एकादश्यांतुगृह्णीयात्संक्रांतौकर्कटस्यवा ॥ आषाढ्यांवानरोभक्त्याचातुर्मास्यव्रतोचितमिति ॥ महाभारतेपि ॥ वार्षिकांश्चतुरोमासान्व्रतंकिंचित्समाचरेत् ॥ असंभवेतुलार्केपिकर्त्तव्यंतत्प्रयत्नतः॥ एतद्व्रतोपक्रमेसमाप्तौचमंत्राः सनत्कुमारेणोक्ताः॥ इदंव्रतंमयादेवगृहीतंपुरतस्तव ॥ निर्विघ्नंसिद्धिमायातुप्रसन्नेत्वयिकेशव ॥ गृहीतेस्मिन्व्रतेदेवयद्यपूर्णोम्रियाम्यहम् ॥ तन्मेभवतुसंपूर्णंत्वत्प्रसादाज्जनार्दनेति ॥ इत्युपक्रममन्त्रः॥ समाप्तिमंत्रस्तु ॥ इदंव्रतंमयादेवकृतंप्रीत्यैतवप्रभो ॥ न्यूनंसंपूर्णतांयातुत्वत्प्रसादाज्जनार्दनेति ॥ समाप्तिकालश्चमहाभारतेप्रोक्तः ॥ चतुर्द्धागृह्यतेचीर्णंचातुर्मास्यव्रतंनरः ॥ कार्त्तिकेशुक्लपक्षेतुद्वादश्यांतत्समापयेत् ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रसूनुविरचितेनिर्णयामृतेचातुर्मास्यव्रतनिर्णयः ॥ ॥ अथयेषुमासतिथिवारादिषुव्रतवंधोविधीयतेतेउच्यंते ॥ ज्योतिर्निबंधात् ॥ चैत्रमासेमेषसंस्थेचसूर्येफाल्गुन्यांवैमीनराशिस्थितेच ॥ मौंजीबंधंनैवकुर्य्याद्द्विजानांनोद्वाहः स्यान्नैवमांगल्यकंच ॥ गर्गः ॥ नष्टेशुक्रेत

थार्जीवेसिंहस्थेनीचगेऽरिगे ॥ तदोपनयनंकार्य्यंचैत्रेमीनगतेरवौ ॥ विषमोपगतेजीवेसिंहराशिगतेतथा ॥ तदोपनयनंकार्यंचैत्रेमीनगते रवौ ॥ अतीवदुष्टेसुरराजपूज्येसिंहस्थितेवाद्विजपुंगवानाम् ॥ व्रतप्र बंधंरविचैत्रयोगेकृतंधनारोग्यसुखप्रदंस्यात् ॥ शुक्रेनष्टेतथाजीवेत्वब लेचंद्रभास्करे ॥ तदोपनयनंकार्यंचैत्रेमीनगतेरवौ ॥ अथतिथिवा रादिरुच्यते ॥ रत्नकोशे ॥ तृतीयापंचमीषष्ठीदशम्यादिदिनत्रयम् ॥ वारैश्चंद्रार्कजीवज्ञशुक्रैरिष्टाव्रतक्रिया ॥ तथाच ॥ सुरेज्यशुक्रेंदुजचंद्र सूर्यावाराःसमस्तोपनयेप्रशस्ताः ॥ धनुर्द्धरस्त्रीमिथुनोक्षमीनेतुलेविल ग्नेतुशुभाप्रवृत्तिः॥तथा॥एकस्मिन्वत्सरेजीवेकर्कसिंहांगनागते॥ विवा हंमेखलाबंधंनकुर्याद्गालवोऽब्रवीत्॥चमत्कारचिंतामणौ ॥अधिमासेच शुक्रास्तेतथासिंहगतेगुरौ ॥ प्रारब्धंतुप्रकर्त्तव्यंनारभेन्नूतनंव्रतम् ॥ स्मृत्यर्णवे ॥ धनुःशफरयोर्यातेरवौसिंहगतेगुरौ ॥ जीवभार्गवयोर स्तेतद्वन्मासेमलिम्लुचे ॥ आरब्धोत्सर्जनंकार्यंनूत्नारंभंविवर्जयेत् ॥ रूढिःक्वापिप्रदृश्येतानिगमोनैवदृश्यते ॥ रूढिःप्रमाणंविज्ञेयासंछिन्न श्रुतिमूलिका ॥ अथसीमंतोन्नयनम् ॥ तत्रयाज्ञवल्क्यः ॥ षष्ठे ऽष्टमेवासीमंतइति ॥ शंखः ॥ गर्भस्यंदनेसीमंतोन्ननयम् ॥ यावद्वा प्रसवति ॥ सांख्यायनगृह्ये ॥ सप्तमेमासिप्रथमेगर्भेसीमंतोन्नयन मिति ॥ आपस्तंबः ॥ सीमंतोन्नयनंप्रथमेगर्भेचतुर्थेमासीति ॥ बैजवापः॥ सीमंतोन्नयनंमासिचतुर्थेषष्ठेपंचमेवेति ॥ लौगाक्षिः ॥ तृती येगर्भेमासिसीमंतंकारयेदिति ॥ अत्रविशेषमाहशौनकः ॥ आपूर्यमाणपक्षेयदापुंसांनक्षत्रेणचंद्रमायुक्तःस्यादिति ॥ पुंसवनसीमं तोन्नयनेस्त्रीसंस्कारौ ॥ अतएवसकृत्कर्त्तव्याइतिकेचित्॥पारस्करः॥ पुंसवनसीमंतोन्नयनंप्रथमेगर्भेइति ॥ तथाचदेवलोपि ॥ सकृच्चसं स्कृतानारीसर्वगर्भेषुसंस्कृतेति ॥ हारीतः ॥ सकृत्संस्कृतसंस्का राःसीमंतेनद्विजास्त्रियः ॥ यंयंगर्भंप्रसूतेसासर्वःसंस्कृतोभवेदिति॥

विष्णुस्तु ॥ सीमंतोन्नयनंकर्मनस्त्रीसंस्कारउच्यते ॥ केचिद्गर्भस्यसंस्कारान्गर्भेगर्भेप्रयुंजतइति ॥ अत्रापिस्वस्वगृह्यानुसारेणव्यवस्था ॥ अकृतसीमंतायाःप्रसवेसत्यत्रत्तोक्तोविशेषः ॥ स्त्रीयदाऽकृतसीमंताप्रसवेत्तुकथंचन ॥ गृहीतपुत्राविधिवत्पुनःसंस्कारमर्हतीति ॥ इतिसीमंतोन्नयनम्॥ अष्टचत्वारिंशत्संस्काराः॥ गर्भाधानम् १ पुंसवनम् २ सीमंतोन्नयनम् ३ जातकर्म ४ नामकरणम् ५ निष्क्रमणम् ६ अन्नप्राशनम् ७ चूडाकरणम् ८ उपनयनम् ९ इतिस्मार्त्ताः ॥ चत्वारिवेदव्रतानि । ४ । १३ । सावित्रवेदमंत्रस्नानम् । १ । १४ । सहधर्मचारियोगः । १ । १५ । पंचमहायज्ञानामनुष्ठानम् । ५ । २० ॥ उक्तंच ॥ अध्ययनंब्रह्मयज्ञःपितृयज्ञस्तुतर्पणम् ॥ होमोदैवोबलिर्भौतोनृयज्ञोतिथिपूजनमिति ॥ सप्तहविःसंस्थाः । ७ । २७ । अग्न्याधेयः ॥ अग्निहोत्रम् ॥ दर्शपौर्णमासम् ॥ आग्रयणम् ॥ चातुर्मास्यानि ॥ निरूढपशुबंधः ॥ सौत्रामणी ॥ सप्तपाकसंस्थाः । ७ । ३४ । अष्टका ॥ पार्वणपक्षादि ॥ दर्शश्राद्धम् ॥ श्रावणी ॥ आश्वयुजी ॥ आग्रहायणी ॥ चैत्री ॥ सप्तसोमसंस्थाः । ७ । ४१ । अग्निष्टोमः ॥ अत्यग्निष्टोमः ॥ उक्थः ॥ षोडशी ॥ वाजपेयः ॥ अतिरात्रः ॥ आप्तोर्यामः ॥ यदा । ४२ । अनसूया ४३ अनायासः ४४ मंगलम् ४५ अकार्पण्यम् ४६ अस्पृहा ४७ सत्यम् ४८॥ ॥ अथनामकरणादयःसंस्काराः ॥ तत्र मनुः ॥ नामधेयंदशम्यांतुद्वादश्यांवास्यकारयेत् ॥ पुण्येतिथौमुहूर्त्तेवानक्षत्रेवागुणान्वितइति ॥ याज्ञवल्क्यः ॥ अहन्येकादशेनामेति ॥ भविष्यत्पुराणे ॥ नामधेयंदशम्यांतुकेचिदिच्छंति पार्थिव ॥ द्वादश्यामपरेरात्र्यांमासेपूर्णेतथाऽपरे ॥ अष्टादशेहनि तथावदंत्यन्येमनीषिणः ॥ गृह्यपरिशिष्टे ॥ जननाद्दशरात्रेसंवत्सरेवेति ॥ शंखः ॥ आशौचेतुव्यतिक्रांतेनामकर्मविधीयतइति ॥ नचायं

नियमः ॥ तथासतिनामधेयंदशम्यामित्यादिवचनविरोधात् ॥ तथा॥ अहन्येकादशेनामेत्यादीनांविवक्षितार्थत्वमेव ॥ तेनाशौचमध्येपिकार्यम् ॥ स्वगृह्यानुसारेणचैतेपक्षाव्यवस्थिताविज्ञेयाः ॥ शंखलिखितौ ॥ दशम्यामुत्थाप्यपिंडवर्द्धनंपितृणांतत्रसांनिध्यमितिश्रुतिब्रह्मणेत्याहुतिः पूर्वंपितृननुमान्यतदहरेवनामकरणंकुर्याद्देवतानक्षत्राभिसंबद्धं पिताकुर्यादन्योवाकुलवृद्धश्चतुरक्षरंवाघोषवदाद्यंतरंतस्थंपुंसामकारांतमाकारांतंस्त्रीणामेवंकृतेनाम्निशुचितत्कुलंभवतीति ॥ अस्यार्थः ॥ दशमेऽहनिसूतिकांपूर्वशय्यातउत्थाप्य॥पिंडवर्द्धनमितितन्नामकर्मतत्कुर्यात् ॥ तत्रचायंक्रमः ॥ ब्रह्मणेपूर्वमाहुतिंहुत्वापितृननुमान्याभ्युदयश्राद्धेनपूजयित्वा पितातदभावेपिंडसान्निध्यादिनाऽन्योवा नामकुर्यात् ॥ तत्रनियमः ॥ चतुरक्षरमित्यादिवर्गतृतीयचतुर्थानियान्यक्षराणिककारश्चतान्यादौयरलवाअंतस्थास्तान्मध्येकुर्यादिति॥बैजवापः॥ पितानामकरोत्येकाक्षरंद्व्यक्षरंचतुरक्षरमपरामितिचेति ॥ अत्रसमाक्षरंपुंसांविषमाक्षरंस्त्रीणामितिज्ञेयम् ॥ तथाचशंखः ॥ अयुग्माक्षरमाकारांतंस्त्रियाएतद्धिहितमिति ॥ उक्तंच॥ आकारांतंस्त्रीणांस्वकुलसंबंधंवानामकुर्यात् ॥ तथाचशंखः ॥ कुलदेवतासंबद्धंपितानामकुर्यादिति ॥ कुलसंबद्धंदेवतासंबद्धंवेत्यर्थः ॥ मनुः ॥ मंगलयंब्राह्मणस्य स्यात् क्षत्रियस्यबलान्वितम् ॥ वैश्यस्यधनसंयुक्तंशूद्रस्यतुजुगुप्सितमिति ॥ मंगलबलधननिंदाप्रतिपादकानिक्रमेणवर्णानांनामानि भवंतीत्यर्थः ॥ ॥ यथाभद्रशर्मा ॥ शक्तिपालः ॥ धनपुष्टः ॥ हीनदासइति॥ यमस्तूत्तरपदनियममाह ॥ शर्मादेवश्चविप्रस्यवर्मात्राताचभूभुजः ॥ भूतिर्दत्तिश्चवैश्यस्यदासःशूद्रस्यकारयेदिति ॥ त्रातेतिरक्षणवाचिशब्दप्रदर्शनार्थः ॥ अतःशक्तिपालइत्यादिशब्दाभवंति ॥ इतिनामकरणम् ॥ ॥ अथनिष्क्रमणम् ॥ ॥ तत्रभविष्यत्पुराणे उत्तरार्द्धे मनुरपि ॥ द्वादशेहनिराजेंद्रशिशोर्निष्क्रमणंभवेत् ॥ चतुर्थे

मासिकर्त्तव्यंशिशोश्चंद्रस्यदर्शनम् ॥ लौगाक्षिः ॥ तृतीयेर्द्धमासआदित्यस्यदर्शनमिति ॥ अत्रापिपूर्ववदेवव्यवस्था ॥ सुरेश्वरः ॥ जीवभार्गवसौम्यानांशिशुनिष्क्रमणक्रिया ॥ दिवाशस्यतेनित्यमायुर्वृद्धिधनप्रदा ॥ रेवतीचाश्विनीहस्तोधनिष्ठारोहिणीतथा ॥ श्रवणंपुष्यसंयुक्तंमृगेणोत्तरफाल्गुनी॥अनुराधोत्तराषाढातथाचैवपुनर्वसू॥इमानिचातिशस्तानिशिशुनिष्क्रमणेबुधैरिति॥इतिनिष्क्रमणम् ॥अथकर्णवेधः ॥ ज्योतिःशास्त्रे ॥ कार्त्तिकेपौषमासेवाचैत्रेवाफाल्गुनेपिवा ॥ कर्णवेधंप्रशंसंतिशुक्लपक्षेशुभेदिने॥ शुभनक्षत्रेशुभेचंद्रेलग्नेशीर्षोदयेशुभे ॥ दिनेच्छिद्रव्यतीपातविष्टिवैधृतिवर्जिते ॥ शिशोरजातदंतस्यमातुरुत्संगसर्प्पिणः ॥ सौचिकोवेधयेत्कर्णौसूच्याद्विगुणसूत्रया ॥ हस्ताश्विनीस्वातिपुनर्वसूचधनेंदुचित्राहरिरेवतीषु ॥ चंद्रेनुकूलेगुरुशुक्रवारेकर्णौतुवेध्यावमरेज्यलग्ने ॥ अयंचकर्णवेधःकुलक्रमागतकालेकर्त्तव्यः ॥ इतिकर्णवेधः ॥ ॥अथान्नप्राशनम् ॥ ॥ तत्रमनुः॥षष्ठेन्नप्राशनंमासियथेष्टंमंगलंकुलइति ॥ लौगाक्षिः॥ षष्ठेमासेन्नप्राशनंजातेषुदंतेषुचेति॥ यमः॥ततोन्नप्राशनंमासेषष्ठेकार्यंयथाविधि ॥ अष्टमेवाथकर्त्तव्यमिति ॥ शंखः ॥ संवत्सरेन्नप्राशनमिति ॥ व्यवस्थापूर्ववत् ॥ अत्रविशेषोमार्कंडेयपुराणे॥देवतापुरतस्तस्यधात्र्युत्संगगतस्यच॥अलंकृतस्यदातव्यमन्नंपात्रेथकांचने ॥ मध्वाज्यकनकोपेतंप्राशयेत्पायसंतुतम् ॥ तदनंतरंशिशोर्जीविकापरीक्षाप्रकारमाहसएव ॥ देवाग्रतोथविन्यस्यशिल्पभांडानिसर्वशः ॥ शास्त्राणिवाथशस्त्राणिततःपश्येत्तुलक्षणम्॥प्रथमंयत्स्पृशेद्बालस्ततोबालःस्वयंतदा ॥जीविकातस्यबालस्यतेनैवतुभविष्यति ॥ इत्यन्नप्राशनम्॥ ॥अथचूडाकर्म॥ ॥ तत्रमनुः॥चूडाकर्मद्विजातीनांसर्वेषामेवधर्मतः॥प्रथमेब्देतृतीयेवाकर्त्तव्यंश्रुतिचोदनादिति ॥ शंखलिखितौ ॥ तृतीयेवर्षेचूडाकर्मपंचमेवा ॥ लौगाक्षिः ॥ तृतीयस्यवर्षस्यभूयिष्ठेगतेचूडाःकारयंतेदक्षिणतःकाण

भुजांवामतोवसिष्ठानामुभयेत्रिकश्यपानामेकमुंडाभृगवःपंचचूडाअं गिरसोवाजिमेकेमंगलार्थंशिखिनोन्ये यथाकुलमिति ॥ मुंडाचूडा वा जिश्रकेशपंक्तिः ॥ मंगलार्थमिति ॥ अन्येतुमंगलार्थंशिखामात्रंयत्र क्वचनकुर्वंति ॥ अत्रापिस्वगृह्यव्यवस्था ॥ व्यासः ॥ अश्विनीश्रवण स्वातिचित्राःपुष्यपुनर्वसू ॥ धनिष्ठारेवतीज्येष्ठामृगहस्तेषुकारयेत्॥ क्षौरमितिशेषः ॥ तथा ॥ नक्षत्रेतुनकुर्वीतयस्मिञ्जातोभवेन्नरः ॥ नप्रोष्ठपदयोःकार्यंनैवाग्नेयेचभारत॥ दारुणेषुचसर्वेषुदुष्टतारांचवर्जये दिति ॥ अन्येतिथिवारादिविशेषाउपनयनकर्मोक्ताद्रष्टव्याः॥ इति चूडाकर्म ॥ ॥ अथस्त्रीसंस्काराः ॥ तत्रमनुः ॥ अमंत्रकातुकार्यें यंस्त्रीणामावृद्धिशेषतः ॥ संस्कारार्थंशरीरस्ययथाकालंयथाक्रमम् ॥ आवृज्जातकर्मादिक्रिया यथाक्रममित्यभिधानात्क्रमातिक्रमोनकर्त्त व्यइत्युक्तंभवति ॥ अतएवकालातिक्रमेकात्यायनेनप्रायश्चित्तमभि हितम् ॥ देवतानांविपर्यासेजुहोतिषुकथंभवेत् ॥ सर्वप्रायश्चित्तंहुत्वा क्रमशोजुहुयात्पुनः॥ संस्काराअतियुज्येरन्स्वकालाच्चेत्कथंचन ॥ हु त्वैतदेवकर्त्तव्यायेतूपनयनादधः ॥ सर्वप्रायश्चित्तमपिसएवाह ॥ सर्व प्रायश्चित्तंपंचभिःत्वंनोअग्नइति ॥ द्वाभ्यामयाश्चाग्नेश्चेति॥ येतेशतमु दुत्तमामितिचेति॥उपनयनकालातिपत्तौतुव्रात्यस्तोमाद्यैश्च ॥ एते ष्वेकैकलोपेपादकृच्छ्रः॥चौललोपेत्वर्द्धकृच्छ्रः ॥ स्त्रीसंस्कारेगोभिलो विशेषमाह ॥ तूष्णीमेताःक्रियाःस्त्रीणाममंत्रेणतुहोमतइति ॥ ॥ अथ विद्यारंभः ॥ तत्रमार्कंडेयः ॥ प्राप्तेथपंचमेवर्षेअप्रसुप्तेजनार्दने ॥ षष्ठीं प्रतिपदंचैववर्जयित्वातथाष्टमीम् ॥ रिक्तांपंचदशींचैवसौरभौमदिनं तथा ॥ एवंसुनिश्चितेकालेविद्यारंभंतुकारयेत्॥पूजयित्वाहरिंलक्ष्मीं देवींचैवसरस्वतीम् ॥ स्वविद्यासूत्रकारांश्चस्वविद्यांचविशेषतः ॥ एतेषामेवदेवानांनाम्नातुजुहुयाद्घृतम् ॥ दक्षिणाभिर्द्विजेंद्राणांकर्त्त व्यंचात्रपूजनम्॥प्राङ्मुखोगुरुरासीनोवारुणाभिमुखंशिशुम् ॥ अध्या

पयेच्चप्रथमंद्विजाशीर्भिःसुपूजितम् ॥ ततःप्रभृत्यनध्यायान्वर्जनी यान्विवर्जयेत् ॥ इति ॥ अस्यचशिशोःकामचारवादभक्षता ॥ यथा हगौतमः ॥ प्रागुपनयनात्कामचारवादःकामचारभक्षइति ॥ काम चारोप्यपतनीयकर्मस्वेव ॥ तत्रपादोबालेषुदातव्यइत्यादिप्रायश्चित्त स्मरणात् ॥ पुनरुपनयनविषयेकिंचिदुच्यते ॥ तदुक्तंसुरेश्वरेण ॥ माघेमासिमहाधनोधनपतिःप्राज्ञोधनीफाल्गुनेमेधावीभवतिव्रतोपनय नेचैत्रेचवेदान्वितः ॥ वैशाखेसुभगःसुखीपटुमतिर्ज्येष्ठेबलिष्ठोबुधोप्या षाढेपिमहाविपक्षविजयीख्यातोमहापंडितइति ॥ तथाचापस्तंबेन वर्णविशेषेविशेषउक्तः ॥ यथा ॥ वसंतेब्राह्मणमुपनयीत ॥ ग्रीष्मेराज न्यम् ॥ शरदिवैश्यमिति ॥ अतश्चब्राह्मणादीनांवसंतादिऋतुत्रयेएव उपनयनंश्रेष्ठम् ॥ तदसंभवेमाघाद्याषाढांतमासेषुनिषिद्धकालवर्जिते षुकार्यम् ॥ तेचमाघादिमासाःसर्ववर्णसाधारणाइति ॥ गार्ग्यआ ह ॥ माघशुक्लादिकपंचमासाःसाधारणावासकलद्विजानामिति ॥ ॥ ॥ वृद्धवसिष्ठेनतुविशेषउक्तः ॥ विप्रस्यक्षत्रियस्यापिमौंजीस्या दुत्तरायणे ॥ दक्षिणेतुविशांकुर्यान्नानध्यायेनसंक्रमेइति ॥ यत्तुवृद्ध गार्ग्यवचनम् ॥ अनध्यायेप्रकुर्वीतयस्तुनैमित्तिकोभवेत् ॥ सप्तमीमा घशुक्लेतुतृतीयाचाक्षयातथा ॥ बुधत्रयेंदुवाराश्चशस्ताश्चव्रतबंधनइ ति ॥ तत्प्रायश्चित्तार्थोपनयनविषयम् ॥ यतःसएवाह ॥ स्वाध्याय वियुजोघस्राःकृष्णप्रतिपदादयः ॥ प्रायश्चित्तनिमित्तेतुमेखलाबंधने मताइति ॥ अथतिथयः ॥ तृतीयैकादशीग्राह्यापंचमीद्वादशीतथा ॥ द्वितीयायांचमेधावीभवेदर्थबलान्वितः ॥ रिक्तायामर्थहानिःस्यात्पौर्ण मास्यांतथैवच ॥ प्रतिपद्यपिचाष्टम्यांकुलवृद्धिविनाशकृदिति ॥ ॥ तथाच ॥ सप्तम्यांप्रतिपदिरिक्तात्रयोदश्याम् ॥ आयुर्विद्यानाशोव्र तबंधेपंचदश्यांचेति ॥ तथाच ॥ नचषष्ठ्यांतथाष्टम्यांपंचदश्यांन पर्वणि ॥ रिक्तासुचनकर्तव्यंत्र्यहस्पृग्दिवसेतथेति॥ अथनक्षत्रवारौ॥

हस्तत्रयेदैत्यरिपुत्रयेचशक्रेंदुपुष्याश्विनिरेवतीषु ॥ वारेषुशुक्रार्कबृहस्पतीनांहितानुबंधीद्विजमौंजिबंधइति ॥ ॥ इतिव्रतबंधनिर्णयः ॥ ॥ अथविवाहोपयुक्तामासादयउच्यन्ते ॥ ॥ तदुक्तंज्योतिःसागरे ॥ ॥ माघफाल्गुनवैशाखज्येष्ठाषाढमृगाह्वयाः ॥ षडेतेपूजितामासाश्चातुर्वर्ण्यस्यनित्यशः ॥मार्गेमासितथाज्येष्ठेक्षौरंपरिणयंव्रतम् ॥ ज्येष्ठपुत्रदुहित्रोस्तुयत्नेनपरिवर्जयेत्इति ॥ तथा ॥ श्रेष्ठंपक्षमुशंतिशुक्लमसितस्याद्यंत्रिभागंतथारिक्तांप्रोज्झ्यतिथिंतथत्वयनयोःसंधिंचशेषाःशुभाइति ॥ वृद्धगार्ग्येणतुचैत्रादिषुनिषेधउक्तः ॥ मीनेधनुषिसिंहेचस्थितेसप्ततुरङ्गमे ॥क्षौरकर्मनकुर्वीतविवाहंगृह्यकर्मचेति ॥ ॥ गांगेयोपि ॥सर्वर्त्तवोविवाहस्यशैशिरौमासौपरिहार्यौत्तमंचनैदाघमिति॥शैशिरौशिशिरर्त्तुसंबंधिनौ ॥अतश्चशिशिरर्त्तुनादौसंबद्धंपौषमन्तेसंबद्धंचैत्रंच॥उत्तमंनैदाघमाषाढमासंचवर्जयित्वेत्यर्थः ॥ रत्नमालायांतु॥नाषाढप्रभृतिचतुष्टयेविवाहोनोपौषेनचमधुसंज्ञकेविधेयइति॥नन्वेषुवाक्येषुविरोधोदृश्यते ॥ ज्योतिःसागरवाक्ये आषाढमृगाह्वया इत्याषाढस्वीकारात् ॥ गांगेयेनपौषचैत्राषाढव्यतिरिक्तानांसर्वमासानांवैवाहिकत्वाभिधानात् ॥ रत्नमालायामाषाढप्रभृतिचतुष्टयवर्जनाच्चेति ॥ सत्यम् ॥ देशाचारभेदेनविरोधःपरिहरणीयः ॥ तथाहि ॥ काश्मीरेभाद्रपदेविवाहादृश्यंते ॥ पुष्करेषुकार्तिके ॥ एवमन्यत्रापिदेशाचारोद्रष्टव्यः ॥ अथविवाहेतिथिषुविशेषउच्यते ॥ तथा ॥ प्रतिपद्दुःखजननीद्वितीयाप्रीतिवर्द्धनी ॥ सौभाग्यदातृतीयास्याच्चतुर्थीचार्थनाशिनी ॥ पंचम्यांसुखवित्तानिषष्ठीविघ्नप्रदामता ॥ विद्याशीलसुखाप्तिःस्यात्सप्तम्यामफलाष्टमी ॥ नवमीशोकभयदा आनंदोदशमीदिने सुखदैकादशीज्ञेयाद्वादशीस[१]फलास्मृता ॥ माने[२] पुत्रौत्रयोदश्यांचतुर्दश्यौतुदोषदे ॥ फलंबहुविधंनित्यंपंचदश्यांवि

---

१ फलदा० इ० पा० । २ धनपुत्रौ इ०पा० ।

शेषतः ॥ नचेहशुक्लप्रतिपदुदयंतीनिषिध्यते ॥ अत्रापिकृष्णपक्षस्यदशमीमविवाहिकाम् ॥ वदंत्यन्येतुदशमीमुभयोरविवाहिकाम् ॥ अथवारः ॥ गुरुशुक्रेंदुपुत्राणांदिनेषुपरिणीयते ॥ याकन्यासाभवेन्नित्यंभर्तुश्चित्तानुवर्तिनी ॥ अर्कार्किभौमवाराणांदिनेषुकलहप्रिया ॥ सापत्न्यंसमवाप्नोतितुपारकरवासरइति ॥ अत्रदिनेइतिविशेषोपादानाद्रात्रौविवाहेनदोषइतिगम्यते ॥ तथैवग्रंथांतरेपि ॥ नवारदोषाः प्रभवंतिरात्रौइति ॥ अत्रवर्जितेष्वपितिथिवारेषुसिद्धयोगेसतिविवाहः कार्यः ॥ तदुक्तम् ॥ शनैश्चरदिनेप्राप्तेयदारिक्तातिथिर्भवेत् ॥ तस्मिन्विवाहिताकन्यापतिसंततिवर्द्धनी॥गुरौसिंहमकरस्थितेउक्तेष्वपिमासेषुविवाहोनकार्यः ॥ तदुक्तंज्योतिःसागरे ॥ सिंहस्थंमकरस्थंच गुरुंयत्नेनवर्जयेत्॥सिंहस्थेपिमघासंस्थमित्याहभगवान्भृगुः ॥अन्यत्र सिंहभागेतुविवाहादिविधीयतइति॥विवाहे वर्षनिर्णयः ॥चतुर्भिःषड्भिरष्टाभिर्दशद्वादशभिस्तथा ॥ वर्षैर्विवाहिताकन्यावैधव्यमुपगच्छति ॥ गौतमोपि ॥ द्वादशेदशमेवाब्देचतुर्थेवाचतुर्दशे ॥ षष्ठेष्टमेद्वितीयेवाकन्यकांचेत्प्रयच्छति ॥ करोतिवैधव्यमपत्यशोकंदौर्भाग्यमात्यंतिकमर्थनाशम्॥युग्मेचवर्षेविहितेविवाहेनकन्यकावृद्धिमुपैतिकापि ॥ इत्यादिवचनैःस्मृतिषुयुग्मवर्षेविवाहोनिषिद्धः ॥ ज्योतिःशास्त्रेपुनरयुग्मवर्षेनिषिद्धः ॥ तस्मात् मासत्रयादूर्ध्वमयुग्मवर्षेयुग्मेतुमासत्रयमेव यावत्॥विवाहशुद्धिःखलुकन्यकायाज्योतिःस्मृतीनामपिनोविरोधः॥ अयुग्मेविधवानारीयुग्मेचाविधवाभवेत् ॥ तस्माद्गर्भयुतेयुग्मेकन्यकास्यात्पतिव्रतेति ॥ शतपथभाष्ये संवत्सरांतादीनिनिरूप्यंते ॥ पौर्णमास्यांतुफाल्गुन्यांवत्सरान्तोनिशात्यये ॥ प्रतिपद्युदितेसूर्येवत्सरादिःश्रुतौस्मृतइति ॥ ज्योतिःसागरे ॥ अतिचारगतोजीवः स्वराशिंनैतिचेद्यदि ॥ लुप्तसंवत्सरोज्ञेयःसर्वकर्मसुगर्हितइति ॥ भृगोस्तुकच्छेशुभदोविवाहोवलक्षपक्षेनभसोदशम्याम् ॥ पञ्चेयथाका

र्त्तिकपौर्णमास्यांदेशेष्वितिस्याच्छुभदोविवाहः॥मंडपेवर्णकेवेद्यांकौसुंभेचयवांकुरे ॥ तृतीयंनवमंषष्ठंनोद्वाहात्प्राग्दिनंशुभम् ॥ इतिविवाहेमंडपादिकालः ॥ नशुक्रदोषोनसुरेज्यदोषस्ताराबलंचंद्रबलंचयोज्यम् ॥ नवानवोढागमनप्रयाणेदीपोत्सवेकार्त्तिकपौर्णमास्याम् ॥ इतिसामान्यतःसर्वविवाहनिर्णयः ॥ सिंहस्थेमकरस्थेचगुरौविवाहोनिंदितः ॥ केचित्तुसिंहस्थेपिमेषसूर्येकुर्वंति ॥ अत्रापिविशेषोलल्लेनोक्तः ॥ नर्मदापूर्वभागेतुशोणस्योत्तरदक्षिणे ॥ गंडक्याःपश्चिमेभागेमकरस्थेनदोषकृदिति॥यत्तुमिहिरवचनम्॥ सार्वकालिकमिच्छंतिविवाहंगौतमादयइति ॥ तदसुराद्यधर्मविवाहविषयम् ॥ तदुक्तंगृह्यपरिशिष्टे ॥ धर्म्येष्वेवविवाहेषुकालपरीक्षणंनाधर्म्येष्विति ॥ अत्रप्रासंगिकिंचिल्लिख्यते ॥ विवाहेविततेतंत्रेहोमकालउपस्थिते ॥ कन्यामृतुमतींदृष्ट्वाकथंकुर्वंतियाज्ञिकाः॥ स्नापयित्वातुतांकन्यामर्चयित्वायथाविधि ॥ युंजानमाहुतिंहुत्वाततःकर्मप्रवर्तयेत् ॥ स्मृतिचंद्रिकायाम् ॥ विवाहहोमेप्रक्रांतेयदिकन्यारजस्वला ॥ त्रिरात्रंदंपतीस्यातांपृथक्शय्यासनाशनौ ॥ चतुर्थेहनिसंस्नातौतास्मिन्नग्नौयथाविधि ॥ विवाहहोमंकुर्यातामित्यादिस्मृतिसंग्रहइति ॥ ॥ स्मृत्यर्थसारेविशेषउक्तः ॥ विवाहेदंपतीस्यातांत्रिरात्रंब्रह्मचारिणौ ॥ अलंकृतावधश्चैवसहशय्यासनाशनाविति ॥ ॥ अथैकोदरप्रसूतानांविवाहविषयेमिहिरेणविशेषउक्तः॥ एकोदरप्रसूतानामेकस्मिन्नेववत्सरे ॥ विवाहोनैवकर्त्तव्योगर्गस्यवचनंयथेति ॥ ॥ अत्रैकोदरप्रसूतानांपुंसामेव ॥ कन्याविषयेतेनैवविशेषाभिधानात् ॥ ॥ यथा ॥ उद्वाह्यपुत्रींनपिताविदध्यात्पुत्र्यंतरस्योद्वहनंकदाचित् ॥ यावच्चतुर्थीदिनमंगलस्यसमापनंतावदसौविदध्यादिति ॥ अन्योपिविशेषस्तेनैवोक्तः ॥ नपुंविवाहोर्ध्वमृतुत्रयेपिविवाहकार्यंदुहितुःप्रकल्प्यम्॥नमंडनाच्चापिहिन्नमुंडनंस्यान्मुंडनान्मुंडनमब्दगेवेति॥

१ सम्प्राप्ते इ० पा० । २ चतुर्थीदिह इ० पा० । ३ तुमासाद इ० पा० ।

मंडनंविवाहादि ॥ मुंडनमुपनयनादि॥विवाहादूर्ध्वमृतुत्रयाभ्यंतरेऽप
नयनादिकंनकार्यमित्यर्थः॥तथाचज्योतिर्निबंधे ॥ एकोदरभ्रातृयुग्मे
स्वसृभ्रातृयुगेतथा॥नतदामंगलंकुर्यादेकस्मिन्वत्सरेक्वचित् ॥ नारदी
ये॥पुत्रोद्वाहानंतरंपुत्रीविवाहंनतुकारयेत्॥नतयोर्व्रतमांगल्यंमंगलेजा
तुमंगलम्॥मुंडनादुपरिमंडनंभवेदायुषोद्रविणवृद्धिकारकम्॥ नैवशो
भनमृतुत्रयादधोमंडनात्परतरंहिमुंडनम् ॥ ऊर्द्ध्वंविवाहःशुभदोनर
स्यनारीविवाहान्नऋतुत्रयेण ॥ नारीविवाहोपितथैवचोर्ध्वंनरस्यपा
णिग्रहणान्नशस्तः॥नभवेल्लघुवृद्धिस्तुबृहद्वृद्धेरनंतरम् ॥विवाहान्नविवा
हस्तुषण्मासावधिसोदरे ॥ होरापटले ॥ पुंविवाहःप्रवेशोविनिर्दिश्य
तेस्त्रीविवाहःकुलेनिर्गमःकथ्यते ॥ निर्गमादादितोनप्रवेशःशुभस्तत्र
संवत्सरांतोविधिःकीर्त्तितइति ॥ नैकसंवत्सरेकुर्याद्भ्रात्रोर्यमलजात
योः॥विवाहव्रतचौलंचतथाव्रतविसर्जनम्॥ नज्येष्ठेज्येष्ठयोःकार्य्यंनृना
र्योःपाणिपीडनम्॥ तयोरन्यतरेज्येष्ठेज्येष्ठोपिनविरुध्यतीति ॥ कन्या
ज्येष्ठावरोज्येष्ठोज्येष्ठोमासस्तथैवच ॥ एतज्ज्येष्ठत्रयंनेष्टंविवाहेशौन
कोऽब्रवीत् ॥ अथकार्त्तिकीविवाहः ॥ भार्गवस्यचगुरोरदर्शनेदृष्ट
दोषपरिपीडितोदिने॥कार्त्तिकीसकलदोषनाशनीकन्यकोद्वहनलग्नकं
शुभम् ॥ अग्रतःपृष्ठतोवापिकार्त्तिक्यादिनपंचके ॥ कन्यकोद्वा
हनंकार्यंनदोषोदक्षिणायने ॥ शौनकादिमुनयस्त्रिपुष्करेकार्त्तिकी
कृतकरग्रहाःसदा ॥ तत्रपाणितलपीडनेकृतेपुत्रवित्तसुखभाग्भ
वेदथ ॥ कार्तिक्यांपुष्करेब्रह्मासावित्रींपरिणीतवान् ॥ शुद्धिं
विनापिजायेतयत्रतत्रकरग्रहः ॥ भैष्म्यःपंचनिशाःशुभानिगदिताः
पूर्वापरापूर्णिमाकार्त्तिक्यामथपुष्करेऽथपुलिनेनद्याःशुभेसंगमे ॥ दे
वाग्रेवरवाटिकासुसुदृशांवैवाह्यधिष्ण्यैर्विनाशुक्रार्कज्यशशांकशुद्धि
रहितःपाणिग्रहःशोभनः ॥ इक्षोःसान्निध्यआरामेप्रसिद्धेदेवताल
ये ॥ नदीह्रदतडागेचविवाहःपुष्करेस्मृतः॥शुक्रेनष्टेतथाजीवेग्रहणे

चंद्रसूर्ययोः ॥ केशवोत्थापनाहाद्वाविवाहःपुष्करेस्मृतः ॥ कार्त्ति
क्यांघटिकालग्नंकरोत्यज्ञानतोपियः ॥ कर्त्ताकारयिताचोभौनिंदि
तौसकलैर्बुधैः ॥ कुर्याद्गोधूलिकंलग्नंकार्त्तिक्यांपंडितोजनः ॥ क
र्त्ताकारयिताचोभौपुत्रपौत्रसमन्वितौ ॥ इतिकार्त्तिकीविवाहनिर्णयः॥
अत्रप्रासंगिकंकिंचिल्लिख्यते ॥ विवाहानंतरंवर्षपर्यंतंव्रतबंधनोत्तरं
षण्मासपर्यंतंचौलानंतरंत्रिमासपर्यंतंतिलतर्पणंपिंडसहितंश्राद्धंचनकु
र्यात् ॥ तदुक्तंस्मृत्यर्थसारे ॥ विवाहेचोपनयनेचौलेसतियथाक्रमम्॥
वर्षमर्द्धंतदर्धंचनेत्येकेतिलतर्पणम् ॥ वृद्धौसत्यांचतन्मासिनेत्येके
तिलतर्पणम्॥तीर्थेतिथिविशेषेचकार्यंप्रेतेचसर्वदा ॥ पिंडान्सपिंडानो
दद्युःप्रेतपिंडंविनात्रतु॥पितृयज्ञेचयज्ञेचगयायांदद्युरेवते ॥ गयासाम्यं
मृताहस्यकेचिदाहुःपुरातनाः॥ ॥इतिविवाहनिर्णयः॥ ॥अथद्विरागम
नकालउच्यते ॥ तदाहसुरेश्वरः ॥ माघफाल्गुनवैशाखेशुक्लपक्षेशुभे
दिने ॥ गुर्वादित्यविशुद्धौस्यान्नित्यंपत्नीद्विरागमइति ॥ वादराय
णोपि ॥ भर्तुःशोभनगोचरेहिमकरेनास्तंगतेभार्गवेसूर्येकीटवटाजगे
शुभदिनेपक्षेतुकृष्णोत्तरे ॥ हित्वादिक्पतिशीतगूबुधसितौलालाटि
केदिक्पतावानीतागुणशालिनीनववधूर्नित्योत्सवैर्नंदते ॥ पूर्वतोभ्यु
दितेशुक्रेप्रयायाद्दक्षिणापरे ॥ पश्चादभ्युदितेचैवयायात्पूर्वोत्तरेदि
शि ॥ स्वभवनपुरप्रवेशेदेशानांविप्लवेतथोद्वाहे ॥ नववद्धागृहगमने
प्रतिशुक्रविचारणानास्ति ॥ ॥ तथाच ॥ ॥ नीहारांशुधनोत्तरादि
तिगुरुत्वाष्ट्रानुराधाश्विनीशार्कैर्भास्करवायुविष्णुवरुणब्राह्मैश्चशस्ते
तिथौ ॥ कुंभाजलिगतेरवौशुभकरेप्रातोदयेभार्गवेजीवज्ञास्फुजितांदि
नेनववधूसद्मप्रवेशः शुभः ॥ ॥इतिद्विरागमननिर्णयः॥ ॥ इतिश्रीसू
र्यसेन०निर्णयामृतेप्रथमंतिथिमासप्रकरणंसमाप्तम् ॥ १ ॥
॥ श्रीसूर्यसेनभूभृद्विमलयशःक्षीरसागरादुदिते॥इतिनिर्णयामृतेऽस्मि
न्पूर्णस्तिथिमासनिर्णयःप्रथमः ॥ श्रीमत्पंडितसिद्धलक्ष्मणसुतःश्री

सिद्धलक्ष्मीपदद्वंद्वाराधनसुप्रसिद्धमहिमायःसिद्धसारस्वतः॥ आदेशा
दकृतैषसूर्यमहसःश्रीसूर्यसेनप्रभोर्वैधेकर्मणिकालनिर्णयमसावल्लाटना
थःसुधीः ॥ ॥अथद्वितीयंश्राद्धप्रकरणमारभ्यते॥ ॥ तत्रश्राद्धस्वरूपं
मरीचिनाप्रोक्तम् ॥ प्रेतान्पितॄनप्युद्दिश्यभोज्यंयत्प्रियमात्मनः ॥
श्रद्धयादीयतेयत्तुतच्छ्राद्धंपरिकीर्तितमिति॥तच्चद्विविधमेकोद्दिष्टंपार्व
णंचेति॥तत्रैकमुद्दिश्ययद्दीयतेतदेकोद्दिष्टम् ॥ त्रिपुरुषोद्देशेनदीयमा
नंपार्वणमिति ॥ तदाहकण्वः ॥ एकमुद्दिश्ययच्छ्राद्धमेकोद्दिष्टमुदी
रितम् ॥ त्रीनुद्दिश्यतुयत्तद्धिपार्वणंमुनयोविदुरिति ॥ तत्पुनर्नित्यनै
मित्तिककाम्यभेदेनत्रिविधम्॥तत्रनित्यंप्रत्याब्दिकादि॥ नैमित्तिकंप्रे
तश्राद्धसपिंडीकरणादि॥काम्यश्राद्धमलभ्ययोगादिषुक्रियमाणम् ॥
तदाहकात्यायनः ॥ मृताहेऽहरहर्दर्शश्राद्धंयच्चमहालये ॥ तंनित्य
मुदितंसद्भिर्नित्यवद्धिविधानतइति ॥ तथानैमित्तिकश्राद्धंगाल
वेनोक्तम् ॥ प्रेतंश्राद्धंसापिंडांतंसंक्रांतिग्रहणेषुच ॥ तथाभ्युदयिकं
श्राद्धंवृद्धिश्राद्धंनिमित्ततइति ॥ काम्यंचतेनैवोक्तम् ॥ तिथ्यादिषुच
यच्छ्राद्धंमन्वादिषुयुगादिषु ॥ अलभ्येषुचयोगेषुतत्काम्यंसमुदाहृत
मिति ॥ अत्रतिथ्यादिष्वित्यादिशब्दान्नक्षत्रवारयोगकरणेषुकैश्चित्
नित्यंनैमित्तिकंकाम्यंवृद्धिश्राद्धमतःपरम्॥ पार्वणंचेतिविज्ञेयंश्राद्धंपं
चविधंबुधैरितिपंचविधत्वमुक्तम् ॥ कैश्चिद्द्वादशविधत्वमुक्तम् ॥
तत्रविचार्यमाणेसर्वेषांभेदानामुक्तेषुत्रिष्वेवांतर्भावइतित्रिविधत्वमेव
युक्तम् ॥ ॥ अथश्राद्धकालउच्यते ॥ ॥ तदाहयाज्ञवल्क्यः ॥
अमावास्याष्टकावृद्धिकृष्णपक्षोयनद्वयम् ॥ द्रव्यंब्राह्मणसंपत्तिर्विषुव
त्सूर्यसंक्रमः॥ व्यतीपातोगजच्छायाग्रहणंचंद्रसूर्ययोः ॥ श्राद्धंप्रतिरु
चिश्चैवश्राद्धकालाःप्रकीर्तिता इति॥ ॥तत्रमार्गशिरपौषमाघफाल्गु
नभाद्रपदेषुकृष्णपक्षाष्टम्योऽष्टकास्तत्पूर्वसप्तम्याःपूर्वेद्युस्तत्परानव
म्योन्वष्टकाः ॥ तदुक्तंकालादर्शे ॥ मार्गशीर्षेचपौषेचमाघेप्रौष्ठेचफा

१ संवत्सरोदकुंभश्च० इ० पा०।

ल्गुने ॥ कृष्णपक्षेषुपूर्वेद्युरन्वष्टक्यंतथाष्टकमिति ॥ विष्णुस्मृताव
पि ॥ अमावास्यास्तिस्रोष्टकास्तिस्रोन्वष्टकास्तिस्रःपूर्वेद्युः ॥ प्रौष्ठप
देहेमंतशिशिरयोरपरपक्षेषुत्रयोदशीव्रीहिभिर्यवैर्वायागइति ॥ अस्य
र्थः ॥ प्रौष्ठपदेकृष्णाष्टमीएकाष्टका॥मार्गशीर्षपौषयोःकृष्णाष्टम्यौहेमं
ततौरेकत्वादेकैवगम्यते ॥ माघफाल्गुनयोरपिकृष्णाष्टम्यौशि
शिरर्त्तौरेकत्वादेकैवेतितिस्रोष्टकाः ॥ एवमन्वष्टकास्तिस्रःपूर्वेद्युश्चेति
वेदितव्याः ॥ अत्रमासप्रयुक्तासुपंचस्वष्टमीषुऋतुप्रयुक्त्याद्वयोरे
कत्वमभिधायत्रित्वसंख्ययाभिधानेकिंकारणमितिचेत्॥ ॥ सत्यम्॥
देवताविशेषेद्रव्यविशेषेचत्रित्वदर्शनात्रित्वसंख्याभिधानमुपपद्यते ॥
॥ तदुक्तंवायुपुराणे ॥ ॥ पित्र्यदानायमूलंस्युरष्टकास्तिस्रएवच ॥
कृष्णपक्षेवरिष्ठाहिपूर्वाचैंद्रीतिभाष्यते ॥ प्राजापत्याद्वितीयास्यात्तृती
यावैश्वदेविकी ॥ आद्यापूपैःसदाकार्यामांसैरन्याभवेत्तथा ॥ शाकैः
कार्यातृतीयास्यादेषोद्रव्यगतोविधिरिति ॥ अत्रापिहेमंताष्टम्योरिं
द्रोदेवताअपूपोद्रव्यम् ॥ शिशिराष्टम्योःप्रजापतिर्देवतामांसंद्र
व्यम् ॥ भाद्रपदाष्टम्यांविश्वेदेवादेवताशाकोद्रव्यमितित्रित्वसंख्यो
पपत्तिः ॥ आश्वलायनस्तु ॥ हेमंतशिशिरयोश्चतुर्षुमासेषुचतस्रोऽ
ष्टकाइत्याह ॥ यथा ॥ हेमंतशिशिरयोश्चतुर्णामपरपक्षाणामष्टमी
ष्वष्टकाइति॥गजच्छायातु ॥ यदेंदुःपितृदैवत्येहंसश्चैवकरेस्थितः॥
त्रयोदशीगजच्छायाश्राद्धेपुण्यैरवाप्यतइति ॥ अन्यत्सुगमम् ॥
इतिप्रसंगादष्टकादिस्वरूपंनिरूप्यप्रकृतमनुसंधीयते ॥ तदुक्तम् ॥
नित्यश्राद्धंमृताहोहरहरित्यादि ॥ तत्रमृताहस्यपूर्वोद्दिष्टत्वेनतन्नि
र्णयस्यापिपूर्वत्वमेवोचितम् ॥ तथापितस्यप्रत्याब्दिकेप्येवमेवेत्य
मावास्यातुल्यत्वादमावास्यानंतरमेवतन्निर्णयोवक्ष्यते ॥ अहरहः
श्राद्धस्वरूपंतुभविष्योत्तरेप्रोक्तम् ॥ यथा ॥ अहन्यहनिय
च्छ्राद्धंतन्नित्यमितिकीर्त्तितम् ॥ वैश्वदेवविहीनंतदशक्तावुदके

नत्विति ॥ अमावास्याश्राद्धंचनित्यम् ॥ अकरणेप्रत्यवायस्मरणात् ॥ तदाहव्याघ्रः ॥ ननिर्वपतियच्छ्राद्धंप्रमीतपितृकोद्विजः ॥ इंदुक्षयेमासिमासिप्रायश्चितीयतेनरइति ॥ साचामावास्याशुद्धाविद्धाचेतिद्विविधा ॥ तत्रशुद्धात्वसंदिग्धा ॥ विद्धापुनस्त्रिविधा ॥ भूतविद्धावाप्रतिपद्विद्धावाउभयविद्धाचेति ॥ तत्रोभयविद्धातुपुनश्चतुर्विधा ॥ पूर्वदिनएवापराह्णव्यापिनीपरदिनएवापराह्णव्यापिनीउभयत्रापराह्णव्यापिनीनोभयत्रापराह्णव्यापिनीचेति ॥ अत्रोभयत्रापराह्णव्यापिनीपुनस्त्रिधा ॥ तिथिक्षयोपेतातिथिवृद्धयुपेतातिथिसाम्योपेताचेति ॥ एवंविद्धामावास्याष्टविधा ॥ तत्रभूतविद्धामावास्याचंद्रदर्शनसंभवात्सिनीवालीत्युच्यते ॥ प्रतिपद्विद्धातुचन्द्रदर्शनाभावात्कुहूरित्युच्यते॥तदुक्तम्॥ दृष्टचंद्रासिनीवालीनष्टचंद्राकुहूस्मृतेति ॥ एषुभेदेषुभूतविद्धाप्रतिपद्विद्धावापराह्णव्यापिनीपितृकर्मणिग्राह्या ॥ तथाचश्रुतिः ॥ पूर्वाह्णोवैदेवानांमध्यंदिनोमनुष्याणामपराह्णःपितृणामिति ॥ स्मृतिरपि ॥ पूर्वाह्णेदैविकंकर्मअपराह्णेतुपैतृकम् ॥ एकोद्दिष्टंतुमध्याह्नेप्रातर्वृद्धिनिमित्तकमिति ॥ हारीतोपि ॥ अपराह्णःपितृणांतुयापराह्णानुयायिनी ॥ साग्राह्यापितृकृत्येतुनपूर्वाह्णानुयायिनीति ॥ अपराह्णस्यगजच्छायात्मकत्वादपिपितृकर्मणिप्राशस्त्यंभरद्वाजेनोक्तम् ॥ वनस्पतिगतेसोमेयाछायापूर्वतोमुखी ॥ गजच्छायाहिसातत्रपितृणांदत्तमक्षयमिति ॥ चंद्रस्त्वमावास्यायामपराह्णात्मकेचतुर्थेत्रिमुहूर्तंवनस्पतिगतोभवति ॥तथाचश्रुतिः॥ त्रिमुहूर्त्तंवसेदर्केत्रिमुहूर्तंजलेवसेत् ॥ त्रिमुहूर्तंवसेद्गोषुत्रिमुहूर्तंवनस्पतौ ॥ स्मृत्यंतरेपि ॥ द्विगुणाह्यात्मनश्छायादर्शेस्यादपराह्णिकी॥गजच्छायेतिसाप्रोक्तापितॄणांतृप्तिकारिणीति ॥अतश्चपितृकर्मण्यपराह्णस्यप्राशस्त्याद्भूतविद्धाप्रतिपद्विद्धाउभयविद्धावापराह्णव्यापिन्येवग्राह्या ॥ननु भूतविद्धाममावास्यांमोहादज्ञानतोपिवा ॥ श्राद्धकर्मणियेकुर्युस्तेषामायुः

ग्रहीयतइति कार्ष्णाजिनवचनेनभूतविद्धायानिषेधात्कथंतत्रश्राद्धमि तिचेत् ॥ सत्यम् ॥ इदंवचनंप्रतिपदिवामावास्यामपराह्णव्यापि न्यां सत्यां ॥ भूतविद्धायांश्राद्धनिषेधपरमित्यविरोधः ॥ प्र तिपन्मिश्रितायाश्चापराह्णव्यापित्वाभावेभूतविद्धायाविधानाच्च ॥ त दुक्तंजाबालिना ॥ प्रतिपद्यप्यमावास्यानापराह्णगताभवेत् ॥ भूत विद्धैवसाग्राह्यापित्र्येकर्मणिसर्वदेति ॥ तथाच ॥ पूर्वाह्णेचेदमावा स्यानापराह्णेभवेद्यदि ॥ भूतविद्धैवसाग्राह्यापित्र्येकर्मणिसर्वदेति ॥ प्रतिपद्यप्यमावास्यापूर्वाह्णेभवेन्नापराह्णेभवेदित्यर्थः ॥ तथाच ॥ प्रतिपद्यप्यमावास्यापूर्वाह्णव्यापिनीयदि ॥ भूतविद्धैवसाकार्यापि त्र्येकर्मणिसर्वदेति ॥ पूर्वाह्णव्यापिन्येवनापराह्णव्यापिनीत्यर्थः ॥ एष्वपिवचनेषुभूतविद्धायाअपराह्णव्यापित्वमभिप्रेतम् ॥ उभयत्रा पराह्णव्यापित्वाभावेत्वपरैवकुतपकालिकीतिवक्ष्यते ॥ यत्तु ॥ मध्या ह्नात्परतोयत्रचतुर्दश्यनुवर्तते ॥ सिनीवालीतुसाज्ञेयापितृकार्येतुनिः ष्फलेतिबौधायनवचनम् ॥ तत्रत्रेधाविभक्तस्याह्नोमध्यभागोमध्याह्न स्ततःपरतःसायंकालइत्यर्थः ॥ उभयत्रापराह्णव्यापिनीतुतिथिक्षये आहिताग्निभिःपूर्वासिनीवालीग्राह्या ॥ अनाहिताग्निभिःस्त्रीशूद्रै श्चपराकुहूरेवग्राह्या ॥ तिथिवृद्धौसाम्येचसर्वैरपिकुहूरेवकार्या ॥ तदु क्तंजाबालिना ॥ अपराह्णद्वयव्यापीयदिदर्शस्तिथिक्षये ॥ आहिताग्नेः सिनीवालीनिरग्न्यादेःकुहूर्मतेति॥आदिशब्दात्स्त्रीशूद्राणामुपसंग्रहः॥ कार्ष्णाजिनिरपि ॥ सिनीवालीद्विजैर्ग्राह्यासाग्निकैःपितृकर्मणि ॥ स्त्री शूद्रैश्चकुहूर्ग्राह्यातथाचानग्निकैर्द्विजैरिति ॥ प्रचेतसाप्युक्तम् ॥ सिनीवालीकुहूश्चैवश्रुत्युक्तेपितृकर्मणि ॥ स्यातांतेयदिमध्याह्नाच्छ्रा द्धंतत्रकथंभवेत् ॥ तिथिक्षयेसिनीवालीतिथिवृद्धौकुहूर्मता ॥ साम्ये ऽपिचकुहूर्ज्ञेयावेदवेदांगवेदिभिरिति ॥ अत्रमध्याह्नादितिमध्याह्ना दूर्ध्वमपराह्णेस्यातामित्यर्थः ॥ अस्मिन्नपिवाक्येतिथिक्षयेसिनी

वालीतिपूर्वोक्तेवसाग्निकानाग्निकादिव्यवस्थाकल्पनीया ॥ अन्यथा जावालिकार्ष्णाजिन्यादिवाक्यविरोधःस्यात् ॥ नोभयत्रापराह्न व्यापिनीतिपरैवकुतुपकालव्यापिनीग्राह्या ॥ तदुक्तंहारीतेन ॥ भूतविद्धाप्यमावास्याप्रतिपन्मिश्रितापिवा ॥ पित्र्येकर्मणिविद्वद्भिर्ग्राह्याकुतपकालिकीति॥तत्रकुतपशब्देननाष्टममुहूर्तमात्रमुच्यते ॥ किंतु ॥ कुतपरौहिणविरिञ्चास्त्रयोमुहूर्त्ताउच्यन्ते ॥ तदुक्तमापस्तंबेन ॥ कुतपाद्यान्मुहूर्तांस्त्रीन्यदाचरतिभास्करः॥सकालःकुतपस्तत्रपितॄणांदत्तमक्षयमिति ॥अत्रपरामावास्यायामपराह्णस्पर्शाभावान्मुहूर्त्तत्रयरूपकुतपकालव्यापित्वाभावेप्यष्टममुहूर्त्तेकुतपे उपक्रांतस्यश्राद्धस्यप्रतिपद्भागेपिसमाप्तौनदोषः ॥ तदुक्तंजाबालिना॥पूर्वाह्णेचेदमावास्यानापराह्णेभवेद्यदि ॥ प्रतिपद्यपिकर्त्तव्यंश्राद्धंश्राद्धविदोविदुरिति॥ तथागौतमोपि ॥पूर्वाह्णेचेत्प्रतिपदोभूतेसायममायदि ॥ प्रारभ्यकुतपेश्राद्धं कुर्यादारौहिणंबुधः ॥ विधिज्ञोविधिमास्थायरौहिणंतुनलंघयेदिति ॥ यत्तुकन्यामकरमीनेषुतुलायांमिथुनेतथा ॥ भूतविद्धैवसर्वेषां पूज्याभवतियत्नतइतिहारीतवचनंतद्व्रतविषयम् ॥ तदाहजावालिः ॥ तुलायांमकरेमीनेकन्यायांमिथुनेप्यमा ॥ भूतविद्धाव्रतेग्राह्याशेषेषुप्रतिपद्युतेति ॥ आहिताग्निरदृष्टचंद्रायामपराह्णव्यापिन्याममावास्यायांपिंडपितृयज्ञंकुर्यात् ॥ तदाहापस्तंबः ॥ अमावास्यायांयदहश्चंद्रमसंनपश्यंतितदाहःपिंडपितृयज्ञंकुर्युरिति ॥ कात्यायनोपि ॥ अमावास्यायामपराह्णेपिंडपितृयज्ञश्चंद्रादर्शनइति ॥ यदा पिंडपितृयज्ञोदर्शश्राद्धंचकर्त्तव्यंस्यात्तदाद्वयमपिक्रमेणकुर्यात् ॥ तदुक्तंमनुना ॥ पितृयज्ञंतुनिर्वर्त्यविप्रश्चंद्रक्षयेग्निमान् ॥ पिंडान्वाहार्यकंश्राद्धंकुर्यान्मासानुमासिकमिति ॥ अत्रान्वाहार्यकशब्देनापिंडाअनुब्राह्मणभोजनानंतरमाह्रियंतेऽस्मिन्निनितिव्युत्पत्त्यापार्वणश्राद्धमुच्यते ॥ अतश्चयान्यन्यान्यपिस्मृतिपुराणवाक्यानिभूतविद्धामा

वास्याश्राद्धनिषेधकानितानिचतुर्दश्यामावास्यायाआपराह्णिकत्वा
भावेप्रतिपदिचापराह्णिकत्वेतिथिवृद्धिसाम्ययोरुभयत्रापराह्णव्यापि
त्वेचप्रतिपन्मिश्रितायाममावास्यायांश्राद्धविधिपराणिवेदितव्यानि॥
यानिपुनर्भूतविद्धायांश्राद्धविधायकानितानिभूतएवापराह्णव्यापित्वे
भूतविद्धदर्शेश्राद्धविधिपराणि उभयत्रापराह्णव्यापित्वेचतिथिक्षयेसा
ग्निकविषयेचतुर्दशीमिश्रामावास्याश्राद्धपराणिचवेदितव्यानि ॥ या
नितुकुतपकालव्यापिन्यांश्राद्धविधायकानि तान्युभयत्रापराह्णव्या
पित्वाभावविषयाणिवेदितव्यानि ॥ कैश्चिदपराह्णानादरेणैवकुतपका
लप्राधान्येनैवामावास्यानिर्णीतातेषामप्ययमेवाभिप्रायः ॥ अपरा
ह्णव्यापिन्यांकुतुपकालमारभ्यश्राद्धंकर्त्तव्यमिति ॥ अन्यथा ॥ अप
राह्णःपितॄणांतुयापराह्णानुयायिनीत्यादिबहुश्रुतिस्मृतिपुराणवाक्य
विरोधोदुष्परिहारःस्यात् ॥ अतश्चोक्तएवनिर्णयःसाधीयानिति ॥ पौ
र्णमास्यपिश्राद्धविधावमावास्यावदेवनिर्णेया ॥ पौर्णमास्यांतुश्रा
द्धपरंवचनम् ॥ अमावास्यायथापुण्यापितृपिंडस्यकर्मणि ॥ पौर्ण
मासीतथापुण्याविशेषोस्तिनकश्चनेति ॥ ॥ इतिश्रीसूर्यसेनमहीमहे
द्रविरचितेनिर्णयामृतेद्वितीयेश्राद्धप्रकरणेऽमावास्याश्राद्धनिर्णयः ॥
॥ अथमृताहनिर्णयःप्रस्तूयते ॥ ॥ तत्रमृताहस्वरूपंस्मृतावुक्तम् ॥
मासपक्षतिथिस्पृष्टेयस्मिन्योम्रियतेऽहनि ॥ प्रत्यब्दंतुतथाभूतंक्षयाहं
तस्यतंविदुरिति ॥ क्षयाहतिथिरप्यमावास्यावदपराह्णव्यापिनीग्रा
ह्या॥दिनद्वयेमृततिथेरपराह्णव्यापित्वेत्वधिकापराह्णव्यापिनीग्राह्या ॥
उभयत्रापराह्णस्पर्शाभावेतुपूर्वैवसायंकालव्यापिनीग्राह्या ॥ तत्र
वाक्यानि ॥अपराह्णःपितॄणांतुयापराह्णानुयायिनी ॥ साग्राह्यापितृकृ
त्येतुनपूर्वाह्णानुयायिनीति ॥ मरीचिरपि॥ द्व्यपराह्णव्यापिनीचेत्स्या
दाब्दिकस्ययदातिथिः ॥ महतीयत्रतद्विद्धांप्रशंसंतिमहर्षयइति ॥
द्वावपराह्णौव्याप्नोतीत्यर्थः ॥ गर्गः ॥ नह्यहव्यापिनीचेत्स्यान्मृताह

स्यचयातिथिः ॥ पूर्वविद्धैवकर्त्तव्यात्रिमुहूर्ताभवेद्यदि ॥ नारदोपि ॥
दर्शंचपौर्णमासंचापितुःसांवत्सरंदिनम् ॥पूर्वविद्धमकुर्वाणोनरकंप्रतिप
द्यतइति ॥पूर्वेद्युःसायमितिवाक्यशेषः ॥ ननु ॥ अह्नचस्तमयवेलायां
कलामात्रायदातिथिः ॥ सैवप्रत्याब्दिकेज्ञेयानापरापुत्रहानिदेति
कार्ष्णाजिनवचनेनास्तमयेकलामात्रतिथेःस्वीकारात् त्रिमुहूर्त्ता
भवेद्यदीतिविरोधइतिचेन्न ॥ कैमुतिकन्यायेनकलामात्रापिग्राह्या
किमुतत्रिमुहूर्त्तेत्येवंपरत्वादस्य वाक्यस्यपूर्वेसायंत्रिमुहूर्त्तव्यापित्वा
भावेपरैवकुतपकालव्यापिनीग्राह्या ॥ ॥ तदाहगोभिलः ॥ ॥त्रिमु
हूर्तानचेद्ग्राह्यापरैवकुतपेहिसेति ॥ ननु सायंकालव्यापिन्याःपूर्ववि
द्धायाग्रहणेकुतपादिमुहूर्त्तत्रयस्पर्शाभावात् प्रारभ्यकुतपेश्राद्धंकुर्या
दारौहिणंबुधइति श्राद्धस्यकुतपारंभरौहिणपरिसमाप्तिविधानात्क
थंतत्रश्राद्धमितिचेत् ॥ सत्यम् ॥ सातिथिस्तदहोरात्रंयस्यामस्त
मियाद्रविः ॥ तथा ॥ यत्रास्तंसवितायातिपितरस्तामुपासतइत्या
दिवाक्यैरस्तमयतिथेःश्राद्धकर्मणिसंपूर्णत्वविधानात् कुतुपएवा
रभ्यश्राद्धंकार्यमिति ॥ ॥ अथप्रासंगिकाःश्राद्धप्रदेशाउच्यंते ॥
तदुक्तंविष्णुधर्मोत्तरे ॥ दक्षिणाप्रवणेदेशेतीर्थादौवागृहेपिवा ॥ भूसं
स्कारादिसंयुक्तेश्राद्धंकुर्यात्प्रयत्नतइति ॥ यमस्तुविशेषमाह ॥ पर
कीयप्रदेशेषुपितॄणांनिर्वपेत्तुयः ॥ तद्भूमिस्वामिपितृभिःश्राद्धकर्म
विहन्यतइति ॥ अत्रपरकीयप्रदेशाःपरस्वीकृतगृहाः ॥ तीर्थाद्यभा
वेगृहस्वामिनेकिंचिन्निष्क्रयरूपंदत्त्वापरकीयप्रदेशेवाकार्यम् ॥ तीर्था
दीनांसर्वसाधारण्यमेव॥तदुक्तंपुराणसमुच्चये॥अटवीपर्वताःपुण्यानदी
तीराणियानिच ॥ सर्वाण्यस्वामिकान्याहुर्नहितेषुपरिग्रहइति ॥
॥ तथा ॥ वनानिगिरयोनद्यस्तीर्थान्यायतनानिच ॥ देवखाताश्चग
र्त्ताश्चनस्वामीतेषुविद्यतइति ॥आयतनानिदेवायतनानि ॥ इतिश्राद्ध
प्रदेशाः ॥ ॥ अथश्राद्धकर्तुर्नियमाउच्यंते ॥ ॥ तत्रमरीचिः ॥

श्राद्धीयेऽह्नि दशम्यांचद्वादश्यांव्रतवासरे ॥एकादश्यांव्यतीपातेतैलंमांसंविवर्जयेत् ॥ गोभिलोपि ॥ श्वःकर्त्तास्मीतिनिश्चित्यदाताविप्रान्निमंत्रयेत् ॥ निरामिषंसकृद्भुक्त्वाससभुक्तजनेगृहइति ॥ स्मृत्यर्थसारेऽपि ॥ दंतधावनतांबूलस्निग्धास्नानमभोजनमिति॥रत्यौषधंपरान्नंचश्राद्धकृत्सप्तवर्जयेतादिति ॥ इतिश्राद्धकर्तृनियमाः॥तच्चक्षयाहश्राद्धंपित्रोरेकोद्दिष्टंपार्वणंवायथास्वकुलाचारंकुर्यात् ॥ उभयविधायकवाक्यबलात् ॥ वाक्यानिच यथाहयमः ॥ सपिंडीकरणादूर्ध्वंप्रतिसंवत्सरंनरैः ॥ मातापित्रोःपृथक्कार्यमेकोद्दिष्टंमृतेहनीति ॥ शातातपोपि ॥ सपिंडीकरणंकृत्वाकुर्यात्पार्वणवत्सदा ॥ प्रतिसंवत्सरंश्राद्धंछागलेयोदितोविधिरिति ॥ अतएवविज्ञानेश्वरयोगिनापिव्रीहियववद्विकल्पइत्युक्तम् ॥ अमावास्यायामपरपक्षेचमृतानांपावर्णमेवनैकोद्दिष्टम् ॥ तदुक्तंशंखेन ॥ अमायांवाक्षयोयस्यप्रेतपक्षेथवायादि ॥ पार्वणंतस्यकर्त्तव्यंनैकोद्दिष्टंकदाचनेति ॥ संन्यासिनांतुपार्वणमेव ॥ तदुक्तंप्रचेतसा ॥ दंडग्रहणमात्रेणनैवप्रेतोभवेद्यतिः ॥ अतस्सुतेनकर्तव्यंपार्वणंतस्यसर्वदेति ॥ अनाद्यगर्भज्येष्ठभ्रातृगुर्वादीनामेकोद्दिष्टमेवकार्यम् ॥ तदाहशातातपः ॥ अनाद्यगर्भज्येष्ठस्यभ्रातुःसद्भिर्निगद्यते ॥ ऋतेसपिंडनात्तस्यनैवपार्वणमाचरेत् ॥ अत्रानाद्यगर्भेत्यभिधानादाद्यगर्भज्येष्ठभ्रातुःपितृवदेवपार्णमेकोद्दिष्टंवायथास्वाचारंकुर्यादितिगम्यते॥सुमंतुः॥यश्चमंत्रस्यदातास्याद्यश्चविद्यांप्रयच्छति॥गुरूतावपिकुर्वीततयोर्नैवतुपार्वणमिति ॥ वृद्धगार्ग्योपि ॥ मातुःसहोदरोयश्चपितुःसहोदरस्तथा ॥ तयोश्चनैवकुर्वीतपार्वणंपिंडनादृतइति ॥ पिंडनात्सपिंडीकरणादृतेपार्वणंनकुर्वीतेत्यर्थः॥वृद्धवासिष्ठोपि ॥ सपिंडीकरणादूर्द्ध्वंयत्रतत्रप्रदीयते॥भ्रात्रेभगिन्यैपुत्रायस्वामिनेमातुलायच ॥ मित्रायगुरवेश्राद्धमेकोद्दिष्टंनपार्वणमिति ॥ पुत्रादीनामभावेपत्नीस्वयमेवभर्तुःसपिंडीकरणंकृत्वाप्रत्यब्दंपार्वणमेवकुर्यात् ॥ तदुक्तंलौगा

क्षिणा॥ सर्वाभावेस्वपत्न्यस्तुस्वभर्तॄणाममंत्रकम् ॥ सपिंडीकरणंकुर्यु
स्ततःपार्वणमेवचेति॥सुमंतुरपि॥अपुत्रेसंस्थितेकर्तानभवेच्छ्राद्धकर्म
णि॥तत्रपत्न्यपिकुर्वीतसापिंडयंचपार्वणंतथेति ॥अपुत्राणांपत्नीव्यतिरि
क्तकर्तृत्वेत्वेकोद्दिष्टमेव॥ तदुक्तम् ॥ अपुत्रायेमृताकेचित्पुरुषावास्त्रि
योपिच॥ तेषांसपिंडनाभावादेकोद्दिष्टंनपार्वणमिति॥ स्त्रीणांतुक्षयाहा
दिव्यतिरिक्तश्राद्धेषुपत्यासहैवश्राद्धंकार्यम्॥क्षयाहादिषुपृथक्कार्यम् ॥
तदाहजातूकर्ण्यः ॥ क्षयाहंवर्जयित्वैकंस्त्रीणांनास्तिपृथक्क्रिया ॥ के
चिदिच्छंतिनारीणामन्यत्रापिमहर्षयइति॥ अन्यत्रान्वष्टकादिष्वपि ॥
तदुक्तम् ॥ आन्वष्टक्यंतथावृद्धिमातृश्राद्धंमृतेहनि ॥ एकोद्दिष्टंत
थामुक्त्वास्त्रीणांनान्यत्पृथग्भवेदिति ॥ शातातपोपि ॥ नांदीमुखाष्ट
काश्राद्धेगयायांचमृतेहनि ॥ पितामह्यादिभिःसार्द्धंमातुःश्राद्धंपृथ
ग्भवेदिति॥कार्ष्णाजिनिरपि॥ अष्टकादिषुवृद्धौचगयाश्राद्धंमृतेहनि॥
मातुःश्राद्धंपृथक्कुर्यादन्यत्रपतिनासहेति ॥ मातुरितिस्त्रीणामुपलक्ष
णम्॥अन्वारोहेणमृतासुस्त्रीषुविशेषोविधीयते ॥ तत्रभर्तृमृतादिनेएवै
कचित्यारोहणेनस्त्रियामरणेसतिप्रत्यब्दमृताहश्राद्धेकालैक्यंकर्त्रैक्यं
पाकैक्यंभवति ॥ पिंडोपिद्विपितृकश्राद्धवद्द्वयोरुद्देशेनैकएवदेयः ॥
नवश्राद्धंतुपृथग्भवति ॥ तदाहलौगाक्षिः ॥ मृतेहनिसमासेनपिंडनि
र्वपणंपृथक् ॥ नवश्राद्धंतुदंपत्योरन्वारोहणएवतु ॥ समासेनपिंड
निर्वपणंनवश्राद्धंपृथगित्यन्वयः ॥ अत्रमृतेहनीतिविशेषोपादानात्
तिथिभेदेतुपृथगेवश्राद्धंकुर्यात् नसमासेनेतिगम्यते ॥ किंच ॥
मृतेहनिसमासेनकुर्यादितिविशेषाभिधानादेवसांवत्सरिकव्यतिरिक्त
नवश्राद्धषोडशश्राद्धसपिंडीकरणगयान्वष्टकादिश्राद्धेषुवचनांतरैश्च
पृथग्विहितेषुपृथक्कर्तव्यतायांनवश्राद्धंपृथगितिपरिसंख्ययानवश्राद्ध
स्यैवपृथग्विधानात् ॥ नवश्राद्धव्यतिरिक्तेषुषोडशश्राद्धादिषुसां
वत्सरिकवदेवापिंडोदेयः ॥ यत्तुस्मृत्यंतरवचनम् ॥ एकचि

त्यांसमारूढौदंपतीनिधनंगतौ ॥ पृथक्श्राद्धंतयोःकुर्यादोदनञ्चपृथक्पृथक् ॥ तन्नवश्राद्धविषयम् ॥ नवश्राद्धंकैश्चित्तंत्रेणक्रियतेइत्यंगिरसोवाक्येनगम्यते ॥ तद्विषयमोदनञ्चपृथक्पृथगिति वाक्यञ्च ॥ नवश्राद्धेषुयच्छिष्टंगृहेपर्युषितंचयत् ॥ दंपत्योर्भुक्तशिष्टंचतन्नभुंजीतकर्हिचिदिति ॥ यदात्वेकस्यामेवतिथौवृद्ध्यादिनद्वयव्यापिन्यांपूर्वदिनव्यापिभागेभर्तृमरणंपरदिनव्यापिभागेपत्न्या एकचित्यारोहणेनमरणंतदापिसमासेनैवपिंडादिविधायकवाक्यबलान्मृततिथेरेकत्वाद्भर्तुश्चप्राधान्यात्तदर्द्धशरीरभूतायाःपत्न्याश्चापितदेवमरणसंकल्पेनमृतप्रायत्वाद्भिन्नदिनमरणरूपैकनिमित्तापेक्षयाबहूनामनुग्रहोन्याय्यइति तिथ्यैकत्वादिनिमित्तानामेवन्याय्यत्वाद्भर्तुर्मरणदिनप्रभृत्येवदिनपरिगणनंकृत्वातिलोदकपिंडदानाशौचादिकंकर्त्तव्यम् ॥ यानिपुनर्भर्तृमरणानंतरंचिरकालव्यवधानेप्यनुगमनेनमृतायाअपिपत्न्याभर्तृमरणसमकालमेवमरणप्रतिपादकानिवाक्यानितान्यर्थवादरूपाणिप्रोत्सहकानितान्यपितिथ्याभेदैकचित्यारोहणविषयेयोज्यानि ॥ यत्तुभृगुवचनम् ॥ यासमारोहणंकुर्याद्भर्तुश्चित्यांपतिव्रता ॥ तांमृताहनिसंप्राप्तेपृथक्पिंडेनयोजयेत्॥प्रत्यब्दंतुनवश्राद्धंयुगपत्तुसमाचरेदिति ॥ तद्भर्तृमृततिथिव्यतिरिक्तान्यतिथावेकचित्यान्वारोहणविषम्॥अथस्त्रीविषयेविशेषमुक्त्वासंघातमृतानांश्राद्धविषयेविशेषोभिधीयते ॥ यदादैववशादेकस्मिन्दिनेमृतानांपितृमातृभ्रात्रादीनांयुगपदाब्दिकसंनिपातः ॥ तदाप्रधानानुक्रमेणपृथक्पाकेनकुर्यात् ॥श्राद्धानांबहुत्वात्कुतपाद्युक्तकालेकर्तुमशक्यत्वादेकपाकेनैव पूर्वंपितृब्राह्मणनिमन्त्रणं ततोमातृब्राह्मणनिमंत्रणं ततोन्येषांयथाप्रधानंकृत्वा एवंपादप्रक्षालनादिकंकृत्वायुगपत्सर्वश्राद्धानिसमापयेत् ॥ तदुक्तंभृगुणा ॥ एककालेगतासूनांबहूनामथवाद्वयोः ॥ तंत्रेणश्रपणंकुर्याच्छ्राद्धंचैवपृथक्पृथगिति ॥ ऋष्यशृंगोपि ॥ भवेद्यदिसपिंडानांयुगपन्म

रणंतदा ॥ संबंधासत्तिमालोक्यतत्क्रमाच्छ्राद्धमाचरेदिति ॥ तत्क्र
मादिति संबंधक्रमात् ॥ यत्तुवचनम् ॥ कृत्वापूर्वंमृतस्यादौद्वि
तीयस्यततःपुनः ॥ तृतीयस्यपुनःकुर्यात्संनिपातेत्वयंक्रमइति ॥
इदंतुमातापितृव्यतिरिक्तानांतुल्यसंबंधानामेकस्मिन्दिनेक्रमेणमृता
नांमरणक्रमेणश्राद्धंकर्त्तव्यमित्येवंपरम् ॥ भृगुऋष्यशृंगवाक्येष्वग्न्या
द्युपद्रवेणतुल्यकालमृतविषयेमातापितृविषयेविशेषमाह ॥ कार्ष्णा
जिनिः ॥ पित्रोःश्राद्धेसमंप्राप्तेनचपर्युषितेपिवा ॥ पितृपूर्वंसुतःकुर्या
दन्यत्रासत्तियोगतः ॥ ननु नैकःश्राद्धद्वयंकुर्यात्समानेहनिकुत्रचित्॥
इतिप्रचेतसाएकस्मिन्दिनेश्राद्धद्वयकरणंनिषिद्धंतत्कथमुच्यतेसंबंध
क्रमेणैकोबहूनिश्राद्धानिकुर्यादिति ॥ सत्यम् ॥ देवताभेदेनिमि
त्तभेदेचैकस्यानेकश्राद्धकरणविधानम् ॥ तदुक्तंजाबालिना ॥
श्राद्धंकृत्वातुतस्यैवपुनःश्राद्धंनतद्दिने ॥ नैमित्तिकंतुकर्तव्यंनिमि
तानुक्रमोदयमिति ॥ यथा ॥ श्राद्धंकृत्वापुनःश्राद्धंनकुर्यादेक
वासरे ॥ यदिनैमित्तिकंनस्यादेकोद्दिष्टंभवेदिति ॥ कात्यायनोपि ॥
द्विबहूनिनिमित्तानिजायेरन्नेकवासरे ॥ नैमित्तिकानिकार्याणिनिमित्तो
त्पत्त्यनुक्रमादिति ॥ नियतानियतनिमित्तयोःश्राद्धयोःसंनिपातेऽ
नियतनिमित्तस्यानुष्ठानादेवनियतनिमित्तमपिसिद्ध्यतीत्यनियतनि
मित्तमेवकुर्यात् ॥ यथा ॥ नित्यश्राद्धदर्शश्राद्धयोःसंनिपातेदर्श
श्राद्धेनैवनित्यश्राद्धसिद्धिः ॥ उदकुंभमासिकयोर्मासिकेनैवो
दकुंभसिद्धिः॥ एवंमाघामावास्यायांयुगादिश्राद्धेनैवदार्शिकसिद्धिः ॥
॥ तथा दर्शग्रहणाद्यर्द्धोदयाद्यलभ्ययोगश्राद्धेनैवदार्शिकसिद्धिः ॥
एवंफाल्गुनामावास्यायांमन्वादिनिमित्तश्राद्धेनैवदार्शिकश्राद्धसिद्धि
रिति ॥ तदुक्तंकालादर्शे ॥ नित्यदार्शिकयोश्चोदकुंभमासिकयोरपि॥
दार्शिकस्ययुगादेश्चदार्शिकालभ्ययोगयोः ॥ दार्शिकस्यचमन्वादेः
संपातेश्राद्धकर्मणाम् ॥ प्रसंगादितरस्यापिसिद्धेरुत्तरमाचरेदिति ॥

नियतानियतनिमित्तत्वेपिदेवताभेदेनश्राद्धद्वयंकार्यम् ॥ तदुक्तंका
लादर्शेएव ॥ नित्यस्यचोदकुंभस्यदार्शमासिकयोरपि ॥ नित्य
स्यचाब्दिकस्यापिदार्शिकाब्दिकयोरपि ॥ युगाद्याब्दिकयोश्चापि
मन्वाद्याब्दिकयोरपि ॥ प्रत्याब्दिकेषुचालभ्ययोगेषुविहितस्यच ॥
संपातेदेवताभेदाच्छ्राद्धयुग्मंसमाचरेत् ॥ तत्रानित्यदार्शिकयोःष
ड्दैवत्वंमासिकोदकुंभयोरेकोद्दिष्टत्वाद्देवताभेदः ॥ तथा नित्यदार्शि
कयुगादिमन्वाद्यालभ्ययोगनिमित्तश्राद्धानांषड्दैवत्वात् प्रत्या
ब्दिकस्यत्रिदैवत्वादेकोद्दिष्टत्वाद्वादेवताभेदइति ॥ अत्राप्यनियतनि
मित्तस्यैवप्राबल्यात्पूर्वमुदकुंभमासिकाब्दिकाद्यनियतनिमित्तंकृत्वा
पश्चान्नियतनिमित्तंनित्यदार्शिकादिश्राद्धंकुर्यात् ॥ तथाचोक्तंकालाद
र्शे॥निमित्तानियतिश्चात्रपूर्वानुष्ठानकारणमिति ॥ पार्वणैकोद्दिष्टयोरे
कत्रकार्यत्वेपार्वणंकृत्वैकोद्दिष्टंकुर्यात् ॥ यदाहजाबालिः ॥ यदैकत्र[1]
भवेद्युग्ममेकोद्दिष्टंचपार्वणम् ॥ पार्वणंत्वभिनिर्वर्त्यएकोद्दिष्टंसमा
चरेदिति ॥ व्याध्यादिनिमित्तेनश्राद्धविघ्नेसमुत्पन्नेसतिकृष्णैकाद
श्याममावास्यायांवाश्राद्धंकुर्यात् ॥ तदुक्तंमरीचिना ॥ श्राद्धवि
घ्नेसमुत्पन्नेप्यविज्ञातेमृतेहनि ॥ कुर्यादन्नेनकृष्णायामेकादश्यां
विधुक्षयइति ॥ अत्रमृताहनि श्राद्धविघ्नेसमुत्पन्नेअविज्ञातेपीत्य
न्वयः ॥ अतश्चमृताहश्राद्धस्यैवमासिकस्यसांवत्सरिकस्यचकृष्णै
कादश्याममावास्यायांविधानात् ॥ नान्यस्यश्राद्धस्य ॥ सूतकेना
ब्दिकश्राद्धेंतरितेसूतकानंतरितेदिनेतत्कुर्यात् ॥ तदाहऋष्यशृंगः ॥
आब्दिकेचैवसंप्राप्तेआशौचंजायतेयदि ॥ आशौचेतुव्यतिक्रांतेतत्र
श्राद्धंविधीयतइति ॥ आशौचानंतरदिनेपिकरणासंभवेअमावास्या
यांकुर्यात्॥तदाहगोभिलः॥दैवात्प्रत्याब्दिकेश्राद्धअंतरामृतसूतके ॥

---

१ यद्येकत्रभवेताश्चेदेकोद्दिष्टश्चपार्वणम् इ० पा० ।

आशौचानंतरंकुर्यात्तन्मासेंदुक्षयेपिचेति ॥ केचित्त्वाशौचानंतरंपुनःक्षयाहतिथावेवकार्यमित्याहुः ॥ तथा ॥ तदहश्चेत्प्रमुच्येतकेनचित्सूतकादिना ॥ सूतकानंतरंकुर्यात्पुनस्तदहरेवचेति ॥ अत्रसूतकानंतरमितिसूतकपदंविघ्ननिमित्तोपलक्षकम् ॥ यदातुपत्न्यैवभर्तुः श्राद्धकर्त्रीश्राद्धदिनेरजस्वलाभवतितदापंचमेहनिश्राद्धंकुर्यात्॥ तदाहगौतमः ॥ अपुत्रातुयदाभार्यासंप्राप्तेभर्तुराब्दिके ॥ रजस्वलाभवेत्सातुकुर्यात्तत्पंचमेहनीति ॥ तथाच ॥ आब्दिकेसमनुप्राप्तेयस्यभार्यारजस्वला ॥ पंचमेहनितच्छ्राद्धंनकुर्यात्तन्मृतेहनीति ॥यस्यभार्यारजस्वलातस्यश्राद्धंभार्याकर्त्रीमृताहेरजोयुक्तानकुर्याद्रजोदोषांतेपंचमेहनिकुर्यादित्यर्थः ॥ यत्तु आपद्यनग्नौतीर्थेचप्रवासेपुत्रजन्मनि ॥ आमश्राद्धंप्रकुर्वीतयस्यभार्यारजस्वलेति ॥ तथा ॥ आर्तवेदेशकालानांविप्लवेसमुपस्थिते॥ आमश्राद्धंद्विजैः कार्यंशूद्रःकुर्यात्सदैवहीतिकात्यायनव्याघ्रपादवचनाभ्यांपुत्रादिःकर्तास्वभार्यायांरजस्वलायामामश्राद्धंकुर्यादित्युक्तम् ॥तन्मृताहव्यतिरिक्तश्राद्धविषयम् ॥ तदाहलौगाक्षिः ॥ पुष्पवत्स्वपिदारेषुविदेशस्थोप्यनाग्निकः ॥ अन्नेनैवाब्दिकंकुर्याद्धेम्नाचामेननक्वचिदिति ॥ अन्नेनपक्वान्नेन ॥ मरीचिरपि ॥ अनग्निकःप्रवासीचयस्यभार्यारजस्वला ॥ आमश्राद्धंप्रकुर्वीतनतत्कुर्यान्मृतेहनीति॥कार्ष्णाजिनिरपि ॥आपन्नोप्याब्दिकंनैवकुर्यादामेनकुत्रचित् ॥ अन्नेनतदभावेतुकुर्वाहरिवासरइत्यादिवाक्यैराब्दिकेआमश्राद्धनिषेधात्पत्न्यारजस्वलात्वेपिस्वयमन्यैर्वाशिष्टैःपक्वेनान्नेनप्रत्याब्दिकश्राद्धंकुर्यात्॥ रजस्वलाकर्त्रीचेत्सापंचमेहनिकुर्य्यादितिसिद्धम् ॥ यस्यपरदेशादिमृतस्यमृतमासोज्ञायते नपुनर्दिनम् ॥ तस्यतन्मासामावास्यायांकृष्णैकादश्यांवाऽऽब्दिकंकुर्य्यात् ॥ तदाहबृहस्पतिः ॥ नज्ञायतेमृताहश्चेत्प्रोषितेसंस्थितेसति ॥ मासश्चेत्प्रतिविज्ञातस्तद्दर्शःस्यादथाब्दिकमिति ॥ मरीचिरपि ॥

श्राद्धविघ्नेसमुत्पन्नेवाविज्ञातेमृतेहनि ॥ एकादश्यांतुकर्त्तव्यंकृष्णपक्षेमृतेहानति ॥ दिनज्ञानेमासाज्ञानेत्वाषाढेमाघेवातद्दिनेकार्यम् ॥ तदुक्तंबृहस्पतिना ॥ यदामासोनविज्ञातोविज्ञातंदिनमेवतु ॥ तदाचाषाढकेमासिमाघेवातद्दिनेभवेदिति ॥ मरीचिरपि ॥ विज्ञातंदिनमेवस्यान्नमासोज्ञायतेयदा ॥ तदाचाषाढकेमासिमाघेवातद्दिनेभवेदिति॥यदोभयमपिनज्ञायतेतदाप्रवासमासादिवसौग्राह्यौ॥ तदाहबृहस्पतिः॥दिनमासावविज्ञातौमरणस्ययदापुनः॥प्रस्थानमासदिवसौग्राह्यौपूर्वोक्तयादिशेति ॥अस्यायमर्थः ॥यदाप्रस्थानमासदिवसौज्ञातौतदातावेवग्राह्यौ यदामासोज्ञातोदिनंनज्ञातंतदातन्मासामावास्यैकादश्योतद्दिनम्॥यदादिनंज्ञातंमासोनज्ञातस्तदाषाढमाघयोस्तद्दिने ॥ यदामरणप्रस्थानमासदिनाज्ञानंतदामृतवार्ताश्रवणदिने ॥तत्राप्यसंभवेवार्ताश्रवणमासमाघामावास्यायांवाकुर्यात्॥ तदुक्तंप्रचेतसा ॥अपरिज्ञातेमावास्यायांश्रवणदिनेवेति॥ प्रत्याब्दिकश्राद्धदिनेवेति॥ प्रत्याब्दिकश्राद्धदिनेद्रव्याद्यभावाच्छ्राद्धकरणासंभवेपिंडप्रदानमात्रंकुर्यात् ॥ तदसंभवेतूपवासंवाकुर्यात् ॥ तदुक्तम्॥पिंडमात्रंप्रदातव्यमभावेश्राद्धविप्रयोः॥श्राद्धेहनितुसंप्राप्तेभवेन्निरशनोपिवेति ॥ पात्राभावेतुविशेषःस्मृत्यंतरेप्रोक्तः॥ पात्राभावेपरंकृत्वापितृयज्ञविधिंनरः ॥ निर्दिश्याप्यन्नमुद्धृत्ययत्रपात्रंततोनयेदिति ॥ पितृयज्ञविधिंश्राद्धविधिम्॥अन्यत्रापि ॥ सर्वाभावेक्षिपेदग्नौगवेदद्यात्तथाप्सुवा ॥ नतुप्राप्तस्यलोपोऽस्तिपैतृकस्यविशेषतइति ॥ सर्वस्योक्तस्यानिषिद्धस्यचपात्रस्यचाभावेइत्यर्थः ॥ अतिदरिद्रस्यतर्पणमात्रपर्याप्ततिलाद्यभावेवृद्धवासिष्ठेनविशेषउक्तः ॥ अग्निनावादहेत्कक्षंश्राद्धकालेसमागते ॥ तस्मिन्नोपवसेदह्निजपेद्वाश्राद्धसंहितामिति ॥ कक्षंतृणसमूहंनापुरुषः ॥ विष्णुपुराणेतु ॥ सर्वाभावेवनंगत्वाकक्षामूलप्रदर्शकः ॥ सूर्यादिलोकपालानामिदमुच्चैःपठिष्यति॥नमेस्तिवित्तंनधनंनचान्यच्छ्राद्धोपयोगि

स्वपितॄन्नतोऽस्मि ॥ तृप्यंतुभक्त्यापितरोमयैतौभुजौकृतौवर्त्मनिमारु तस्य ॥ इत्यंतैःपितृभिर्गीतंभाव्यंभावप्रयोजकम् ॥ यःकरोतिकृतं तेनश्राद्धंभवतिपार्थिवेति ॥ क्षयाहतिथौग्रहणेसतिभोक्त्रभावाद्द्विजो ऽप्यामेनहेम्नावाप्रत्याब्दिकंकुर्यात्॥ भोक्तृसंभवेतुपक्कान्नेनैवकुर्यात् ॥ तदाहगोभिलः ॥ दर्शेरविग्रहेपित्रोःप्रत्याब्दिकमुपस्थितम् ॥ अन्ने नासंभवेहेम्नाकुर्यादामेनवासुतइति ॥ अत्रदर्शादिशब्दःपूर्णिमाचंद्र ग्रहणादीनामुपलक्षकः ॥ अतश्चपुत्रव्यतिरिक्तेनाप्यधिकारिणाव श्यकसपिंडश्राद्धंचंद्रसूर्यग्रहणेप्यामेनहेम्नावाकार्यं न्यायस्यतुल्य त्वात् ॥ एवंमासिकेपिविज्ञेयम् ॥ मासिकसांवत्सरिकव्यतिरिक्तंतु श्राद्धंविघ्नेसतिद्विजोप्यामेनैवकुर्यात् ॥ तदुक्तम् ॥ श्राद्धविघ्नेद्वि जातीनामामश्राद्धंप्रकीर्त्तितम् ॥ अमावास्यादिनियतंमाससंवत्स राहते ॥ अत्रमाससंवत्सराहतइतिग्रहणव्यतिरिक्तविषयम् ॥ ग्रहण विषयेमासिकसांवत्सरिकयोरपिगोभिलवाक्येनामश्राद्धविधानात् ॥ अथप्रसंगादन्योप्यामश्राद्धकालउच्यते ॥ तदाहकात्यायनः ॥ आप द्यनग्नौतीर्थेचप्रवासेपुत्रजन्मनि ॥ आमश्राद्धंप्रकुर्वीतभार्यारजसिसंक्र मइति॥ बौधायनोपि॥ संक्रमेग्रहद्विजाभावेप्रवासेपुत्रजन्मनि ॥ हेमश्रा द्धंसंग्रहेचद्विजःशूद्रःसदाचरेदिति ॥ द्विजानांब्राह्मणक्षत्रियवि शांसंक्रमादिष्वामहेमश्राद्धाधिकारः ॥ शूद्रस्यतुसदैव ॥ तथाचसुमं तुः ॥ पाकाभावेधिकारःस्याद्विप्रादीनांनराधिप ॥ अपत्नीनांमहाबा होविदेशगमनादिभिः ॥ सदाचैवतुशूद्राणामामश्राद्धंविदुर्बुधाइति ॥ जमदग्निरपि ॥ यावत्स्यादग्निसंयुक्तउत्सन्नाग्निरथापिवा ॥ आमश्रा द्धंतथाकुर्याद्धस्तेग्नौकरणंभवेदिति॥ प्रचेताश्च ॥ स्त्रीशूद्रःस्वपचश्चैव जातकर्मणिचाप्यथ ॥ आमश्राद्धंतदाकुर्याद्विधिनापार्वणेनतुइति ॥ स्वपचःस्वयंपचतीत्यपत्नीकइत्यर्थः ॥ आमश्राद्धेपक्कान्नस्थाने ॥ आमान्नमात्रंविशेषःविधिः सर्वोपिसएव ॥ तदुक्तंव्यासेन ॥ सिद्धा

न्नेतुविधिर्यः स्यादामश्राद्धेप्ययंविधिः ॥ आवाहनादिसर्वंस्यात्पिंडदानंचभारत ॥ दद्याच्चैवद्विजातीनांशृतंवाऽशृतमेवच ॥ तेनाग्नौकरणंकुर्यात्पिंडांस्तेनैवनिर्वपेदिति ॥ षट्त्रिंशन्मतेतु पिंडदानेविशेषउक्तः ॥ आमश्राद्धंयदाकुर्यात्पिंडदानंकथंभवेत् ॥ गृहपाकात्समुद्धृत्यसक्तुभिःपायसेनवेति ॥ अत्रआमहेम्नोर्यथालाभंस्वीकारः ॥ आमान्नेतुव्यासेनैवविशेषउक्तः ॥ आमंददात्तुकौन्तेयदद्यादामंचतुर्गुणमिति ॥ चतुर्गुणंतुपुरुषाहारापेक्षयाद्विगुणान्नदानाविषयस्त्वशक्तविषयावेदितव्याः ॥ केषुचिन्मंत्रेषूहमपिमरीचिराह ॥ आवाहनेस्वधाकारेमंत्राऊह्याविसर्जने ॥ अन्यकर्मण्यनूह्याःस्युरामश्राद्धविधिःस्मृतइति ॥ आमश्राद्धकालस्तुगालवेनोक्तः ॥ आमश्राद्धंतुपूर्वाह्णेसिद्धान्नेनतुमध्यतः ॥ पार्वणंचापराह्णेतुवृद्धिश्राद्धंतथाग्निकमिति॥अत्रसिद्धान्नेनतुमध्यतइत्येकोदिष्टविषयंप्रतीयते ॥ पार्वणस्यापराह्णेविधानात् ॥ एकोदिष्टंचमध्याह्नइतिवचनबलाच्च ॥ आग्निकमित्यग्न्याधाननिमित्तम्॥ एतच्चामश्राद्धंशूद्रस्यब्राह्मणभोजननिषेधान्नित्यम्॥निषेधस्तुसुमंतुनोक्तः॥ नपक्वंभोजयेद्विप्रान्सच्छूद्रोऽपिकदाचन॥ भोजयन्प्रत्यवायीस्यान्नचतस्यफलंलभेदिति ॥अतश्च नित्यंशूद्रकर्तृकामश्राद्धमपराह्णेकार्यम् ॥ तदुक्तम् ॥ मध्याह्नात्परतोयस्तुकुतपःसमुदाहृतः॥ आममात्रेणतत्रैवपितॄणांदत्तमक्षयमिति॥आमश्राद्धंपूर्वाह्णइत्येतत्तुद्विजकर्तृकनित्यमामश्राद्धविषयम्॥ अतश्चानयोर्वाक्ययोर्नविरोधः ॥ ॥ इत्यामश्राद्धनिर्णयः ॥

॥ अथजीवत्पितृकस्यश्राद्धकालउच्यते ॥ तत्र ॥ सपितुःपितृकृत्येषुअधिकारोनविद्यते ॥ नजीवंतमतिक्रम्यकिंचिद्दद्यादितिश्रुतिरिति ॥कात्यायनेनजीवत्पितृकस्यश्राद्धाधिकारेनिषिद्धेपिगृह्यपरिशिष्टे तदपवादउक्तः ॥ यथा ॥ उद्वाहेपुत्रजननेपित्र्येष्ट्यांसौमिकेमखे ॥ तीर्थेब्राह्मणआयातेषडेतेजीवतःपितुरिति ॥ जीवत्पितृकस्य

षडेतेश्राद्धकालाइत्यर्थः ॥ पित्र्येष्टिश्चातुर्मास्येषुविहितापिंडपितृ यज्ञेवा ॥ पितरिपातित्यादिदोषयुक्तेसंन्यस्तेवाउक्तकालातिरिक्तकालेष्वपिकुर्यात् ॥ ॥ तदुक्तम् ॥ ब्राह्मणादिहतेतातेपतिते संगवर्जिते ॥ येभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतइति ॥ ॥ सुमंतुरपि ॥ ॥ नजीवत्पितृकःकुर्याच्छ्राद्धमाग्निमृतेद्विजः ॥ येभ्यएवपिताकुर्यात्तेभ्यःकुर्वीतसाग्निकइति ॥ साग्निकस्त्वाहिताग्निरनाहिताग्निरपि ॥ यत्तुहारीतवचनम् ॥ अनग्निकोपिकुर्वीतजन्मादौवृद्धिकर्मणि ॥ येभ्यएवपितादद्यात्तानेवोद्दिश्यपार्वणमिति ॥ अत्रानग्निकइत्यनाहिताग्निरभिप्रेतः॥ अन्यथासुमंतुवचनेनाविरोधःस्यात् ॥ सुमंतुनातुविशेषउक्तः ॥ ध्रियमाणेतुपितरिपूर्वेषामेवनिर्वपेत् ॥ विप्रवद्वापितंश्राद्धेस्वकंपितरमाशयेदिति ॥ पितामहेजीवतिपितृप्रपितामहयोर्मृतयोःसएवाह ॥ पितायस्यतुवृत्तःस्याज्जीवेच्चापिपितामहः ॥ पितुःसनामसंकीर्त्यकीर्तयेत्प्रपितामहमिति॥पितामहोवातंश्राद्धंभुंजीतेत्यब्रवीन्मनुः ॥ पितुःसनामेति ॥ अस्मत्पितुःपितामहमिति स्वप्रपितामहंकीर्तयेदित्यर्थः ॥ पितरिपितामहेचजीवतिप्रपितामहादीनांत्रयाणांश्राद्धंकुर्यात् ॥ ॥ तदुक्तंविष्णुना ॥ ॥ पितरिजीवतियेषांपिताकुर्यात्तेषांकुर्यात् ॥ पितरिपितामहेचजीवतियेषांपितामहःकुर्यात्तेषांकुर्यात् ॥ पितरिपितामहेप्रपितामहेचजीवतिनैवकुर्यात् ॥ यस्यपिताप्रेतःसपित्रेपिंडंनिधायप्रपितामहात्परंद्वाभ्यांदद्यात् ॥ यस्यपिताप्रपितामहश्चप्रेतौसपित्रेपिंडंनिधायपितामहात्परंद्वाभ्यांदद्यादिति ॥ यस्यपितामहःप्रेतःसतस्मैपिंडंनिधायप्रपितामहात्परंद्वाभ्यांदद्यात् ॥ यस्यपितापितामहश्चप्रेतौसताभ्यांपिंडौदत्वाप्रपितामहात्परंएकस्मैदद्यादिति ॥ निगमेपि ॥ योजीवत्पितृणांतेभ्योयजेत्स्वपितृस्थानकइत्येके ॥ जीवतामजीवतांवादेयमितिहिरण्यकेतुरपि ॥ अथजीवत्पितृकस्ययत्रश्राद्धनिषेधस्तदुच्यते ॥ यथाहलौगाक्षिः ॥ आमश्राद्धंगयाश्राद्धंश्राद्धंचापरपक्षिकम् ॥ नजी

वत्पितृकःकुर्यात्तिलैःकृष्णैश्चतर्पणमिति ॥ ॥ क्रतुरपि ॥ ॥ अष्ट
कासुचसंक्रांतौमन्वादिषुयुगादिषु ॥ चन्द्रसूर्यग्रहेपातेस्वेच्छयापूज्य
योगतः ॥ जीवत्पितानैवकुर्याच्छ्राद्धंकाम्यंतथाखिलमिति ॥ अत्रा
ष्टकाअन्वष्टक्यव्यतिरिक्ताएवआन्वष्टक्यश्राद्धविधानात्॥ ॥ तदुक्तं
मैत्रायणीयेगृह्यपारिशिष्टे॥ आन्वष्टक्येगयाप्राप्तौसत्यांयच्चमृतेहनि ॥
मातुःश्राद्धंसुतःकुर्यात्पितर्यपिचजीवति॥अत्रगयाप्राप्तौसत्यामिति दै
वात्प्रसंगिकप्राप्तौगयायांश्राद्धविधायकम् ॥ आमश्राद्धंगयाश्राद्ध
मितितुश्राद्धोद्देशेनैवगयांगत्वातत्रश्राद्धंनप्रकर्तव्यमित्येतत्परम् ॥
अतश्चनविरोधः ॥ ॥ इतिश्रीसूर्यसेन॰निर्णयामृतेश्राद्धप्रकरणेद्वि
तीयेमृताहनिर्णयः॥ ॥अथमहालयापरपक्षश्राद्धनिर्णयःप्रस्तूयते ॥
॥ आश्विनमासकृष्णपक्षोपरपक्षः ॥ सएवमहालयोप्युच्यते ॥ तत्रषो
डशादिनानिश्राद्धादिषुपुण्यतमानि ॥ तदुक्तंब्रह्मांडपुराणे ॥
कन्यागतेसवितरियान्यहानितुषोडश ॥ क्रतुभिस्तानितुल्यानितेषु
दत्तमथाक्षयमिति ॥ शुक्लप्रतिपदासहषोडशसंख्यापूरणम् ॥ तस्याऽ
पिचंद्रक्षयाविशेषाद्दर्शात्मकत्वात् ॥ तदुक्तंदेवलेन ॥ अहः
षोडशकंयत्तुशुक्लप्रतिपदासह ॥ चंद्रक्षयाविशेषेणसापिदर्शात्मिका
स्मृतेति ॥ मनुरपि ॥ नभस्यस्यापरःपक्षोयत्रकन्यांव्रजेद्र
विः ॥ समहालयसंज्ञःस्याद्गजच्छायाह्वयस्तथेति ॥ अत्रनभस्यस्ये
तिशुक्लप्रतिप्रदादिचांद्रमासाभिप्रायेण ॥ यमोपि ॥ आषाढीमव
धिंकृत्वायःपक्षःपंचमोभवेत् ॥ तत्रश्राद्धंप्रकुर्वीतकन्यास्थोर्कोभवेन्नचे
ति ॥ सांख्यायनिरपि ॥ पुण्यःकन्यागतेसूर्यःपुण्यःपक्षश्चपं
चमः॥ कन्यास्थार्कान्वितःपक्षःसोत्यंतंपुण्यउच्यतइति ॥ अत्रपंच
मपक्षोमलमाससंबंधीचेत्तदातमतिक्रम्यशुद्धपक्षएवश्राद्धादिकंकार्यम्
॥ तदाहभृगुः ॥ एकराशिस्थितेसूर्येयदादर्शद्वयंभवेत् ॥ हव्य
कव्यक्रियाहंतातदाज्ञेयोधिमासकः ॥ वृद्धिश्राद्धंतथासोममग्न्या
धेयंमहालयम् ॥ राजाभिषेकंकाम्यंचनकुर्याद्भानुलंघितइति ॥ यत्तू

क्तं॥कन्यास्थोर्कोभवेन्नचेति ॥ तदादौमध्येऽवसानेवाकन्यागतेपिसूर्ये प्रतिपदमारभ्यपक्षश्राद्धेकर्तव्येसंपूर्णपक्षस्यकन्यागतत्वसूचनार्थम् ॥ ॥ तदाहकार्ष्णाजिनिः ॥ ॥ आदौमध्येवसानेवायत्रकन्यांव्रजे द्रविः ॥ सपक्षःसकलःपूज्यःश्राद्धषोडशकंप्रतीति ॥ ॥ जाबा लिरपि ॥ अगतेपिरवौकन्यांश्राद्धंकुर्वीतसर्वदा ॥ आषाढ्याःपंचमः पक्षःप्रशस्तःपितृकर्मस्विति ॥ अतश्चापरपक्षेश्राद्धमावश्यकम् ॥ तच्चपार्वणविधिनाषड्दैवतंकार्यम् ॥ ॥ तदाहगौतमः ॥ ॥ पितरो यत्रपूज्यंतेतत्रमातामहाअपि ॥ अविशेषेणकर्तव्यंविशेषान्नरकंव्रजे दिति ॥ ॥ कौत्सोपि ॥ ॥ उत्तराहस्तचित्रासुकन्यायांभास्वति स्थिते ॥ कृष्णपक्षोगजच्छायासमानःपितृकर्मसु ॥ पार्वणस्यावृताकु र्यादक्रोधःश्राद्धमत्रत्विति ॥ आवृताप्रकारेण॥जाबालिरपि ॥ पुत्रा नायुस्तथारोग्यमैश्वर्यमतुलंतथा ॥ प्राप्नोतिपञ्चमेकृत्वाश्राद्धंकामां स्तथानरइति ॥ नन्वपरपक्षश्राद्धंनित्यमित्युक्तम् ॥ अत्रफलश्रव णात्काम्यंप्रतीयतेतत्कथंविरोधपरिहारइतिचेत् ॥ सत्यम् ॥ नित्या निनैमित्तिकानिचावश्यकानिफलसंप्रयोगात्काम्यानिभवंतीत्युभय रूपाणि ॥अतश्चनविरोधः ॥ अस्यचाद्यंतदैवत्वेनदार्शिकादिभ्योभे दः ॥ ॥ तदाहदेवलः ॥ ॥ दैवाद्यंनैवकुर्वीतदैवांतंनैवकुत्राचि त ॥ दैवाद्यंतंहिकुर्वीतश्राद्धंरक्षणहेतुनेति ॥ आदौ देवताविश्वेदेवाः॥ अंत्येदेवताविष्णुरिति ॥ एवंसर्वस्मिन्नपिपक्षेश्राद्धंकुर्यात्तदशक्तौपञ्च म्यादितदशक्तावष्टम्यादितदशक्तौदशम्यादिदर्शपर्यन्तम् ॥ तदश क्तावानिषिद्धेएकस्मिन्वादिनेकुर्यात् ॥ ॥ तदाहगौतमः ॥ तथा परपक्षेश्राद्धंपितृभ्योदद्यात्पंचम्यादिदर्शांतमष्टम्यादिदशम्यादिसर्व स्मिन्वेति ॥ ॥ तदुक्तंब्रह्मांडपुराणे ॥ ॥ आश्वयुक्कृष्णपक्षेतुश्राद्धं कुर्याद्दिनेदिने ॥ त्रिभागहीनेपक्षेवात्रिभागंचार्धमेवचेति ॥ अत्राश्व युगितिकृष्णप्रतिपदादिमासाभिप्रायेण ॥ त्रिभागहीनंपंचम्यादिद

शींतम्॥तत्रचतुर्थ्यंताश्चतस्रश्चतुर्दशीचेतिपंचतिथयोन्यूनाइतित्रिभागहीनत्वम् ॥ त्रिभागमिति दशम्यादिदर्शांतम् ॥ तत्रापिचतुर्दश्या सहदशतिथयोहीनाभवंति ॥ अर्द्धमित्यष्टम्यादिदर्शांतंपंचम्यादिपक्षेषुचतुर्दशींवर्जयित्वाश्राद्धविधानात् ॥ यथाहमनुः ॥ कृष्णपक्षेदशम्यादौवर्जयित्वाचतुर्दशीम् ॥ श्राद्धेप्रशस्तास्तिथयोयथैतानतथेतरा इति ॥ अत्रदशम्यादावित्यादिशब्देनपंचम्याद्यष्टम्यादिपक्षयोरुपसंग्रहः ॥ प्रतिपदादिपक्षेतुचतुर्दश्यादिकंनवर्ज्यम् ॥ तदाहकार्ष्णाजिनिः ॥ नभस्यस्यापरेपक्षेश्राद्धंकुर्याद्दिनेदिने॥ नैवनंदादिवर्ज्यंस्यान्नैववर्ज्याचतुर्दशीति ॥ यत्तुयाज्ञवल्क्यवचनम् ॥ प्रतिपत्प्रभृतिष्वेकांवर्जयित्वाचतुर्दशीमिति ॥ तदप्यूर्ध्वंचतुर्थ्यायदहःसंपद्यते ॥ सप्तम्याऊर्ध्वंयदहःसंपद्यते॥ऊर्ध्वंनवम्यायदहःसंपद्यते ॥ऋतेचतुर्दशीं शाकेनाप्यपरपक्षंनातिक्रामेदित्यादिविशेषवचनबलादाद्यपक्षव्यतिरिक्तपक्षेष्वेवावतिष्ठते॥यदात्वेकस्मिन्नेवदिनेश्राद्धंकुर्यात्तदाशुक्रवारादिवर्जयेत् ॥ तदाहगार्ग्यः ॥ नंदायांभार्गवदिनेत्रयोदश्यांत्रिजन्मसु ॥ एषुश्राद्धंनकुर्वीतगृहीपुत्रधनक्षयादिति ॥ कार्ष्णाजिनिरपि ॥ ऋतेनैमित्तिकंकाम्यंश्राद्धंयस्तुमघोडुनि ॥दद्यात्तज्ज्येष्ठपुत्रस्यनाशः स्यादितिनिश्चितमिति ॥ तथा ॥ मघायांपिंडदानेनज्येष्ठपुत्रोविनश्यति ॥ अत्रापिपिंडदानस्यश्राद्धपूर्वकत्वाच्छ्राद्धनिषेधएवपर्यवसानम् ॥ वृद्धगार्ग्योपि ॥ प्राजापत्येचपौष्णेचापित्र्यर्क्षेभार्गवेतथा ॥ यस्तुश्राद्धंप्रकुर्वीततस्यपुत्रोविनश्यति॥ प्राजापत्यंरोहिणी ॥ पौष्णं रेवती ॥ पित्र्यर्क्षंमघा ॥ भार्गवःशुक्रवारः ॥ तथा ॥ भानौभौमेत्रयोदश्यांनंदाभृगुमघासुच ॥ पिंडदानंमृदास्नानंनकुर्यात्तिलतर्पणमिति ॥ एतानिवर्जयित्वाशुभेकस्मिंश्चिद्दिनेश्राद्धंकुर्यात् ॥ तच्चश्राद्धं मातॄणांपतिभिःसहपृथग्वाकुर्यात् ॥ तदुक्तमपरार्के ॥ गयामहालयादौतुपृथक्सहवास्वभर्तृभिरिति॥ स्मृत्यर्थसारेपि ॥ तत्रमातृश्राद्धं

पृथक्कार्य्यमातामहानांसपत्नीकमेवेति ॥ चतुर्विंशतिमतेपि ॥ केचिदिच्छंति नारीणांपृथक्श्राद्धंमहर्षयइति ॥ तत्रैकस्मिन्नेवकाले एकपाकेनैकएवकर्ताचार्यइतिभ्रात्रादिकाण्यनामेकोद्दिष्टविधानेनश्राद्धानिकुर्यात् ॥ आचार्यगुरुशिष्येभ्यःसखिज्ञातिभ्यएवच ॥ तत्पत्नीभ्यश्चसवाभ्यस्तथैवचजलांजलीन् ॥ पिंडांस्तेभ्यस्तदा दद्यात्कन्याभाद्रपदेनरः ॥ तीर्थेषुचैवसर्वेषुमाघमासेमघासुच ॥ एकस्मिन्ब्राह्मणेसर्वानाचार्यादीन्प्रपूजयेत् ॥ दशद्वादशवापिंडान् दद्यादकरणंनतु ॥ नैयोगिकोविधिर्नूनंपक्षेवैपंचमेस्मृतः ॥ तस्मिन्दत्तंहविर्नूनंपितॄणामक्षयंभवेत् ॥ एकस्मिन्ब्राह्मणइत्यशक्तविषयम् ॥ ब्राह्मणासंभवविषयंच ॥ तथाभृगुरपि ॥ एककालेगतासूनाम्बहूनामथवाद्वयोः ॥ तंत्रेणश्रपणंकृत्वाकुर्याच्छ्राद्धंपृथक्पृथगित्युक्त्वासएवाह॥ संनिपातेष्वयंक्रमइति ॥ स्मृत्यर्थसारेपि ॥ गुर्वाचार्यपितृव्यमातुलश्वशुरोपाध्यायभ्रातृसखिप्रियपोषकद्रव्यदत्तपुत्र-शिष्यर्त्विगादीनांतत्स्त्रीणांचश्राद्धंकार्यम् ॥ अपुत्राणांविशेषेणकार्यम् ॥ तत्रैकःपाकः ॥ वैश्वदेवंतंत्रं पिंडोबर्हिश्चैकमिति ॥ एतेषामेकोद्दिष्टविधानंसुमंतुराह ॥ सपिंडीकरणादूर्ध्वंयत्रयत्रप्रदीयते ॥ भ्रात्रे भगिन्यैपुत्रायस्वामिनेमातुलायच ॥ मित्रायगुरवेश्राद्धमेकोद्दिष्टंनपार्वणमिति ॥ पुराणसमुच्चयेविशेषउक्तः ॥ एकादश्यांप्रकुर्वीतएकोद्दिष्टानिसर्वशः॥ यस्याधिदेवताविष्णुःपितृवर्गस्यकृत्स्नशइति ॥ अत्रापिसंबंधानतिक्रमेणश्राद्धंकुर्यात् ॥ अत्राष्टम्यांश्राद्धंगयाश्राद्धसमम् ॥ तदुक्तंब्रह्मपुराणे ॥ आषाढ्याःपंचमेपक्षेगयामध्याष्टमीस्मृता ॥ त्रयोदशीगजच्छायागयातुल्यातुपित्रियाइति ॥ त्रयोदशीचमघानक्षत्रयोगाद्गजच्छायेत्युच्यते ॥ तदुक्तंयमस्मृतौ ॥ यदेंदुःपितृदैवत्येहंसश्चैवकरेस्थितः ॥ याम्यातिथिर्भवेत्साहिगजच्छायाप्रकीर्तितेति ॥ पितृदैवत्यंमघा ॥ करोहस्तनक्षत्रम् ॥ हंससूर्यः ॥

१ त्रयोदशीगजच्छायाश्राद्धेपुण्यैरवाप्यते० इ० पा० ।

तिचेत् ॥ सत्यम् ॥ त्रयोदश्यांमातामहवर्गान्परित्यज्यापितृवर्गस्यैव चश्राद्धंनकर्तव्यमित्येवंपरत्वान्निषेधवाक्यस्येत्यविरोधः ॥ एकवर्गश्राद्धनिषेधश्चकार्ष्णाजिनिनोक्तः ॥ श्राद्धंनैकस्यवर्गस्यत्रयोदश्यामुपक्रमेत् ॥ अतृप्तास्तत्रयेवास्युःप्रजांहिंसंतितेध्रुवमिति ॥ मघायुक्तत्रयोदश्यांश्राद्धप्रशंसादर्शनाच्च ॥ तदाहयमः ॥ पितापितामहश्चैवतथैवप्रपितामहः ॥ जातंपुत्रंप्रशंसंतिपिप्पलंशकुनाइव ॥ मधुमांसेनखड्गेनपयसापायसेनवा ॥ एषदास्यतिनस्तृप्तिंवर्षासुचमघासु चेति ॥ अस्यांमघायुक्तायांज्येष्ठपुत्रवतापिंडरहितंश्राद्धंकार्यम् ॥ तदुक्तंदेवीपुराणेअपरपक्षप्रक्रमे॥तत्रापिमहतीपूजाकर्तव्यापितृदैवते ॥ ऋक्षेपिंडप्रदानंतुज्येष्ठपुत्रीविवर्जयेदिति ॥ ॥ ननु केवलत्रयोदश्यामपिश्राद्धंकात्यायनेननिषिद्धम् ॥ त्रयोदश्यांयुवानस्तस्यम्रियंत इति ॥ तत्काम्यश्राद्धविषयम् ॥ अपरपक्षत्रयोदशीयुगादिः ॥ अतश्चयुगादिनिमित्तंश्राद्धद्वयमपिपिंडरहितमेवकुर्यात् ॥ तत्रपिंडनिषेधश्चयुगादिनिर्णयेवक्ष्यते ॥ अत्रपक्षेभरणीमहतीप्रोक्ता ॥ तदुक्तंमत्स्यपुराणे ॥ भरणीप्रेतपक्षेतुमहतीपरिकीर्तिता॥ अस्यांश्राद्धंकृतंयेनसगयाश्राद्धकृद्भवेदिति ॥ अत्रनवम्यामन्वष्टकत्वान्नवदैवतंश्राद्धंकुर्यात् ॥ तदुक्तम् ॥ अन्वष्टकासुनवभिःपिंडैःश्राद्धंसमाचरेत् ॥ पित्रादिमातृमध्यंचतथामातामहांतकमिति ॥ अत्राप्यनेकमातृकत्वेद्वित्रिपितृकश्राद्धवद्वित्राद्युद्देशेनमातृपिंडएवदेयः॥ न्यायस्यतुल्यत्वात्॥ ततःपितामहीप्रपितामहीपिंडौमातॄणांप्रत्येकपिंडदानेतुनवसंख्याधिकपिंडत्वेनान्वष्टकाभंगःप्रसज्येत ॥ यतेरेकदंडिनस्त्रिदंडिनोवा तत्पक्षद्वादश्यामेवपार्वणंकुर्यात् ॥ तदुक्तंवायुपुराणे ॥ संन्यासिनो





ऽप्याब्दिकादिपुत्रःकुर्याद्यथातिथि ॥ महालयेतुयच्छ्राद्धंद्वादश्यां पार्वणेनत्विति ॥ अत्रपुत्रपदमधिकार्युपलक्षणम् ॥ तत्पक्षचतुर्द्दश्यांशस्त्रहतस्यैकोद्दिष्टंकार्यम् ॥ तदुक्तंमरीचिना ॥ समत्वमागतस्यापिपितुःशस्त्रहतस्यवै ॥ एकोद्दिष्टंतुकर्तव्यंचतुर्दश्यांमहालयइति ॥ समत्वमागतस्यसपिंडीकृतस्य ॥ यस्यपित्रादयस्त्रयोपिशस्त्रहतास्तेनचतुर्दश्यांपार्वणमेवकार्यम्॥तदाहपराशरः॥ चतुर्दश्यांतुयच्छ्राद्धंसपिंडीकरणेकृते॥एकोद्दिष्टविधानेननकुर्याच्छस्त्रघातिनाम् ॥ पित्रादयस्त्रयोयस्यशस्त्रघातास्त्वनुक्रमात् ॥संभूतेपार्वणंकुर्यादाब्दिकानिपृथक्पृथक् ॥ अत्रशस्त्रहतपदंप्रायोनाशकादिशास्त्रोक्तमार्गेणमृतानांविषश्वापदादिहतानांचोपलक्षणम् ॥ तदुक्तंब्रह्मपुराणे ॥ प्रायोनाशकशस्त्राग्निविषोद्बंधनघातिनाम् ॥ चतुर्दश्यांतुकर्त्तव्यं तृप्त्यर्थमिहनिश्चयइति ॥ ॥ मरीचिरपि ॥ विषशस्त्र[1]श्वापदादितिर्यग्ब्राह्मणघातिनाम् ॥ चतुर्दश्यांक्रियाकार्याअन्येषांतुविगर्हितेति ॥ घातिनामितिहतानामित्यर्थेछांदसःप्रयोगः ॥ यत्तुकेचिदूचुः ॥ शस्त्रहतस्यचतुर्दश्येवचतुर्दशीशस्त्रहतस्यैवेतिवसंतेब्राह्मणोग्नीनादधीतेतिवदुभयत्रनियमइति ॥ तेषांवचनंतुयस्यपिताशस्त्रहतः पितामहोजीवतितद्विषयत्वेनयोजनीयम् ॥ अन्यथाशस्त्रहतपितृकस्यपितामहप्रपितामहयोरपरपक्षेश्राद्धमेवनसंभवेत् ॥ तच्चविहितम् ॥ यथा ॥ कांक्षंतिपुत्रपौत्रेभ्यःपायसंमधुसंयुतम् ॥ तस्मात्तांस्तत्रविधिनातर्पयेत्पायसेनत्विति ॥ तत्रेत्यपरपक्षप्रकरणोक्तत्वादपरपक्षे ॥ किंचोभयनियमेउच्यमाने देवीपुराणवचनविरोधःस्यात् ॥ तथा ॥ आहवेषुविपन्नानांजलाग्निभृगुपातिनाम् ॥ चतुर्दश्यांभवेत्पूजाह्यमावास्यातुकामिकीति ॥ अत्रकामिकीत्यमावास्याविहितफलकामस्यामावास्यायामिवातिथ्यंतराविहितफलकाम्यस्यतिथ्यंतरेपिश्राद्धंप्राप्तम् ॥ सर्वासुप्रतिपदादितिथिषुश्राद्धविधानंमनु

[1] विषशस्त्राग्निचौरादिपशुब्राह्मणघातिनाम् इ०पा० ।

राह ॥ कुर्वन्प्रतिपदि श्राद्धं सुरूपाँल्लभते सुतान् ॥ कन्यकां तु द्वितीयायां तृतीयायां तु वेदिनः ॥ पशून्क्षुद्रांश्चतुर्थ्यां तु पंचम्यां शोभनान्सुतान् ॥ षष्ठ्यां द्यूतं कृषिं वापि सप्तम्यां लभते नरः ॥ अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा ॥ स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु ॥ एकादश्यां तथा रूप्यं ब्रह्मवर्चस्विनः सुतान् ॥ द्वादश्यां जातरूपं च रजतं कुप्यमेव च ॥ ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां तु कुप्रजाः ॥ प्रीयंते पितरश्चास्यां ये शस्त्रेण हता रणे ॥ पक्षत्यादि विनिर्दिष्टान्विपुलान्मनसः प्रियान् ॥ श्राद्धदः पंचदश्यां तु सर्वान्कामान्समश्नुत इति याज्ञवल्क्य वचनेन विशेष उक्तः ॥ कन्यां कन्यावेदिनश्च पशून्द्रव्यं सुतानपि ॥ द्यूतं कृषिं च वाणिज्यं द्विशफैकशफांस्तथा ॥ ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरौप्ये सकुप्यके ॥ ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥ प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीमिति॥ कन्यावेदिनो जामातरः ॥ कुप्यं त्रपुसीसकादि॥ द्यूतं द्यूतविजयम् ॥ कृषिवाणिज्यं तज्जनितलाभम् ॥ अत्रामावास्यायां सर्वकामप्राप्तिरित्युक्ता सापि क्रमेण कामसंख्याकामावास्याश्राद्धानुष्ठानेन सिध्यति न त्वेकस्यामेवामास्यायां सर्वकामप्राप्तिः ॥ इदमेव सर्वेभ्यः कामेभ्यो यद्दर्शपौर्णमासावित्येतद्वाक्यविचारे मीमांसायां प्रतिपादितम् ॥ अतएवामावास्या तु कामिकी ति वदतो देवीपुराणस्यामावास्यायां सर्वकामप्राप्तिर्भवतीत्यमावास्यायामिति सर्वतिथ्युपलक्षणमित्यभिप्राय इत्यलमतिप्रसंगेन ॥ अपरपक्षे यदि केनापि हेतुना श्राद्धं न कृतं स्यात्तदा दीपोत्सवामावास्यायां कुर्यात् ॥ तदाह सुमंतुः ॥ येयं दीपान्विता राजन्ख्याता पंचदशी भुवि ॥ तस्यां दद्यान्न चेद्दत्तं पितॄणां वै महालय इति ॥ ॥ इत्यपरपक्षनिर्णयः ॥ ॥ अथ प्रसंगान्नक्षत्रकादिकाम्यमप्युच्यते ॥ ॥ तदाह याज्ञवल्क्यः ॥ स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ॥ पुत्रं श्रैष्ठ्यं ससौभाग्यं समृद्धिं मुख्यतां शुभम्॥ प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतीनपि ॥ अरोगित्वं यशो

१ शूद्रान् इ०पा० ।

वीतशोकतांपरमांगतिम् ॥ धनंवेदान्भिषक्सिद्धिंकुप्यंगाअप्यजाविकम् ॥ अश्वानायुश्चविधिवद्योवाश्राद्धंप्रयच्छति ॥ कृत्तिकादिभरण्यंतंसकामानाप्नुयादिमानिति ॥ एवंविष्कुंभादिषुयोगेष्वपिश्राद्धकरणेकृत्तिकादिनक्षत्रविहितफलमेवक्रमेणभवति ॥ तदाहमरीचिः ॥ कृत्तिकादिषुऋक्षेषुश्राद्धेयत्फलमीरितम् ॥ विष्कुंभादिषुयोगेषुतदेवफलमश्नुतइति ॥ रव्यादिवारेषुबवादिकरणेषुचश्राद्धफलंबृहस्पतिनोक्तम् ॥यथा॥आरोग्यंचैवसौभाग्यंशत्रूणांचपराजयम्॥सर्वान्कामान्श्रियांविद्यांधनमायुर्यथाक्रमम्॥सूर्यादिवारेष्वप्येतच्छ्राद्धकृल्लभतेफलम्॥बवादिकरणेष्वेतच्छ्राद्धकृल्लभतेफलमिति ॥ किंच ॥ मन्वादियुगाद्यलभ्ययोगेषुचकाम्यश्राद्धंकुर्यात् ॥ तत्रमन्वादिषुयुगादिषुकाम्यंसंक्रांतिषुनैमित्तिकंपिंडरहितमेवकार्यम्॥तदाहपुलस्त्यः ॥ अयनद्वितयेश्राद्धंविषुवद्वितयेतथा ॥ युगादिषुचकुर्वीतपिंडनिर्वपणादृतइति ॥ अत्रयुगादिष्वितिसाहचर्यान्मन्वाद्यादीनामप्युपलक्षणम् ॥ तदुक्तं ॥ कालादर्शे ॥ विषुवायनसंक्रांतिमन्वादिषुयुगादिषु ॥ विहायपिंडनिर्वापंश्राद्धंसर्वंसमाचरेत् ॥ मन्वादियुगाद्यलभ्ययोगास्तुतिथिनिर्णयएवोक्ताः ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेमहालयनिर्णयः ॥ ॥ अथनित्यश्राद्धनिर्णयः ॥ विश्वरूपनिबंधे ॥ जातमात्रोपिदौहित्रोविद्यमानेपिमातुले ॥ कुर्यान्मातामहश्राद्धंप्रतिपद्याश्विनेसिते ॥ आद्यप्रतिपदिश्राद्धंनांदीश्राद्धवदाचरेत् ॥ नात्यंतपाकशुद्धिःस्यादामध्याह्नाद्विशिष्यतइति ॥ इतिनित्यश्राद्धनिर्णयः॥ श्रीसूर्यसेनभू० नित्यश्राद्धस्यनिर्णयोजातः ॥ एवंनित्यश्राद्धंनिर्णीयप्रसंगतःकाम्यश्राद्धंचनिर्णीयक्रमात्प्राप्तंनैमित्तिकश्राद्धंप्रस्तूयते ॥ तच्चनवश्राद्धप्रभृतिसपिंडीकरणांतंप्रेतश्राद्धम् ॥ ग्रहणेषुसंक्रांतिषुचश्राद्धंवृद्धिश्राद्धंचसंवत्सरोदकुंभश्राद्धंचनैमित्तिकमित्युक्तम् ॥ तत्रनवश्राद्धंनामसूतकप्रथमतृतीयादिदिनेषुक्रियमाणंनवीनंश्राद्धमुच्यते ॥

तदुक्तमंगिरसा॥प्रथमेह्नितृतीयेह्निपंचमेसप्तमेतथा॥नवमैकादशेचैव नवश्राद्धंप्रकीर्त्तितमिति॥वृद्धवसिष्ठोपि॥सप्तमेह्नितृतीयेह्निप्रथमेनव मेतथा॥ एकादशेपंचमेस्युर्नवश्राद्धानिषट्सदेति॥बौधायनस्तुपंचैव नवश्राद्धानिनवममंतरितमेकादशेह्निकार्यमित्याह॥यथामरणाद्विषम दिनेष्वेकैकंश्राद्धंकुर्यादानवमाद्यच्चनवमंविघ्नेतेएकादशेह्नितत्कुर्यादि ति ॥ विश्वस्वामिनात्वाश्वलायनानांपंचापस्तंबानांषडन्येषांविभा षेतिव्यवस्थाकृता॥ नवश्राद्धानिपंचाहुराश्वलायनशाखिनः॥ आ पस्तंबा॥षडित्याहुर्विभाषात्वैतरेयिणामितिभविष्यपुराणे चतुर्वर्ण विषयेऽव्यवस्थोक्ता॥ यथा ॥नवसप्तविशांराज्ञांनवश्राद्धान्यनुक्रमात्॥ आद्यंतयोर्वर्णयोस्तुषडित्याहुर्महर्षयइति॥ विशांनव॥ राज्ञांसप्त॥ विप्रशूद्रयोःषडित्यर्थः॥ दैवादंतरितंनवश्राद्धंत्वंत्येनसहकुर्यात्॥ तदाहकण्वः॥ नवश्राद्धंमासिकंचयद्यदंतरितंभवेत्॥ तत्तदुत्तर स्वातंत्र्यादनुष्ठेयंप्रचक्षतइति॥ ॥इतिनवश्राद्धनिर्णयः॥ ॥अथमा सिकश्राद्धनिर्णयः॥ तानिचमासिकानिद्वादशमासेषुषोडशभवंति॥ यथा॥ मरणमासादारभ्यसंवत्सरसमाप्तिपर्यंतंप्रतिमासंविधीयमाना निद्वादशमासिकानि ॥ ऊनमासिकंत्रैपक्षिकमूनषाण्मासिकमूना ब्दिकंचेति॥ तदाहजातूकर्ण्यः॥ द्वादशप्रतिमास्यानिआद्यषण्मा सिकेतथा॥ त्रैपक्षिकाब्दिकेचेतिश्राद्धान्येतानिषोडशेति ॥ तत्रद्वा दशप्रतिमास्यानीत्यभिधानादाद्यषाण्मासिकाब्दिकशब्दाऊनमासि कोनषाण्मासिकोनाब्दिकपराः॥ एतानिषोडशश्राद्धानिसपिंडीकर णात्पूर्वमेकोद्दिष्टविधिनाकुर्यात्॥ सपिंडीकरणादूर्ध्वंतुप्रत्याब्दिकव त्पार्वणमेकोद्दिष्टंवायथास्वाचारंकुर्यात्॥ तदाहपैठीनसिः॥ सपिं डीकरणादर्वाक्कुर्य्याच्छ्राद्धानिषोडश॥ एकोद्दिष्टविधानेनकुर्यात्सर्वा णितानितु॥ सपिंडीकरणादूर्ध्वंयदाकुर्यात्तदापुनः॥ प्रत्यब्दंयोय थाकुर्यात्तथाकुर्यात्सतान्यपीति॥ अत्राद्यमासिकमेकादशेऽह्न्येवकु

१ प्रेतश्राद्धानि षोडश इ०पा०।

र्यात् ॥ तदाहयाज्ञवल्क्यः ॥ मृतेहनितुकर्तव्यंप्रतिमासंतुवत्सरम् ॥ प्रतिसंवत्सरंचैवमाद्यमेकादशेऽहनीति ॥ अत्रप्रतिमासंप्रतिसंवत्सरंचे त्यभिधायाद्यमेकादशेहनीत्युक्तत्वादाद्यमासिकमाद्याब्दिकंचैकाद शेऽह्निकुर्यात् ॥ अनेनैवाभिप्रायेणगोभिलोप्याद्यस्यद्विरावृत्तिमाह ॥ ब्राह्मणान्भोजयेदादौहोतव्यमनलेथवा॥ पुनश्चभोजयेद्विप्रान्द्विरावृत्ति र्भवेदिति ॥ अतश्चैकादशेह्निविधीयमानमाद्याब्दिकम् ॥ प्रथमेऽब्देऽ तीतेद्वितीयाब्दप्रारम्भेमृताहेविधीयमानंद्वितीयाब्दिकम् ॥ एवंतृ तीयाब्दप्रारंभेमृताहेविधीयमानंतृतीयाब्दिकम् ॥ चतुर्थाब्दारंभे विधीयमानंशुद्धम् ॥ अतश्चमरणदिनमारभ्यात्रिष्वब्देषुव्यतीतेषु विधीयमानंश्राद्धंशुद्धमित्यर्थः॥ आद्यश्राद्धंक्षत्रियादिरप्येकादशेह्न्ये वकुर्यात् ॥तदाहवृद्धवसिष्ठः॥ एकादशेह्नियच्छ्राद्धंतत्सामान्यमुदाहृ तम् ॥ चतुर्णामपिवर्णानांसूतकंतुपृथक्पृथगिति॥ ननु शुचिनाकर्म कर्त्तव्यमितिविधानात्क्षत्रियादेरेकादशेह्निसूतकानपगमात्कथंश्राद्धं- करणमितिचेत् ॥ सत्यम् ॥लौगाक्षिणाकर्तुस्ताकालिकीशुद्धेरभिधा नात्॥यथा॥आद्यंश्राद्धमशुद्धोपिकुर्यादेकादशेहनि ॥कर्त्तुस्तात्कालि कीशुद्धिरशुद्धः पुनरेवसइति ॥ नन्वेवंसतिब्राह्मणोपिमुख्येमृताहएवा द्यश्राद्धंकुरुताम् ॥तस्यापितात्कालिकीशुद्धेर्वक्तुंशक्यत्वादितिचेन्न॥ तत्रविधानाभावात् ॥ आद्यमेकादशेहनीत्येकादशेह्न्येवविधानाच्च ॥ अतश्चैकादशेह्निविहितमाद्यश्राद्धंक्षत्रियादिरशुद्धोपिकुर्यात् ॥ नत्वा शौचांतइत्यलमतिविस्तरेण ॥ यत्तुविष्णुवचनम् ॥ अथाशौचाप गमइति॥ तद्ब्राह्मणविषयमप्युपपद्यतइत्यविरोधः ॥प्रायोनशनादिवि हितमार्गेणमृतानांसद्यःशौचेप्याद्यमेकादशेएवाह्निकुर्यात् ॥ तदाहशं खः ॥सद्यःशौचेपिदातव्यंमृतस्यैकादशेहनि ॥ सएवादिवसस्तस्यश्रा द्धेह्यनशानादिष्विति ॥ ऊनमासिकंतुद्वादशाहेऊनमासिवाकार्यम् ॥ तदाहगोभिलः ॥ मरणाद्द्वादशाहेस्यान्मास्यूनेचोनमासिकमिति ॥

ऊनषाण्मासिकंतुऊनषष्ठेमासिऊनाब्दिकंऊनेद्वादशेमासित्रैपक्षिकंतृतीयेपक्षेकार्यम् ॥ तदाहगालवः ॥ ऊनषाण्मासिकंषष्ठमास्यूनेप्यूनमासिकम् ॥ त्रैपक्षिकंतृतीयेस्यादूनाब्दंद्वादशेहनीति ॥ अत्रोनमासिकादीन्यूनमासिकादिषुकार्याणीत्युक्तम् ॥ तत्रकियद्भिर्दिनैरूनेषुकार्याणीत्यत्रोच्यते ॥ ॥ तदाहगालवः ॥ त्रिभिर्वादिवसैन्यूनेत्वेकेनद्वितयेनवा ॥ आद्यादिषुचमासेषुकुर्यादूनाब्दिकादिकमिति ॥ कार्ष्णाजिनिरपि ॥ ऊनान्यूनेषुमासेषुविषमाहेसमेपिवा ॥ त्रैपक्षिकंत्रिपक्षेस्यान्मृताहेत्वितराणित्विति ॥ ननु भविष्यपुराणेतुत्रैपक्षिकंभवेद्वृत्तेत्रिपक्षेतदनंतरमित्युक्तम् ॥ कार्ष्णाजिनिनातु त्रिपक्षइत्युक्तमितिविरोधइतिचेन्न ॥ तत्रापिवृत्तइतिनानिवृत्ते किन्तुप्रवृत्तइत्यर्थः ॥ साग्नेस्तुमरणदिनादन्यस्मिन्दिनेदाहेसतिदहनदिनमारभ्यनवश्राद्धैकादशाहादिकंत्रैपक्षिकांतंकुर्यात् ॥ तदनंतरश्राद्धानिमरणदिनएव ॥ तदाहजातूकर्ण्यः ॥ ऊर्ध्वंत्रिपक्षाद्यच्छ्राद्धंमृताहन्येवतद्भवेत् ॥ आद्यस्तुकारयेद्दाहादाहिताग्नेर्द्विजन्मनइति ॥ दैवादंतरितंमासिकंत्वन्यस्मिन्मासेमृताहएवकुर्यात् ॥ तदाहऋष्यशृंगः ॥ एकोद्दिष्टेतुसंप्राप्तेयदिविघ्नंप्रजायते ॥ मासेन्यस्मिंस्तिथौतस्यांकुर्यादंतरितंचयदिति ॥ अत्रचकारेणतन्मासिकसमुच्चयः ॥ अंतरितंतन्मासिकंचकुर्यादित्यर्थः ॥एतानिषोडशश्राद्धानिद्वादशाहादौसंवत्सरादर्वागुक्तकालेसपिंडीकरणेकर्तव्येसतिपूर्वमेतानिवकृत्वासपिंडीकरणंकुर्यात् ॥ तदाहलौगाक्षिः ॥ श्राद्धानिषोडशापाद्यविदधीतसपिंडनमिति ॥ गोभिलोपि॥ श्राद्धानिषोडशादत्त्वानैवकुर्यात्सपिंडनमिति ॥ सपिंडनानंतरमपिपुनःस्वस्वकालेकार्याण्येव ॥ तदाहांगिराः ॥ यस्यसंवत्सरादर्वाक्सपिंडीकरणंकृतम् ॥ मासिकंचोदकुंभचदेयंतस्यापिवत्सरमिति ॥ सपिंडीकरणार्थमपकृष्यकृतान्यप्येतानिविवाहादिवृद्धावुपस्थितायांपुनरप्यपकृष्यमृताहएवकुर्यादिति ॥

तदाहकार्ष्णाजिनिः ॥ सपिंडीकरणादर्वागपकृष्यकृतान्यपि ॥ पुन
स्तान्यपकृष्येतवृद्ध्युत्तरनिषेधनादिति॥ शाठ्यायनोपि॥प्रेतश्राद्धा
निशिष्टानिसपिंडीकरणंतथा ॥ अपकृष्यापिकुर्वीतकर्तुंनांदीमुखं
द्विजः ॥ वृद्ध्यनंतरनिषेधश्चकात्यायनेनोक्तः ॥ निर्वर्त्यवृद्धितंत्रं
तुमासिकानिनतंत्रयेत् ॥ अयातयामंमरणंप्रभवेत्पुनरस्यत्विति ॥
अयातयामंनवम् ॥ तथा ॥ अनंतरेणयोवृद्धिंप्रेतश्राद्धानिकर्षति ॥
सश्राद्धीनरकेघोरेपितृभिः सहमज्जतीति ॥ अत्रऊनमासिकोनषा
ण्मासिकोनाब्दिकानिनंदादिषुनकार्याणि ॥ तदुक्तम् ॥ नंदायां
भार्गवदिनेचतुर्दश्यांत्रिपुष्करे ॥ ऊनश्राद्धंनकुर्वीतगृहीपुत्रधनक्षया
दिति ॥ मरीचिरपि ॥ द्विपुष्करेचनंदासुसिनीवाल्यांभृगोर्दिने ॥
चतुर्दश्यांचनोनेष्टिंकृत्तिकासुत्रिपुष्करइति ॥ त्रिपान्नक्षत्रस्यभद्रा
तिथिगुरुभौमरविवाराणामन्यतमस्यचमेलनेत्रिपुष्करंभवति ॥ द्व
योर्मेलनेद्विपुष्करम् ॥ तदुक्तंरत्नकालायम् ॥ विषमचरणंधिष्ण्यं
भद्रातिथिर्यदिजायते ॥ सुरगुरुरविक्ष्मापुत्राणांकथंचनवासरे ॥ मुनि
भिरुदितःसोयंयोगस्त्रिपुष्करसंज्ञकइति ॥ ॥ इतिमासिकनिर्णयः ॥
॥ ॥ अथसपिंडीकरणम् ॥ ॥ तस्याष्टौकालाभवंति ॥ तदुक्तंका
लादर्शे ॥ एकादशेद्वादशेह्नित्रिपक्षेवात्रिमासिके ॥ षष्ठेचैकादशेवा
ब्देसंपूर्णेवाशुभागमइति ॥ शुभागमइति यदैवविवाहाद्याभ्युदयिकं
प्राप्तंततःपूर्वमेतत्सपिंडीकरणंकुर्यादित्यर्थः ॥ एषुचैकादशाहरूपः
कालःकर्तरिपुत्रेसाग्नौएकादशाहएवदर्शेसतिस्यात् ॥ तदाहकार्ष्णा
जिनिः ॥ सपिंडीकरणंकुर्यात्पूर्ववच्चाग्निमान्सुतः ॥ परतोदशरात्राच्चे
त्कुहूरब्दोपरीतरइति ॥ दशरात्रात्परतःएकादशेह्नीत्यर्थः ॥ इत
रोनग्निः ॥ अत्रापिमृताहादूर्ध्वंहरीतोपि ॥ यातुपूर्वममावास्यामृता
हाद्दशमीभवेत् ॥ सपिंडीकरणंतस्यांकुर्यादेवसुतोग्निमानिति ॥ अत्रा
पिमृताहादूर्ध्वंद्वितीयदिनात्परिगणनेएकादशीभवति ॥ तस्याममा

१ नकुर्यादूनिकंशुक्रेचतुर्दश्यांचपुष्करे द्विपुष्करंत्रिपुष्करञ्च इ० पा० ।

वास्यायदिभवेदित्यर्थः ॥ वृद्धवसिष्ठोपि ॥ प्रथमास्यादमावास्या मृताहाद्दशमेहनि॥ सपिंडीकरणंतत्रकुर्यादेवसुतोग्निमानिति॥अत्रापि पंचमीमर्यादायाम् ॥ मृताहादूर्ध्वंदिनमारभ्येत्यर्थः ॥ साग्नेरेकादशेह्नि दर्शपातेपिंडपितृयज्ञार्थंपूर्वंसपिंडीकरणविधानम् ॥ तदाहगालवः ॥ सपिंडीकरणात्प्रेतेपैतृकंपदमास्थिते ॥ आहिताग्नेःसिनीवाल्यांपि तृयज्ञंप्रवर्ततइति ॥ प्रेतेऽनग्नौकर्तरिपुत्रेग्निमतिद्वादशाहोपिकालः ॥ तदुक्तंभविष्योत्तरे ॥ यजमानोग्निमान्राजन्प्रेतश्चानग्निमान्भवेत् ॥ द्वादशाहेतदाकार्यंसपिंडीकरणंसुतैरिति ॥ यजमानःकर्ता यदा एकादशेह्निसपिंडीकरणंकुर्यात्तदातत्रैवपूर्वमाद्यादिषोडशश्राद्धानिकृ त्वापृथक्पाकेनसपिंडीकरणंकुर्यात् ॥ यत्तुकात्यायनवचनम् ॥ एकादशाहंनिर्वर्त्यप्राग्दशाहाद्यथाविधि ॥ प्रकुर्वीताग्निमान्विप्रो मातापित्रोःसपिंडतामिति ॥ अस्यायमर्थः ॥ दशाहादूर्ध्वमे कादशेह्निएकादशाहमाद्यश्राद्धंनिवर्त्यपश्चात्सपिंडतांकुर्वीतेत्यर्थः ॥ अन्यथासर्वेषामेववर्णानामाद्यमेकादशेहनीतिवाक्यविरोधःस्यात् ॥ एकादशाहमितिषोडशश्राद्धोपलक्षणम् ॥ श्राद्धानिषोडशादत्त्वानैव कुर्यात्सपिंडतामिति षोडशश्राद्धाकरणेधिकाराभावात् ॥ कर्तर्य नग्नौप्रेतेचाहिताग्नौतृतीयपक्षःकालः॥ तदाहसुमंतुः ॥ प्रेतश्चेदाहिता ग्निःस्यात्कर्त्तानग्निर्यदाभवेत् ॥ सपिंडीकरणंतस्यकुर्यात्पक्षेतृतीय केइति ॥ अनग्नीनांतुद्वादशाहाद्याःसप्तकालाभवंति॥ नन्वब्दोपरीतर इत्यनग्नेःसंवत्सरादूर्ध्वंकार्ष्णाजिनिवचनात्सपिंडीकरणविधानात्कथं सप्तकालाइतिचेत् ॥ सत्यम् ॥ सएवमुख्यःकालः ॥ तत्रदेशकालश रीरादिस्वास्थ्यनिश्चयाद्द्वादशाहएवकार्यम् ॥ तदाहव्याघ्रः ॥ आनं त्यात्कुलधर्माणांपुंसांचैवायुषःक्षयात् ॥ अस्थिरत्वाच्छरीरस्यद्वा दशाहःप्रशस्यतइति ॥ अत्रासंभवेत्रिपक्षादिःकालत्वेनोक्तः ॥ तदु क्तंभविष्योत्तरे ॥ सपिंडीकरणंकुर्याद्यजमानस्त्वनग्निमान् ॥ अना

हिताग्नेः प्रेतस्यपूर्णेब्देभरतर्षभ ॥ द्वादशेहनिषष्ठेवात्रिपक्षेवात्रिमासि
वा ॥ एकादशेपिवामासिमांगल्यंस्यादुपस्थितम् ॥ षष्ठेमासीत्यन्व
यः ॥ ननुसाग्निकस्यकर्तुरेकादशाहद्वादशाहरूपकालनियमउक्तः ॥
साग्नेः प्रेतस्यत्रिपक्षनियमः ॥ यदाप्रमादात्तन्नकृतंभवेत् ॥ त
दासपिंडीकरणलोपएवस्यादितिचेन्न ॥ गोभिलेनकालान्तरविधाना
त् ॥ यथा ॥ द्वादशाहादिकालेषुप्रमादादननुष्ठितम् ॥ सपिं
डीकरणंकुर्यात्कालेषूत्तरभाविष्विति ॥ तदुत्तरभाविषुत्रिपक्षादिषु ॥
॥ इतिसपिंडीकरणकालमुक्त्वातत्सपिंडीकरणंकेनसहेत्याशंकाया
मुच्यते॥ तत्रविष्णुः॥ संवत्सरांतेप्रेतायतत्पित्रेतत्पितामहायतत्प्रपि
तामहायचब्राह्मणान्पूर्वंभोजयेदिति ॥ प्रेतपिंडंपाद्यपात्रोदकवत्पिडत्र
येनिदध्यादितिच ॥ पितामहेजीवतितुब्रह्मपुराणेविशेषउक्तः ॥ मृते
पितरियस्याथविद्यतेचपितामहः ॥ तेनदेयास्त्रयःपिंडाःप्रपितामहपू
र्वकाः॥ तेभ्यश्चपैतृकःपिंडोनियोक्तव्यश्चपूर्ववदिति॥ यदापितामहप्र
पितामहौजीवतःतदाप्रेतप्रपितामहपूर्वकास्त्रयःपिंडादेयाः ॥ ननुप्रेत
स्यपितृपितामहप्रपितामहैःसपिंडीकरणमुक्तंपितृपितामहयोर्जीवतोः
केवलंप्रपितामहमात्रेणसपिण्डनात्कथंपितृत्वमितिचेत् सत्यम्॥त्रया
णांमध्येएकेनापिसपिंडनेपितृत्वाभिधानात्॥तदाहसुमंतुः॥त्रयाणा
मपिपिंडानामेकेनापिसपिंडने ॥ पितृत्वमश्नुतेप्रेतइतिधर्मोव्यवस्थि
तइति ॥त्रयाणांपिंडानांप्रेतसंबंधिपितृपितामहप्रपितामहपिंडानाम्॥
ननुव्युत्क्रममृतानांसपिंडीकरणंनिषिद्धम् ॥ यथा ॥ व्युत्क्रमाच्च
प्रमीतानांनैवकार्यासपिंडतेति ॥ अतश्चपितामहेजीवतिप्रपितामहा
दिभिरित्यादिकंकथमुपपद्यतइतिचेत् ॥ उच्यते ॥ निषेधवाक्यं
मातापितृभर्तृव्यतिरिक्तविषयम् ॥ तदुक्तंस्कंदपुराणे ॥ व्युत्क्रमेण
मृतानांनसपिंडीकृतिरिष्यते ॥ यदिमातायदिपिताभर्तानैषविधिः
स्मृतइति॥पितामहेपुत्रान्तरैरसंस्कृतेप्रपितामहेऽसंस्कृतेपिपितृमरणे

सतिअसंस्कृताभ्यामपिताभ्यांपितुःसपिंडीकरणंकुर्यात् ॥ ननु ॥ सत्यधिकारेंतरेपिपितृपितामहौसंस्कुर्यात् ॥ तदाहकात्यायनः ॥ असंस्कृतौनसंस्कार्योपूर्वोपौत्रप्रपौत्रकैः ॥ पितरंतत्रसंस्कुर्यादिति कात्यायनोब्रवीत् ॥ असंस्कृतौदाहादिसंस्कारैः ॥ ननुपितामह प्रपितामहयोरसंस्कृतयोःपितुःसपिंडीकरणंकथंभवतीतिचेत् ॥ सत्यम् ॥ असंस्कृताभ्यामपिताभ्यामेवसपिंडीकरणंकार्यम् ॥ तदाह कात्यायनः ॥ पापिष्ठमपिशुद्धेनशुद्धंपापकृतापिवा ॥ पितामहेनापि तरंसंस्कुर्यादितिनिश्चयइति ॥ अत्रपापिष्ठत्वमितिसंस्काररहित्यादि नानपातित्यादिना पतितेनसपिंडीकरणनिषेधात् ॥ यथाहगौतमः ॥ पापकर्मणोनसंसृजेरन्स्त्रियश्चव्यभिचारिणीरिति ॥ असतिपुत्रांतरेपौत्रेणैवपितामहस्यसंस्कारःकार्यः ॥ तदाहकात्यायनः ॥ पितामहःपितुःपश्चात्पंचत्वंयदिगच्छति ॥पौत्रेणैकादशाहादिकर्त्तव्यं श्राद्धषोडश ॥ नैतत्पौत्रेणकर्तव्यंपुत्रवांश्चेत्पितामहः ॥ पितुःसपिंडनं कृत्वाकुर्यान्मासानुमासिकामिति ॥ यद्यन्यःकर्तासन्निहितोनस्यात्तदा पितुःप्राधान्येनसन्निहितत्वात्पूर्वंसापिंडनंकृत्वापितामहप्रपितामहयोः पश्चात्सपिण्डनंकुर्यात् ॥ असतितुकुर्यादेवेत्यपरार्कस्मरणात् ॥ पितामहदशाहमध्येएवपितृमरणेसति ॥ प्रथमेहनियोदद्यात्सदशाहंसमापयेदित्युपक्रांतपितामहसंस्कारेणतेनैवदशाहकृत्येसमापनीयेपितृसंस्कारेणांतरितेसतिपितृसंस्कारानंतरंपुनः स्वकालेपितामहस्यसं-स्कारंकृत्वासर्वमावर्तयेत् ॥ अशक्तादिनापित्रानुज्ञातेनपौत्रेणपितामहश्राद्धेउपक्रांतेपितृमरणेसतिपित्राशौचंवहन्नेवस्वकालेपितामहोपक्रान्तंश्राद्धंकुर्यादुपक्रांतत्वात्कर्तुस्तात्कालिकीशुद्धिरितिवचनात् ॥ अपुत्रस्यतुपत्नीसपिंडनंकुर्यात् ॥ तदाहलौगाक्षिः ॥ सर्वाभावेस्वयंपत्न्यःस्वभर्तॄणाममंत्रकम् ॥ सपिंडीकरणंकुर्युस्ततःपार्वणमेवच ॥ सुमंतुरपि ॥ अपुत्रेसंस्थितेकर्तानभवेच्छ्राद्धकर्मणि ॥ तत्रपत्न्यापिकुर्वीतसापिंड्यंपार्वणंतथेति ॥

मातुःसपिंडीकरणेतुविशेषउच्यते ॥ तदाहशंखः ॥ मातुः सपिंडीकरणंकथंकार्यंभवेत्सुतैः ॥ पितामह्यादिभिःसार्द्धंसपिंडीकरणंस्मृतेति ॥ पितामह्यादिभिरिति यदामातामृतापितामहीच जीवतितदाप्रपितामह्यादिभिःसपिण्डनंकुर्यात् ॥ तदुक्तंब्रह्मपुराणे ॥ मातर्यग्रेमृतायांचविद्यतेचपितामही ॥ प्रपितामह्यादिभिःपूर्वंकार्यस्तत्राप्ययंविधिरिति ॥ प्रपितामह्यामपिजीवत्यांत्रयाणामपिपिंडनमितिवचनात्पितुःप्रपितामह्यादिभिःकुर्यात् ॥ अपुत्रायाःपतिरेवश्वश्रवादिभिःसपिंडनंकुर्यात् ॥ तदाहपैठीनसिः ॥ अपुत्रायांमृतायांतुपतिःकुर्यात्सपिण्डताम् ॥ श्वश्र्वादिभिःसहैवास्याःसपिंडीकरणंभवेदिति ॥ ॥ अन्वारोहणेतुपुत्रःपत्यासपिंडनंकुर्यात् ॥ एकस्मिन्नेवदिनेमरणेतुपत्युरेवसपिंडीकरणंकुर्यात् ॥ तेनैवतस्याअपिकृतंस्यात् ॥ तदुक्तंस्मृत्यर्थसारे ॥ अन्वारोहणेनैकदिनमरणेस्त्रियाः पृथक्सपिंडीकरणंनकार्यम् ॥ भर्तुश्चकृतेस्त्रियाश्चकृतंभवतीति ॥ दिनांतरेमृतेपुत्रश्चपितृपितामहपिंडमध्येकुशानन्तर्धायपित्रैकेनमातुःसापिंड्यंकुर्यात्॥ सर्वत्रभर्त्रापत्न्याःसापिण्ड्यमेकेनैव॥श्वशुरेणानिषिद्धमिति ॥ यमोपि ॥ पत्याचैकेनकर्तव्यंसपिंडीकरणंस्त्रियाः ॥ सा मृतापिहितेनैक्यंगतामंत्राहुतिव्रतैरिति ॥ शातातपोपि ॥ मृताप्यनुगतायाथसातेनसहपिंडताम् ॥ अर्हतिस्वर्गवासेपियावदाभूतसंप्लवमिति ॥ अत्रकैश्चिदुक्तम् ॥ पत्याचैकेनकर्त्तव्यंसापिण्डीकरणंस्त्रियाःइतियमेनोक्तम् ॥ तत्रपत्याचैकेनेतिपतिपदंपितृवर्गोपलक्षणम् ॥ अतश्चपितृपितामहप्रतितामहैःसपिंडीकरणंकार्यम् ॥ अन्यथासपिंडीकरणस्वभावविरोधःस्यात्॥ एकेनेत्येकत्वविधानंत्वासुरादिविवाहोढायाःमातामह्यादिभिःसहसापिण्ड्येप्राप्तेपिअन्वारोहणेत्वेकेनपतिवर्गेणैवसपिंडीकरणंकर्त्तव्यमित्येवंपरमिति ॥ एवंसतिदेशाचारभेदेनव्यवस्थाकल्पनीया ॥ आसुरगांधर्वराक्षसपै

शाचविवाहोढायाःपुत्रोमातामह्यादिभिःसपिंडनंकुर्यात् ॥ तदाहशातातपः॥तन्मात्रातात्पितामह्यातच्छ्वश्र्वावासपिंडनम्॥आसुरादिविवाहेषुविनातांयोषितांस्मृतम् ॥ तन्मात्रातात्पितामह्येत्यत्रतस्यामातुर्मात्रापितामह्याचेत्यर्थः ॥ तच्छ्वश्र्वावेतिमातुःपितामह्याश्वश्र्वामातुःप्रपितामह्येत्यर्थः ॥ मातामहेनवाकुर्यात्॥ तदाहसुमंतुः॥पितापितामहेयोज्यःपूर्णेसंवत्सरेसुतैः॥मातामातामहेतद्वदित्याहभगवाञ्छिवइति॥ अत्रापिसुतैरित्यासुरादिविवाहोढासुतैः ॥ अत्रासुरादिविवाहेत्यभिधानादासुरादिव्यतिरिक्तब्राह्मदैवार्षप्राजापत्यविवाहचतुष्टयोढायाःपितामह्यादिभिर्भर्त्राचसपिंडीकरणंप्रतीयते ॥ तथाचमार्कण्डेयः॥ ब्राह्मादिषुविवाहेषुयाह्यूढाकन्यकाभवेत् ॥ भर्तृगोत्रेणकर्तव्यातस्याःपिंडोदकक्रिया ॥ आसुरादिविवाहेषुपितृगोत्रेणधर्मविदिति ॥ अत्रभर्तुःपितरौमातृसंबंधिनौ ॥ पुत्रिकापुत्रस्तुमातामहादिभिर्मातुःसपिंडीकरणंकुर्यात्॥तदाहकात्यायनः॥मातुःसपिंडीकरणंपितामह्यासहोदितम्॥ यथोक्तेनैवकालेनपुत्रिकायानचेत्सुतइति ॥पुत्रिकासुतश्चेन्मातामहादिभिःकुर्यादित्यर्थः॥ बौधायनोपि॥ आदिशेत्प्रथमेपिंडेमातरंपुत्रिकासुतः॥द्वितीयेपितरंतस्यतृतीयेचपितामहमिति॥एवंयेनकेनाप्युपायेनमातुःसापिंड्येवृद्धचन्वष्टकादिश्राद्धेषुपितामह्यादिभिःपार्वणंकर्तव्यम् ॥ इदंसपिंडीकरणंचिरादपिपुत्रएवकुर्यात्॥ तदुक्तंवायुपुराणे ॥ श्राद्धानिषोडशादत्त्वाकुर्यान्नतुसपिंडताम् ॥ प्रोषितावासितेपुत्रःकालादपिचिरादपि ॥ एतद्व्याख्यातमपरार्के ॥ प्रोषितावासितेप्रवासावसानेपुत्रश्चिरादपिकालात्सपिंडनंकुर्यात् ॥ तत्षोडशश्राद्धान्यदत्त्वानकुर्यात् ॥ यदितानिकनिष्ठभ्रात्रादिनादत्तानितदासपिंडत्वमेवर्यादिति ॥ संन्यासिनांतुषोडशश्राद्धसपिंडीकरणानिनसन्ति ॥ तदाहोशना ॥ एकोद्दिष्टंनकुर्वीतयतीनांचैवसर्वदा ॥ अहन्येकादशेचैषांपार्वणंतुविधीयते ॥ सपिंडीकरणंतेषांनकर्तव्यंसुतादिभिः ॥ त्रिदं

ऽग्रहणादेवप्रेतत्वंनैवजायतइति॥ त्रिदंडेत्येकदंडस्याप्युपलक्षणम् ॥ तदुक्तंचतुर्विंशतिमते ॥ चतुर्थमाश्रमंगत्वाब्रह्मविद्यापरायणः ॥ एकदंडीत्रिदंडीवासर्वसंगविवर्जितइति ॥ शातातपोऽपि ॥ एकोद्दिष्टंजलंपिंडमाशौचंप्रेतसत्क्रियाम्॥नकुर्यात्पार्वणादन्यद्ब्रह्मीभूतायभिक्षवे ॥ ब्रह्मचर्यादिविषयेस्मृत्यर्थसारेविशेषउक्तः॥ यथा॥ ब्राह्मणादिहतानांपतितानांप्रायश्चित्ताकरणेब्रह्मचारिणामनपत्यानांचसपिंडीकरणंनास्ति ॥ तेषांसदैकोद्दिष्टमेवेति ॥ अत्रानग्निकानांद्वादशाहादयःसतकालउक्ताः॥ तत्रद्वादशाहइतिसूतकांतोपलक्षणम् ॥ अतश्चक्षत्रियवैश्ययोरपिसूतकांतएवसपिंडीकरणम् ॥ तदाहकात्यायनः ॥ सर्वेषामेववर्णानामाशौचांतेसपिंडनमिति ॥ वृद्धमनुरपि ॥ द्वादशेऽह्निविप्राणामाशौचांतेतुभूभृताम् ॥ वैश्यानांचत्रिपक्षादावथवास्यात्सपिंडनमिति ॥ शूद्रस्यापिद्वादशाहएव॥तदाहविष्णुः ॥ मंत्रवर्ज्यंहिशूद्राणांद्वादशाहेसपिंडनमिति विष्णुनाशूद्रस्यापिद्वादशाहाभिधानात्॥सर्वेषामपिवर्णानामितिवचनंब्राह्मणादिवर्णत्रयएव ॥ उक्तकालेष्वपिसापिंड्येऽकृतेपुनःकर्त्तव्यताकालविशेषोऋष्यशृंगेणोक्तः ॥ अनुराधार्द्रहस्तेषुरोहिण्यांवासमाचरेदिति ॥ गालवोपिसपिंडीकरणश्राद्धमुक्तकालेनचेत्कृतम् ॥ रौद्रहस्तेचरोहिण्यांमैत्रभेवासमाचरेदिति ॥ रौद्रमार्द्रा॥ मैत्रमनुराधा ॥ संवत्सरादर्वाक्सपिंडीकरणेकृतेऽपिसंवत्सरपर्यंतंसंकल्पविधिनापार्वणंसोदकुंभंचश्राद्धंकुर्यात् ॥ तदाहयाज्ञवल्क्यः ॥ अर्वाक्सपिंडीकरणंयस्यसंवत्सराद्भवेत् ॥ तस्याप्यन्नंसोदकुंभंदद्यात्संवत्सरंद्विजइति ॥ तस्यापीतिशब्देनसंवत्सरादर्वागकृतस्यसपिंडस्यापिसमुच्चयः ॥ अयन्तुविशेषः ॥ अकृतसपिंडनस्यैकोद्दिष्टंकृतसपिंडनस्यपार्वणम्॥ तत्रापिविशेषोगौतमेनोक्तः ॥ अदैवंपार्वणंश्राद्धंसोदकुंभमधर्मकम्॥ कुर्यात्प्रत्याब्दिकंश्राद्धंसंकलपविधिनान्वहमिति ॥ अधर्मकंदातृभोक्त्रोःपुनर्भो

जनपर्यटनादिधर्मरहितम् ॥ विवाहान्मौंजीबंधाच्चोर्ध्वंवर्षार्द्धंवर्षं
चसपिंडीकरणनवश्राद्धषोडशश्राद्धप्रत्याब्दिकगयामहालयश्राद्धव्य
तिरिक्तममावास्याश्राद्धंपिंडरहितंकुर्यात् ॥ तदाहकार्ष्णाजिनिः॥
मौंजीबंधाद्विवाहाच्चवर्षार्द्धंवर्षमेवच ॥ पिंडान्सपिंडानोदद्युःसपिं
डीकरणादृतइति ॥ सपिंडीकरणशब्दोऽत्रनवश्राद्धषोडशश्राद्धाना
मप्युपलक्षकः॥ स्मृतिसंग्रहेपि ॥ विवाहोपनयादूर्ध्वंवर्षंवर्षार्द्धमेव
च॥ नकुर्यात्पिंडनिर्वापंनदद्यात्करणानिचेति ॥ पुनःसएवाह ॥
महालयेगयाश्राद्धेमातापित्रोर्मृतेऽहनि॥कृतोद्वाहोपिकुर्वीतपिंडनिर्वा
पणंसुतइति॥उक्तकालव्यतिरिक्तेष्वमावास्यादिकालेषुसंकल्पश्राद्धं
कुर्यात् ॥ ॥ इतिश्रीसूर्यसेन॰निर्णयामृतेश्राद्धप्रकरणेद्वितीयेसपिंडी
करणनिर्णयः॥ ॥अथसंकल्पश्राद्धनिर्णयः॥ सांगपार्वणादिश्राद्ध
करणेअशक्तस्त्यक्ताग्निश्चसंकल्पश्राद्धंकुर्यात् ॥ अशक्तिश्चव्याध्या
दिनानत्वालस्येन ॥ तदुक्तंस्मृतिसंग्रहे ॥ अंगानिपितृयज्ञस्ययदा
कर्तुंनशक्नुयात्॥ संकल्पश्राद्धमेवासौकुर्यादर्घ्यादिवर्जितमिति[2] ॥आ
दिशब्दादावाहनाद्युपसंग्रहः॥ तदाहापस्तंबः॥ संकल्पश्राद्धेअर्घ्या[3]
वाहनाग्नौकरणपिंडस्वधावाचनादिवर्जयेदिति ॥ व्यासोपि ॥ त्यक्ता
ग्नेःपार्वणंनैवनैकोद्दिष्टंसपिंडनम्॥अत्यक्ताग्नेस्तुपिंडोक्तिस्तस्मात्संक
ल्प्यभोजयेदिति॥त्यक्ताग्निर्नास्तिकयादिनोत्सृष्टाग्नेः॥ इतिसंकल्पश्रा
द्धनिर्णयः॥ ॥अथाभ्युदयिकश्राद्धनिर्णयः॥तच्चत्रिविधम् ॥विवाहादि
नियतनिमित्तम्॥ पुत्रजन्माद्यनियतनिमित्तम्॥अग्न्याधानादिनिमि
त्तंचेति ॥तत्रविवाहादिनिमित्तंप्रातःकार्यम्॥तदाहशातातपः॥प्रातर्वृ
द्धिनिमित्तकमितिवचनात्पूर्वाह्णेकुर्यात् ॥ अत्रप्रातःशब्दःसार्द्धप्र
हरात्मककालवाचकः॥ तदाहगार्ग्यः॥ललाटसंमितेभानौप्रथमःप्रहरः
स्मृतः॥सएवाप्यर्द्धसंयुक्तःप्रातरित्यभिधीयते॥अग्न्याधानादिनिमित्तं

---

१ वर्जनादिरहितम् इति पा०। २ दर्चादि इ० पा०। ३ अर्चादि इ० पा०।

त्वपराह्णेकार्यम् ॥तदाहगालवः॥पार्वणंचापराह्णेतुवृद्धिश्राद्धंतथाग्निक मिति ॥ अग्न्याधानादिनिमित्तंवृद्धिश्राद्धमापराह्णेकुर्यादित्यर्थः ॥ पुत्र जन्मादिनिमित्तस्यानियतत्वाच्चनिमित्तानंतरमेवतत्कार्यम्॥आभ्युद यिकश्राद्धंमातृपूर्वकमेवकार्यम् ॥ तदुक्तम् ॥ मातृश्राद्धंतुपूर्वंस्यात्पि तृणांतदनंतरम्॥ततोमातामहानांतुएवंनांदीमुखंभवेदिति ॥ नांदीमु खमाभ्युदयिकश्राद्धम् ॥ अथनांदीमुखनिमित्तान्युच्यंते॥तत्रकार्ष्णा जिनिः ॥ कन्यापुत्रविवाहेषुप्रवेशेनववेश्मनः ॥ नामकर्मणिबालानां चूडाकर्मादिकेतथा ॥ सीमंतोन्नयनेचैवपुत्रादिमुखदर्शने ॥ नांदीमु खान्पितृगणान्पूजयेत्प्रयतोगृही ॥ पुत्रादीत्यादिशब्दात्पौत्रमुख दर्शनस्याप्युपसंग्रहः ॥ गार्ग्योऽपि॥ पुत्रोत्पत्तिप्रतिष्ठासुतन्मौजीत्या गबंधने ॥ चूडायांचविवाहेषुवृद्धिश्राद्धंविधीयतइति ॥ वृद्धगार्ग्योऽ पि॥अग्न्याधानाभिषेकादाविष्टापूर्तौस्त्रियाकृतौ ॥ वृद्धिश्राद्धंप्रकुर्वीत आश्रमग्रहणेतथेति ॥ स्त्रियाकृतावाद्यएव ॥ मत्स्यपुराणेपि ॥ उत्सवानंदसंतानयज्ञोद्वाहादिमंगले ॥ मातरःप्रथमंपूज्याःपितरस्तद नंतरम् ॥ ततोमातामहाःपूज्याविश्वेदेवास्तथैवचेति ॥ अत्रैवविशे षोगार्ग्येणोक्तः ॥ मातृश्राद्धंतुपूर्वेद्युःकर्माहनितुपैतृकम् ॥ माता मह्यंचोत्तरेद्युर्वृद्धौश्राद्धत्रयंस्मृतमिति ॥ दिनत्रयकरणासंभवेशुभ कर्मदिनात्पूर्वदिनेश्राद्धत्रयमपिकुर्यात् ॥ तदाहशातातपः॥पृथग्दिने ष्वशक्तश्चेदेकस्मिन्पूर्ववासरे ॥ श्राद्धत्रयंतुकुर्वीतवैश्वदेवन्तुतांत्रिक मिति ॥ वृद्धिश्राद्धेदधिबदरादिभिःपिंडदानंकुलाचारप्राप्तंचेत्कुर्यान्न चेन्नकुर्यात् ॥ तदुक्तंभविष्योत्तरे ॥ पिंडानिर्वपणंकुर्यान्नवाकुर्यान्नरा धिप ॥ वृद्धिश्राद्धेमहाबाहोकुलधर्मानवेक्ष्यत्विति ॥ ॥ इतिवृ द्धिश्राद्धनिर्णयः ॥ अथजीवच्छ्राद्धनिर्णयः ॥ कर्त्रंतरेऽसतिश्राद्धा दिनाजीवायश्राद्धंदद्यात् ॥ तदुक्तंब्रह्मपुराणे ॥ देशकालधनश्र द्धाव्यवसायसमुच्छ्रिते ॥जीवितेसतिजीवायदद्याच्छ्राद्धंस्वयंनरइति॥ ॥इतिश्री०निर्णयामृतेश्राद्धप्रकरणेद्वितीयेजीवच्छ्राद्धनिर्णयः॥ ॥अथ

संक्रांतिनिर्णयःप्रारभ्यते ॥ ॥ ताश्चसंक्रांतयोद्वादश ॥ तासुमकर
कर्कटावुदग्दक्षिणायने ॥ तुलामेषौविषुवे ॥ वृषवृश्चिककुंभसिंहावि
ष्णुपद्यः॥धनुर्मिथुनकन्यामीनाःषडशीतयः॥तदाहवृद्धवसिष्ठः॥ अय
नेद्वेविषुवेद्वेचतस्रःषडशीतयः ॥ चतस्रोविष्णुपद्यस्तुसंक्रांत्योद्वादश
स्मृताः ॥ मृगकर्कटसंक्रांतीद्वेउदग्दक्षिणायने ॥ विषुवेद्वेतुलामेषौ
गोलमध्येततोपराइति ॥ मृगोमकरः ॥ गोलंचलनम् ॥ अयनाविषुव
योर्गोलमध्यइत्यर्थः ॥ ज्योतिर्वसिष्ठोपि॥ वृषवृश्चिककुंभेषुसिंहेचैवय
दारविः ॥ एतद्विष्णुपदंनामविषुवादधिकंफलम् ॥ कन्यायांमिथुने
मीनेधनुष्यपिरवेर्गतिः॥षडशीतिमुखाः प्रोक्ताःषडशीतिगुणाःफलैरि
ति ॥ आसामेवसंक्रांतीनांवारभेदेनसंज्ञाभेदोरत्नमालायामुक्तः ॥
घोरारवौध्वांक्ष्यमृतद्युतौचसंक्रांतिरारेचमहोदरीस्यात् ॥ मंदाकिनीज्ञे
चगुरौचमंदामिश्राकवौराक्षसिकार्किवारइति ॥ एतासांचफलंतत्रैवो
क्तम् ॥ ध्वांक्षीवैश्यान्सुखयतिमहोदर्यलंचौरसार्थान्घोराशूद्रानथनरप
तीनेवमंदाकिनीच ॥ मंदाख्याचद्विजवरगणान्मिश्रकाख्यापशूंश्च ॥
चंडालानांप्रकृतिमखिलांराक्षसीसंज्ञिताचेति ॥ इदमेवफलंयैर्नक्षत्रैर्यो
गेसंपूर्णंभवति ॥ तान्याहसएवाह ॥ उग्रक्षिप्रचरैर्मैत्रध्रुवमिश्राख्यदा
रुणैः ॥ ऋक्षैःसंक्रांतिरर्कस्यघोराद्याःक्रमशोमतम् ॥ अस्यार्थः ॥
रविवारेउग्रसंज्ञकानांपूर्वात्रयभरणीमघानामन्यतमसंयोगेयदासंक्रांति
र्भवतितदाघोराफलंसंपूर्णम् ॥ उभयथाघोरात्वसिद्धेः ॥ सोमवारे
क्षिप्रसंज्ञकानामश्विनीपुष्यहस्ताभिजितामन्यतमसंयोगेसंक्रांतौध्वां
क्षीफलंसंपूर्णम्॥भौमवारेचरसंज्ञकानांश्रवणधनिष्ठाशतभिषक्पुनर्वसु
स्वातीनामन्यतमसंयोगेसंक्रांतौमहोदरीफलंसंपूर्णम्॥ बुधवारेमैत्रसंज्ञ
कानांचित्रारेवतीमृगशिरोनुराधानामन्यतमसंयोगेसंक्रांतौमंदाकिनी
फलंसंपूर्णम् ॥ गुरुवारेध्रुवसंज्ञकानांरोहिणीत्र्युत्तराणामन्यतमसंयोगे
संक्रांतौमंदाफलंसंपूर्णम् ॥ शुक्रवारेमिश्रसंज्ञयोःकृत्तिकाविशाखयो

रन्यतमसंयोगेसंक्रांतौमिश्राफलंसंपूर्णम् ॥ शनिवारेदारुणसंज्ञकानां ज्येष्ठार्द्राश्लेषाणामन्यतमसंयोगेसंक्रांतौराक्षसीफलंसंपूर्णंभवति ॥ वार नक्षत्रयोर्विपर्यासेवारनक्षत्रप्राप्तंमिश्रफलंभवतीति ॥ आसामेववेलाभे देनापिफलभेदंसएवाह ॥ पूर्वाह्णकालेनृपतीन्द्विजेंद्रान्मध्यंदिनेचाथवि शोपराह्णे ॥ शूद्रान्नवावस्तमितेप्रदोषेपिशाचकान्नात्रिचरान्निशिथे ॥ नटादिकांश्चापररात्रिकालेप्रत्यूषकालेपशुपालकांश्च ॥ संक्रांतिरर्क स्यसमस्तलिंगिव्रातञ्चसंध्यासमयेनिहंति ॥ सर्वासुसंक्रांतिषुश्राद्ध स्नानदानादिकंकुर्यात् ॥ तदुक्तंपुलस्त्येन ॥ अयनद्वितयेश्राद्धंवि षुवद्वितयेतथा ॥ युगादिषुचकुर्वीतपिंडनिर्वपणंव्रतइति॥वृद्धवसि ष्ठोपि॥ अयनेकोटिपुण्यंस्याल्लक्षंचविषुवेफलम् ॥ षडशीत्यांसहस्रंतु फलंविष्णुपदीषुचेति ॥ अयनादिषुचकृतंस्नानदानादिकंकोटिगुणा दिफलंभवतीत्यर्थः ॥ शातातपोऽपि ॥ सूर्यस्यसंक्रमेपुण्येनस्नायाद्य दिमानवः ॥ सप्तजन्मनिरोगीस्याद्दुःखभोगीचजायतइति॥ संक्रांतौया निदत्तानिहव्यकव्यानिमानवैः ॥ तानितेभ्योददात्यर्कःसप्तजन्मसुनि श्चितमिति ॥ स्मृत्यर्थसारेऽपिविशेषउक्तः ॥ मध्येविषुवतिदानंविष्णु पदेदक्षिणायनेचादौ ॥ षडशीतिमुखेऽतीतेतथोदगयनेचभूरिफलमि ति ॥ ननुसंक्रांतिषुस्नानदानादिकंविहितम् ॥ सचसंक्रांतिसम योनिमेषादपिसूक्ष्मत्वाज्ज्ञातुंदुःशक्यः ॥ अतश्चतावतिकाले स्नानादिकंकर्तुंकथंशक्यमितिचेत् ॥ सत्यम् ॥ मुख्यकालस्या तिसूक्ष्मत्वात्तत्सन्निहितेपूर्वस्मिन्परस्मिन्वाकालेस्नानदानादिकंकार्य म् ॥ तदाहवृद्धवसिष्ठः ॥ संक्रांतिसमयःसूक्ष्मोदुर्ज्ञेयःपिशिते क्षणैः ॥ तद्योगाच्चाप्यधश्चोर्ध्वंत्रिंशन्नाड्यःपवित्रकाइति ॥ इदंसामा न्यतःसर्वसंक्रांतिविषयम् ॥ विशेषस्तूच्यते ॥ कर्कटेपूर्वास्त्रिंशन्ना ड्योमकरेपराविंशतिर्नाड्यःपुण्याः ॥ तदाहवृद्धवसिष्ठः ॥ अतीताना गतेपुण्येद्वेउदग्दक्षिणायने ॥ त्रिंशत्कर्कटकेनाड्योमकरेविंशतिःपरा

इति ॥ विषुवयोस्तुप्राक्पश्चाच्चदशनाड्यःपुण्याः ॥ यथासएवाह ॥ वर्तमानेतुलामेषेनाड्यस्तूभयतोदशेति ॥ विष्णुपदीषुप्राक्पश्चाच्चषोडशनाड्यःपुण्याः ॥तदाहवृद्धवसिष्ठः॥पुण्याःस्युर्विष्णुपद्यान्तुप्राक्पश्चादपिषोडशेति॥षडशीतिषुपश्चात्षष्टिर्नाड्यःपुण्याः॥यथासएवाह॥ षडशीत्यांव्यतीतायांषष्टिरुक्तास्तुनाडिकाइति ॥ अत्रकेचित्षडशीतिमुखीनांविषुवायनाधिकफलत्वमसहमानाइदंवचनमन्यथाव्याख्यातवंतः ॥ यथा षडशीतिमुखीनांसंक्रांतीनांचतसृणामेकैकस्याःपंचदशपंचदशेतिमिलितानांपुण्याख्याःषष्टिर्नाड्योभवन्ति ॥ यद्येकैकस्याःषष्टिःपुण्यागृह्येरंस्तदैतासामेवसर्वाभ्यःप्रकर्षःप्राप्नोति॥ प्रभूतपुण्यकालत्वात् ॥ तथासतिदेवीपुराणे ॥ विषुवायनसन्निधाविति विषुवायनसंज्ञितानांप्रकर्षविधानेनविरोधइति ॥ तन्नयुक्तिसहम् ॥ अधिकफलत्वस्यएतद्विष्णुपदंनामविषुवादधिकंफलमितिवत्अर्थवादरूपेणापिवर्णयितुंशक्यत्वात्॥ नाप्यधिकफलत्वाभावेकिंचिन्नियामकम्॥देवीपुराणवचनन्तुविषुवायनयोःप्रकर्षमभिधत्ते॥ नतुतदितरेषामपकर्षम्॥इतरसंक्रांतीनामपिवाक्यांतरेणप्रकर्षाभिधानात् ॥ नहिलभ्यते विष्णुःसंपूजितःसम्यक्चतुर्विधफलप्रदइत्युक्तेनशिवइति ॥ अन्यथा॥विष्णुपदीष्वपिविषुवाधिकफलत्वनिरासायतासामपिमिलितानांषोडशनाड्यःपुण्याइतिव्याख्यानंप्रसज्येत ॥ तत्रापिकेचिदेवंव्याचक्षतेप्राक्पश्चादपिषोडशेतिप्रागष्टौमिलित्वाषोडशेति॥ एवंचसतिवर्तमानेतुलामेषेनाड्यस्तूभयतोदशेत्यत्राप्येवंविधंव्याख्यानस्यवक्तुंशक्यत्वाद्भिन्नाभिमतासिद्धिरिति॥किंच चतसृणांमिलितानांषष्टिर्नाड्यः पुण्याइत्युक्तेपिविषुवदाधिकफलत्वंतदवस्थमेव ॥ नचग्रंथांतरेष्वेवंव्याख्यातुमित्युपेक्षणीयमित्यलमतिविस्तरेण॥ ननुसंक्रांतिसामान्यविषयत्वेनाधश्चोर्ध्वंत्रिंशन्नाड्यःपवित्राइत्युक्तम्॥वाक्यान्तरैस्तुदशषोडशादीनांपुण्यत्वमुक्तमितिविरोधइतिचेन्न ॥ त्रिंशन्नाडीनांपुण्यत्वंषो

डशादिनाडीनांतदपेक्षयासन्निहितत्वात्पुण्यतरत्वंततोपिसन्निहिता-
नांपुण्यतमत्वमित्यविरोधः ॥ तदाहवसिष्ठः ॥ यायासन्निहितानाड्य
स्तास्ताःपुण्यतमाःस्मृताइति ॥यत्तुवृद्धवसिष्ठवचनम्॥अहःसंक्रमणे
पुण्यमहःकृत्स्नंप्रकीर्तितमिति ॥ तत्रापिपूर्वोक्तएवसन्निधिविशेषात्फ
लविशेषःकल्पनीयः॥अयंनिर्णयोदिनसंक्रातिविषयः॥रात्रिसंक्रमणेतु
विशेषउच्यते ॥अर्धरात्रादधोरात्रौसंक्रमेपूर्वमहः॥मध्याह्नादुपरिस्नाना
दौपुण्यम् ॥ अर्द्धरात्रादूर्ध्वसंक्रमेतुपरदिनंमध्याह्नपर्यंतंपुण्यम्॥ तदा
हवृद्धवसिष्ठः ॥ रात्रौसंक्रमणेपुण्यंदिनार्द्धंस्नानदानयोः ॥ अर्धरात्रा
दधस्तस्मिन्मध्याह्नस्योपरिक्रियम् ॥ ऊर्ध्वसंक्रमणेचोर्ध्वमुदयात्प्रहर
द्वयमिति ॥ तथाच ॥ आसन्नसंक्रमेपुण्यंदिनार्द्धंस्नानदानयोरिति ॥
यदासंपूर्णेर्द्धरात्रेसंक्रांतिःस्यात्तदादिनद्वयंपुण्यम्॥तदाहवृद्धवसिष्ठः॥
संक्रमस्तुनिशीथेस्यात्षड्यामाःपूर्वपश्चिमाः ॥ संक्रांतिकालेविज्ञे
यास्तत्रस्नानादिकंचरेदिति ॥ ज्योतिर्वसिष्ठोऽपि ॥ पूर्णेचैवार्द्धरात्रेतु
यदासंक्रमतेरविः ॥ तदादिनद्वयंपुण्यमुक्त्वामकरकर्कटाविति ॥
मकरकर्कटयोस्तुविशेषः ॥ तदाहवृद्धगार्ग्यः ॥ यद्यस्तमयवेलायां
मकरंयातिभास्करः ॥ प्रदोषेचार्द्धरात्रेवास्नानदानंपरेऽहनि ॥ अर्धरा
त्रंतदूर्ध्वंवासंक्रांतौदक्षिणायने ॥ पूर्वमेवदिनंग्राह्यंयावन्नोदयतेरविरि
ति ॥भविष्योत्तरेऽपि ॥ मिथुनात्कर्कसंक्रांतिर्यदास्यादंशुमालिनः ॥
प्रभातेवानिशीथेवाकुर्यादहनिपूर्वतः ॥ कार्मुकंतुपरित्यज्यझषं
संक्रमतेरविः ॥ प्रदोषेवार्द्धरात्रेवास्नानदानंपरेहनीति ॥ झषंमकरम् ॥
यत्तुवचनम् ॥ आदौपुण्यंविजानीयाद्यद्यभिन्नातिथिर्भवेत् ॥ अर्द्धरात्रे
व्यतीतेतुविज्ञेयमपरेहनीति ॥ अस्यार्थः ॥ यद्यर्द्धरात्रेपूर्वदिनेति
थ्याअभिन्नतिथिर्भवतितदापूर्वदिनंपुण्यम् ॥ भिन्नायांतिथावर्द्धरा
त्रेव्यतीतेपरदिनंपुण्यमिति ॥ तथा ॥ आसन्नसंक्रमंपुण्यमि
त्यादिवाक्यानिचमकरकर्कटव्यतिरिक्तसंक्रांतिविषयेसावकाशानि ॥

मिथुनात्कर्कसंक्रांतिः कार्मुकंतुपरित्यज्येत्यादिवाक्यानितुमकरकर्कटमात्रविषयत्वान्निरवकाशानि ॥ अतश्चसावकाशनिरवकाशयोर्निरवकाशविधिर्बलवानितिन्यायान्मकरेपरादिनस्यपुण्यत्वम्॥कर्कटेपूर्वदिनस्यपुण्यत्वञ्चेतियुक्तम् ॥ यद्वा ॥ आसन्नसंक्रमामित्यादयः सामान्यविधयोमिथुनात्कर्कसंक्रांतिरित्यादिनाविशेषविधिनाबाध्यंतइत्यपिमकरकर्कटयोःपरपूर्वदिवसयोरेवपुण्यत्वंयुक्तम् ॥ यत्तुकैश्चिदुक्तम्॥आसन्नसंक्रमंपुण्यमित्यादीनिदेवीपुराणोक्तत्वान्मूलवाक्यानिमिथुनात्कर्कसंक्रांतिरित्यादिवाक्यानितत्रानुक्तत्वादमूलान्याधुनिकानीति॥ नात्रकिंचिन्नियामकम् ॥ मूलवाक्यत्वेतुवृद्धगार्ग्यभविष्योत्तरवाक्यत्वप्रतिपादकाबहवोनिबंधाएवप्रमाणम् ॥ यच्चतैरेवोक्तम् ॥ अह्निचेद्रात्रियुग्मंस्याद्रात्रौचेद्वासरद्वयम् ॥ संक्रांतिः पक्षिणीज्ञेयादानाध्ययनकर्मस्वित्यत्रवाक्येमकरकर्कटयोर्दिनद्वयस्यपुण्यत्वमुक्तम् तद्दानाध्ययनकर्मविषयंद्रष्टव्यम् ॥ अत्रदानंवेदाध्यापनम् ॥ कर्माणिचाध्ययनाङ्गान्येवेति ॥ तदपिनयुक्तिसहम् ॥ अयनद्वयस्यानध्यायत्वेनैवतत्राध्ययनस्यासंभवात् ॥ तदाहयाज्ञवल्क्यः ॥ अयनेविषुवेचैवशयनेबोधनेतथा ॥ चातुर्मास्यद्वितीयासुवेदाध्यायंविवर्जयेत्॥किञ्चअध्यापकानामध्येतॄणांचायंसमुदाचारः ॥ तेहिरात्रौमकरकर्कसंक्रान्तौदिनद्वयंनाध्यापयन्ति नाधीयतेत्युत्तरेणस्ववचनेनैव विरोधोपिस्यात् ॥ नन्वध्यापनेत्वयंदोषःसामान्यइतिचेन्न ॥ अत्राध्ययनशब्देनस्वाध्यायोनावसीयइति प्रत्यहंविहितब्रह्मयज्ञरूपस्वाध्यायस्यविवक्षिततत्वात् ॥ तस्यानध्यायेपिनानिषेधः ॥तदुक्तं स्मृतिसंग्रहे ॥ नानुरोधोस्त्वनध्यायेहोममंत्रेषुचैवहि ॥ वेदोपकरणेचैवस्वाध्यायेचैवनैत्यकइति ॥ अतश्चमकरकर्कटयोरुक्त एवनिर्णयः साधीयान् ॥ अत्रापिरात्रिभागस्यसन्निहितत्वात्पुण्यतमत्वम् ॥ ननुरात्रौस्नानंनकुर्वीतदानंचैवविशेषतइति ॥ रात्रौ

स्नानदानानिषेधेसतिकथंरात्रिभागस्यपुण्यतमत्वमितिचेत् ॥सत्यम्॥ संक्रांत्यादिषुरात्रावपिस्नानदानादिविधानात् ॥ तदाहयाज्ञवल्क्यः॥ राहुदर्शनसंक्रांतिविवाहात्ययवृद्धिषु ॥ स्नानदानादिकंकुर्यान्निशि काम्यव्रतेषुचेति ॥ ब्रह्मा ॥ विनाप्रैषेणयद्दानंयद्दानंजलवर्जितम् ॥अकालीनमवैधंयत्तद्दानमसुरैर्हृतम् ॥ ॥ इतिश्रीसूर्य्यसेनमहीमहेन्द्रविरचितेनिर्णयामृतेसंक्रांतिनिर्णयः॥ ॥अथप्रसंगान्नदीनांरजोदोषउच्यते ॥ तदाहव्याघ्रपादः ॥ सिंहकर्कटयोर्मध्येसर्वानद्यो रजस्वलाः ॥ तासुस्नानंनकुर्वीतवर्जयित्वासमुद्रगाइति ॥ महानदीषुविशेषोभविष्योत्तरे॥आदौकर्कटकेदेविमहानद्योरजस्वलाः॥ त्रिदिनंतुचतुर्थेह्निशुद्धाःस्युर्जाह्नवीयथेति ॥ गंगादिविषयेतुस्मृतिसंग्रहेविशेषउक्तः॥तपनस्यसुतागंगागौतमीचसरस्वती॥रजसानाभिभूयंतेवेणीचनदसंज्ञिताइति ॥ रजोदुष्टमपिजलंगंगादिजलसंयुक्तमदुष्टं भवति ॥ तदुक्तंमहाभारते ॥ अपवित्रमपिप्राप्यगंगांयातिपवित्रतामिति ॥ मत्स्यपुराणेपि ॥ पुण्यांभसासमायोगाद्दुष्टमप्यंबुपावनमिति ॥ इतिसंक्रांतिप्रसंगान्नदीरजोदोषउक्तः ॥ मलमासस्यापि संक्रांतिमूलत्वान्मलमासनिर्णयः प्रस्तूयते ॥ मलमासोनाम संक्रांतिविरहितोमासःसंक्रांतिद्वययुक्तोवा॥ तदुक्तंकाठकगृह्ये ॥ यस्मिन्मासिनसंक्रांतिः संक्रांतिद्वयमेववा ॥ मलमासः सविज्ञेयोमासःस्यात्तु त्रयोदशइति ॥ अयंचमासश्चान्द्रएव ॥ अतश्चयत्रामावास्याद्वयमध्ये संक्रांतिर्नस्यात्संक्रांतिद्वयंवाभवेत्समलमासइत्यर्थः ॥तदाहगार्ग्यः ॥ अमावास्याद्वयंयत्ररविसंक्रांतिवर्जितम् ॥मलमासः सविज्ञेयोमासःशुद्धाख्यउत्तरइति॥ अस्यैवमलिम्लुचइतिसंज्ञा॥तदाहवसिष्ठः॥ मासद्वैधंभवेद्यर्षेतिथिद्वैधंयदाभवेत् ॥तत्रोत्तरोत्तमोज्ञेयःपूर्वःस्यात्तुमलिम्लुचइति॥अयमधिकमाससंज्ञोपि ॥असंक्रांतिमासेत्वाद्योमलिम्लुचउत्त

१ शुक्लप्रतिपदमारभ्यदर्शान्तंसंक्रांतिर्नस्यात् इ०पाठान्तरम् ।२ शुक्लादिकृष्णपक्षान्तं संक्रांतिर्नभवेद्यादि इतिपाठान्तरम् ।

रःशुद्धः ॥ द्विसंक्रांतिमासस्तुमलमासएवनाधिकमासः ॥ तदाहसत्यव्रतः ॥ राशिद्वयंयत्रमासेसंक्रमेतदिवाकरः ॥ नाधिमासोभवेदेषमलमासस्तुकेवलमिति॥अयंद्विसंक्रांतिमासःक्षयाख्योपि॥तदुक्तंज्योतिःशास्त्रे ॥ असंक्रांतिमासोधिमासःस्फुटःस्याद्विसंक्रांतिमासःक्षयाख्यःकदाचित्॥क्षयःकार्तिकादित्रयेनान्यतःस्यात्तदावर्षमध्येऽधिमासद्वयंच ॥ द्विसंक्रांतिमासोयत्रभवतितत्रवर्षमध्येधिमासद्वयंभवति तत्रपरोदुष्टः ॥ आद्यःशुद्धः ॥ तदुक्तंतत्रैव ॥ एकत्रमासद्वितयंयदिस्याद्वर्षेधिकंतत्रपरोधिमासः ॥ त्रयोदशंतुश्रुतिराहवेदेचतुर्दशःक्वापिनचात्रदृष्टइति ॥ अयंत्रयोदशोमासश्चांद्रएवनसौरः ॥ तदुक्तम् ॥ अस्तित्रयोदशोमासःसचश्रुत्यानिगद्यते ॥ असौचांद्रोनसौरःस्यान्नास्तिसौरश्चतुर्दशइति ॥ अयंचत्रयोदशोमासःत्रिंशत्तमान्मासादूर्ध्वंषट्त्रिंशत्तमान्मासात्पूर्वंभवतीतिनियमः ॥ तदुक्तंज्योतिःसागरे॥ त्रिंशत्षट्त्रिंशन्मासस्यबाह्याभ्यंतरयोर्द्वयोः ॥ अधिमासोविकल्पेनबादरायणकीर्तितइति ॥ अनयोरेवासंक्रांतस्यसंसर्पकइतिद्विसंक्रांतस्यांहस्पतिरितिसंज्ञांतरंच ॥ तदुक्तम् ॥ दर्शद्वयं[1]यदैकस्मिन्सौरेसंसर्पकोभवेत् ॥ अहस्पतिर्यदैकस्मिंश्चांद्रौद्वौ[2]संक्रमौतदा ॥ संसर्पांहस्पती चेतिद्विविधावधिमासकौ ॥ मासौपूर्वापरौदुष्टौपरपूर्वौशुभावहाविति॥ अत्राधिमासशब्दोनामोपचारतोमलमासएवोच्यते ॥ अन्यथानाधिमासोभवेदेषइतिसत्यव्रतवचनविरोधःस्यात् ॥ अत्रद्विविधेऽपिमलमासेऽनन्यगतिकंनित्यंनैमित्तिकंचकर्मकुर्यात् ॥ तदुक्तंकाठकगृह्यपरिशिष्टे ॥ मलेनन्यगतिंनित्यांकुर्यान्नैमित्तिकींक्रियामिति ॥ बृहस्पतिरपि ॥ नित्यनैमित्तिकेकुर्यात्प्रयतःसन्मलिम्लुचे ॥ तीर्थश्राद्धंगजच्छायांप्रेतश्राद्धंतथैवचेति ॥ यमोपि ॥ गर्भवार्धुषिकेभृत्येश्राद्धकर्मणिमासिके ॥ सपिंडीकरणेनित्येनाधिमासंविवर्जयेत् ॥

१ नैवचान्द्रेयदैकस्मिन्सौरःसंसर्पकोभवेत् इ०पा०। २ द्वेसौरद्वयंभवेत् इ०पा०।

तीर्थस्नानंजपोहोमोयस्तुव्रीहितिलादिभिः ॥ जातकर्मान्नकर्माणि नवश्राद्धंतथैवच ॥ मघात्रयोदशीश्राद्धंश्राद्धान्यपिचषोडश ॥ चंद्र सूर्यग्रहेस्नानंश्राद्धंदानजपादिकम्॥कार्याणिमलमासेपिनित्यंनैमित्ति कंतथेति॥अत्रतीर्थस्नानश्राद्धादिप्रासंगिकंनत्वपूर्वम्॥तस्यमलमासे ऽपिनिषेधात्॥तदुक्तम्॥मलमासेप्यनावृत्ततीर्थयात्रांविवर्जयेदिति॥नै मित्तिकंतुयदिपूर्वमासेनिमित्तमुत्पद्यतेतदापूर्वमासे ॥ यदोत्तरमासेउ त्पद्यतेतदोत्तरत्र॥उभयत्रचेन्मासद्वयेपिकुर्यात्॥तदाहागस्त्यः ॥जात कर्मणियच्छ्राद्धंनवश्राद्धंतथैवच ॥ ग्रहणेपुंसवादौचतत्पूर्वत्रपरत्रचे ति ॥ निमित्तवशादितिवाक्यशेषः ॥ मत्स्यपुराणेप्युक्तम् ॥ चं द्रसूर्यग्रहेचैवमरणेपुत्रजन्मनि ॥ मलमासेपिदेयंस्याद्दत्तमक्षयकार कमिति ॥ मरीचिरपि ॥ योगेचालभ्ययोगेचसीमंतेपुंसवेपिच ॥ यद्दानादिकमुद्दिष्टंपूर्वत्रापिनदुष्यतीति ॥ नित्यान्यपिसंध्योपासना दीनिमासद्वयेपिकार्याणि॥तदुक्तंमैत्रेयसूत्रे॥मासद्वयेयद्येकराशिसंक्रमे तादित्यस्तत्राद्योमलिम्लुचः ॥ शुद्धोन्यः॥पार्वणेष्टिरग्निहोत्राग्रयणसं ध्योपासनंपार्वणस्थालीपाकश्चेतिनित्यानिनैमित्तानिचाहापर्यस्तेज जास्वीयतइतिविज्ञायतइति॥यत्तुव्यासवचनम् ॥ श्रौतस्मार्तक्रिया याश्चद्वादशेमासिकीर्त्तिताः॥ त्रयोदशेतुताःसर्वाराक्षस्यःपरिकीर्तिता इति ॥तत्काम्येष्ट्यादिविषयम् ॥ तदुक्तंगृह्यपरिशिष्टे ॥ अवषट्कार होमाश्चपर्वचाग्रयणंतथा ॥ मलमासेपिकर्त्तव्याकाम्याइष्टीर्विवर्ज येदिति ॥ अवषट्कारहोमाअग्निहोत्रोपासनवैश्वदेवाद्याः ॥ पर्वद र्शपौर्णमासेष्टिःपार्वणस्थालीपाकश्च ॥ आग्रयणंनवान्नेनक्रियमाणे ष्टिः ॥ साचापदिपुरातनान्नाभावेनवान्नभोजनार्थंकर्त्तव्या नत्वना पदि ॥ तस्यनिषेधोग्रेवक्ष्यते ॥ मत्स्यपुराणेपि ॥ दर्शेचाहरहः श्राद्धंदानंचप्रतिवासरम् ॥ गोभूतिलहिरण्यानांमास्यपिस्यान्मलि म्लुचइति ॥ ननुमलमासेदर्शश्राद्धंकर्तव्यमित्युक्तम् ॥ ऋष्यशृंग

वाक्येनतुनिषिद्धम् ॥ यथा ॥ संवत्सरातिरेकेणमासोयःस्यान्मलिम्लुचः ॥ तस्मिंस्त्रयोदशेश्राद्धंनकुर्यादिन्दुसंक्षयइतिविरोधइतिचेन्न ॥ निषेधस्यदर्शविहितेकाम्यश्राद्धविषयत्वात् ॥ तदाह जाबालिः ॥ नित्यंनैमित्तिकंचैवश्राद्धंकुर्यान्मलिम्लुचे ॥ तिथिनक्षत्रवारोक्तंकाम्यंनैवकदाचन ॥ मलमासेमृतानांतुपुनःप्रत्याब्दिकेमलमासेप्राप्तेमलमासएवकार्यंनशुद्धे ॥ तदाहभृगुः ॥ मलमासेमृतानांतुयच्छ्राद्धंप्रतिवत्सरम् ॥ मलमासेपुनःकार्यंनान्येषांतुकदाचनेति ॥ तुशब्दएवार्थे ॥ सत्यतपा अपि ॥ वर्षेवर्षेतुयच्छ्राद्धंमृताहेतन्मलिम्लुचे ॥ कुर्यात्तत्रप्रमीतानामन्येषामुत्तरत्रत्विति ॥ अन्येषामितिमलमासादन्यत्रमृतानांशुद्धमासएवकार्यमित्यर्थः ॥ तदुक्तंसत्यव्रतेन ॥ वर्षेवर्षेतुयच्छ्राद्धंमातापित्रोर्मृतेहनि ॥ मलमासेनतत्कार्यंव्याघ्रस्यवचनंयथेति ॥ यत्तुवचनम् ॥ जातकर्मणियच्छ्राद्धंनवश्राद्धंतथैवच ॥ प्रतिसंवत्सरंश्राद्धंमलमासेपितत्स्मृतमिति ॥ इदमपि मलमासमृताब्दिकविषयम् ॥ एवमन्यान्यपिमलमासेप्रत्याब्दिकविधायकवाक्यानिमलमासमृतविषयाणिज्ञेयानि ॥ यत्तुवृद्धवसिष्ठवचनम् ॥ श्राद्धीयेहनिसंप्राप्तेअधिमासोभवेद्यदि ॥ मासद्वयेपिकुर्वीतश्राद्धमेतन्नदुष्यतीति ॥ तथा व्यासवचनम् ॥ षष्ट्यातुदिवसैर्मासःकथितोबादरायणैः ॥ उत्तरेदेवकार्याणिपितृकार्याणिचोभयोरिति ॥ इदं वचनद्वयंसांवत्सरिकव्यतिरिक्तमासिकादिश्राद्धविषयम् ॥ तदुक्तं स्मृतिचंद्रिकायाम् ॥ युगादिकंमासिकंचश्राद्धंचापरपाक्षिकम् ॥ मन्वादिकंतैर्थिकंचकुर्यान्मासद्वयेपिचेति ॥ अत्रापरपाक्षिकमितिप्रतिमासंकृष्णपक्षेविधीयमानंश्राद्धमुच्यते ॥ नत्वाश्विनसंबंधिमहालयश्राद्धम् ॥ तस्यनकुर्याद्वानुलंघितइति महालयाब्दिकेचैवेति भृगुवसिष्ठवाक्याभ्यांमलमासेनिषेधात् ॥ सर्वमासकृष्णपक्षेषुश्राद्धमापस्तंबेन विहितम् ॥ यथा ॥ मासिमास्यपरपक्षस्यापराह्णःश्रेयान् ॥ तत्राप्यपर

पक्षस्यजघन्यान्यहानिसर्वैष्वेवापरपक्षस्याहः सुदत्तंपितॄन्प्रीणातीति॥ मलमासादन्यत्रमृतानामपिदैवात्त्रयोदशेऽधिमासेसति प्रथमाब्दिकं मलमासएवकार्यम् ॥ संवत्सरेपूर्णेसपिंडीकरणपक्षाश्रयणेपितत्रैवस पिंडीकरणंकुर्यात् ॥ तदाहवसिष्ठः ॥ असंक्रांतेपिकर्त्तव्यमाब्दिकं प्रथमंद्विजैः ॥ तथैवमासिकंश्राद्धंसपिंडीकरणंतथेति ॥ क्षयमासेतु तत्रैवप्रत्याब्दिकमपिकार्यम् ॥ तदाहसत्यव्रतः ॥ एकएवयदामासः संक्रांतिद्वयसंयुतः ॥ मासद्वयगतंश्राद्धंमलमासेऽपिशस्यतइति ॥ गालवोपि॥वर्षेवर्षेतुयच्छ्राद्धंमातापित्रोर्मृतेहनि॥ मासद्वयेपितत्कुर्या द्व्याघ्रस्यवचनंयथा॥ अत्रमासद्वयेपिसंक्रांतिद्वययुक्तत्वान्मासद्वयात्म केक्षयमासइत्यर्थः॥अपिशब्दएवकारार्थः॥एवंविधान्यन्यान्यपिवाक्या न्यस्मिन्नेवविषययोज्यानि ॥ कालादर्शकारैस्तुप्रत्याब्दिकमपिमा सद्वयेकर्तव्यमित्युक्तम् ॥ ततश्चवृद्धाचारपूर्वत्वान्मलमासेपिक्षय दिनस्यावंध्यत्वनिरासार्थंपित्रुद्देशेनब्राह्मणान्भोजयित्वाशुद्धमासेश्रा द्धंकुर्यादित्येवानवद्यम् ॥ नित्यान्यपिसोमयागादिकर्माणिम लिम्लुचेनकार्याणि ॥ तदुक्तंपरिशिष्टे ॥ सोमयागादिकर्माणिनित्या न्यपिमलिम्लुचे ॥ तथैवाग्रयणाधानिचातुर्मास्यादिकान्यपि ॥ महालयाष्टकाश्राद्धोपाकर्माद्यपिकर्मयत् ॥ स्पष्टमासविशेषाख्या विहितंवर्जयेन्मलइति ॥ स्पष्टमासेतिमासविशेषनामग्रहणेनवैशाखे कर्तव्यंकार्त्तिकेकर्त्तव्यंमाघेकर्तव्यमित्यादिकं मलिम्लुचेवर्जयेदित्य र्थः ॥ अनित्यमनिमित्तंचमहादानादिकमविपन्ननामान्नप्राशनका म्यव्रतारंभोत्सर्जनादिकंदेवप्रतिष्ठादिकंचमलमासेविवर्जयेत्॥ तदाह बृहस्पतिः॥अग्न्याधानंप्रतिष्ठांचयज्ञदानव्रतानिच ॥ वेदव्रतवृषोत्सर्ग चूडाकरणमेखलाः॥मांगल्यमभिषेकंचमलमासेविवर्जयेदिति ॥ वृषो त्सर्गःकाम्यएवनत्वेकादशाहेक्रियमाणः॥पुनःसएवाह ॥ बालेवायदि वावृद्धेशुक्रेवास्तंगतेगुरौ ॥ मलमासइवैतानिवर्जयेद्देवदर्शनमिति ॥

देवदर्शनमपूर्वम् ॥ तदाहगार्ग्यः ॥ अपूर्वंदेवतांदृष्ट्वाशुचःस्युर्नष्टभार्गवे ॥ मलमासेप्यनावृत्ततीर्थयात्रांविवर्जयेदिति ॥ शातातपोपि ॥ अस्तंगतेगुरौशुक्रेवृद्धेबालेमलिम्लुचे ॥ व्रतारंभापवर्गंचनकुर्यान्मौजिबंधनमिति ॥ गार्ग्योपि ॥ नामान्नप्राशनेचौलंविवाहोमौंजिबंधनम् ॥ निष्क्रमंजातकर्मापिकाम्यंवृषविसर्जनम् ॥ अस्तंगतेगुरौशुक्रेबालेवृद्धेमलिम्लुचे ॥ उद्यापनमुपारंभंव्रतानांनैवकारयेत् ॥ जातकर्मनामकरणन्तुस्वकालेकार्यंएव ॥ तदाहगार्ग्यः ॥ नामकर्मचजातेष्टिंयथाकालंसमाचरेत् ॥ अतियातेतुकुर्वीतप्रशस्तेमासिपुण्यदइति ॥ वसिष्ठोपि ॥ वापीकूपतडागादिप्रतिष्ठांयज्ञकर्मच ॥ नकुर्यान्मलमासेपिमहादानव्रतानिचेति ॥ मरीचिरपि ॥ गृहप्रवेशगोदानस्थानाश्रममहोत्सवान् ॥ नकुर्यान्मलमासेपिगुरौशुक्रेतथास्तगइति ॥ मत्स्यपुराणेपि ॥ आधानंयज्ञकर्मापिप्रायश्चित्तव्रतानिच ॥नकुर्यान्मलमासेपिशुक्रगुर्वोरुपप्लवइति ॥ स्मृतिसंग्रहेपि ॥ आरंभंदर्शपूर्णेष्ट्योरग्निहोत्रस्यचादिमे ॥ प्रतिष्ठाःपंचकर्माद्या[1]मलमासेपिवर्जयेदिति ॥ अत्रप्रासंगिकंगुरुशुक्रयोर्मौढ्यमुच्यते ॥ मौढ्यंनामग्रहाणामस्तमयः॥तत्रापिगुरुशुक्रयोर्मौढ्यंशुभकर्मसुपरिहरणीयत्वात्प्रसिद्धम् ॥ मौढ्यात्प्राग्वृद्धत्वंपश्चाद्बाल्यत्वंचमौढ्यवदेवपरिहरणीयम् ॥ तदुक्तंब्रह्मसिद्धांते ॥ रविणासत्तिरन्येषांग्रहाणामस्तमुच्यते ॥ ततोर्वाग्वार्द्धकंमौढ्यादूर्ध्वंबाल्यंप्रकीर्तितम् ॥ तत्रवार्द्धकबाल्ययोःकिंपरिमाणमित्यत्रोच्यते॥तदुक्तंब्रह्मसिद्धांते ॥ पक्षंप्राग्दिशिवृद्धत्वंपश्चात्पंचदिनंकवेः ॥ शैशवंप्राक्तुपंचाहंपश्चाद्दशदिनंस्मृतम् ॥ शैशवंवार्द्धकंपक्षंप्राक्पश्चाच्चबृहस्पतेरिति ॥ अत्रैवग्रंथांतरेषुन्यूनाधिकभावःप्रतिपादितः ॥ यथाहरत्नमालायाम् ॥ प्रागुद्यतःशिशुरहस्त्रितयंसितःस्यात्पश्चाद्दशाहमथपंचदिनानिवृद्धः ॥ प्राच्यांतुपक्षममरेंद्रगुरुस्तुपक्षंप्रागप्यवागपिवदंतिवसिष्ठमुख्याइति ॥ बार्हस्पत्योपि ॥

[1] कर्माद्या० इ० पाठान्तरम् ।

प्राक्पश्चादुदितःशुक्रःपंचसप्तदिनंशिशुः ॥ विपरीतंतुवृद्धत्वंतद्वदेव गुरोरपीति॥इत्यादिषुवाक्येषुस्वल्पकालादेशभेदेविपदिवाग्राह्याः ॥ तदाहवराहमिहिरः ॥ बहवोदर्शिताकालायेबाल्येवार्द्धकेपिवा॥ग्राह्या स्तत्राधिकाःशेषादेशभेदादुतापदीति॥देशभेदेनभेदश्चगार्ग्येणोक्तः॥ यथा॥शुक्रोगुरुः प्राक्चपराक्चबालोविंध्येदशावन्तिषुसप्तरात्रम्॥वंगे षुहूणेषुचषट्चपंचदेशेचशेषेत्रिदिनंवदंति॥ अत्रवर्ज्यमग्न्याधानंप्रति ष्ठांचेत्यादिमलमासनिर्णयेचोक्तंग्राह्यम् ॥ दामोदरीयेपि ॥ यदारवे मंडलमेतिकाव्योविनष्टतेजागुरुरप्यथैवम् ॥ कालःसदीक्षाव्रततीर्थ यात्राविवाहयज्ञोत्सवनाशहेतुरिति ॥ अत्रापितीर्थयात्राऽपूर्वैव॥ पूर्वा तुकार्यैव॥ गुरुरस्तंगतइववक्रातिचारगतःसिंहमकरराशिगतोपिशुभ कर्मसुत्याज्यः॥ तदुक्तम् ॥ नीचस्थेवक्रसंस्थेह्यतिचरणगतेबालवृ द्धास्तगेवासंन्यासोयज्ञयात्राव्रतनियमविधिःकर्णवेधोपिदीक्षा ॥ मौं जीबंधोंगनानांपरिणयनविधिर्वास्तुदेवप्रतिष्ठावर्ज्याःसद्भिःप्रयत्नात्रिद शपतिगुरौसिंहराशिस्थितेवा ॥ तथा ॥ उद्यानचूडाव्रतबंध दीक्षाविवाहयात्रादिवधूप्रवेशः ॥ तडागकूपत्रिदशप्रतिष्ठांबृहस्पतौ सिंहगतेनकुर्यादिति ॥ गयाविषयेविशेषोवायुपुराणेप्रोक्तः ॥ यथा॥ गयायांसर्वकालेषुपिंडंदद्याद्विचक्षणः ॥ अधिमासेजन्मदिनेअस्ते चगुरुशुक्रयोः ॥ नत्यक्तव्यंगयाश्राद्धंसिंहस्थेचबृहस्पताविति॥ अत्र गयाश्राद्धस्ययात्रापूर्वकत्वाद्गयाम्प्रतियात्राननिषिद्धेत्यर्थः ॥ गालव स्तुराशिविशेषातिचारेनदोषइत्याह॥ मेषेवृषेझषेकुंभेयद्यतीचारगो गुरुः ॥ नतत्रकर्मलोपःस्यादित्याहगालवोमुनिः॥ ॥इतिश्रीसूर्य० निर्णयामृतेमलमासनिर्णयः॥ ॥अथग्रहणनिर्णयःप्रस्तूयते॥ ॥ग्रह णंनामपर्वप्रतिपत्संधौराहुणासूर्याचंद्रमसोर्ग्रहणम् ॥ तदुक्तंवृद्धगार्ग्ये ण ॥ पूर्णिमाप्रतिपत्संधौराहुःसंपूर्णमंडलम् ॥ ग्रसतेचंद्रमर्कंचदर्शप्र तिपदंतरइति ॥ तत्रसंधौपर्वणोन्तिमोभागःस्पर्शकालः॥ प्रतिपदादि

१ चौलादिषुवर्जनीयः इ० पा० ।

मोभागोमोक्षकालः॥एतावन्मिश्रितःकालोग्रहणेपुण्यतमताः॥तदुक्तंब्र
ह्मसिद्धांते॥यावान्कालःपर्वणोन्तेतावान्प्रतिपदादिमः ॥ रवीन्दुग्रहणा
नेहाःसपुण्योमिश्रणाद्भवेदिति॥अनेहाःकालः ॥ अत्रग्रहणपुण्यकालेगं
गादिमहानदीषुस्नानंकुर्यात्॥गंगाद्यलाभेऽन्यास्वपि॥ तदुक्तम्॥ महा
पुण्यतमेकालेग्रहणेचंद्रसूर्ययोः ॥ महानदीषुचान्यासुस्नानंकुर्याद्यथा
विधिरिति ॥ वसिष्ठोपि॥ इन्दोर्लक्षगुणंपुण्यंरवेर्दशगुणंस्मृतम् ॥ गंगा
तोयेतुसंप्राप्तेइंदोःकोटिरवेर्दश ॥ गवांकोटिप्रदानेनसम्यग्दत्तेनयत्फ
लम् ॥ गंगास्नानेतत्फलंस्याद्राहुग्रस्तेनिशाकरे ॥ दिवाकरेपुन
स्तत्तुदशसंख्यमुदाहृतमिति ॥ अत्रगङ्गाशब्देनकृष्णावेणागोदावरी
जाह्नव्यउच्यंते ॥ तदुक्तंब्रह्मपुराणे ॥ तिस्रोनद्योमहापुण्यावेणागो
दाचजाह्नवी॥ गांधरित्रींगता प्राप्तागंगाइतिहिकीर्तितेति॥ तदसंभवेऽ
न्यास्वपिनदीषुकूपतडागादिसलिलाशयेष्वपि यथासान्निहितेषुस्नानं
कार्यम् ॥ तदुक्तंशंखेन ॥ वापीकूपतडागेषुगिरिप्रस्रवणेषुच ॥
नद्यांनदेदेवखातेसरसीषूद्धृतांबुनि ॥ उष्णोदकेनवास्नायाद्ग्रहणे
चंद्रसूर्ययोरिति ॥ अत्रोष्णोदकस्नानमातुरविषयम् ॥ तदाह
व्याघ्रः ॥ आदित्यकिरणैःपूतंपुनःपूतंचवह्निना ॥ तेनव्याध्यातुरः
स्नायाद्ग्रहणेचंद्रसूर्ययोरिति ॥ अतश्चग्रहणकालेऽवश्यमेवस्नानं
कार्यम् ॥ अकरणेलिंगपुराणेएवप्रत्यवायउक्तः ॥ चंद्रसूर्यग्रहेस्नाया
न्मृतकेसूतकेऽपिवा ॥ अस्नायीमृत्युमाप्नोतिस्नायीमृत्युंनविंदति ॥
मृत्युंसंसारम् ॥ ग्रहणकालस्यापिगजच्छायारूपत्वात्तत्रश्राद्धमवश्यं
कार्यम् ॥ तदुक्तंलिंगपुराणे ॥ व्यतीपातक्षणोयावांश्चंद्रसूर्यग्रहक्षणः॥
गजच्छायातुसाप्रोक्तापितॄणांदत्तमक्षयमिति ॥ महाभारतेपि ॥ सर्व
स्वेनापिकर्त्तव्यंश्राद्धंवैराहुदर्शने ॥ अकुर्वाणस्तुनास्तिक्यात्पङ्केगौरि
वसीदति ॥ तत्रश्राद्धमामान्नेनहेम्नावाकुर्यात् ॥ तदाहव्यासः ॥ आपद्य
नग्नौतीर्थेचग्रहणेचंद्रसूर्ययोः ॥ आमश्राद्धंद्विजोदद्याच्छूद्रोदद्यात्स

दैवहीति ॥ तथा ॥ अन्नाभावेद्विजाभावेप्रवासेपुत्रजन्मनि॥हेमश्राद्धंग्र हेचैवशूद्रःकुर्यात्सदैवहीति ॥ननुग्रहणेरात्रौसंध्यायांवाजातेसतिसंध्या रात्र्योःश्राद्धनिषेधात्कथंतत्रश्राद्धानुष्ठानमितिचेत् ॥ सत्यम् ॥ वच नसामर्थ्यात् ॥ तथाचविष्णुः ॥ संध्यारात्र्योर्नकर्त्तव्यंश्राद्धंखलुविच क्षणैः ॥ द्वयोरपिचकर्त्तव्यंयदिस्याद्राहुदर्शनमिति ॥ अत्रभूम्यादि दानंस्वशक्त्यनुसारेणदद्यात् ॥ तदुक्तंमहाभारते ॥ भूमिर्ग्रामः[१]सुव र्णंवाधान्यंवायद्यदीप्सितम् ॥तत्सर्वंग्रहणेदेयमात्मनःश्रेयइच्छतेति ॥ अत्रश्रोत्रियोऽश्रोत्रियोब्राह्मणोदानपात्रम् ॥तदाहबौधायनः॥श्रोत्रियोऽ श्रोत्रियोवापिअपात्रंपात्रमेवच॥ अप्रवृत्तोपिवाविप्रोग्रहणेदानमर्हतीति व्यासोपि ॥ सर्वंगंगासमंतोयंसर्वेव्याससमाद्विजाः ॥ सर्वंभूमिसमंदा नंग्रहणेचंद्रसूर्ययोरिति ॥ ग्रहणेआशौचवानपिश्राद्धादिकंकुर्यात् ॥ तदाहांगिराः ॥ सर्वेषामेववर्णानांसूतकंराहुदर्शने ॥ स्नात्वाश्राद्धं प्रकुर्वीरन्दानंशाठ्यविवर्जितमिति ॥ लिंगपुराणे ॥ सूतकेमृतकेचै वनदोषोराहुदर्शने ॥ तावदेवभवेच्छुद्धिर्यावन्मुक्तिर्नदृश्यतइति ॥व्या सोपि॥स्मार्तकर्मपरित्यागोराहोरन्यत्रसूतके ॥ श्रौतेकर्मणितत्कालं स्नातःशुद्धिमवाप्नुयादिति ॥ ग्रहणेसतिग्रहणनिमित्ताशौचंसर्वेषांजाय ते ॥ स्नानाच्छ्राद्धादिकर्माधिकारोभवति॥ तदुक्तंब्रह्मपुराणे ॥ आशौ चंजायतेनृणांग्रहणेचंद्रसूर्ययोः॥तत्रस्नात्वाविधानेनदानादौकल्पतेन रइति ॥ ग्रहणकालस्यसर्वस्यापिपुण्यत्वेपिस्पर्शकालःस्नानादिकर्म सुश्रेष्ठः ॥ मध्यकालोमध्यमः ॥ मोक्षकालस्त्वधमः ॥ तदाहव्यासः ॥ त्रिदशाःस्पर्शसमयेतृप्यंतिपितरस्तथा ॥ मनुष्यामध्यकालेतुमोक्ष कालेतुराक्षसाः॥ अतएतेत्रयःकालाःश्रेष्ठमध्यकनीयसइति ॥ केचित्तु शास्त्रतोवगतेपिग्रहणेमेघाच्छादनादिनास्पर्शनागोचरेसतिस्नानादि कंनकार्यमित्याहुः ॥ राहुदर्शनएवस्नानादिविधानात् ॥ तदाहमा र्कंडेयः ॥ चंद्रेवायदिवासूर्येदृष्टेराहौमहाग्रहे ॥ अक्षय्यंकथितंपुण्यं

---

१ गाव इतिपाठान्तरम् ।

तत्रार्कैतुविशेषतइति ॥ ॥ अत्रदृष्टइतिदर्शनंचक्षुर्व्यापारएव ॥ नतु शास्त्रतोवगतिः ॥ तथासतिरात्रौसूर्यग्रहणेदिवाचंद्रग्रहणेचशास्त्र तोवगतेस्नानादिविधेयंस्यात् ॥ तच्चनिषिद्धंषट्त्रिंशन्मते ॥ सूर्य ग्रहोयदारात्रौदिवाचंद्रग्रहस्तथा ॥ तत्रस्नानंनकुर्वीतदद्याद्दानंनचक्व चिदिति ॥ अतश्चयस्यजन्मराशौग्रहणंभवतिसोप्येकवारंग्रहणंदृष्ट्वाम त्स्यपुराणोक्तविधानेनस्नानादिकंकुर्यात्॥पुनर्नपश्येत॥विधिश्चायम् ॥यस्यराशिंसमासाद्यभवेद्ग्रहणसंभवः ॥ तस्यस्नानंप्रवक्ष्यामिमंत्रौष धिसमन्वितम् ॥ चंद्रोपरागंसंप्राप्यकृत्वाब्राह्मणवाचनम्॥ संपूज्यचतु रोविप्राञ्छुक्लमाल्यानुलेपनैः॥ पूर्वमेवोपरागस्यसमानीयौषधादिकम् ॥ स्थापयेच्चतुरःकुंभानग्रतःसागरानिव ॥ गजाश्वरथ्यावल्मीकसं गमाद्ध्रदगोकुलात् ॥ राजद्वारप्रवेशाच्चमृदमानीयनिःक्षिपेत् ॥ पं चगव्यंपंचरत्नंपंचत्वक्पंचपल्लवम् ॥ रोचनंपद्मकंशंखंकुंकुमंरक्तचं दनम् ॥ शुक्तिस्फटिकतीर्थांबुसितसर्षपगुग्गुलु ॥ मधूकंदे वदारुंचविष्णुक्रांतांशतावरीम्॥बलांचसहदेवींचनिशाद्वितयमेवच ॥ एतत्सर्वंविनिःक्षिप्यकुंभेष्वावाहयेत्सुरान् ॥ सर्वेसमुद्राःसरितस्तीर्था निजलदानदाः ॥ आयांतुयजमानस्यदुरितक्षयकारकाः ॥ १ ॥ योसौवज्रधरोदेवआदित्यानांप्रभुर्मतः ॥ सहस्रनयनश्चेंद्रःग्रहपीडां व्यपोहतु ॥ २ ॥ मुखंयःसर्वदेवानांसप्तार्चिरमितद्युतिः ॥ चंद्रो परागसंभूतामाग्निःपीडांव्यपोहतु ॥ ३ ॥ यःकर्मसाक्षीलोकानां धर्मोमहिषवाहनः ॥ यमश्चंद्रोपरागोत्थांग्रहपीडांव्यपोहतु ॥ ४ ॥ रक्षोगणाधिपःसाक्षीनीलाञ्जनसमप्रभः ॥ खड्गहस्तोतिभीमश्चग्रहपी डांव्यपोहतु ॥ ५ ॥ नागपाशधरोदेवःसदामकरवाहनः ॥योसौनि धिपतिर्देवःखड्गशूलगदाधरः ॥६ ॥ सजलाधिपतिश्चंद्रःग्रह० प्राणरू पोहिलोकानांसदाकृष्णमृगप्रियः ॥वायुश्चंद्रोपरागोत्थांग्रह० ॥७॥ चंद्रोपरागकलुषंवरदोत्रव्यपोहतु ॥ ८ ॥ योसाविंदुधरोदेवःपिनाकी

१ धनदो इ० पा०।

वृषवाहनः ॥ चंद्रोपरागपापानिसनाशयतुशंकरः ॥ ९ ॥ त्रैलोक्ये यानिभूतानिस्थावराणिचराणिच ॥ ब्रह्मविष्णवर्करुद्राश्चदहंतुमम पातकम् ॥ १० ॥ एवमावाहयेद्देवान्मंत्रैरेभिश्चवारुणैः ॥ एताने वतथामंत्रान्स्वर्णपट्टेविलेखयेत् ॥ ताम्रपात्रेथवालिख्यनववस्त्रेतथै वच ॥ मस्तकेयजमानस्यनिदध्युस्तेद्विजोत्तमाः ॥ कलशान्द्रव्य संयुक्तान्नानारूपसमन्वितान् ॥ गृहीत्वास्नापयेद्गूढम्भद्रपीठोपरिस्थि तम् ॥ पूर्वोक्तैरेवमंत्रैश्चयजमानंद्विजोत्तमः ॥ अभिषेकंततःकुर्यान्मं त्रैर्वारुणसूक्तकैः ॥ ततःशुक्लांबरधरःशुक्लमाल्यानुलेपनः ॥ आचार्यं वरयेत्पश्चात्स्वर्णपट्टंनिवेदयेत् ॥ आचार्येदक्षिणांदद्याद्गोदानंचस्वश क्तितः ॥ अतऊर्ध्वंब्रह्मपूजांतदर्धेनविशेषतः ॥ पूजयेद्वस्त्रगोदानैर्ब्राह्म णानपिशक्तितः ॥ गन्धमाल्यैर्धूपदीपैःपूजयेदिष्टदेवताम् ॥ होमंचैव प्रकुर्वीततिलैर्व्याहृतिभिस्तथा ॥ निवृत्तेग्रहणेसर्वेब्राह्मणेभ्योविशेष तः॥ दानंचशक्तितोदद्याद्यदीच्छेदात्मनोहितम्॥नाश्वप्रतिग्रहेदोषोन चस्यात्तस्यविक्रये॥कन्यायाविक्रयेदोषोनदोषस्तत्प्रतिग्रहे ॥सर्वत्रप्रा ङ्मुखोदाताप्रतिग्राहीह्युदङ्मुखः॥ कन्यादानेपितुःश्राद्धेप्रत्यग्दक्षिण तोमुखः ॥सूर्यग्रहेसूर्यनामसदामंत्रेषुकीर्तयेत् ॥ अनेनविधिनायस्तुग्र हणेस्नानमाचरेत् ॥ नतस्यग्रहणेदोषःकदाचिदपिजायतइति ॥अत्रापि गूढंभद्रपीठोपरिस्थितमित्युक्तत्वात्सकृद्ग्रहणंदृष्ट्वापश्चाद्यथादर्शनंनसं भवतितथास्थातव्यमित्यर्थः ॥ चंद्रग्रहणात्पूर्वयामत्रयेनभुंजीत ॥ सूर्यग्रहणात्पूर्वयामचतुष्टयेनभुंजीत ॥ तदुक्तंमहाभारते ॥ अर्वाग्या मत्रयादिंदोर्ग्रहणेभुजिमाचरेत् ॥ चतुर्यामादधश्चैवराहुग्रस्तेदिवाकर इति ॥ वृद्धवसिष्ठोपि ॥ सूर्यग्रहेतुनाश्नीयात्पूर्वयामचतुष्टयम् ॥ चंद्र ग्रहेतुयामांस्त्रीन्बालवृद्धातुरैर्विनेति ॥ बालवृद्धातुरविषयेमत्स्यपुरा णेविशेषउक्तः॥अपराह्णेनमध्याह्नेमध्याह्नेनतुसंगवे ॥ भुंजीतचेत्संगवे स्यान्नपूर्वंभुजिमाचरेदिति ॥ आतुरादिग्रहणात्पूर्वयाममात्रेभोजनंकु

र्यादित्यर्थः ॥ वसिष्ठोपि ॥ ग्रहणंतुभवेदिंदोःप्रथमादधियामतः॥भुंजी तावर्तनात्पूर्वंपश्चिमेप्रथमादधः ॥ अस्यार्थः ॥ रात्रौप्रथमयामतऊप रिचंद्रग्रहणंचेत्तदाआवर्तनान्मध्याह्नात्पूर्वंभुंजीत ॥ रात्रिपश्चिमया मेचेद्रात्रिप्रथमयामादधोभुंजीतेति ॥ चंद्रस्यग्रस्तोदयेपूर्वंदिवा नभुंजीतदिवैवग्राससंभावितत्वात् ॥ सूर्यग्रहणेपूर्वंदिवानभुंजीत ॥ तयोर्ग्रस्तास्तसमयेतुपरदिनेउदितयोर्विमुक्तंज्ञात्वास्नात्वाभुंजीत ॥ तदाहमार्कंडेयः ॥ चंद्रस्ययदिवाभानोर्यस्मिन्नहनिभार्गव ॥ ग्रहणं तुभवेत्तस्मिंस्तत्पूर्वंभोजनंनरः॥ नाचरेत्सग्रहेचैवतथैवास्तमुपागते॥ यावत्स्यान्नोदयस्तस्यनाश्नीयात्तावदेवतु॥मुक्तिंदृष्ट्वातुभुंजीतस्नानं कृत्वाततःपरमिति ॥ चंद्रेसूर्येतथैवग्रस्तएवास्तमुपगतेसत्यन्यास्मि न्दिनेयावत्तयोरुदयोनस्यात्तावन्नभुंजीत मुक्तिंदृष्ट्वास्नानंकृत्वाभुंजीते त्यर्थः ॥ दृष्ट्वेतिज्ञानोपलक्षणम् ॥ मनुरपि ॥ अमुक्तयोरस्तगयोर्दृ[3] ष्ट्वास्नात्वापरेहनीति ॥ भुंजीतेतिवाक्यशेषः॥ विष्णुधर्मस्मृतावपि ॥ अहोरात्रंनभोक्तव्यंचंद्रसूर्यग्रहोयदा ॥ मुक्तिंदृष्ट्वातुभोक्तव्यंस्नानंकृ त्वाततःपरमिति ॥ इदमपिग्रस्तास्तविषयम् ॥ सूर्यस्यग्रहणात्पूर्व स्मिन्नहनिग्रहणोत्तरभाविन्यांरात्रौचेत्यहोरात्रेभोजननिषेधः ॥ चंद्र स्यग्रस्तास्तसमयेग्रहणरात्रिरग्रिमाहश्चेत्यहोरात्रः ॥ एवंपूर्वेष्वपिवच नेषुविमुक्तिंदृष्ट्वेतिज्ञात्वेत्यर्थः॥ ननुदर्शनंचक्षुर्व्यापारएव ॥सत्यम्॥ तथाप्यत्रवचनसामर्थ्याद्दृष्टिर्ज्ञानमेवगृह्यते ॥ तदाहवृद्धगौतमः ॥ चंद्रसूर्यग्रहेनाद्यात्तस्मिन्नहनिपूर्वतः ॥ राहोर्विमुक्तिंविज्ञायस्नात्वाकु र्वीतभोजनमिति ॥ अतश्चमेघाच्छादनेनाविमुक्तिदर्शनेप्युदयंज्ञात्वा भुंजीत ॥ समर्थस्यनिषिद्धकालभोजनेप्रायश्चित्तमाहकात्यायनः॥ चंद्रसूर्यग्रहेभुक्त्वाप्राजापत्येनशुध्यति ॥ तस्मिन्नेवदिनेभुक्त्वात्रि रात्रेणैवशुध्यतीति ॥ रविचंद्रग्रहणेस्वस्ववारेचूडामणिसंज्ञकोरवि चंद्रग्रहोनंतफलदोभवति ॥ तदाहव्यासः ॥ सूर्यवारेरवेर्ग्रासः

---

१प्रथमे इ०पा०।२प्रथमयामादर्वाक्सातिदिनस्यप्रथमप्रहरएवभुंजीतेति पा०।३र्विप्रा इ०पा०।

सोमवारेविधोर्ग्रहः ॥ चूडामणिरितिख्यातस्तत्रानंतफलंभवेत् ॥ वारे
ष्वन्येषुयत्पुण्यंग्रहणेचंद्रसूर्ययोः ॥ तत्पुण्यंकोटिगुणितंग्रहेचूडामणौ
स्मृतमिति ॥ ग्रहणात्पूर्वंत्रिरात्रमेकरात्रंवाउपोष्यस्नानदानादिकेकृते
महाफलंभवति ॥ तदुक्तंगालवेन ॥ यस्त्रिरात्रमुपोष्यैवग्रहणेचं
द्रसूर्ययोः ॥ स्नात्वादत्त्वाचविधिवन्मोदतेब्रह्मणासह ॥ एक
रात्रमुपोष्यैवस्नात्वादत्त्वाचशक्तितः ॥ कंचुकादिवसर्पस्यनिर्गतिः
पापकोशतइति ॥ ॥ इतिग्रहणनिर्णयः ॥ ॥ अथश्राद्धेग्राह्यनिषि
द्धद्रव्याण्युच्यंते ॥ ॥ तत्रविष्णुः ॥ शाकैः श्यामाकैः प्रियंगुनी
वारैर्मुद्गैर्गोधूमैश्चमासंप्रीयंतइति ॥ अत्रमुद्गाहारिताः ॥ तदुक्तंवायुपु
राणे ॥ श्यामाकाहस्तिनामानो विद्धितान्यज्ञनिःसृतान् ॥ प्रसाति
काप्रियंगुश्चमुद्गाश्चहरितास्तथेति ॥ प्रसातिकाधान्यभेदः ॥ तथा ॥
एतान्यपिसमानिस्युः श्यामाकानांगुणैर्द्विज ॥ कृष्णमाषास्तिला
श्चैवश्रेष्ठाःस्युर्यवशालयः ॥ महायवाव्रीहियवास्तथैवचमधूलिकाः ॥
कृष्णाःश्वेतालोहिताश्चग्राह्याःस्युःश्राद्धकर्मणि ॥ यवशालयोयवभे
दाःशालिभेदावा॥महायवावेणुयवाः ॥ मधूलिकायावनालविशेषः ॥
कृष्णाःश्वेतालोहितश्चेतिमधूलिकाविशेषणानीतिकल्पतरौ ॥ स्मृति
मंजर्यांतु षष्टिकाशालिभेदाइत्युक्तम् ॥ तथाच॥बिल्वामलकमृद्वीकप
नसाम्रादिदाडिमम् ॥ भव्यपारेवताक्षोटखर्जूरीणांफलानिचेति ॥
भव्यपारेवतंकृतमालभेदः ॥ तथाच ॥ कशेरुःकोविदारश्चतप्तकंद
स्तथाविसम्॥तमालंशतकंदंचतथावैशीतकंदकामिति॥ कोविदारःश्वे
तकांचनारसदृशःकंदविशेषस्तालकंदोवा॥शतकंदःशालूकः ॥ तथा
च॥कालेयंकालशाकंचसुविषण्णंसुवर्चलम्॥ मांसंशाकंदधिक्षीरंशस्तं
वेत्रांकुरस्तथा॥कालेयादिकाः शाकभेदाः॥कट्फलंकोंकणीद्राक्षालकु
चंमोचमेवच॥अलाबुग्रीवकंचारुकर्कंधुंमधुसाह्वयमिति ॥ मोचंकदद
लीफलम्॥अलाबुग्रीवकंचार्विंतिकर्कंधुविशेषणम् ॥तथाच ॥ वैकंकतं

नारिकेलंशृंगाटकपरूषकम् ॥ पिप्पलीमरिचंचैवपटोलंबृहतीफलम्॥ एवमादीनिचान्यानिस्वादूनिमधुराणिच ॥ नागरंचात्रवैदेयंदीर्घमूलकमेवचेति ॥ परूषकंजलोद्भवःकंदविशेषः ॥ अत्रोक्तानियानियान्यप्रसिद्धानिदेशविशेषप्रसिद्धानितानितानितत्तद्देशवासिभ्योवगंतव्यानि ॥ अत्रैवमादीन्यन्यानीत्युक्तत्वादात्मनोभोक्तुःपितुश्चस्वादूनिप्रियतमानिदेयानीत्यर्थः॥ ॥इतिश्राद्धग्राह्यद्रव्यनिर्णयः॥ ॥अथवर्ज्यानि॥ तत्रशंखः॥भूस्तृणंसुरशिग्रुश्चपालक्यंमधुकंतथा ॥कूष्मांडालाबुतोर्वारुकोविदारांश्चवर्जयेदिति ॥ ब्रह्मांडपुराणेपि ॥ द्विःस्विन्नंपरिदग्धंचतथैवग्रावलेडितम्॥शर्कराकीटपाषाणैःकेशैर्यच्चाप्युपप्लुतम् ॥ पिण्याकंमथितंचैवतथातिलवणंचयत् ॥ सिद्धीकृताश्चयेभक्ष्याः प्रत्यक्षलवणीकृताः॥राजमाषास्त थाचैववर्ज्याःसद्भिःप्रयत्नतइति॥द्विःस्विन्नंशाकादिसंस्कारार्थंजीरकादिप्रक्षेपेणयत्पुनः पक्वम्॥ अतएवपाकादावेवसंस्कारःकार्यः ॥ स्विन्नस्यशाकादेःपुनरग्निसंयोगोनिषिद्धइत्यर्थः ॥ येषांतुस्विन्नानामेवसंस्कारयोग्यत्वंसूरणादीनांतेषांनदोषः ॥ अतश्चयस्ययावतापाकसिद्धिस्तावदेवाग्निसंयोगःकार्योनाधिकइत्यभिप्रायः येषुसिद्धेषुपश्चात्प्रत्यक्षलवणक्षेपःकृतस्तेताहशाः॥ तथाच ॥ आविकंमार्गमौष्ट्रंचसर्वमेकशफंचयत् ॥ माहिषंचामरंचैवपयोवर्ज्यंविजानतेति ॥ शंखोपि ॥ पिप्पलींमरिचंचैवतथावैपिंडमूलकम् ॥ कृतंचविरसंसर्वंवंशाग्रंचविवर्जयेदिति॥ नन्वादित्यपुराणे ॥ मधूकंरामठंचैवकर्पूरंमरिचंगुडम् ॥ श्राद्धकर्मणिशस्तानिसैंधवंत्रपुसंतथेतिहिंग्वादीनांप्राशस्त्याभिधानाद्विरोधइतिचेत् ॥ सत्यम् ॥ हिंगुनिषेधस्याशाकद्रव्यविषयत्वादन्यत्रप्राशस्त्यमित्यविरोधः ॥ हिंगुद्रव्येषुशाकेष्विति वर्ज्यप्रकरणेव्यासोक्तेः ॥ पिप्पलीमरिचयोःसंस्कारद्रव्यत्वाच्छाकादिनिक्षिप्तयोर्ननिषेधः ॥ प्रत्यक्षयोस्तुनिषेधइति ॥ ॥ इतिश्राद्धनिषिद्धद्रव्यनिर्णयः ॥ ॥ अथानुपहतद्व्याणामेवश्राद्धो

१ शिग्रुशाकश्च इ० पा० । २ शाकत्वेनकेवलस्यनिषेधात् ।

पयुक्तत्वाद्द्रव्यशुद्धिप्रकरणमारभ्यते ॥ तत्रादौसर्वद्रव्याणांभूम्यधिकरणत्वाद्भूशुद्धिरुच्यते ॥ तत्रोपहतभूशुद्धिःसप्तधाभवति ॥ तदाह यमः ॥ खननात्पूरणाद्दाहादद्भिर्वर्षणलेपनात् ॥ गोभिराक्रमणात्कालाद्भूमिःशुध्यतिसप्तभिरिति ॥ कालादितियावताकालेनामेध्यगंधलेपादिक्षयोभवतिसकालउच्यते ॥ याज्ञवल्क्योपि ॥ भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा ॥ सेकादुल्लेखनाद्भूयाद्गृहंमार्जनलेपनादिति ॥ अत्रभूग्रहणेनैवप्राप्तेपिपुनर्गृहवचनंप्रतिदिनंतस्यमार्जनलेपनादिप्राप्त्यर्थम् ॥ इदंसमस्तमपिमार्जनादिकंदुष्टत्वहेतुभिः समस्तैःपुनःपुनरुपहतभूविषयेशुद्ध्यापादकम् ॥ अन्यथोपहत्यनुसारेणमार्जनादिषुसप्तसुमध्येद्वित्रादिकंयथायोग्यंशुद्धिहेतुः ॥ दुष्टत्वनिमित्तानितुदेवलेनोक्तानि ॥ यत्रप्रसूयतेनारीम्रियतेदह्यतेथवा ॥ चांडालाध्यासितायत्रयत्रमूत्रादिसंगतिः ॥ एवंकश्मलभूयिष्ठाभूरमेध्याप्रकीर्तिता ॥ श्वसूकरखरोष्ट्राद्यैःसंस्पृष्टादुष्टतांव्रजेत् ॥ अंगारतुषकेशास्थिभस्माद्यैर्मलिनाभवेदिति ॥ अस्यार्थः ॥ नारीप्रसवादिभिर्मूत्रादिसंगतिपर्यंतैर्निमित्तैर्भूमिरमेध्याभवति ॥ श्वसूकरादिस्पृष्टादुष्टाभवति ॥ अंगारादिसंयुक्तामलिना ॥ इतित्रिविधापिशोध्याभूमिः ॥ तत्रामेध्यायाःशुद्धिस्तेनैवोक्ता ॥ पंचधावाचतुर्धावाभूरमेध्याविशुध्यतीति॥यत्रमनुष्यदाहः तथाचांडालानांचिरस्थितिः ॥ एवंविधमेध्यायाभुवः पंचभिर्गंधलेपाद्यपनयनक्षमैर्दहनकालगोक्रमणसेकोल्लेखनैः शुद्धिः॥ यत्रमनुष्याजायन्तेम्रियन्तेवात्यन्तमूत्रविष्ठादिसंगतिर्वा ॥ एवंविधमेध्यायाभूमेर्दाहविवर्जितैःकालादिभिःपूर्वोक्तैरेवचतुर्भिःशुद्धिः ॥ दुष्टादिविषयेचसएवाह ॥ दुष्टाभूमिर्द्विधात्रेधाशुध्यतेमालिनैकधेति ॥ दुष्टायाभुवस्त्रिभिर्गोक्रमणसेकोल्लेखनैर्द्वाभ्यांसेकोल्लेखनाभ्यांवाशुद्धिः ॥ मलिनायाभुवउल्लेखनेनैकेनैवशुद्धिरित्यर्थः ॥ तथाचान्यत्रविशेषउक्तः॥गोचर्ममात्रमब्बिन्दुर्गोःशोधयतिपा

ततम्ः ॥ समूढमसमूढंवायत्रलेपोनदुष्यतीति॥समूढंकृतसंमार्जनम्॥
असमूढमकृतसंमार्जनंवा॥गोःपृथिव्यागोचर्ममात्रंप्रदेशंपातितंमलिन
मब्बिन्दुरुदकबिंदुःशोधयतीत्येकोऽर्थः ॥ अथवा॥ गोरब्बिंदुगोंपुच्छ
स्पृष्टोदकसेकेकृतेएकेनाब्बिंदुनागोचर्ममात्रभूभागः शुद्धोभवतीत्य
र्थः॥यत्रैकादशगावउपविशंतितावद्भूभागोगोचर्म ॥ गृहशुद्धिस्तुसंव
र्तेनोक्ताः ॥ गृहशुद्धिंप्रवक्ष्यामिअंतस्थशवदूषणे ॥ प्रोत्सृज्यमृन्मयं
भांडंसिद्धमन्नंतथैवच ॥ गृहादपास्यतत्सर्वंगोमयेनोपलेपयेत्॥गोमये
नोपलिप्याथच्छागेनाघ्रापयेद्बुधः ॥ ब्राह्मणैर्मंत्रपूतैश्चहिरण्यकुशवारि
णा॥सर्वमभ्युक्षयेद्वेश्मततःशुध्येदसंशयमिति ॥ बौधायनेनतुविशेषउ
क्तः ॥ घनायाभूमेरुपघातउपलेपनम् ॥ सुषिरायाःकर्षणम् ॥ क्लि
न्नायाअमेध्योपहत्यप्रक्षालनम् ॥ ऊर्ध्वंतुशवोपघातेतक्षणंसूर्यर
श्मिप्रवेशोऽग्निज्वालाभिमर्षणंवेति ॥ क्लिन्नांकृमिकीटाद्याक्रान्तामन्य
तोमेध्यांमृदमानीयाच्छादयेदित्यर्थः ॥ इतिभूशुद्धिनिर्णयः ॥ अथ
पात्रशुद्धिः ॥ तत्रहारीतः ॥ अद्भिःकांचनरजतशंखशुक्तीनांतद्गुणव
र्जनम् ॥ स्नेहवैवर्ण्योपहतानांयवगोधूमकलायमाषमसूरमुद्गांगारगो
मयचूर्णैर्धावनम् ॥ अम्ललवणाभ्यांताम्राणांभस्मनाकांस्यानांश
णतैलसिकताघर्षणैःकार्ष्णायसानांशिलाघर्षणमार्जनैर्मणिमयानामि
ति॥ अत्रतद्गुणवर्जनमितितद्गन्धापकर्षणम् ॥ स्नेहवैवर्ण्योपहताना
मितिउच्छिष्टादिस्नेहेनविवर्णत्वंयथाभवातितथोपहतानामित्यर्थः ॥
यवादिचूर्णानिविकल्पितानिसर्वेषांस्नेहवैवर्ण्यापकर्षणार्थत्वादेव ॥
उदकस्यतुसर्वत्रशोधनद्रव्यैर्योगोपेक्षितः यत्तुयाज्ञवल्क्यवचनम्॥सौ
वर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम्॥शाकरज्जुमूलफलवासोविदल
चर्मणाम् ॥ पात्राणांचमसानांचवारिणाशुद्धिरिष्यतइति ॥ सौवर्णंसु
वर्णविकारः॥ राजतंरजतविकारः॥ अब्जंशंखशुक्तिमुक्ताफलादि ॥ऊ
र्ध्वंपात्रंयज्ञीयोलूखलादि॥ग्रहाऐंद्रादयः ॥ अश्मादृषदादिः॥मूलमार्द्र

कादि॥विदलंवेणुदलादितद्विकाराश्छत्रादीनिच ॥ चर्मादीनितद्विका राश्चपात्राणिप्रोक्षणपात्रादीनि ॥ चमसाहोतृचमसादयः ॥ एतेषांवा रिणाप्रक्षालनाच्छुद्धिरिति॥एतल्लेपरहितस्पर्शमात्रविषयम्॥ हारीतव चनन्तुस्नेहलेपाद्युपहतविषयमित्यविरोधः॥ तथाचमनुः॥ निर्लेपंकां चनंभांडमद्भिरेवविशुध्यति ॥ अब्जमश्ममयंचैवराजतंचानुपस्कृत मिति॥ अनुपस्कृतमनुत्कीर्णरेखादिखातेषूच्छिष्टावस्थानरहितमित्य र्थः ॥ सस्नेहपात्रेषुविशेषोयाज्ञवल्क्येनोक्तः ॥ चरुःस्रुक्स्रुवास स्नेहपात्राण्युष्णेनवारिणेति॥ चरुर्मृन्मयीचरुस्थाली ॥ एतान्यपिले परहितान्येवोष्णेनवारिणाशुध्यंति॥शुद्धेनवारिणेत्यनुवर्त्यतेनैवोक्तम् स्फ्यशूर्पाजिनधान्यानांमुसलोलूखलानसामिति ॥स्फ्योयज्ञांगभूत काष्ठच्छुरिका॥ अनःशकटम्॥आपस्तंबोपि॥गवाघ्रातानिकांस्यानि शूद्रोच्छिष्टानियानिच॥शुध्यंतिदशभिःक्षारैःश्वकाकोपहतानिचेति॥ क्षारोभस्म॥दशवारान्भस्मनामार्जितानिशुध्यंतीत्यर्थः॥यत्तुशंखवच नम् ॥ कृष्णशकुनिमुखावसृष्टंनिर्लिखेत् श्वापदमुखावसृष्टंपात्रंनप्रयुं जीतेति ॥ कृष्णशकुनिःकाकः ॥ निर्लेखनंतक्षणम् ॥ इदमधिकोप हतिविषयम्॥आपस्तंबवचनंतुस्वल्पोपहतिविषयमित्यविरोधः॥एव मन्यात्रापिन्यूनाधिकशौचकल्पाःस्वल्पाधिकोपहतिविषयत्वेनव्य वस्थापनीयाः ॥ बौधायनेनापिविशेषउक्तः॥तैजसानांमूत्रपुरीषशु क्रासृक्कुणपद्यैरत्यंतवासितानामावर्तनम्॥अल्पसंसर्गेतुपरिलेखनम्॥ स्पर्शमात्रोपघातेतुत्रिःसप्तकृत्वोभस्मनापरिमार्जनम् ॥ अतैज सानामेवंभूतानामुत्सर्गइति ॥ अग्निसंयोगेनद्रवीकरणमावर्त्तनम् ॥ कांस्यस्यभस्मनापरिमार्जनंनियतम् ॥ अन्येषामपिसौवर्णादि तैजसानांयाज्ञवल्क्येनवारिणाशुद्धिरिष्यतइत्युक्तत्वाद्बौधायनेनभ स्मनापरिमार्जनमित्युक्तत्वाच्चभस्मादिसहितेनैववारिणाशुद्धिर्ज्ञा तव्या ॥ स्मृत्यंतरेपि ॥ भस्मनाशुध्यतेकांस्यंसुरयायन्नलिप्यते ॥

सुरामूत्रपुरीषैस्तुशुध्यतेतापलेखनैरिति ॥ सुरादिग्रहणंशुक्रशोणितादीनामप्युपलक्षणार्थम् ॥ तथाच ॥ ताम्रमम्लेनशुध्येत्तुनचेदामिषलेपनम् ॥ आमिषेणतुयल्लिप्तंपुनर्दाहेनशुध्यति ॥ शंखोपि ॥ सूतिकोच्छिष्टभांडस्यसुरामद्यहतस्यच ॥ त्रिसप्तमार्जनाच्छुद्धिर्नतु कांस्यस्यतापनमिति ॥ अस्यार्थः ॥ सूतिकोच्छिष्टाद्युपहतानांतैजसानांसप्तभिर्यवगोधूमादिचूर्णैःप्रत्येकंत्रिमार्जनाच्छुद्धिः ॥ कांस्यस्यतुतपनाच्छुद्धिर्मार्जनाच्च ॥ प्रतिमार्जनमुदकप्रक्षालनमप्यावर्तते ॥ अधिकोपहतौतुविशेषःस्मृत्यंतरेप्रोक्तः ॥ सूतिकाशवविण्मूत्ररजस्वलाहतानिच ॥ प्रक्षेप्तव्यानितान्यग्नौयद्यद्यावत्सहेदपीति॥यद्द्रव्यंयावदग्निप्रक्षेपंसहतेयावताग्निप्रक्षेपेणननश्यति ॥ तावत्प्रक्षेप्तव्यमित्यर्थः ॥ बौधायनोपि॥ तैजसानांमूत्राद्युपघातेपुनःकरणंगोमूत्रेवासप्तरात्रंपरिवासनमिति॥ लेपानिर्हरणाशक्तौपुनःकरणम्॥अन्यथा गोमूत्रेवाइतिव्यवस्था॥आदित्यपुराणेतु॥सौवर्णरौप्ययुक्तानि शंखशुक्तिमयानिच॥ कांस्यायस्ताम्रकूप्यानित्रपुसीसमयानिच ॥निर्लेपानि चशुध्यन्तिकेवलेनजलेनतु॥शूद्रोच्छिष्टानिशोध्यानित्रिधाक्षाराम्लवारिभिरिति ॥ अत्रापिक्षाराम्लवारिभिर्दशदशकृत्वोमार्जनंकार्यम् ॥ शातातपेन शुध्यंतिदशभिःक्षारैरित्युक्तत्वात् ॥ स्मृत्यंतरेऽपि॥तिलमुष्ककशिग्रूणांकोकिलाक्षपलाशयोः ॥ काकजंघातथावज्रचिंचाश्वत्थवटास्तथा ॥ एषांभस्मदशक्षारंसंप्रोक्तंधर्मदर्शिभिः॥गवाघ्रातानि कांस्यानिशूद्रोच्छिष्टानियानिच ॥दशक्षारेणशुद्ध्यंतिश्वकाकोपहतानिच ॥ क्षाराभावेदशावृत्त्याभस्मनामार्जयेद्बुधइत्युक्तत्वात् ॥ द्विजातिभुक्तोच्छिष्टसंस्पर्शेतुशंखेनविशेषउक्तः ॥ ब्रह्मक्षत्रविशांचैवसकृत्संमार्जनाच्छुचिः ॥ चतुर्थेनतुयद्भुक्तंचतुर्भिस्तत्रमार्जनम् ॥ अग्नौ प्राक्षिप्यगृह्णीयाद्धस्तौप्रक्षालययनततः॥ गोशृंगेणतुसंस्पृष्टंतत्पात्रंशुचि

१ सुवर्णरूप्यशंखाश्मशुक्तिरश्मिमयानिच इ० पा० ।

तामियादिति ॥ कांस्यपात्रविषयेत्वंगिरसाविशेषउक्तः ॥ गडूषं पादशौचंचयःकुर्यात्कांस्यभाजने ॥ षण्मासंभुविनिःक्षिप्यपुनराकारमादिशेत् ॥ अत्रषण्मासंभुविनिःक्षिप्येत्युक्तत्वात्खननमपिकांस्यशुद्धिहेतुः॥अतश्चोपहतंकांस्यंदोषानुसारेणसप्तहादिकालंभुविखात्वोद्धृत्यभस्मनामार्जितंशुद्धंभवति ॥ तथाच ॥ लोहानांदहनाच्छुद्धिर्भस्मनागोमयेनच ॥ लेखनात्खननाद्वापिशैलानामंभसापिवा ॥ काष्ठानांतक्षणाच्छुद्धिर्मृद्गोमयजलैरपीति ॥ याज्ञवल्क्योपि ॥ तक्षणंदारुशृंगाणामिति ॥ संहतपात्रविषयेतुहारीतशातातपौ ॥ संहतानांतुपात्राणांयद्येकमुपहन्यते ॥ तस्यैवशोधनंप्रोक्तंसामान्यंद्रव्यशुद्धिकृदिति ॥ मृद्भांडानामल्पोपहतौयाज्ञवल्क्यः ॥ पुनःपाकान्महीमयमिति ॥ मद्याद्युपहतौतुपरित्यागएव ॥ तदाहमनुः ॥ मद्यैर्मूत्रपुरीषैर्वाष्ठीवनैःपूयशोणितैः ॥ संस्पृष्टंनैवशुद्ध्येतपुनःपाकेनमृन्मयमिति ॥ ॥ इतिपात्रशुद्धिः ॥ ॥ अथधान्यादिशुद्धिः ॥ तत्रविष्णुः॥ असिद्धस्यान्नस्ययन्मात्रमुपहन्यतेतन्मात्रमुत्सृज्यते॥सतुषस्यकंडनप्रक्षालनेकुर्यादितिविशेषः ॥ बौधायनोपि ॥ व्रीहयः प्रोक्षणादद्भिःशाकमूलफलानिच ॥ तन्मात्रस्यापहाराद्वानिस्तुषीकरणेनचेति ॥ इदमल्पद्रव्यविषयम् ॥ बहुद्रव्यविषयेतुकश्यपेन विशेषउक्तः ॥ प्रोक्षणपर्यग्निकरणावगाहनैः[1] ॥ व्रीहियवगोधूमानां विमर्शनप्रोक्षणैःफलीकृतानांनिघर्षणदलनशमीधान्यादीनीति ॥ अस्यार्थः ॥ अनेकपुरुषोद्धार्याणां व्रीहियवगोधूमानांप्रोक्षणादिभिःशुद्धिः॥ पर्यग्निकरणमग्न्याभिमर्शनम् ॥ अवगाहनंप्रक्षालनम्॥ प्रोक्षणादीनिसर्वाणिसर्वत्रदोषाल्पत्वमहत्त्वापेक्षयायोज्यानियथासंख्यम् ॥ कंडनेनशुक्लीकृतानिरस्तक्षुद्रकणाश्चतंडुलाःफलीकृताउच्यंते॥ तेषामल्पानांविमर्शनंपाणिभ्यांनिर्मलीकरणम्॥बहूनांप्रोक्षणम्॥शमीधान्यानिमुद्गादीनि ॥ तेषामेकपुरुषोद्धार्याणांनिघर्षणंविमर्द

१ करणदलनैः इ० पा० ।

नंततोल्पानांदलनमनेकपुरुषोद्धार्याणांप्रोक्षणंशुद्धिहेतुरिति ॥ यत्तु तंडुलांस्तुपरित्यजेदितितदत्यंताल्पपरिमाणविषयम् ॥ आदित्यपुराणेविशेषउक्तः ॥ गृहदाहेसमुत्पन्नेदग्धेचपशुमानुषे ॥ अभोज्यस्तद्गतोव्रीहिर्धातुद्रव्यस्यसंग्रहः ॥ मृन्मयेनाववद्धानामधोभुविविचेष्टताम् ॥ यवमाषतिलादीनांनदोषोमनुरब्रवीत् ॥ ततःसंक्रममाणाग्नौखलान्नंचैवदह्यते ॥ नचप्राणिवधोयत्रकेवलंगृहदीपनम् ॥ तत्रद्रव्याणिसर्वाणिगृह्णीयादविचारयन्निति ॥ सिद्धान्नविषयेतुमनुनाविशेषउक्तः ॥ पक्षिजग्धंगवाघ्रातमवधूतमवक्षुतम् ॥ दूषितंकेशकीटैश्चमृत्प्रक्षेपेणशुध्यति ॥ पक्षिदग्धंपक्षिभक्षितम् ॥ अवधूतंयस्योपरिवासोवधूननंकृतंपाक्षिभिरुत्क्षिप्यत्यक्तंच ॥ अवक्षुतंयस्योपरिक्षुतम् ॥ मृद्ग्रहणमुदकभस्मनोरपिप्रदर्शनार्थम् ॥ तथाचयाज्ञवल्क्यः ॥ सलिलंभस्ममृद्वापिप्रक्षेप्तव्यंविशुद्धयइति ॥ पाकानंतरमेवकेशकीटादिदूषितंमृदादिभिःशुध्यति ॥ तैःसहपक्वंतुपरित्याज्यमेव ॥ अतश्चनित्यमभोज्यंकेशकीटादिविपन्नमितिगौतमवाक्यस्यायमेवाभिप्रायः ॥ शंखः ॥ क्षीराणियान्यभक्ष्याणितद्विकाराशनेबुधः ॥ सप्तरात्रंव्रतंकुर्यात्प्रयत्नेनसमाहितः ॥ अत्रिः ॥ अजागौर्महिषीवापिह्यमेध्यंभक्षयेद्यदि ॥ दुग्धंहव्येनकव्येनगोमयादिनयोजयेत् ॥ ऊनस्तनीव्याधिताचयाचान्याऽभक्ष्यभक्षिणी ॥ तासांदुग्धंनहोतव्यंहुतंचैवाहुतंभवेत् ॥ देवद्रोण्यांविवाहेषुप्रयज्ञेषुकृतेषुच ॥ काकैःश्वभिश्चसंस्पृष्टमन्नंतन्नविवर्जयेत् ॥ तन्मात्रमन्नमुद्धृत्यशेषंसत्कारमर्हतीति ॥ देवद्रोणीदेवयात्रा ॥ प्रकृतेष्ववश्यंभाविषुसर्वोत्सवेषु ॥ अत्रदेवयात्रादीनांबह्वन्ननिष्पाद्यत्वाद्बह्वन्नकार्येष्वियंशुद्धिर्वेदितव्या ॥ तदाहपराशरः ॥ पक्वंद्रोणाधिकंत्वन्नंकाकश्वाद्युपघातितम् ॥ ग्रासमुद्धृत्यतन्मात्रंयत्तुलालाकृतंभवेत् ॥ हेमोदकेनचाभ्युक्षेद्राजतेनांबुनाथवा ॥ अग्निज्वालोपसंस्पर्शात्सुवर्णमधुसर्पिषा ॥ विप्राणांब्रह्मघोषेणपूतंभोज्यंचतद्भवे

दिति ॥ द्रोणःषट्पञ्चाशदधिकंपलशतद्वयम् ॥ यत्तुजमदग्निवचनम् ॥अन्नमेकाहिकंपक्कंश्वकाकाद्युपघातितम्॥केशकीटावपन्नंचतदप्येवंविशुध्यति॥ क्रीतस्यापिविधिर्दृष्टएषएवमनीषिभिरिति ॥ तदल्पधनविषयम् ॥ संस्कारविषयेविशेषश्चवसिष्ठेनोक्तः॥ द्रवाणांप्लवनेनैवघनानांप्रोक्षणेनच॥छागेनमुखसंस्पृष्टमन्नंतच्छुचितामियात् ॥ घनाःपर्पटवटिकादयः॥द्रवाणामितिगोरसविषयम् ॥ तदाहशंखः ॥ श्रपणंघृततैलानांप्लवनंगोरसस्यच ॥ भांडानिप्लावयेदद्भिःशाकमूलफलानिचेति ॥ घृतादीनामपिश्रपणासंभवेसजातित्वादीषत्प्लवनेन शुद्धिः ॥ मनुनातु ॥ द्रवाणांचैवसर्वेषांशुद्धिराप्लवनंस्मृतम् ॥ प्रोक्षणंसंहतानांचदारवाणांचतक्षणमित्युक्तम्॥अतश्चोत्प्लवनप्लावनेविकल्पेन॥किंच॥ प्रस्थमात्रपरिमाणानामुत्प्लवनंततोधिकपरिमाणानांप्लावनंततोन्यूनानांपरिमाणानांत्यागइतिगम्यते ॥ आधारभांडस्थितस्यगोरसादेर्नदोषः ॥ तदुक्तम् ॥ आधारदोषेतुनयेत्पात्रात्पात्रांतरंद्रवम् ॥ घृतंचपायसंक्षीरंतथैवेक्षुरसोगुडः ॥ शूद्रभांडस्थितंतक्रंतथामधुनदुष्यतीति ॥ पायसंपयोनिर्वृत्तम् ॥ यमोपि ॥ आममांसंघृतंक्षौद्रंस्नेहाश्चफलसंभवाः ॥ म्लेच्छभांडस्थितादूष्यानिष्कृताःशुचयःस्मृताइति ॥ एतच्चआधारभांडविषयम् ॥ अनाधारेपिद्रोणाधिकेपायसेप्लवनंसर्वत्रघृतादिविषयमपि॥ततोन्यूनस्यापिदेशकालाद्यपेक्षयाश्रपणादिभिःशुद्धिः ॥ तथाचबौधायनः ॥ देशंकालंतथात्मानंद्रव्यंद्रव्यप्रयोजनम् ॥ उपपत्तिमवस्थाञ्चज्ञात्वाशौचंप्रकल्पयेदिति ॥ शातातपोपि ॥ गोकुलेकुंडशालायांतिलचक्रेक्षुयंत्रयोः ॥ अमीमांस्यानिशौचानिस्त्रीषुबालातुरेषुचेति ॥ कुंडशालायज्ञशाला ॥ ॥ शंखोपि ॥ निर्यासानांगुडानांचलवणानांतथैवच ॥ कुसुंभकुंकुमानांचऊर्णाकार्पासयोस्तथा ॥ शोषात्तुकथिताशुद्धिरित्याहभगवान्यमइति ॥ निर्यासाहिंगुप्रभृतयः ॥ इयंस्वल्पपरिमाणविषया॥

बहुपरिमाणेषुबौधायनेनविशेषाभिधानात् ॥ यथाबहुकुसुंभका र्पासयोस्तथागुडलवणानांसर्पिषांचकठिनीभूतानांचांडालादिस्पर्शने नैवाशुद्धिरिति ॥ अत्यल्पत्वेपरित्याज्याएव ॥ तत्रापिदेशका लापेक्षयापरित्यागःकार्यः॥मृत्पर्णादिषुविष्णुनाविशेषउक्तः॥मृत्पर्ण तृणकाष्ठानांश्वास्थिचांडालवायसैः ॥ स्पर्शेनविहितंशौचंसोमसूर्या ग्निमारुतैः॥तथाप्रोक्षणेनपुष्पफलमपिच ॥ शंखोपि ॥ पुष्पफलानांवि ष्किरावधूतानांप्रक्षालनमित्येकपर्णानामद्भिःप्रक्षालनंसकृद्बहुष्प्रयुक्ता नामुत्सर्गइति ॥ विष्किरैर्ग्रामकुक्कुटादिभिरवधूतंपदाकीर्णमित्यर्थः ॥ बौधायनोऽपि॥असंस्कृतायांभूमौन्यस्तानांप्रक्षालनम् ॥ पराक्षालन मित्येके ॥ पराक्षालनमभ्युक्षणम् ॥ एवंक्षुद्रसमिधामसंस्कृतानाम मेध्याद्युपहतानामेकपुरुषोद्धार्याणामिति ॥ क्षुद्रसामेधांयज्ञियत्वेनप्र सिद्धपालाशादिव्यतिरिक्तापामार्गादीनाम्॥व्यासोपि॥रथ्याकर्दमतो यानिनावःपथतृणानिच ॥ मारुतेनैवशुद्ध्यंतिपक्वेष्टकाचितानिचेति॥ मनुनातुद्रव्यहस्तस्योच्छिष्टादिस्पर्शेविशेषउक्तः॥तथा ॥ उच्छिष्टेन तुसंस्पृष्टोद्रव्यहस्तःकथंचन ॥ अनिधायैवतद्द्रव्यमाचांतःशुचितामि यादिति ॥ इतिधान्यशुद्धिः ॥ अथजलशुद्धिः ॥ तत्रदेवलः ॥ अवि गंधारसोपेतानिर्मलाःपृथिवीगताः ॥ अक्षीणाश्चैवगोःपानादापःशु द्धिकराइति॥अत्रगोपानादिति ॥ गोपानयोग्यपरिमाणाः ॥ तदाहतु व्यासबृहस्पती ॥ भूमिष्ठमुदकंमेध्यंवैतृष्ण्यंयत्रगोर्भवेत् ॥ अव्याप्तंचे दमेध्येनतद्वदेवशिलागतमिति ॥ अल्पजलाशयादुद्धृतोदकविषयेदे वलएववाक्यांतरमाह॥उद्धृतावाप्रशस्ताःस्युःशुद्धैःपात्रैर्यथाविधि ॥ एकरात्रोषितास्तास्तुत्यजेदपःसमुद्धृताइति॥अतएवबहूदकात्तडागा देरुद्धृतानांरात्र्युषितानामपर्युषितोदकांतराभावेनदोषः ॥ अपर्युषित सद्भावेरात्र्युषितानांकर्मयोग्यत्वंनास्ति॥महाजलाशयविषयेसएवाह॥ अक्षोभ्यानितडागानिनदीवापीसरांसिच ॥ चांडालाद्यशुचिस्प

शेतीर्थंतःपरिवर्जयेदिति ॥ तीर्थमुदकावतरणमार्गः ॥ यस्मिंस्तीर्थे चांडालादिस्पर्शस्तद्वर्जयित्वाऽन्यतोजलंगृह्णीयादित्यर्थः ॥ वापीकूपादिविषयेहारीतः ॥ वापीकूपतडागेषुमानुषंशीर्यतेयदि ॥ अस्थिचर्मविनिर्मुक्तेदूषितंचखरादिभिः ॥ उद्धृत्यतज्जलंसर्वंशोधनंपरिवर्जितमिति ॥ चर्मनिर्मुक्तैश्चिरकालवासाद्विशीर्णैरित्यर्थः ॥ देवलोपि ॥ उद्धरेदुदकंसर्वंपंचपिंडान्मृदस्तथेति ॥ बृहस्पतिनातुविशेषउक्तः ॥ मृतपंचनखात्कूपादत्यंतोपहतात्तथा ॥ अपःसमुद्धरेत्सर्वाःशेषंवस्त्रेणशोधयेत् ॥ वह्निप्रज्वालनंकृत्वाकूपेपक्केष्टकाचिते ॥ पंचगव्यंन्यसेत्पश्चान्नवतोयंसमुद्भवेदिति ॥ श्वादिभिश्चिरकालोपहतौतुहारीतः ॥ घटानांशतमुद्धृत्यपञ्चगव्यंक्षिपेत्ततः ॥ श्वभिःश्वपाकचांडालैःदूषितेषुविशोधनमिति ॥ आपस्तंबस्तुविशेषमाह ॥ उपानदस्थिविण्मूत्रस्त्रीरजोमद्यमेवच ॥ एभिर्विदूषितेकूपेकुंभानांषष्टिमुद्धरेदिति ॥ स्थावरस्वल्पजलाशयेतुकूपवदेवशुद्धिः ॥ तदाहविष्णुः ॥ जलाशयेषुस्वल्पेषुस्थावरेषुमहीतलेकूपवत्कथिताशुद्धिर्महत्सुचनदूषणमिति ॥ शातातपोपि ॥ अन्यैरपिकृतेकूपेसेतौवाप्यादिकेतथा ॥ तत्रस्नात्वाचपीत्वाचप्रायश्चित्तंनविद्यते ॥ यमेनविशेषउक्तः ॥ चांडालभांडसंस्पृष्टंपीत्वाकूपगतंजलम् ॥ गोमूत्रयावकाहारस्त्रिरात्रेणैवशुद्ध्यतीति ॥ नदीनांचांडालादिभांडस्पर्शोपिनदोषस्तदाहसएव ॥ नदीवेगेनशुद्ध्यतीति ॥ चर्मकोशस्यकषायद्रव्येणशोधनाच्छुद्धिः ॥ ॥ तदाहकश्यपः ॥ दृतीनांरंजनाच्छुद्धिरिति ॥ शुद्धचर्मकोशगतमपिनपेयमनापदि ॥ ॥ तदाहयमः ॥ प्रपास्वरण्येघटगंधकूपेद्रोण्यांजलंकोशगतास्तथापः ॥ पिबेच्चशूद्रव्यतिरिक्तलोकइति ॥ आपद्यप्यरण्यगतंप्रपादिपेयमित्यर्थः ॥ द्रोणीसर्वसाधारणपाषाणादिकृतापात्रीकोशोदृतिः ॥ तडागादिगतंनवोदकंदशरात्रेणशुद्ध्यति ॥ तदुक्तम् ॥ अजागावोमहिष्यश्चस्त्रियश्चैवप्रसूतिकाः ॥ दशरात्रे

१ च्छ्लेष्म इ० पा० ।

णशुध्यंतिभूमिष्ठंचनचोदकमिति॥जलपात्रंचस्वकीयमेवस्वस्यशुद्धम् ॥ ॥ तदाहबौधायनः ॥ आत्मशय्यासनंवस्त्रंजायापत्यंकमंडलुः॥शुचीन्यात्मनिएतानिपरेषामशुचीनिचेति ॥ ॥ हारीतस्तु ॥ ॥ स्वानुपपत्तौशुच्यंतद्धौयसमामनंतिसंस्पर्शेसचैलस्नानमेवह्याहेति ॥ अयमर्थः ॥ स्वशय्याद्यलाभेपरकीयंशुद्धेनकंबलादीनांतद्धौतोपभोक्तव्यम् ॥ यतःपतितादेःशय्यादिस्पर्शेसचैलस्नानंविधीयतइति ॥ एतच्चकंबलादिपतितशय्यादिस्वीकारेवेदितव्यम् ॥ इत्युदकशुद्धिः ॥ ॥अथवस्त्रादिशुद्धिः ॥ तत्रव्यासः ॥ वस्त्रंमृदंभसाशुद्धेद्रज्जुर्वैदलमेवच ॥ रज्ज्वादिकञ्चातिदुष्टंत्याज्यंतन्मात्रमेवचेति ॥ वैदलंशूर्पादि ॥ ॥ यमोपि ॥ यदिमूत्रपुरीषाभ्यांरेतसारुधिरेणवा ॥ चैलंसमुपहन्येतअद्भिःप्रक्षालयेत्तुतत् ॥मृदंभसानशुध्येत्तुवस्त्रंचोपहतंदृढम् ॥ छेदनंतस्यदाहोवातन्मात्रमुपहन्यतइति ॥ अत्राच्छिन्नदग्धयोरपिपरित्यागाच्छेददाहाभ्यांशुद्ध्यभिधानमत्यंतदुर्लभविषयम् ॥ दरिद्रस्यानुत्तमेष्वपिच्छेदादिनाशुद्धिः॥राशीकृतानांबहूनांमध्येयावंतिवस्त्राणिचांडालादिभिःस्पृष्टानितानिस्पृष्टापेक्षयास्वल्पानिचेत् ॥ तदातान्युद्धृत्यप्रक्षालयेत् ॥ शेषाणिबहूनिप्रोक्षयेत्॥ अनेनैवाभिप्रायेणयाज्ञवल्क्यः॥प्रोक्षणंसंहतानांचबहूनांधान्यवाससामिति ॥स्मृत्यंतरेपि ॥ वस्त्रधान्यादिराशीनामेकदेशस्यदूषणम् ॥ तावन्मात्रंसमुद्धृत्यशेषंप्रोक्षणमर्हतीति ॥ अत्रशेषस्यप्रोक्षणविधानादुद्धृतस्योपहतस्यप्रक्षालनादिभिःशुद्धिरितिगम्यते ॥ यदाराशीकृतानिसर्वाणिस्पृष्टानितदाप्रोक्षणादेवशुद्धिः॥यदाचस्वल्पानितदासर्वेषांप्रक्षालनादेवशुद्धिः ॥ तदाहमनुः॥ अद्भिस्तुप्रोक्षणंशौचंबहूनांधान्यवाससाम्॥ प्रक्षालनेनत्वल्पानामद्भिःशौचंविधीयतइति ॥ राशेर्बहुत्वंचपुरुषग्राह्यभाराधिकत्वंबौधायने ॥ अनेकोद्धार्यंदारुशिलेभूमिसमेइत्यनेकोद्धार्ययोर्दारुशिलयोःस्वल्पशौचत्वमुक्तम् ॥ तेनैवन्यायेनद्रव्यांतरेष्व

पिज्ञातव्यम् ॥ याज्ञवल्क्येन विशेषउक्तः ॥ सोखैरुदकगोमूत्रैःशुद्ध्य
त्याविककौशिकम् ॥ सश्रीफलैरंशुपट्टंसारिष्टैःकुतपंतथा ॥ सगौरसर्ष
पैःक्षौमं पुनःपाकान्महीमयम् ॥ कौशिकंतसरीपट्टादि ॥ अंशुप
ट्टंवल्कलतंतुकृतंकुतपःपर्वतच्छागलोमकृतः ॥ इयंशुद्धिरधिको
पघाते ॥ अल्पेतुप्रोक्षणमेव ॥ एषांक्षालनेनविनाशएवस्यात् ॥ शुद्धे
श्चद्रव्याविनाशेनैवेष्टत्वात् ॥ अतएवदेवलः ॥ ऊर्णाकौशेयकुतपप
ट्टक्षौमदुकूलजाः ॥ अल्पशौचाभवंत्येतेशोषणप्रोक्षणादिभिः ॥तान्ये
वामेध्ययुक्तानिक्षालयेच्छोधनैःस्वकैः ॥ तूलिकाद्युपधानन्तुपुष्पर
क्तांवरंतथा ॥ शोषयित्वातपेकिंचित्करैःसंमार्जयेन्मुहुः ॥ पश्चाच्चवा
रिणाप्रोक्ष्यविनियुंजीतकर्मणि ॥ तान्यप्यातपक्लिष्टानियथावत्परिशो
धयेदिति ॥पुष्परक्तमितिप्रक्षालनासहंरागरक्तोपलक्षणम् ॥ अतश्चय
त्प्रक्षालनेनविनष्टरागंभवतितदातपशोषणादिनाशोध्यम् ॥यन्मंजिष्ठा
दिकंक्षालनेनविनश्यतितत्क्षालयेत् ॥ आपस्तंबोपि ॥ शुनोपह
तंचैलमवगाहेतप्रक्षाल्यवातद्देशमग्निनासंस्पृश्यपुनःप्रक्षाल्यपादौचा
चम्यप्रयतोभवति ॥ अत्रायंविवेकः॥ वस्त्रसहितस्यैवनाभेरूर्ध्वस्पर्शे
वगाहः ॥ अधस्ताच्चेत्प्रक्षालनमिति ॥ शंखलिखितौ ॥ अहतानांप्रो
क्षणमिति॥अहतानियंत्रादुत्तीर्णानि ॥ प्रचेताश्च ॥ चैलानामुपहताना
मुच्छेदनंगंधलेपापनयनंतन्मात्रोच्छेदनंवाननवानांवाससामभ्युक्षणं
चेति ॥ उच्छेदनंक्वाथनम्॥ शंखः ॥ शयनासनयानानांसंहतवच्छौच
मिति ॥ शयनादीनांसंहतशब्दवाच्यत्वात्संहतवद्राशीभूतद्रव्यवत्प्रो
क्षणेनशुद्धिरित्युक्तंभवति ॥ तदाहांगिराः ॥ शयनासनयानानिरोम
बंधानियानिच ॥ वस्त्राणितानिसर्वाणिसंहतानिप्रचक्षतइति ॥ ॥
मनुः ॥ चैलवच्चर्मणांशुद्धिर्वैदलनांतथैवच ॥ शाकमूलफलानांतु
धान्यवच्छुद्धिरिष्यतइति॥ स्मृत्यंतरेपि॥ पक्षपवित्रवच्चर्मचामरतृणवे
त्रवल्कलानांचचैलवच्छुद्धिरिति ॥अत्रपवित्रंदर्भस्तन्मयंतृणमिति॥

१ अन्यान्यप्यातिनष्टानि इ० पा० । २ वल्कलानामि पा० ।

तृणराजस्तालोभिधीयते॥ अतस्तत्पत्रादीनाम्॥ ॥इतिवस्त्रादिशुद्धिः ॥ ॥ अथदेहशुद्धिः॥तत्रमनुः ॥ ज्ञानंतपोऽग्निराहारोमृन्मनोवार्युपाञ्जनम्॥वायुःकर्मार्ककालौचशुद्धेःकर्तॄणिदेहिनाम्॥ सर्वेषामेवशौचानामर्थशौचंपरंस्मृतम्॥योऽर्थेशुचिर्हिसशुचिर्नमृद्वारिशुचिःशुचिः ॥क्षांत्याशुद्ध्यंतिविद्वांसोदानेनाकार्यकारिणः॥प्रच्छन्नपापाजाप्येनतपसावेदवित्तमाः ॥ मृत्तोयैःशुध्यतेशोध्यंनदीवेगेनशुद्ध्यति ॥ रजसास्त्रीमनोदुष्टासंन्यासेनद्विजोत्तमः ॥ अद्भिर्गात्राणिशुद्ध्यंतिमनःसत्येनशुद्ध्यति॥विद्यातपोभ्यांभूतात्माबुद्धिर्ज्ञानेनशुद्ध्यतीति ॥अथाशुद्ध्यपवादः॥तत्रबृहस्पतिः ॥पादौशुचीब्राह्मणानामजाश्वस्यमुखंशुचिः ॥ गवांपृष्ठानिमेध्यानिसर्वगात्राणियोषितामिति ॥अनुपहतब्राह्मणचरणस्पृष्टंशुद्धमित्यर्थः॥अतएवब्राह्मणव्यतिरिक्तचरणस्पर्शेदोषउक्तोभवति ॥तथाच ॥अयस्पात्रेचपक्वान्नंतव्द्यास्तंचतदेवयत्॥ भुक्तंपक्षादधोवर्त्मप्रदंस्नेहसृताहृते॥पयसासर्पिषावापिसिद्धमन्नादिकंचयत्॥ स्पृष्टमप्याहरेत्प्रोक्ष्यदुःस्पृष्टंचयथाफलम्॥फलंयथागर्हितंनभवतितथा॥स्मृतिचंद्रिकायांगौतमेनोक्तम् ॥ अदुष्टासंततधारावातोद्धूताश्चरेणवः ॥ स्त्रियोवृद्धाश्चबालाश्चनदुष्यंतिकदाचनेति ॥ बृहस्पतिरपि ॥ द्राक्षेक्षुयंत्रीकरकारुहस्तगोदोहनीयंत्रविनिःसृतानि ॥बालैरथस्त्रीभिरनुष्ठितानिप्रत्यक्षदृष्टानिशुचीनितानि ॥ यंत्रविनिःसृतानिद्राक्षेक्षुरसादीनि ॥ स्त्रीभिर्बालकैर्वारथ्याप्रसर्पणादिनाऽशुचिभिःकृतानिप्रत्यक्षतोज्ञातान्यपिस्पर्शपाकादीनिकर्माणिशुद्धानीत्यर्थः॥ मनुरपि ॥ नित्यंशुद्धःकारुहस्तःपण्यंयच्चप्रसारितम् ॥ ब्रह्मचारिगतंभैक्ष्यंनित्यंमेध्यमितिस्थितिः ॥ ब्रह्मचारिपदंभिक्षुकोपलक्षकंभिक्षुकहस्तस्थितंसिद्धान्नंरथ्योपसर्पणोपघातेनाशुद्धंनभवतीत्यर्थः ॥ तथासुमंतुगौतमौ ॥ तिलपिष्टंतथाक्षीरंपायसंदधिसक्तवः ॥ स्नेहपक्वंचतक्रंचशूद्रस्यापिनदुष्यति ॥तथाच॥अपूपाःसक्तवोधानास्तक्रंदधिघृतंपयः ॥

१ पात्रादीनामित्यपिपाठः।

एतत्पण्यागतंभोज्यंभांडलेपोनचेद्भवेदिति ॥ अत्रसक्तुपूपादीनांशु
चित्वेसत्यपि ॥ आपणीयान्यभक्ष्याणीतिशंखवचनात्सिद्धान्नानाम
भक्ष्यत्वम् ॥ शंखोपि ॥ नारीणांचैववत्सानांशकुनीनांशुनांमुखम् ॥
रतौप्रस्रवणेवृक्षेमृगयायांसदाशुचीति ॥ तथाच ॥ आकराः शुचयः
सर्वेशकुनिःफलपातने ॥ श्वामृगग्रहणेमेध्यःस्त्रीमुखेषुचवारुणी ॥
स्त्रीमुखेष्वितिपीतमद्यायाअपिब्राह्मणभार्यायाः शूद्रायाबुद्धिपूर्वकगं
धरसास्वादनवर्जितंमुखंरतिसंसर्गेशुद्धमेवेत्यर्थः ॥ आकराःसुराक
रव्यतिरिक्ताः ॥ तदाहपैठीनसिः ॥ आकरोद्धृतवस्तूनिनशुचीनिक
दाचन॥आकराःशुचयःसर्वेवर्जयित्वासुराकरमिति॥यमोपि ॥ उत्तती
क्रमुकंचैवकरीरमपराजिता ॥ आममांसंघृतंक्षौद्रंफलंचेक्षुरसोदधि ॥
आकरात्पत्रशाकंचसार्द्रंपाषाणचूर्णकम् ॥ अंत्यभांडस्थितादूष्यानि
ष्क्रांताःशुचयःस्मृताः ॥ गोरसंमधुमांसानिशाकमूलफलानिच ॥ अं
त्यभांडस्थितादूष्यानिष्क्रांताःशुचयःस्मृताः ॥अदूष्यंकांचनंगावः॥
स्त्रीमुखंकुतपंक्षुरम्॥नदूषयंतिविद्वांसोयज्ञेषुचमसंतथा॥मुखतोगौरमे
ध्यातुमेध्योजोमुखतस्तथा ॥ पृष्ठतोगौर्गजःस्कंधेसर्वतोऽश्वःशुचिस्त
थेति ॥ तथाच ॥ मक्षिकाविप्रुषश्छायागोरसःसूर्यरश्मयः ॥ रजोभूर्वा
युरग्निश्चस्पर्शेमेध्यानिनिर्दिशेत् ॥ अत्रमक्षिकाग्रहणमवर्जनीयस्पर्शा
नांदंशादीनामुपलक्षणार्थम्॥विप्रुषोऽविज्ञातजलकणाः ॥ छायारजश्च
निषिद्धव्यतिरिक्ते ॥ तथाच ॥ श्वभिर्हतस्ययन्मांसंशुचितन्मनुरब्रवी
त् ॥ क्रव्याद्भिश्चहतस्यान्यैश्चांडालाद्यैश्चदस्युभिरिति ॥ क्रव्यादः
श्येनादयः ॥ दस्यवोव्याधाः ॥ अत्रिरपि ॥ मधुपर्केचसोमेचअप्सुप्रा
णाहुतीषुच ॥ नोच्छिष्टस्यभवेद्दोषोह्यत्रेश्चवचनंयथेति ॥ अप्स्विति
भोजनान्तरममृतापिधानमसिइत्यनाग्निकरणार्थयाआपोगृह्यंतेतासु
मधुपर्कादिषुचमंत्रोच्चारणविषयेउच्छिष्टदोषोनास्तीत्यर्थः ॥षट्त्रिंश
न्मतेपि ॥ तांबूलेचफलेचैवभुक्तस्नेहावशिष्टके ॥ दंतलग्नस्यसंस्पर्शे

नोच्छिष्टःस्यात्कदाचनेति ॥ अद्भिःपत्रैर्मूलपुष्पैस्तृणकाष्ठमयैस्त था ॥ सुगंधिभिस्तथाद्रव्यैर्नोच्छिष्टस्तुभवेद्द्विजइति ॥ उच्छिष्टेन स्पृशेद्द्रव्यहस्तस्थद्रव्यंभूमावनिधायैवाचम्यशुध्यति॥तथाचमनुः ॥ उच्छिष्टेनचसंस्पृष्टोद्रव्यहस्तःकथंचन ॥ अनिधायैवतद्द्रव्यमाचां तःशुचितामियादिति ॥ अत्रउच्छिष्टेनेत्याचमनार्हेणप्रायश्चित्तेनयु क्तःपुरुषउच्यते ॥ द्रव्यंचभक्ष्यभोज्यादीनि ॥ अत्रमणिबंधपा णीप्रक्षाल्याचमनमित्युक्तत्वात् ॥ द्रव्यमाधायाचमनंसंभवतीतिम न्यमानाःकेचिदाहुःशरीरस्पर्शनमात्रंद्रव्यस्यविवक्षितम् ॥ अतो हस्तात्प्रदेशांतरेतुसंगादौतद्द्रव्यंगृहीत्वाचमेदिति ॥ अयमभिप्रायः॥ तथैवपुरुषाशौचादशुचिद्रव्यम् ॥ तथैवशौचसंबंधाद्धिभवतीति ॥ गौतमस्तुनिधायाचमेदित्याह ॥ तत्राविरोधइतिचेत् ॥ नागरीयो द्रव्यंनिधायाचामेदसदंगस्थकृत्वाचामेदितिव्यवस्थयात्वविरोधः ॥ याज्ञवल्क्योपि ॥ मुखजाविप्रुषोमेध्यास्तथाचमनबिंदवः ॥ श्म श्रुचास्यगतंदंतलग्नंत्यक्त्वाततःशुचिरिति ॥ अत्राचमनबिंदवइ तिपरेभ्यआचमनंददतःपुरुषस्यपादौस्पृशेयुर्येबिंदवस्तेआचमितुर्ह स्तोदकैःसमाज्ञेयास्तैरशुचिर्भवति ॥ अधोङ्गुलिविवरेभ्यःपत द्भिरुदकबिंदुभिर्भूम्यभिपातात्तैर्यदिस्पृशति तेन तद्यआचामयतःप रान्भौमिकैस्तेसमाज्ञेयानतैरप्रयतोभवेदिति ॥ अत्रापिपराना चामयतइत्युक्तत्वाद्यआचामयेत्तदन्येनसमीपस्थेनबिंदुसंसर्गोयत्नाद्र क्षितव्यः ॥ पादौस्पृशतइत्युक्तत्वाच्चआचमनदात्राऽपिपादव्यति रिक्तांगस्पर्शोयत्नाद्रक्षितव्यइत्यर्थः॥गौतमेनविशेषउक्तः॥नमुख्यावि प्रुषउच्छिष्टंकुर्वंतिनपतंतीति ॥ तथाच ॥ दाधिसर्प्पिःपयःक्षौद्रेभांड दोषोनविद्यते ॥ मार्ज्जारश्चैवदर्वीचमारुतश्चसदाशुचिरिति ॥ स्मृ त्यंतरेपि ॥ अजाश्वमुखतोमेध्यंगावोमेध्यामुखादृते ॥ मार्जारन कुलौस्पृष्टौशुभाश्चमृगपक्षिणइति ॥ मार्जारस्यशुचित्वंकर्मकालाद

न्यत्र॥तत्रतुस्नानविधानात् ॥ उपघातसंदेहेमनुः ॥ त्रीणिदेवाःप वित्राणिब्राह्मणानामकल्पयन् ॥ अदृष्टमद्भिर्निर्णिक्तंयच्चवाचाप्रश स्यतइति ॥ अदृष्टमिति ॥ अदृष्टस्योपघातस्यतत्कारणकाकादिस द्भावमात्रेणशंकानकार्य्या ॥ एवंमहानसादौव्याहरद्भिरकृतशौचशू द्रादिभिःपक्वंदृष्टंभोजनंनदुष्यति ॥ नपुनरियंमाशंकोत्तरकालेका र्या ॥ भोजनात्प्रागविज्ञातोपघातेनदोषइतिमेधातिथेरभिप्रायः ॥ पा रिजातोपि ॥ माक्षिकंचोदकंक्षीरंतक्रंचेक्षुरसंदधि ॥ आममांसंघृतं तैलंतैलंचफलसंभवम् ॥ शाकंचाकरपक्वंचतथासस्नेहमौषधम् ॥ पि ण्याकमुत्ततीचूर्णपूगंचैवजलान्वितम् ॥अंत्यभांडस्थितादूष्यानिष्क्रां ताःशुचयःस्मृताः ॥ विनोदकेनपचितंयदन्नंजातवेदसि ॥ तदन्नंफल वद्ग्राह्यंदुःस्पृष्टंतन्नदुष्यति ॥ इक्षुरापःफलंमूलंतांबूलंतिलमोष धम् ॥ भक्षयित्वापिकर्त्तव्याःस्नानदानादिकाःक्रियाः ॥ तंडुलास्त्व ग्निसंयोगात्पिष्टंलवणयोगतः ॥ पानीयमग्निसंयोगाद्घनःप्रोक्षणतःशु चिः ॥ आर्द्रकंसगुडंमद्यंसैक्षवंबदरंतथा ॥ नारिकेलांबुकांस्येच दध्नासंमिश्रितोगुडः ॥ क्षीरेचलवणंदत्तमुच्छिष्टेचतथाघृतम् ॥ स्नानं रजकतीर्थेचताम्रेगव्यंसुरासमम् ॥ दन्तोष्ठस्पर्शनान्मद्यंरोमभ्योनिः सृतंजलम् ॥ अतएवसदाकार्य्यंविद्वद्भिःश्मश्रुकर्त्तनम् ॥ यतीचब्रह्म चारीचनाचामेच्चर्मवारिणा ॥ गृहस्थोपिचनाचामेद्दैवेपित्र्येचकर्मणि॥ ॥ शंखः ॥ त्रिदिनंभस्ममृद्वारित्र्यहंत्रिफलमेवच ॥ सप्ताहंसप्तकाषायै श्चर्मशुद्धिःपरास्मृता ॥ तथाचसुमंतुः ॥ नाद्याच्छूद्रस्यपक्वान्नंविद्वा न्नाश्राद्धिनोद्विजः ॥ आददीतामभेवास्मादवृत्तावेकरात्रिकम् ॥ अ श्राद्धीनित्यश्राद्धहीनः ॥ एकरात्रिकमेकरात्रपर्याप्तम् ॥ ॥पक्वान्नेष्व पिविशेषमाहतुःसुमंत्वंगिरसौ ॥ गोरसंचैवसक्तूंश्चतैलपिण्याकमेवच॥ अपूपान् भक्षयेच्छूद्राद्यच्चान्यत्पयसाकृतम्॥हारीतः॥ कंदुपक्वंस्नेहप क्वंपायसंदधिसक्तवः ॥ एतान्यपिचशूद्रान्नभोज्यानिमनुरब्रवीत् ॥

एवंयानिशूद्रान्ननिषेधकानिवचनानितानिपरिगणितशूद्रपक्वान्नव्यति रिक्तविषयाणि ॥ यानिचदासादिलक्षणानिपराशरस्मृत्यभिहिता नितानिचनशूद्राभिप्रायेण ॥ परस्परविरोधात् ॥ तल्लक्षणानिच॥शूद्र कन्यासमुत्पन्नोब्राह्मणेनतुसंस्कृतः॥संस्कारेणभवेद्दासस्त्वअसंस्कारे तुनापितः ॥ क्षत्रियाच्छूद्रकन्यायांसुतोजातःसुसंस्कृतः ॥ गोपाल स्तुसविज्ञेयोभोज्योविप्रैर्नसंशयः ॥ वैश्यकन्यासमुत्पन्नोब्राह्मणे नतुसंस्कृतः ॥ कुलमित्रातिथिर्ज्ञेयोभोज्योविप्रैर्नसंशयः ॥ क्षत्र कन्यासमुत्पन्नोब्राह्मणेनतुसंस्कृतः ॥ तदधिकस्तुविज्ञेयोभोज्यो विप्रैर्नसंशयः ॥ गोपालस्यक्षत्रियोजनकःअन्येषांतुब्राह्मणः॥किंचएते षांमूर्द्धावसिक्तजात्यंतःपातित्वान्नशूद्रत्वम् ॥ किंचात्मनिवेदकस्यकुं भकारादेश्चकेवलशूद्रत्वात्तन्मायेनेतरेषामपिशूद्रत्वमेवयुक्तम् ॥ ॥ इ तिभोज्याभोज्यनिर्णयः॥ ॥ शूद्रान्नस्यनिषेधविशेषमुक्त्वाप्रसंगात्क लिनिषिद्धाःकथ्यंते ॥ समुद्रयात्रास्वीकारः कमंडलुविधारणम् ॥ द्विजानामसवर्णाभ्यः कन्योपयमनंतथा ॥ देवरेणसुतोत्पत्तिर्मधुपर्के पशोर्वधः ॥ मांसादनंतथाश्राद्धेवानप्रस्थाश्रमंतथा ॥ दत्ताऽक्षतायाः कन्यायाःपुनर्दानंपरस्यच ॥ दीर्घकालंब्रह्मचर्य्यंनरमेधाश्वमेधकौ ॥ महाप्रस्थानगमनंगोमेधंचतथामखम् ॥ एतान्धर्मान्कलियुगेवर्ज्या नाहुर्मनीषिणः ॥ तथाच ॥ अग्निहोत्रंगवालंभंसंन्यासंपलपैतृकम् ॥ देवराच्चसुतोत्पत्तिंकलौपंचविवर्जयेदिति ॥ कलावन्यान्यपिनिषिद्धा निनिरूप्यन्ते ॥ युगधर्माःपरिग्राह्याःसर्ववर्णैर्यथोचिताः ॥ ग्रामा चाराःपरिग्राह्याःश्रुतिस्मृत्यविरोधिनः ॥ देशाचाराःपरिग्राह्यास्तत्तद्दे शीयकैर्जनैः ॥ अन्यथापतितोज्ञेयःसर्वधर्मबहिष्कृतः ॥ कुलाचाराः परिग्राह्याःश्रुतिस्मृत्यविरोधिनः ॥ श्रुतिस्मृतिविरोधेनधर्माभासानयं त्यधः ॥ युगधर्माह्यनुष्ठेयायुगेयस्मिन्यथास्थिताः ॥ श्रुतिमूला पिनग्राह्याह्यस्वर्ग्यादेशदूषिताः ॥ लौगाक्षिः ॥ श्रौतःश्रेष्ठतमोधर्मः

स्मार्त्तःश्रेष्ठतरःस्मृतः ॥ पौराणिकःश्रेष्ठएवह्यागमीयोजघन्यकः ॥ श्रुतिस्मृत्यविरोधेनकौल्यदेशीयकावपि॥धर्मौमान्यावनूचानैर्ह्यन्यथा निरयप्रदौ ॥ कुलदेशीयकौधर्मौलौकिकंग्राम्यमप्युत ॥ आददी तगृहस्थस्तान्यदिशास्त्राविरोधिनः ॥ नशास्त्रदृष्टयाविदुषाकदा चिदुल्लंघनीयाःकुलदेशधर्माः॥ मूलंहितेषांच्युतवेदशाखामहानधर्मः स्थितिभंगदोषः ॥ वेदविरोधेनकिंचिन्नाचरणीयम् ॥ तत्राहमनुः ॥ श्रुतिस्तुवेदोविज्ञेयोधर्मशास्त्रंतुवैस्मृतिः॥तेसर्वार्थेष्वमीमांस्येताभ्यां धर्मोहिनिर्बभौ ॥ पैंग्यः ॥ वेदोक्तमपियत्कर्मवेदाप्रामाण्यवादिनि ॥ शारीरशोकपूर्त्त्यादिकंहिंचिन्नफलप्रदम् ॥ सर्वकर्मवेदनिर्णीतंकार्य मितितात्पर्य्यम् ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृते द्रव्यशुद्धिप्रकरणंतृतीयंसम्पूर्णम् ॥ श्रीसूर्यसेनभू०इतिनिर्णयामृते स्मिन्संपूर्णाद्रव्यशुद्धिरियम् ॥ १ ॥ श्रीमत्पंडित० ॥ २ ॥ ॥ इदानी माशौचप्रकरणमारभ्यते ॥ कालःस्नानाद्यपनोद्यःपिंडोदकदानादिवि धेरध्ययनादिपर्युदासस्यच निमित्तभूतःपुरुषगतःकश्चनातिशयःक थ्यतेनपुनःकर्मानधिकारमात्रमित्याशौचलक्षणंमिताक्षरायामुक्तम् ॥ तच्चाशौचंद्विविधम् ॥ सूतकंमृतकंचेति ॥ जनननिमित्तंसूत कम् ॥ मरणनिमित्तंमृतकम् ॥ तत्रादौजनननिमित्तमाशौचमु च्यते ॥ तच्चस्रावपातप्रसवरूपभेदात्त्रिविधम् ॥ तत्रगर्भधारणान्मास चतुष्टयाभ्यंतरेगर्भच्युतिःस्रावः ॥ पंचमषष्ठयोःपातः ॥ सप्तमादिषु प्रसवः ॥ तदुक्तंस्मृत्यंतरे ॥ आचतुर्थाद्भवेत्स्रावःपातःपंचमषष्ठ योः ॥ अतऊर्द्ध्वंप्रसूतिःस्याद्दशाहंसूतकंभवेदिति ॥ तत्रमासत्रया दर्वाग्गर्भस्रावेमातुस्त्रिरात्रमाशौचंनपित्रादीनाम् ॥ पितुःस्नानादेव शुद्धिः ॥ स्नानमात्रमेवपुरुषस्येतिवृद्धवसिष्ठस्मरणात् ॥ पातेतु मातुर्गर्भमाससंख्याहान्याशौचंपितुस्त्रिरात्रंसपिंडानांच ॥ तदाहम रीचिः॥ स्रावेमातुस्त्रिरात्रंस्यात्सपिंडाशौचवर्जनम् ॥ पातेमातुर्य

थामासंपित्रादीनांदिनत्रयमिति ॥ गोभिलोपि ॥ संस्रावेगर्भस्यत्र्यहं
वेति॥याज्ञवल्क्योपि ॥ गर्भस्रावेमासतुल्यानिशाःशुद्धेस्तुकारणम् ॥
अत्रस्रावःपतनम् ॥ यत्तुयमवचनम् ॥ अजातदंतेतनयेमृतेगर्भच्युते
तथा ॥ सपिंडानांतुसर्वेषामेकरात्रमशौचकमिति ॥ एतच्चगुणव
त्पित्रादिविषयम् ॥ सद्यःशौचंसपिंडानामितिपुराणवचनंमासचतु
ष्टयाभ्यंतरेद्रवरूपगर्भस्यपतनेवेदितव्यम् ॥ इदंगर्भस्रावाशौचंस
र्ववर्णसाधारणम् ॥ यत्तुमरीचिवचनम् ॥ गर्भस्रावेयथामासमचि
रेतूत्तमेत्रयः ॥ राजन्येतुचतूरात्रंवैश्येपंचाहमेवतु ॥ अष्टाहेनतु
शूद्रस्यशुद्धिरेषाप्रकीर्तितेति ॥ उत्तमेब्राह्मणे ॥ अचिरेमासत्रयाभ्यंत
रेगर्भस्रावे ॥ अत्रराजन्येतुचतूरात्रमित्याद्यविवक्षितार्थत्वंचात्रराज
न्यादीनामधिकाशौचनिपातेपितथाभाव्यम् ॥ तच्चनास्ति ॥ पाते
मातुर्यथामासमितितेनैवाभिहितस्ववचनविरोधःस्यात् ॥ ननुपा
तशौचंसर्ववर्णसाधारणमेवस्रावाशौचेविशेषोस्तुकोविरोधइतिचेत् ॥
अत्रोच्यते ॥ एवंसतिशूद्रस्यस्रावेअष्टाहेनशुद्धिरुक्ता ॥ पंचममासिग
र्भपातेगर्भतुल्यानिशाइतिपंचमाहाशौचंभवेदतश्चपाताशौचाधिक्यं
प्रसज्येत ॥ अतश्चराजन्येचतूरात्रमित्यादिवाक्यशेषस्याविवक्षिता
र्थत्वमेवांगीकर्त्तव्यम् ॥ अथवा ॥ गुणवदगुणवद्विषयत्वेनापदना
पद्विषयत्वेवान्यूनाधिककालकल्पनाव्यवस्थापनीयेति ॥ इदंपारि
जातकाराणांमतम् ॥ वयंत्वेवंमन्यामहे ॥ अचिरेतूत्तमेत्रयइतिब्रा
ह्मणविषयेमासत्रयाभ्यंतरेगर्भस्रावेदिनत्रयमाशौचमुक्त्वातत्प्रसंगादा
त्मानंघातयेद्यस्तुभृग्वग्न्यनशनांबुभिः॥तस्यत्रिरात्रमाशौचमित्यादि
विषये यत्रब्राह्मणस्यत्रिरात्राशौचंतत्रक्षत्रियादेश्चतूरात्रादिकमितिवा
क्यशेषेणपरिभाष्यते ॥ इयंपरिभाषगर्भस्रावेपिमाप्रसांक्षीदिति ॥
स्रावेमातुस्त्रिरात्रंस्यादितिमरीचेरेववाक्यांतरप्रारंभः ॥ अन्यथा
पुनरुक्तत्वेनव्यर्थत्वाद्वाक्यांतरमनारंभणीयमेवस्यात् ॥ ऋष्यशृंगे

णाप्येवमेवपरिभाषाकृता ॥ यत्रत्रिरात्रंविप्राणामाशौचंसंप्रदृश्यते ॥ तत्रशूद्रेद्वादशाहंषण्णवक्षत्रवैश्ययोरिति ॥ अत्रक्षत्रियादीनांषण्णव द्वादशाहमुक्तम् ॥ तदनापद्विषयमगुणविषयंवा ॥ मरीचिनातुच तुःपंचाष्टाहमुक्तंतद्गुणवद्विषयमापद्विषयंवावेदितव्यमिति ॥ सप्त ममासप्रभृतिप्रसवरूपत्वाद्द्वादशाहादिकं यथावर्णमाशौचंसंपूर्णंकार्य म् ॥ जननाशौचेजनननिमित्तमस्पृश्यत्वंमातुर्दशाहादि कम् ॥ पितुःसचैलस्नानात्स्पृश्यत्वम् ॥ तथाचसंवर्तः ॥ जा तेपुत्रेपितुःस्नानंसचैलंतुविधीयते ॥ माताशुध्येद्दशाहेनस्नानात्तु स्पर्शनंपितुरिति ॥ सपिंडानांजनननिमित्तमस्पृश्यत्वंनास्त्येव ॥ तदाहांगिराः ॥ सूतकेसूतिकावर्जंसंस्पर्शोननिषिध्यतइति ॥ सूतिकायाःपित्र्यादिकार्येषुपैठीनसिनाविशेषउक्तः ॥ सूतिकां पुत्रवतींविंशतिरात्रेणकर्माणिकारयेत् ॥ मासेनस्त्रीजननीमिति ॥ जननाशौचेप्रथमषष्ठदशमदिवसेषुदानप्रतिग्रहाधिकारोस्ति ॥ तदा हव्यासः ॥ सूतिकावासनिलयाजन्मदानामदेवताः ॥ तासांयाग निमित्तंतुशुद्धिर्जन्मनिकीर्तिता ॥ प्रथमेदिवसेषष्ठेदशमेचैवसर्वदा ॥ त्रिष्वेतेषुनकुर्वीतसूतकंपुत्रजन्मनीति ॥ वृद्धयाज्ञवल्क्योपि॥ तत्रसर्वं प्रतिग्राह्यंकृतान्नंतुनभक्षयेत् ॥ भक्षयित्वातुतन्मोहाद्द्विजश्चांद्रायणं चरेदिति ॥ मार्कंडेयोपि ॥ रक्षणीयातथाषष्ठीनिशातत्रविशेषतः ॥ रात्रौजागरणंकार्यंजन्मदानांतथाबलिः ॥ पुरुषाःशस्त्रहस्ताश्चनृत्यगी तैश्चयोषितः ॥ रात्रौजागरणंकुर्यादशाहंचैवसूतकमिति ॥ ॥ इतिज ननाशौचनिर्णयः ॥ ॥ अथमृताशौचमुच्यते ॥ ॥ तत्रमृतजाते जातस्यनाभिच्छेदादूर्ध्वंमरणेचसपिंडानांमरणनिमित्तेसद्यःशुद्धिः ॥ जनननिमित्ताशौचंसर्वेषांसंपूर्णम् ॥ तदुक्तंस्मृत्यंतरे ॥ नाभिच्छेदा दूर्ध्वंशिशुमरणेनिष्प्राणनिर्गमनेचजनननिमित्ताशौचंकृत्स्नं यथावर्णंस र्वेषांसपिंडानामस्त्येव॥मरणनिमित्तेसद्यःशुद्धिरिति ॥पारस्करोपि ॥

गर्भेयदिविपत्तिःस्याद्दशाहंसूतकंभवेदिति॥तदपिजनननिमित्तमेव॥ सपिंडानांप्रसवनिमित्तस्यविद्यमानत्वादितिमिताक्षरायाम् ॥ बृहन्म नुरपि ॥ दशाहाभ्यांतरेबालेप्रमीतेतस्यबांधवैः ॥ शावाशौचंनक र्त्तव्यंसूत्याशौचंविधीयतइति ॥ अत्रसर्वत्रदशाहपदंद्वादशाहाद्युपल क्षणम् ॥ तदुक्तंस्मृत्यंतरे ॥ अंतर्दशाहोपरतस्यसूतकाहोभिरेवा शौचमिति ॥ हारीतोपि ॥ जातमृतेमृतजातेवासपिंडानांदशाहमा शौचमिति ॥ अत्रजातमृतइतिनाभिच्छेदादूर्ध्वंमृते ॥ तदाहजैमि निः ॥ यावन्नच्छिद्यतेनालंतावन्नाप्नोतिसूतकम् ॥ छिन्नेनालेततःपश्चा त्सूतकंतुविधीयतइति ॥ यत्तुबृहस्पतिवचनम् ॥ जातेमृतेमृतजाते कुलस्यसद्यःशौचमिति ॥ इदंमरणनिमित्ताशौचविषयम् ॥नाभिच्छे दात्पूर्वंशिशुमरणेपित्रादीनांजनननिमित्ताशौचंत्रिरात्रम् ॥ मातुःसंपू र्णम् ॥ मरणनिमित्तेसद्यःशुद्धिः ॥ तदाहबृहन्मनुः ॥ जीवञ्जातोयदि ततोमृतःसूतकमेवतु ॥ सूतकंसकलंमातुःपित्रादीनांत्रिरात्रकमिति॥ ततस्तदनंतरमेवनाभिच्छेदात्पूर्वमित्यर्थः ॥यत्तुस्मृत्यंतरे॥ जीवञ्जा तोयदिप्रेयात्सद्यएवविशुध्यतीति ॥ तत्प्रेताशौचाभिप्रायम् ॥ अत्रा प्यग्निहोत्रार्थंस्नानोपस्पर्शनात्सद्यःशौचमिति ॥ नामकरणात्प्राङ्म रणेसद्यःशौचमेव ॥ तदाहशंखः ॥ प्राङ्नामकरणात्सद्यःशुद्धिरिति ॥ सद्यइतिमातापितृव्यतिरिक्तविषयम् ॥ तयोस्तुत्रिरात्रम् ॥ तदाहक श्यपः ॥ बालानामजातदंतानांत्रिरात्रेणशुद्धिरिति ॥ तथा ॥ बैजि कादपिसंबंधादनुरुंध्यादघंत्र्यहमिति ॥ निर्णयमाधवीयेपि॥ मातापि त्रोस्त्रिरात्रंस्यादितरेषांयथाविधीति ॥ मातापित्रोरुपनयनपर्यंतंत्रिरा त्रमेव ॥ स्मृत्यर्णवे ॥ शावाद्यंद्विविधंप्रोक्तंत्रिनिशंदशरात्रिकम् ॥ द्वैधंशावंसुसंकोच्यचरेद्वृद्धःशुभंमतम् ॥ सपिंडानांतुनामकरणानंत रमग्निदानादिसंस्कारेकृतएकरात्रम्॥ अकृतेसद्यःशुद्धिः ॥ तदुक्तंस्मृ त्यंतरे ॥ अदंतजातेतनयेशिशौगर्भच्युतेतथा ॥ सपिंडानांतुसर्वेषा

मेकरात्रमशौचकमिति ॥ याज्ञवल्क्योपि ॥ आदन्तजननात्सद्यआ चूडान्नैशिकीस्मृता ॥ त्रिरात्रमाव्रतादेशाद्दशरात्रमतःपरमिति ॥ नामकरणादूर्ध्वमग्निदाहादिकमपिविकल्पेनकुर्यात् ॥ तदाहमनुः ॥ नात्रिवर्षस्यकर्तव्याबांधवैरुदकक्रिया ॥ जातदंतस्यवाकुर्यान्नाम्निवापिकृतेसतीति ॥ अत्रोदकक्रियायाअग्निदानपूर्वकत्वाद्ग्निदानस्याप्युपलक्षणम् ॥ सचसंस्कारस्तूष्णीमेव ॥ तदाहलौगाक्षिः ॥ तूष्णीमेवोदकंकुर्यात्तूष्णींसंस्कारमेवचेति॥संस्काराकरणपक्षेनिखननमेव॥ तदुक्तम् ॥ ऊनद्विवार्षिकंप्रेतंघृताक्तंनिखनेद्भुवि ॥ यमगाथांगायमानोयमसूक्तमनुस्मरन्निति ॥ प्रथमवर्षेअकृतचूडस्याजातदंतस्याप्यग्निसंस्कारेसत्यप्यहोरात्रम् ॥ तदाहविष्णुः ॥ तदाजातेप्यकृतचूडेप्यहोरात्रेणशुद्धिरिति ॥ प्रथमवर्षेकृतचूडस्यचूडाकरणानंतरमग्निसंस्कारस्यावश्यकत्वात्त्रिरात्रमेव ॥ ऊनद्विवर्षेप्रेतेगर्भपतनेवासपिंडानांत्रिरात्रमेवेतिवसिष्ठस्मरणात् ॥ वर्षत्रयादूर्ध्वमकृतचूडस्याप्यग्निसंस्कारानियतत्वात्त्रिरात्रमाशौचम् ॥ नात्रिवर्षस्यकर्तव्याबांधवैरुदकक्रियेतिमनुनान्यूनत्रिवर्षस्यसंस्कारनिषेधेनत्रिवर्षादूर्ध्वमभ्यनुज्ञानात् ॥ अकृतचूडानांकन्यानांमरणेसद्यःशुद्धिः ॥ ॥ तदाहापस्तंबः ॥ अकृतचूडानांकन्यानांमरणेसद्यःशुद्धिरिति ॥ कृतचूडानामपिवाग्दानात्पूर्वमेकाहेनशुद्धिः॥ ॥तदाहयाज्ञवल्क्यः॥ अहस्त्वदत्तकन्यासुबालेषुचविशोधनमिति ॥ अदत्तेवाग्दानरहितकन्यानामाशौचविषयेत्रिपुरुषमेवसापिंड्यम् ॥ ॥ तदाहवसिष्ठः ॥ अदत्तानांतुस्त्रीणांत्रिपुरुषीविज्ञायतइति ॥ वाग्दानादूर्ध्वंविवाहसंस्कारात्पूर्वंपितृकुलेपतिकुलेचत्रिरात्रमाशौचम् ॥ तदाहमरीचिः ॥वारिपूर्वंप्रदत्तानावाचैवप्रतिपादिता ॥ असंस्कृतातुसाज्ञेयात्रिरात्रमुभयोःसममिति ॥ याकेवलंवाचैवप्रतिपादितावाग्दत्ता वारिपूर्वंनैवप्रदत्तेत्यन्वयः ॥ उभयोःपितृपतिपक्षयोरित्यर्थः ॥ विवाहानंतरमाशौचेविष्णुना विशेषउक्तः ॥ संस्कृतासुस्त्रीषुनाशौचंपितृपक्षे ॥ तत्प्रसवमरणेचपि

तृगृहेस्यातां तदैकरात्रंत्रिरात्रंचेति ॥ एकरात्रंप्रसवेत्रिरात्रंमरण इत्यर्थः ॥ इदंचवयोवस्थाकृतमाशौचंसर्ववर्णसाधारणम् ॥ तदाहांगिराः ॥ अविशेषेणवर्णानामर्वाक्संस्कारकर्मणः ॥ त्रिरात्रात्तुभवेच्छुद्धिःकन्यास्वह्नाविधीयतइति ॥ ऋष्यशृंगोपि ॥ अविशेषेणसर्वेषांवर्णानामनुपूर्वशः ॥ त्रिरात्रात्तुभवेच्छुद्धिरर्वाक्संस्कारकर्मणइति ॥ ॥ इतिवयोवस्थाकृताशौचम् ॥ ॥ अथकृतसंस्काराणांवर्णविशेषेणाशौचविशेषउच्यते ॥ तत्रविप्रस्यमौंजीबंधनानंतरंमरणपर्यन्तंसंपूर्णाशौचम् ॥ क्षत्रियस्यधनुर्ग्रहणानंतरम् ॥ वैश्यस्यप्रतोदग्रहणानंतरम् ॥ शूद्रस्यवस्त्रद्वयग्रहणानंतरम् ॥ तदाहहारीतः ॥ आमौंजीबंधनाद्विप्रः क्षत्रियश्चधनुर्ग्रहात् ॥ आप्रतोदग्रहाद्वैश्यःशूद्रोवस्त्रद्वयग्रहात् ॥मौंजीबंधनाद्यनंतरंमृतौब्राह्मणादीनांस्वस्ववर्णोक्तसंपूर्णाशौचनिमित्तंभवतीत्यर्थः॥ अतश्चब्राह्मणादीनांमौंजीबंधनाद्यनन्तरंदाहपिंडोदकदानादिसंस्काराः ॥ संपूर्णाशौचंचकर्तव्यम् ॥ मृतविप्रंपश्चिमेनपुरद्वारेणनिर्हरेत् ॥ क्षत्रियमुत्तरेण ॥ वैश्यंपूर्वेण ॥ शूद्रंदक्षिणेन ॥ तदाह मनुः ॥ दक्षिणेनमृतंशूद्रंपुरद्वारेणनिर्हरेत्॥पश्चिमोत्तरपूर्वैस्तुयथायोगंद्विजन्मनामिति ॥ दाहादिकंकर्मपुत्रादिभिःकार्यम् ॥ तदुक्तं स्मृतिसंग्रहे ॥ पुत्रःपौत्रश्चतत्पुत्रःपुत्रिकापुत्रएवचेति ॥ अत्रपुत्रशब्देनद्वादशविधापुत्राउच्यन्ते ॥ तेचयाज्ञवल्क्येनोक्ताः ॥ औरसोधर्मपत्नीजस्तत्समःपुत्रिकासुतः ॥ क्षेत्रजःक्षेत्रजातस्तुसगोत्रेणेतरेणवा ॥ गृहेप्रच्छन्नउत्पन्नोगूढजस्तुसुतःस्मृतः ॥ कानीनःकन्यकाजातोमातामहसुतःस्मृतः॥अक्षतायांक्षतायांवाजातः पौनर्भवःस्मृतः ॥ दद्यान्मातापितावायंसपुत्रोदत्तकोभवेत् ॥ क्रीतश्चताभ्यांविक्रीतःकृत्रिमःस्यात्स्वयंकृतः॥दत्तात्मातुस्वयंदत्तोगर्भेविन्नः सहोढजः ॥ उत्सृष्टोगृह्यतेयस्तुसोपविद्धोभवेत्सुतः॥ पिंडदोंशहरश्चैषांपूर्वाभावेपरःपरः ॥ सजातीयेष्वयंप्रोक्तस्तनयेषुमयाविधिरिति॥ सवर्धमविवाहोढातस्यांजातऔरसोमुख्यः ॥ तथा ॥ आसुरादि

विवाहोढास्वानुलोमविवाहोढास्वसवर्णास्वपिजातऔरसस्तत्समश्च
ब्दवाच्यः ॥ अत्राप्ययंक्रमःकालादर्शेप्रोक्तः ॥ यथा ॥ मातापित्रो
रौर्ध्वदैहिकमौरसःपुत्रःकुर्यात्तदभावेपौत्रस्तदभावेप्रपौत्रस्तदभावेपु
त्रिकापुत्रः ॥ पुत्रिकापुत्रइत्यत्रद्वेधाविग्रहः ॥ पुत्रिकायाःपुत्रइत्येकः ॥
॥ यथा ॥ अभ्रातृकांप्रदास्यामितुभ्यंकन्यामलंकृताम् ॥ अस्यांयो
जायतेपुत्रःसमेपुत्रोभवेदिति॥पुत्रिकैवपुत्रइत्यपरः॥तदभावेक्षेत्रजस्त
दभावेदत्तकस्तदभावेविक्रीतः॥तदभावेकृत्रिमस्तदभावेअपविद्धः ॥
तदभावेपत्नी ॥ पत्न्यभावेगूढजः ॥ तदभावेकानीनः ॥ तदभावेपौ
नर्भवः ॥ तदभावेसहोढजः ॥ यत्तुशंखवचनम् ॥ पुत्राभावेतुपत्नी
स्यात्तदभावेतुसोदरइति ॥ तत्तुकानीनादिपुत्रचतुष्टयव्यतिरिक्तपुत्रा
भावविषयम्॥ कानीनादीनांचतुर्णांपत्न्यभावेधिकारस्यस्मृतिसंग्रहो
क्तत्वात् ॥ यथा ॥ कानीनगूढसहजाःपुनर्भूतनयाश्चये ॥ पत्न्यभावेधि
कुर्युस्तेअप्रशस्तेमृताइति ॥ तदभावेधनहारीदौहित्रः॥ तदभावेसहो
दरोभ्राता ॥ तदभावेतत्सुतः ॥ तदभावेमाता॥ तदभावेपिता ॥ तद
भावेस्नुषा ॥ तदभावेसोदराभगिनी ॥ तदभावेतत्पुत्रः॥तदभावेअसो
दराभगिनी॥तदभावेतत्पुत्रः॥तदभावेसपिंडः॥तदभावेसोदकः ॥तद
भावेमातुःसपिंडः ॥ तदभावेशिष्यः ॥ तदभावेऋत्विक् ॥ तदभावे
आचार्य उपनीयसाङ्गवेदाध्यापयिता ॥ तदभावेनृपतिः प्रेतजाती
येनपुरुषेणप्रेतद्रव्यंदत्त्वाकारयेदिति ॥तत्रवाक्यानि॥ तदाहसुमंतुः॥
मातुःपितुश्चकुर्वीतमृतयोरौरसःसुतः ॥पैतृमेधिकसंस्कारंमंत्रपूर्वकमा
हृतइति ॥ स्मृतिसंग्रहे ॥ पुत्रःपौत्रश्चतत्पुत्रःपुत्रिकापुत्रएवचेति ॥
तथाच॥पुत्रःकुर्यात्पितुःश्राद्धंपत्नीचतदसन्निधौ॥ धनहार्यथदौहित्रस्त
तोभ्राताचतत्सुतइति ॥ तथा ॥ भ्रातुःसहोदरोभ्राताकुर्याद्दाहादित
त्सुतः ॥ ततस्त्वसोदरोभ्रातातदभावेतुतत्सुतइति॥तथा ॥ उच्छिन्न
बांधवंप्रेतंपिताभ्राताततथाग्रजः ॥ जननीवापिसंस्कुर्यान्महदेनोन्यथाभ
वेदिति ॥ ननु ॥ नचमातानचापिताकुर्यात्पुत्रस्यपैतृकम् ॥ नाग्रजश्च

तथाभ्राताभ्रातॄणांचकनीयसामित्यादिवाक्यैर्मातापित्रोःपुत्रस्यौर्ध्वदैहिकानिषेधात्तयोःकथमधिकारइतिचेन्न ॥ निषेधस्यपुत्राद्यधिकारिसद्भावविषयत्वंस्नेहविहीनाविषयत्वंवा ॥ तदाहबौधायनः ॥ यदिस्नेहेन कुर्यातांसपिंडीकरणंविना ॥ गयायांतुविशेषेणज्यायानपिसमाचरेदिति ॥ कुर्यातांमातापितरावितिशेषः॥कात्यायनोपि ॥ अनुजोह्यग्रजोवापिभ्रातुःकुर्वीतसंस्क्रियाम् ॥ ततस्त्वसोदरस्तद्वत्क्रमेणतनयस्तयोरिति ॥ स्मृतिसंग्रहेपि॥पत्नीभ्रातुाचतज्जश्चपितामातास्नुषातथा ॥ भगिनीभागिनेयश्चसपिंडःसोदकस्तथा॥ असन्निधानेपूर्वेषामुत्तरेपिंडदाःस्मृताः ॥ मार्कण्डेयपुराणेपि ॥ सख्युरुच्छिन्नबंधोश्चसखापिश्वशुरस्यच ॥ जामातास्नेहतःकुर्यादखिलंपैतृमेधिकमिति ॥ सर्वाभावेतुनृपतिःकारयेत्तस्यरिक्थतः॥ तज्जातीयैर्नरैःसम्यग्दाहाद्याःसकलाःक्रियाः ॥ सर्वेषामेववर्णानांबांधवोनृपतिर्यतइति ॥ स्कंदपुराणेपि ॥ सर्वाभावेस्त्रियःकुर्युःस्वभर्तॄणाममंत्रकमिति ॥ अत्रस्त्रियइतिपत्नीव्यतिरिक्ताः ॥ पत्नीतुधर्मविवाहोढैव ॥ नासुरादिविवाहोढासातुस्त्रीमात्रमेव ॥ तदाहशातातपः ॥ धर्मैर्विवाहैरूढायासापत्नीपरिकीर्तिता॥सहाधिकारिणीह्येषायज्ञादौधर्मकर्मणीति ॥ क्रयक्रीतातुयानारीनसापत्न्यभिधीयते ॥ नसादैवेनपित्र्येस्यादासींतांमुनयोविदुरिति ॥ गौतमोपि ॥ पुत्राभावेसपिंडामातृसपिंडाःशिष्याश्चदद्युस्तदभावेऋत्विगाचार्याविति ॥ विष्णुपुराणेविशेषउक्तः ॥ पूर्वाःक्रियामध्यमाश्चतथैवोत्तरतःक्रियाः ॥ त्रिप्रकाराःक्रियाह्येतास्तासांभेदंशृणुष्वमे ॥अह्नांदशानांमध्येतुयादाहाद्याःक्रियाःस्मृताः॥ पूर्वामध्यमिकाःप्रोक्तायात्वेकोद्दिष्टसंज्ञिताः ॥ प्रेतेपितृत्वमापन्नेसपिंडीकरणादनु॥क्रियंतेयाःक्रियाःपित्र्याः प्रोच्यंतेतानृपोत्तराः ॥ पितृमातृसपिंडैस्तुसमानसलिलैस्तथा ॥ तत्संघातगतैर्वापिराज्ञावाधनहारिणा ॥ आद्यादयःक्रियाःकार्याःपुत्राद्यैरेवचोत्तराः ॥ दौहित्रैर्वानरश्रेष्ठकार्यास्तत्तनयैस्तथेति ॥ अपुत्रायाःस्त्रियाःसपत्नीपुत्रःपतिर्वाऔर्ध्वदैहिकंकुर्यात्॥

तदाहमनुः ॥ बहूनामेकपत्नीनामेकाचेत्पुत्रिणीभवेत् ॥ सर्वास्ता स्तेनपुत्रेणप्राहपुत्रवतीर्मनुरिति ॥ कात्यायनोपि ॥ विदध्यादौरसः पुत्रोजनन्याऔर्ध्वदेहिकम् ॥ तदभावेसपत्नीजःक्षेत्रजाद्यास्तथासुताः ॥ तथासुतास्तेनप्रकारेणऔरसवदेवेत्यर्थः ॥ तेषामभावेतुपतिस्तद भावेसपिंडकइति ॥ शंखोपि ॥ भार्यापिंडंपतिर्दद्याद्भर्त्रेभार्यातथैव च ॥ श्वश्र्वादेस्तुस्नुषाचैवतदभावेतुसोदरइति ॥ सपत्नीवाकुर्यात् ॥ तदुक्तंस्मृत्यर्थसारे ॥ पुत्राभावेमिथोदंपतीसपत्न्यश्चेति ॥ अत्र सर्वत्राभावशब्देनासन्निधानमप्युच्यते ॥ असन्निधानंविनाशेनदे शांतरस्थित्याचभवति ॥ अन्यथापुत्रादावधिकारिणिदेशांतरस्थितेस तिमृतस्यदाहादिकर्मणोलोपएवस्यात् ॥ तथासति ॥ असगोत्रःस गोत्रोवायदिस्त्रीयदिवापुमान् ॥ प्रथमेहनियोदद्यात्सदशाहंसमापयेदि तिवचनमप्यनुपपन्नमेवस्यात् ॥ अतश्चाभावशब्दोसन्निधानवचनएवां गीकार्यः ॥ अनुपनीतोपिपुत्रःकृतचूडश्चपितुरग्निदानंसमंत्रकंकृत्वोत्तर कर्मस्वन्यंनियोजयेत् ॥ धर्मपत्नीचपत्युरेवमेव ॥ तदाहकात्यायनः ॥ असंस्कृतेनपत्न्यावाह्यग्निदानंसमंत्रकम् ॥ कर्त्तव्यमितरत्सर्वंकारये दन्यमेवहीति ॥ वर्षत्रयादूर्ध्वंकृतचूडश्चेत्सर्वमौर्ध्वदेहिकंमंत्रवत्कु र्यात् ॥ तदाहसुमंतुः ॥ अनुपेतोपिकुर्वीतमंत्रवत्पैतृमेधिकम् ॥ यद्य सौकृतचूडःस्याद्यदिस्याच्चत्रिवत्सरइति ॥ ननु कृतचूडस्तुकुर्वीतउ दकंपिंडमेवच ॥ स्वधाकारंप्रयुंजीतवेदोच्चारंनकारयेदिति ॥ तथाच ॥ कृतचूडोनुपेतस्तुपित्रोःश्राद्धंसमाचरेत् ॥ उदाहरेत्स्वधाकारंनतुवे दाक्षराण्यसावितिचव्याघ्रस्मृतिसंग्रहकारवचनाभ्यामनुपनीतस्यमं त्रोच्चारनिषेधात्कथंकृतचूडस्यमंत्रवत्पैतृमेधिककरणाधिकारइतिचेत् सत्यम् ॥ एतद्वचनद्वयंप्रथमवर्षकृतचूडाशक्तविषयम् ॥ तथाचम नुः ॥ नह्यस्मिन्युज्यतेकर्मकिंचिदामौंजिबंधनात् ॥ नाभिव्याहारये द्ब्रह्मस्वधानिनयनादृतइति ॥ स्वधानिनयनंप्रेतकर्म ॥ नन्वसमर्थे बालकेपुत्रेतदंतराधिकारिभिःसमर्थैःसर्वमंत्रवत्किंनक्रियतइतिचेत् ॥

१ वर्षत्रयादर्वाकृतचूडश्शक्तश्चेत्सर्वमौर्ध्वदेहिकंमन्त्रवत्कुर्यात् इ० पा० ।

सत्यम् ॥ सतिपुत्रेनिषेधात् ॥ तथाचऋष्यशृंगः ॥ पुत्रेषुवर्तमाने षुनान्योवैकारयेत्स्वधाम् ॥ अनुकल्पोह्यपुत्रस्यश्राद्धंकुर्यात्सना भिकइति॥ब्रह्मचार्यपिपितृपाध्यायाचार्याणामौर्ध्वदेहिकंकुर्यात्॥सूत कान्नंनभुंजीतनसूतकिभिःसहवासंचकुर्यात् ॥ तदाहयाज्ञवल्क्यः ॥ आचार्यपितृपाध्यायान्निर्हृत्यापिव्रतीव्रती॥सकटान्नंचनाश्नीयान्नचतैः सहसंवसेदिति ॥ व्रतीब्रह्मचारीव्रत्येव ॥ उपनयननिमित्तभैक्ष्यचर्या दिव्रतान्नभ्रंशतइत्यर्थः॥सकटान्नमाशौचान्नम्॥मातापितृव्यतिरिक्त विषयेसएवाह ॥नब्रह्मचारिणःकुर्युरुदकंपतितास्तथा॥ उदकमिति पिंडदानस्याप्युपलक्षणम्॥ मनुरपि॥ आदिष्टीनोदकंकुर्यादाव्रतस्य समापनात् ॥ समाप्तेतूदकंकृत्वात्रिरात्रमशुचिर्भवेदिति॥ क्लीबाद्या अपिक्रियार्हानभवंतितदाह॥वृद्धमनुः॥ क्लीबाद्यानोदकंकुर्युःस्तेनाव्रा त्याविधर्मिणः ॥ गर्भभर्तृद्रुहश्चैवसुराप्यश्चैवयोषितइति ॥ पूर्वोक्तस पिंडाद्यधिकारिभिरपिमृतानांपाखण्ड्यादीनामौर्ध्वदैहिकंकार्यम्॥त दाहयाज्ञवल्क्यः॥पाखण्ड्यनाश्रिताःस्तेनाभर्तृघ्न्यःकामगादिकाः ॥ सुराप्यआत्मत्यागिन्योनाशौचोदकभागिनइति ॥ पाखंडंवेदबाह्यलिं गधारणम्॥अधिकारेसत्याश्रमविशेषरहिताअनाश्रिताः॥ब्राह्मणस्वर्ण व्यतिरिक्तोत्तमद्रव्यहारिणःस्तेनाः ॥ पाखंड्यादिमरणस्याशौचा दिनिमित्तत्वाभावात्सपिंडैरुदकादिनकर्तव्यमित्यर्थः॥अंगिराश्च॥चां डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि॥ दंष्ट्रिभ्यश्चपशुभ्यश्चमरणंपाप कर्मणाम् ॥ मनुरपि॥ वृथासंकरजातानांप्रव्रज्यासुचतिष्ठताम्॥ आ त्मनस्त्यागिनांचैवनिवर्त्ततोदकक्रियेति॥ आत्मत्यागिषुविशेषोगौत मेनोक्तः॥प्रायोनाशकशस्त्राग्निविषोदकोद्बंधनप्रपतनैश्चेच्छतामिति॥ एतेषांशरीरंगंगादिपुण्यनदीजलेक्षिप्त्वावर्षानंतरंनारायणबलिंकृत्वास र्वमौर्ध्वदेहिकंकुर्यात्॥ तदुक्तम्॥आत्मनस्त्यागिनांनास्तिपतितानां तथाक्रिया॥ तेषामपियथागंगातोयेसंस्थापनंमतमिति ॥ षट्त्रिंशन्म तेपि॥गोब्राह्मणहतानांचपतितानांतथैवच॥ ऊर्ध्वंसंवत्सरात्कुर्यात्सर्वमे

वौर्ध्वदेहिकमिति॥ वृद्धयाज्ञवल्क्योपि॥नारायणबलिःकार्यौलोकगर्हा भयान्नरैः ॥ यथातेषांभवेच्छौचंनान्यथेत्यब्रवीन्मनुरिति ॥ आयुषोऽ नित्यत्वात्पापानुसारेणद्विगुणंप्रायश्चित्तंविधाय नारायणबलिंकृत्वा संवत्सरादर्वागपिकार्यम् ॥ अन्यथाकर्मलोपःप्रसज्येत ॥ आहिताग्ने स्तुअविहितमार्गेणमृतस्यविषयेअंगिरसाविशेषउक्तः॥वैतानंप्रक्षिपेद प्सुआवसथ्यंचतुष्पथे ॥ पात्राणितुदहेदग्नौयजमानेवृथामृतइति ॥ आहिताग्निब्राह्मणविषयेतुपराशरः ॥ चांडालेनश्वपाकेनगोभिर्विप्रै र्हतोयदि ॥ आहिताग्निर्मृतोविप्रोविशेषेणात्मघातकः ॥ दहेत्तं ब्राह्मणंविप्रोलोकाग्नौमंत्रवर्जितम् ॥ दग्ध्वास्थीनिपुनर्गृह्यक्षीरेणक्षा लयेत्ततः ॥ स्वेनाग्निनास्वमंत्रेणपृथगेतत्पुनर्दहेदिति ॥ एवंनिंदि तमृत्युनामृतानामकृतप्रायश्चित्तानंस्नेहेनौर्ध्वदेहिकंकृत्वाप्रायश्चित्ते नशुद्धोभवति ॥ तदुक्तमाम्नाये ॥ कृत्वाग्निमुदकस्नानंस्पर्शनंवहनं कथाम् ॥ रज्जुच्छेदाश्रुपातंचतप्तकृच्छ्रेणशुध्यति ॥ संवर्तोपि ॥ एषा मन्यतमंप्रेतंयोवहेतदहेतवा ॥ कटोदकक्रियांकृत्वाकृच्छ्रंसांतपनंचरे दिति ॥ उक्तनिमित्तैःप्रमादेनमृतानांत्वाशौचादिकंकार्यम् ॥ तदाहां गिराः ॥ अथकश्चित्प्रमादेनम्रियेताग्न्युदकादिभिः ॥ तस्याशौचंवि धातव्यंकर्तव्याचोदकक्रियेति ॥ शास्त्रोक्तमार्गेणात्मघातविषयेविशे षस्त्वादित्यपुराणादिषूक्तः॥ यथा ॥वृद्धःशौचस्मृतेर्लुप्तःप्रत्याख्यात भिषक्क्रियः॥ आत्मानंघातयेद्यस्तुभृग्वग्न्यनशनांबुभिः॥ तस्यात्रिरा त्रमाशौचंद्वितीयेत्वस्थिसंचयः ॥तृतीयेतूदकंकृत्वाचतुर्थेश्राद्धमाचरे दिति॥सर्पहतेतुविशेषःस्मृत्यर्थसारेप्रोक्तः॥तस्यनागव्रतंकार्यम् ॥ त त्संवत्सरभाद्रशुक्लपंचमीमारभ्यपंचम्यामुपवासःकार्यः ॥ यद्वा ॥ चतु र्थ्यामेकभक्तंपंचम्यांनक्तंकुर्वन्दारुमयंमृन्मयंवानागंपंचफणंकृत्वागं- धैःकरवीरैःशतपत्रैर्जातीकुसुमैरनंतंवासुकिंशंखंपद्मंककोंटकंकंबलम श्वतरंधृतराष्ट्रंशंखपालंकालियंतक्षकंकपिलंचपंचम्यांसंपूज्यपश्चाद्ब्रा ह्मणान्घृतपायसमोदकैर्भोजयेत्संवत्सरांतेचैवंसंपूज्यब्राह्मणान्भोज

यित्वासौवर्णनागदानंगोदानंचकुर्यादिति॥भविष्यपुराणेपि॥सुवर्णता रनिष्पन्नंनागंकृत्वातथैवगाम्॥व्यासायदत्त्वाविधिवत्पितुरानृण्यमाप्नु यादिति॥ नारायणबलिंचकृत्वाश्राद्धादिकंचकुर्यात्॥नारायणबलिश्च स्मृत्यर्थसारएवोक्तः॥ कस्यांचिच्छुक्लैकादश्यांविष्णुंवैवस्वतंयमंचय थावदभ्यर्च्यतत्समीपेमधुघृतप्लुतांस्तिलमिश्रितान्दधिपिंडान्विष्णु रूपेणप्रेतमनुस्मरन्प्रेतस्यनामगोत्रेउच्चार्यदक्षिणाग्रेषुदर्भेषुदक्षिणामु खोदत्त्वागंधाद्यैरभ्यर्च्यपिंडप्रवहणांतंकृत्वानद्यांप्रक्षिपेत् ॥ नपत्न्या दिभ्योदद्यात् ॥ ततस्तस्यामेवरात्र्यामयुग्मान्ब्राह्मणानामंत्र्यो पोषितःश्वोभूतेमध्याह्नेविष्णुमभ्यर्च्यैकोद्दिष्टविधिनाब्राह्मणपादप्रक्षा लनादितृप्तिप्रश्नांतंकृत्वापिंडपितृयज्ञंवाउल्लेखनाद्यवनेजनांतंकृत्वा- विष्णवेब्रह्मणेशिवाययमायसपरिवारायचतुरःपिंडान्दत्त्वा नामगोत्रस हितंप्रेतंसंस्मृत्यविष्णोर्नामसंकीर्त्यपंचमंपिंडंदद्यात् ॥ ततोविप्राना चांतान्दक्षिणाभिस्तोषयित्वातन्मध्येचैकंब्राह्मणंप्रेतबुद्ध्यासंस्मरन् भूहिरण्यादिभिरतिशयेनसंतोष्यपवित्रपाणिभिर्विप्रैःप्रेतायतिलादिस हितमुदकंदापयित्वास्वजनैःसहभुंजीतेति ॥ पुत्राद्यावश्यकाधि कारिव्यतिरिक्तैर्बहुदायहरैस्त्रिप्रकाराअपिदाहाद्याःक्रियाःकार्याः तदु॥ क्तंस्कंदपुराणे ॥ मलमेतन्मनुष्याणांद्रविणंयत्प्रकीर्तितम् ॥ तद्गृ ह्णन्मलमादत्तेदुर्विधाज्ञानिनामपि॥ऋषिभिस्तस्यनिर्दिष्टानिष्कृतिः पावनीपरा ॥ आदेहपतनात्तस्यकुर्यात्पिंडोदकक्रियामिति॥दायग्रह णाभावेपिपुत्राद्यैरावश्यकाधिकारिभिस्त्रिप्रकारापिक्रियाकार्या॥तदा हतुर्विष्णवापस्तंबौ ॥ पुत्रःपितुर्वित्ताभावेपिदद्यादिति ॥ मार्कंडे योपि ॥ पुत्राभावेचतत्पुत्रःपत्नीमातापितातथा ॥ वित्ताभावे पिशिष्यश्चकुर्वीरन्नौर्ध्वदेहिकमिति ॥ ॥ अन्वारोहणविषयेविशेषः स्मृत्यर्थसारेप्रोक्तः ॥ सहदहनेतुपिंडश्राद्धादौपाकैक्यंकालैक्यं कर्त्रैक्यंचभवति॥ तच्चान्वारोहणंवैकल्पिकम् ॥ भर्तरिप्रेतेब्रह्मचर्यं तदन्वारोहणंवेति॥अन्वारोहणपक्षेतुहारीतेनफलातिशयोदर्शितः॥

यथा ॥ मातृकंपैतृकंचैवयत्रचैवप्रदीयते ॥ कुलत्रयंपुनात्यत्रभर्तारं यानुगच्छति ॥ शंखांगिरसावपि ॥तिस्रःकोटयोऽर्द्धकोटीचयानिरोमाणिमानुषे ॥ तावत्कालंवसेत्स्वर्गेभर्त्तारंयानुगच्छति ॥ तथाच ॥ व्यालग्राहीयथाव्यालंबिलादुद्धरतेबलात् ॥ तद्वदुद्धृत्यसानारीतेनैवसहमोदते ॥ तत्रसाभर्तृपरमास्तूयमानाप्सरोगणैः ॥ क्रीडतेपतिनासार्द्धंयावदिंद्राश्चतुर्दशेति ॥ हारीतोपि ॥ मृतेभर्तरियानारीसमारोहेद्धुताशनम् ॥ साऽरुंधतीसमानारीस्वर्गलोकेमहीयते ॥ यावच्चाग्नौमृतेपत्यौस्त्रीनात्मानंप्रदाहयेत् ॥ तावन्नमुच्यतेसाहिस्त्रीशरीरात्कथंचनेति ॥ तथा ॥ ब्रह्मघ्नोवापिमित्रघ्नोव्रतघ्नोवाभवेत्पतिः ॥ पुनात्यविधवानारीतमादायमृतातुयेति ॥ अयंचसर्वासांस्त्रीणामगर्भिणीनामबालापत्यानामाचंडालंसाधारणोधर्मः ॥ ननु ॥मृतानुगमनंनास्तिब्राह्मण्याब्रह्मशासनात् ॥ यास्त्रीब्राह्मणजातीयामृतंपतिमनुव्रजेत् ॥ सास्वर्गमात्मघातेननात्मानंनपतिंनयेदित्येवमादिवाक्यैर्ब्राह्मण्याअनुगमननिषेधात्कथंसर्वस्त्रीणांसाधारणोधर्मइत्युच्यते ॥ सत्यम् ॥निषेधस्यपृथक्चित्याधिरोहणविषयत्वात् ॥ तदुक्तमुशनसा॥ पृथक्चितिंसमारुह्यनविप्रागंतुमर्हति ॥ अन्यासांचैवनारीणांस्त्रीधर्मोऽयंपरःस्मृतइति ॥ पारिजातेतुविशेषउक्तः ॥ देशांतरेमृतेपत्यौ ब्राह्मण्यास्तुतदास्थिभिःसहानुगमनंभवत्येव ॥ इतरासांत्वस्थ्यभावेऽपिपतिपादुकादिचिह्नंकिमपिगृहीत्वाचिह्नाभावेपिभवति ॥ पृथक्चित्यनुज्ञानादिति ॥ अस्थ्नांशरीरांगत्वेनशरीरतुल्यत्वादेकचित्यारोहणमिव॥ तथान्वारोहणविधिश्चस्मृत्यर्थसारेप्रोक्तः॥अन्वारोहणंसर्वजातिस्त्रीणांपतिव्रतानांप्रशस्तम् ॥ आत्मनोभर्तुश्चसर्वपापक्षयदंनरकोत्तारणंच ॥ अनेकस्वर्गफलदंमोक्षदंचस्वर्गांतेआयुरारोग्यैश्वर्यपुत्रमित्रादिसर्वसंपत्प्रदंच ॥ दुःखदारिद्र्यवैधव्यादिनाशकरमित्यादिपुराणस्मृतिषुश्रूयते ॥ तथान्वारोहणंगर्भिण्यानिषिद्धम् ॥ ब्राह्मणगर्भिण्याब्रह्महत्यासमम् ॥ क्षत्रियादिगर्भिण्याःक्षत्रियादिवध

एव ॥ सवर्णायाःपत्यासहैवचित्यारोहणंकार्यम् ॥ ब्राह्मण्याएकचि
त्यारोहणमेवनपृथक्चित्यारोहणंकार्यम्॥क्षत्रियादिस्त्रियाभर्तरिदेशां
तरेमृतेपृथक्चित्यारोहणमपि ॥ असवर्णायाःपृथक्चित्यारोहणमेव
कार्यम् ॥ अन्वारोहणंकरिष्यामीतिसंकल्प्यपतिंमस्कृत्यचितिमा
रुह्यसर्वप्रयोगंकारयेत् ॥ यद्वा ॥ संकल्प्यप्रयोगेकृतेदह्यमानेभ
र्तरितन्नत्वाग्निंप्रविशेत् ॥ चितिविभ्रष्टानारीमोहाद्विचलिताप्राजापत्यं
चरेत् ॥ संघातमरणेचविशेषस्तत्रैवोक्तः ॥ यथा ॥ स्त्रीपुरुषमरणे
एकस्मिन्दहनकालेप्राप्तेसति सवर्णानांसमानधर्माणांपत्यासहदहनंकृ
त्वाउदकपिंडादिकंपतिपूर्वकंसर्वंकृत्वापश्चात्सापिंड्यंकार्यम् ॥ असव
र्णानांसमानधर्माणांपत्नीनांचसहदहनेउदकपिंडादिकंज्येष्ठपूर्वंपृथगे
व ॥ पितापुत्रयोःसवर्णयोःसमानधर्मयोः कपालाग्निनादाह्ययोःसहे
व॥ उदकपिंडादिकंपितृपूर्वंपृथगेव ॥ भ्रातॄणांसवर्णानांसमानधर्माणां
कपालाऽग्निदाह्यानांसहवादाहः ॥ उदकादिकंपृथगेवेति ॥ स्नेहा
दिवशादसपिंडकद्विजनिर्हरणेमनुनाविशेषउक्तः ॥ असपिंडंद्विजं
प्रेतंविप्रोनिर्हृत्यबंधुवत् ॥ विशुध्यतित्रिरात्रेणमातुराप्तांश्चबांधवान् ॥
न् ॥ विशेत्तद्गृहेयदिवसेत् ॥ तथा ॥ यद्यन्नमत्तितेषांतुदशाहेनै
वशुद्ध्यति ॥अनदन्नन्नमह्नैवनचेत्तस्मिन्गृहेवसेदिति ॥ एतच्चसजाती
याविषयम् ॥ विजातीयविषयेतुगौतमेनविशेषउक्तः ॥ अवरश्चे
द्वर्णःपूर्ववर्णमुपस्पृशेत्पूर्वोपरंततस्तत् शावोक्तमाशौचमिति ॥
ब्रह्मपुराणे ॥ ब्राह्मणस्यवैश्यादिहीनवर्णसंस्कारेविशेषउक्तः॥ ब्राह्मण
स्त्वन्यवर्णानांनकरोतिकदाचन ॥ कामान्मोहाद्भयाल्लोभात्कृत्वा
तज्जातितांव्रजेत् ॥ विप्रःक्षत्रियादिस्त्रीप्रसूतस्वपुत्राणामपिदाहादिकं
नकुर्यात् ॥ क्षत्रियादिस्त्रीप्रसूतास्तत्पुत्रास्तुपितुर्ब्राह्मणस्यदाहादि
कंकुर्युरेव ॥ तदुक्तंतत्रैव ॥ पुत्राःकुर्वंतिविप्रस्यक्षत्राविट्शूद्रयोनयः॥
पुरोहितोवामंत्रीवाऽविद्यमानसपिंडस्य राज्ञस्तत्प्रयुक्ताशौचंकृत्वादा
हादिसंस्कारंकुर्यात्॥ तदुक्तंब्रह्मपुराणे ॥ मृतेराज्ञ्यसपिंडेतुनिरपत्येपु

रोहितः ॥ मंत्रीवातदशौचंतुकृत्वापश्चात्करोतिसइति ॥ अनाथप्रे तानिर्हरणेविशेषमाहपराशरः ॥ अनाथंब्राह्मणंप्रेतंयेवहंतिद्विजातयः॥ पदेपदेयज्ञफलमानुपूर्व्याल्लभंतिते॥नतेषामशुभंकिंचित्पापंवाशुभक र्मणाम्॥जलावगाहनात्तेषांसद्यःशौचंविधीयतइति ॥ विधवापुत्रस्यवी जिक्षेत्रविषयेविशेषोमरीचिनोक्तः ॥ सगोत्रोवाऽन्यगोत्रोवायोभवेद्विध वासुतः ॥ पिंडश्राद्धविधानंवाक्षेत्रिणेप्राग्विनिर्वपेत्॥ बीजिनेतुततःप श्चात्क्षेत्रीजीवतिचेत्क्वचित्॥बीजिनेदद्युरादौचमृतेपश्चात्प्रदीयते॥एत च्चगुर्वादिनियोगेनविधिनादेवराद्युत्पन्नपुत्रविषयम् ॥अनियोगोत्पन्नवि षयेतुनारदः॥जातायेत्वनियुक्तायामेकेनबहुभिस्तथा॥ अरिक्थभाज स्तेसर्वेबीजिनामेवतेसुताः॥दद्युस्तेबीजिनेपिंडंमाताचेच्छुल्कतोहृता अशुल्कोपनतायातुपिंडदावोढुरेवतइति ॥ बहुपुत्रस्यमृतस्यौर्ध्वदे हिकमविभक्तद्रव्येणसर्वानुमत्याज्येष्ठएवकुर्यात्॥तदाहमरीचिः ॥सर्वै रनुमतिंकृत्वाज्येष्ठेनैवतुयत्कृतम्॥ द्रव्येणचाविभक्तेनसर्वैरेवकृतंभवे दिति ॥ विभक्तद्रव्यैरप्यौर्ध्वदैहिकोपयुक्तंकिंचित्किंचित्स्वधनान्निज्ये ष्ठायनिवेद्यैकीकृतंद्रव्यमप्यविभक्तमिवभवति॥विभक्तेषुद्रव्यसमीकर णेनैकस्यकर्तृत्वंषोडशश्राद्धादावेवनसांवत्सरिकादौ ॥ तथाचोक्तमि ताक्षरायाम् ॥ नवश्राद्धंसपिंडत्वंश्राद्धान्यपिचषोडश ॥ एकेनैवतुका र्याणिसंविभक्तधनेष्वपीति ॥ अत्रविभक्तधनेष्वपिनवश्राद्धसपिंडीक रणषोडशश्राद्धान्येकेनैवकार्याणीत्युक्तिसामर्थ्यादेव नवश्राद्धादिव्य तिरिक्तश्राद्धेषुविभक्तधनानांपृथक्करणंप्राप्नोतीति ॥ अतश्चविभ क्तधनैःसांवत्सरिकादिकंपृथगेवकार्यम्॥ स्मृत्यर्थसारेपिआद्यक्रियाप्रक रणएवोक्तम् ॥ अनेकपुत्रत्वेइतरानुमतोज्येष्ठएवदद्यात् ॥ द्रव्येणवि भक्तोवाअविभक्तोवेति ॥ उक्तेष्वधिकारिषुपुत्राद्यसंनिधानेप्रथमादिव सोपक्रांतेनैवमध्येपुत्राद्यागमनेपिदशाहपर्यंताः पिंडोदकदानादिकाः क्रियाःकार्याः ॥ तदुक्तंगृह्यपरिशिष्टे ॥ असगोत्रःसगोत्रोवायादिस्त्री यदिवापुमान् ॥ प्रथमेहनियोदद्यात्सदशाहंसमापयेदिति ॥ प्रथमेह

प्रथमाह्निचेद्याद्दशाहांतसएवाह ॥ प्रथमहनियद्द्रव्यंदशाहांतंतदेव
होति ॥ दशाहानन्तरमेकादशाहादिकंसन्निहितपुत्रादिनैवकार्यम् ॥
तदभावेप्रथमोपक्रांतेनैव ॥ सपिंडीकरणंत्वसंनिहितेनापिज्येष्ठपुत्रे
णैवकार्यम् ॥ इत्यधिकारिणउक्ताः ॥ संस्कारविधिस्तुशाखाभेदे
नभिन्नत्वान्नोक्तः ॥ सचस्वस्वसूत्रोक्तएवग्राह्यः ॥ रात्रिमृतस्य
रात्रावेवदाहःकार्यः ॥ वपनंप्रातःकार्यम् ॥ तदुक्तंस्मृतिसंग्रहे ॥ रात्रौ
दग्ध्वातुपिंडांतंकृत्वावपनवर्जितम् ॥ वपनंनेष्यतेरात्रौश्वस्तदावप
नक्रियेति ॥ यत्तुनिगमवचनम् ॥ संध्यायांचतथारात्रौदाहःपार्थयक
र्मच ॥ नवश्राद्धंचनोकुर्यात्कृतंनिष्फलतांव्रजेदिति ॥ एतत्तुदिनमृ
तस्यालस्यादिनारात्रौदाहोनकार्यइत्येवंपरम् ॥ वपनंचगुरुनिपाते
मृतदिनेद्वितीयेतृतीयेपंचमेसप्तमेवाकुर्य्यात् ॥ सूतकांतेचसूतकानि
वृत्त्यर्थंकुर्यात् ॥ तदुक्तम् ॥ गंगायांभास्करक्षेत्रेमातापित्रोर्गुरोर्मृते ॥
आधानकालेसोमेचवपनंसप्तसुस्मृतमिति ॥ अत्रगुरुर्मंत्रोपदेष्टा
विद्योपदेष्टाच ॥ तथा ॥ द्वितीयेऽहनिकर्तव्यंक्षुरकर्मप्रयत्नतः ॥
तृतीयेपंचमेवापिसप्तमेवाप्रदानतइति ॥ अत्रद्वितीयाहादिविक
ल्पःपूर्वत्रपूर्वत्रासंभवेउत्तरोत्तरत्रकर्त्तव्यमित्येवंपरः ॥ आपस्तंबस्तु
अनुभाविनांचपरिवपनमिति ॥ अनुभाविनोल्पवयसःसपिंडापुत्राश्चे
तिपारिजाते॥मिताक्षरायांतु ॥क्षौरंतदनुभाविनामित्यनुभाविनःपुत्रा
एवेत्युक्तम् ॥ अतश्चदेशाचारानुसारेणव्यवस्थापनीयम् ॥ देव
लोपि ॥ दशमेहनिसंप्राप्तेस्नानंग्रामाद्बहिर्भवेत् ॥ तत्रत्याज्यानिवा
सांसिकेशश्मश्रुनखानिचेति ॥ अत्रदशमेहनीतिसूतकान्तोपलक्ष
णम् ॥ केशश्मश्र्वादित्यागस्यसूतकांतेकर्तव्यवस्त्रत्यागसाहचर्यात्सू
तकांतएवकर्तव्यत्वंप्रतीयते ॥ वाससांचसूतकांतेत्यागःस्मृत्यंत





रेप्रोक्तः ॥ अंत्येचवाससांत्यागइति ॥ आशौचेसपिंडानांनियमाश्च मनुनोक्ताः॥अक्षारलवणान्नाःनिस्युमज्जेयुश्चतेत्र्यहम् ॥मांसाशनंचनाश्नीयुरिति ॥ गौतमोपि ॥ अधःशय्यासनोब्रह्मचारिणःसर्वइति ॥ याज्ञवल्क्येनापि ॥ क्रीतलब्धाशनाभूमौस्वपेयुस्तेपृथक्पृथगिति ॥ अत्रक्रीतलब्धाशनत्वनियमोदिनत्रयपर्यंतमेव ॥तथाचवृद्धवसिष्ठः ॥ गृहान्व्रजित्वाअधःप्रस्तरेत्र्यहमनश्नंतआसीरन्क्रीतोत्पन्नेनैववर्त्तेरन्निति ॥ अत्रत्र्यहमनश्नंतइतिक्रीतलब्धान्नाभावेअनशनंकार्यम् ॥ अन्यथायाज्ञवल्क्यवचनविरोधःस्यात् ॥ क्रीतलब्धाशनेनानियमः संभवेकार्यः ॥ ॥रजस्वलायाःसूतिकायाश्चमृतायाःशुद्धिंकृत्वादाहादिकंसंस्कारंकुर्य्यात् ॥ शुद्धिप्रकारश्चमिताक्षरायामुक्तः ॥ सूतिकायांमृतायांतुकथंकुर्वीतियाज्ञिकाः ॥ कुंभेसलिलमादायपंचगव्यंतथैवच ॥ पुण्यर्ग्भिरभिमंत्र्यापोवाचाशुद्धिंलभेत्ततः ॥ तेनैवस्नापयित्वातुस्नानंकुर्याद्यथाविधि ॥ पंचभिःस्नापयित्वातुगव्यैःप्रेतांरजस्वलाम् ॥ वस्त्रांतरवृतांकृत्वादाहयेद्विधिपूर्वकमिति ॥ वाचाब्राह्मणवचनेन ॥ ज्वरितायारजस्वलायाःस्नानाशक्तौशुद्धिप्रकारश्चोशनसादर्शितः ॥ ज्वराभिभूतायानारीरजसाचपरिप्लुता ॥ कथंतस्याभवेच्छौचंशुद्धिःस्यात्केनकर्मणा ॥ चतुर्थेहनिसंप्राप्तेस्पृशेदन्यातुतांस्त्रियम्॥सासचैलावगाह्यापःस्नात्वास्नात्वापुनःस्पृशेत् ॥ दशद्वादशकृत्वोवाआचामेच्चपुनःपुनः॥अंत्येचवाससांत्यागस्ततःशुद्धाभवेत्तुसा॥ दद्याच्छक्त्याततोदानंपुण्याहेनविशुद्ध्यतीति॥ ॥इतिकृतसंस्कारविशेषाशौचविशेषनिर्णयः॥ ॥अत्रप्रासंगिकंकिंचिल्लिख्यते॥यथोक्तंमिताक्षरायाम्॥शुद्धाभर्तुश्चतुर्थेह्निस्नानेनस्त्रीरजस्वला॥दैवेकर्मणिपित्र्येचपंचमेहनिशुध्यतीति ॥ पंचमेहनीतिरजोनिवृत्तिकालोपलक्षणम् ॥ अत्रिणाचविशेषउक्तः॥ रजस्वलायदिस्नातापुनरेवरजस्वला ॥ अष्टादशदिनादर्वागशुचित्वंनविद्यते ॥ एकोनविंशतेरर्वागेकाहंस्यात्ततो द्व्यहम् ॥ विंशत्प्रभृत्युत्तरेषुत्रिरात्रमशुचिर्भवेदिति ॥ यत्तुस्मृत्यंतरव

चनम् ॥ चतुर्दशदिनादर्वागशुचित्वंनविद्यतइति ॥ तत्स्नानदिनप्रभृतिगतदिनगणनाभिप्रायमितिवेदितव्यम् ॥ ॥ इतिरजस्वलाशुद्धिनिर्णयः ॥ ॥ इतिप्रासंगिकंपरिसमाप्यप्रकृतमनुसंधीयते ॥ ॥ अथपंचकमृतदाहविधिः॥ तदुक्तंगरुडपुराणे॥ कृष्णउवाच ॥ आदौकृत्वाधनिष्ठार्द्धमेतन्नक्षत्रपंचकम् ॥ रेवत्यंतंसदादूष्यमशुभंसर्वदाभवेत् ॥ दाहस्तत्रनकर्तव्योविषादःसर्वजातिषु ॥ नजलंदीयतेतेषुत्वशुभंसर्वदाभवेत्॥पंचकानंतरंकार्यंकर्तव्यंसर्वमन्यथा॥पुत्राणांगोत्रिणांतस्यसंतापोह्युपजायते॥ गृहेहानिर्भवेत्पृष्ठेऋक्षेष्वेषुमृतस्तुयः॥ अथवाऋक्षमध्येतुदाहस्तुविधिपूर्वकः ॥ क्रियतेमानुषाणांतुसद्य आहुतिकारणात् ॥ विप्रैर्नियमतःकार्यामंत्रैस्तुविधिपूर्वकम् ॥ शवस्यचसमीपेतुक्षेतव्याःपुत्तलास्तथा ॥ दर्भमयाश्चचत्वारऋक्षमंत्राभिमंत्रिताः ॥ ॐवह[1]वपांजातवेदःपितृभ्योयप्रेतान्यथानिहितान्यथाराकैमेदसकलपाउपतस्तवतुसत्माएषमाएषमाशिलः सतुमजांस्वाहेतिमंत्रेणाहुतिपञ्चकम् ॥ ततोदाहःप्रकर्त्तव्यस्तैश्चपुत्तलकैःसह ॥ सूतकांतेतदापुत्रैःकार्यंशांतिकपौष्टिकम् ॥ पंचकेषुमृतोयोसौनगतिंलभतेनरः॥ तिलाश्वगोहिरण्यंचतदुद्देशंघृतंददेत् ॥ विप्राणांदीयतेदानंसर्वविघ्नविनाशनम् ॥ सूतकांतेचयःपुत्रैःसप्रेतोलभतेगतिम् ॥ बालोवृ[2]द्धश्चदूतश्चपञ्चकेषुमृतस्यच ॥ विधानंयोनकुर्वीतविघ्नंतस्यप्रजायतइति ॥ उपनीतमृताशौचेअस्थिसंचयनेकृतेसातिस्वाशौचकालत्रिभागेनाशौचिनामंगस्पर्शोभवति ॥ तदाहदेवलः ॥ दशाहादित्रिभागेनकृतेसंचयनेक्रमात् ॥ अंगस्पर्शनमिच्छंतिवर्णानांतत्त्वदर्शिनः॥ अनुपनीतविषयेत्वस्थिसंचयनाभावेपिस्वाशौचात्त्रिभागात्स्पृश्यत्वम् ॥ तदाहदेवलः ॥ स्वाशौचकालाद्विज्ञेयंस्पर्शनंतुत्रिभागतः ॥ शूद्रविट्क्षत्रविप्राणांयथाशास्त्रप्रचोदितमिति ॥ उपक्रांतसंस्कारस्यदशाहमध्येदर्शपातेसतिविशेषोभविष्यपुराणेप्रोक्तः ॥

१-२ इदं पाठद्वयमसंबद्धमशुद्धमिवप्रतिभातिपरंत्वेकस्मिन्पुस्तकउपलब्धत्वादत्रनिवेशितमस्माभिः ।

प्रवृत्ताशौचतंत्रस्तुयदिदर्शःप्रपद्यते॥ समाप्यचोदकांपिंडान्स्नानमात्रं समाचरेदिति॥ आशौचसमाप्तिपर्यंतमितिशेषः ॥ ऋष्यशृंगोपि ॥ आशौचमंतरादर्शोयदिस्यात्सर्ववर्णिनाम्॥समाप्तिंप्रेततंत्रस्यकुर्यादि त्याहगौतमइति ॥ पैठीनसिरपि ॥ आद्यैन्दवेचकर्त्तव्याःप्रेतपिंडो दकक्रियाः ॥ द्वितीयैंदवेतुकुर्वाणःपुनःशावंसमश्नुतइति ॥ एकःप्राक्त नःक्षीणचंद्रोद्वितीयोभावीवृद्धिमानितिचंद्रद्वयम्॥ सामान्यतःप्राप्तौम ताापितृविषयेविशेषोगालवेनोक्तः ॥ पित्रोराशौचमध्येतुयदिदर्शो समापतेत्॥ तावतैवोत्तरंतंत्रपर्यवस्येत्र्यहात्परमिति ॥ यत्तुगौतमव चनम्॥ अंतर्दशाहेदर्शश्चेत्तत्रसर्वंसमापयेत् ॥ पित्रोस्तुतावदाशौचं दद्यात्पिंडाञ्जलांजलीनिति ॥ एतत्र्यहात्पूर्वंदर्शपातविषयम् ॥ पारि जातेतुगौतमवचनंपितृविषयमुक्त्वात्र्यहात्परमिति गालवचनस्यार्थ उक्तः॥पित्राशौचेपिदर्शेतिसमाप्तिरुत्तरतंत्रस्योचिता॥ किमुतान्याशौ चमध्यइतिपितृव्यतिरिक्तविषये उत्तरतंत्रस्यावश्यकसमाप्तिप्रदर्शना र्थम्॥नपुनःपितृविषयेपिनियमार्थमिति ॥ तत्रगालवचनंयादिप्रदर्शना र्थमेवस्यान्ननियमार्थम्॥ तदात्र्यहात्परमितिविशेषनियमोनाभिधीय ते ॥ अतश्चपितृविषयेत्र्यहादूर्ध्वंदर्शपातेपिंडादिसमाप्तिः ॥ त्र्यहा त्पूर्वन्तुदशापातेदर्शाहान्तम्पिंडोदकक्रिया ॥ चन्द्रद्वयेबलिर्नैवदेयःप्रे तस्यशान्तये॥यदिदद्याद्द्विचन्द्रेतुकर्त्तुःकुलविनाशनमिति नपुनःपि तृविषयम्॥ गालवचनंयादिप्रदर्शनार्थमेवस्यान्ननियमार्थम्॥यावदाशौ चंपिंडादिकार्यमितिगालवगौतमवचयोनव्यवस्थयैवाविरोधोयुक्तः ॥ ॥यद्वा॥तत्रैवभवतुवापितृविषयेनियामकमिति॥ गालववचनस्यानिया मकत्वमंगीकृत्यतथाप्यस्वर्ग्यंलोकविद्विष्टंधर्ममप्याचरेन्नत्विातिन्या येनशिष्टाचाराभावात् ॥ गालववचनस्यबाधकत्वाच्छिष्टाचारप्रामा ण्यादेवयत्रदेशेत्र्यहात्परंदर्शपातेपितृविषयेप्युत्तरतंत्रसमाप्तिस्तद्वि षयंगालववचनम्॥ यस्मिन्देशेत्र्यहात्परमपिदर्शपातेसंपूर्णाशौचपर्यं तांपिंडांजलिदानानुवृत्तिस्तद्विषयंगौतमवचनमितिदेशाचारभेदाद्व्य

स्थाकल्पनीयेति सर्वमनवद्यम्॥पूर्वदेशकालादिवशेनकाष्ठवद्दग्धस्य पुनर्विधानात्संस्कारादिप्रारंभेदिनादिनियमःस्मृत्यर्थसारेप्रोक्तः ॥ ॥ यथा ॥ आशौचदिनमध्येपुनःसंस्कारेतुदृष्टबाधभयाद्दिनंसंभवेशोध्यम् ॥ कालांतरप्रकृतप्रेतकार्येतुदिनंशोध्यमेव ॥ संवत्साराद्दूर्ध्वप्रेतकार्येतुउत्तरायणकालःश्रेयान् ॥ तत्रापिकृष्णपक्षःश्रेयान् ॥ तत्रापिनंदात्रयोदशीत्रिदिनंचवर्जयेत् ॥शुक्रशनैश्चरौवारेषुवर्ज्यौ॥नक्षत्रेषु भरणीकृत्तिकार्द्राश्लेषामघाधनिष्ठादिपंचकंत्रिपुष्कराणिचातिदुष्टानि सर्वथावर्ज्यानि ॥ व्यतिपातेपरिघेवैधृतौचयोगेविष्टिकरणेचतुर्थाष्टमद्वादशस्थेचंद्रेचातिदोषः॥ रोहिणीपुनर्वसूपूर्वोत्तराचित्राविशाखानुराधापूर्वाषाढोत्तराषाढानिद्विपुष्कराणीषद्दुष्टानिसंभवेवर्ज्यानि ॥ अवशिष्टानिग्राह्याणि॥सर्वथादिनशुद्ध्यसंभवेनातिदुष्टंनक्षत्रंग्राह्यमिति॥ इत्यधिकारिस्वरूपंनिरूप्येदानीमुपनीतादीनांवर्णभेदेनाशौचकालभेदोनिरूप्यते ॥ ब्राह्मणविषयेयमः ॥ दशाहंशावमाशौचंसपिंडेषुविधीयते ॥जननेप्येवमेवस्यान्निपुणंशुद्धिमिच्छतामिति॥ महागुरौत्वाश्वलायनेनतद्विषयएवविशेषउक्तः॥ द्वादशरात्रंवामहागुरुषुदानाध्ययनेवर्जयेरन्निति ॥ महागुरुस्वरूपंचतेनैवोक्तम् ॥ पुत्रानुत्पाद्यवेदार्थंग्राहयित्वावृत्तिंवायोविदधातिसमहागुरुरिति ॥ क्षत्रादिविषये याज्ञवल्क्यः ॥ क्षत्रस्यद्वादशाहानिविशःपंचदशैवतु ॥ त्रिंशद्दिनानिशूद्रस्यतदर्द्धंन्यायवर्तिनइति ॥ पाकयज्ञद्विजशुश्रूषादिरतस्यशूद्रस्यमासार्द्धंपक्षमाशौचम् ॥ इदमाशौचानंतरंकृतक्रिया ब्राह्मणादय उदकादिस्पृष्ट्वाशुध्यंति ॥ तदाहमनुः ॥ विप्रःशुद्ध्यत्यपःस्पृष्ट्वाक्षत्रियोवाहनायुधम् ॥ वैश्यःप्रतोदंरश्मिंवायष्टिंशूद्राः कृतक्रियाइति ॥ कृतक्रियाःकृतस्नानाइत्यर्थः ॥ इदंवर्णप्रयुक्ताशौचंसर्वसंमतम्॥यानितुन्यूनाधिककालविधायकवाक्यानिकाचिद्भवेयुः ॥ तान्यापदनापद्विषयत्वेनगुणवदगुणवद्विषयत्वेनवादेशाचारतोवाव्यवस्थापनीयानि ॥ इयंदशाहादिसंख्याऽह्नंरा

त्रादर्वाग्जाते आशौचेतद्दिनप्रभृत्येव॥रात्रिंतुत्रेधाविभज्यप्रथमभागद्व येचेदाशौचंतदापूर्वदिनप्रभृतीत्यन्ये ॥ सूर्योदयात्प्राक्पूर्वदिनप्रभृती त्यपरे ॥ यदाहकश्यपः॥ उदितेतुयदासूर्येनारीणांदृश्यतेरजः॥जन नंवाविपत्तिर्वायस्याहस्तस्यशर्वरी ॥ अर्द्धरात्रावधिःकालःसूतके तुविधीयतइति ॥ सूतकइत्याशौचोपलक्षणम् ॥ तथा ॥ रात्रिंकुर्या त्रिभागांतुद्वौभागौपूर्वएवतु॥ उत्तरांशःप्रभातेनयुज्यतेमृतसूतकइति ॥ तथा ॥ रात्रावेवसमुत्पन्नेमृतेरजसिसूतके ॥ पूर्वमेवदिनंग्राह्यंयाव न्नोदयतेरविरिति॥निशाभागत्रयंकुर्याद्द्वौभागौपूर्ववासरे॥ शेषंपरदिनं प्रोक्तंस्थालीपाकेमृतेऋतौ ॥ अत्रापिदेशाचारतोव्यवस्थाकल्पनीये ति॥आशौचस्यदशप्रकारतादक्षेणोक्ता॥ सद्यःशौचंनिषेकाहस्त्र्यहश्च तुरहस्तथा ॥ षड्दशद्वादशाहश्चपक्षोमासस्तथैवच ॥ मरणांतंत थाचान्येदशपक्षास्तुसूतकइति॥ अत्रदशाहादिपक्षाब्राह्मणादिवर्णवि षयउक्ताः ॥ मरणांतिकविषयस्तुदक्षेणोक्तः ॥ अस्नात्वाचाप्य हुत्वाचह्यदत्त्वाश्नंस्तथाद्विजः ॥ एवंविधस्यविप्रस्यसर्वदासूतकंभ वेत् ॥ व्याधितस्यकदर्यस्यऋणग्रस्तस्यसर्वदा ॥ क्रियाहीनस्य मूर्खस्यस्त्रीजितस्यविशेषतः ॥ व्यसनासक्तचित्तस्यपराधीनस्यनि त्यशः॥ श्राद्धकर्मविहीनस्यसर्वदासूतकंभवेदिति ॥ अत्रसद्यःशौ चमृत्विगादीनांयाज्ञवल्क्येनोक्तम् ॥ ऋत्विजांदीक्षितानांचयज्ञि यंकर्मकुर्वताम् ॥ सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदांतथा ॥ दानेविवाहे यज्ञेचसंग्रामेराष्ट्रविप्लवे॥आपद्यपिचकष्टायांसद्यःशौचंविधीयतइति ॥ ऋत्विजोवरणसंभृताःकर्तृविशेषाः॥दीक्षायांसंस्कृतादीक्षिताः॥यज्ञि यंकर्मकुर्वतामित्यभिधानाद्यज्ञकर्मण्येवसद्यःशुद्धिः॥सत्रिग्रहणेनसंत तानुष्ठानतुल्यतयान्नसत्रप्रवृत्तालक्ष्यंते ॥ मुख्यानांतुसत्रिणांदीक्षित ग्रहणेनैवसिद्धेः ॥ व्रतिशब्देनकृच्छ्रचांद्रायणादिप्रवृत्ताः स्नात कव्रतप्रायश्चित्तप्रवृत्ताश्चोच्यंते ॥ विवाहादौप्रारब्धएव ॥ राष्ट्रविप्लु वेस्फोटकादिभिरुपसर्गैराजभयाद्वा ॥ संग्रामेसंग्रामोद्यतस्यराज्ञः ॥ प्रास्थानिकशांतिकहोमादौ ॥ कष्टायामापदिव्याध्याद्यभिभ

वे ॥ मुमूर्षावस्थायांदुरितशमार्थैकर्मणि ॥ तथा संकुचितवृत्तेश्चक्षु त्परिश्रांतमातापित्रादिबहुकुटुंबस्य तद्भरणोपयोगिनिप्रतिग्रहेसद्यःशु द्धिः ॥ इयंचसद्यःशुद्धिर्यस्यसद्यःशौचंविनात्त्युपशमोनभवत्यश्व स्तनिकस्यतद्विषया ॥ यस्त्वेकाहपर्याप्तसंचितधनस्तस्यैकाहः ॥ यस्त्र्यहोपयोगिसंचितधनस्तस्यत्र्यहः ॥ यश्चतुरहार्थमापादितधनः कुंभीधान्यस्तस्यचतुरहः॥कुसूलधान्यस्यदशाहइति ॥ एवंयस्ययाव त्कालमार्त्यभावस्तस्यतावत्कालमाशौचम् ॥ आपदुपाधिकत्वादा शौचस्येतिमिताक्षरायाम् ॥ स्मृत्यंतरेच ॥ नित्यमन्नप्रदस्यापिकृच्छ्र चान्द्रायणादिषु ॥ निवृत्तेकृच्छ्रहोमादौब्राह्मणादिषुभोजने ॥ गृही तनियमस्यापिनस्यादन्यस्यकस्यचिदिति ॥ सद्यःशुचिरितिवाक्य शेषः ॥ तथाच ॥ निमंत्रितेषुविप्रेषुप्रारब्धेश्राद्धकर्मणि ॥ निमं त्रणाद्धिविप्रस्यस्वाध्यायादितरस्यच ॥ देहेपितृषुतिष्ठत्सुनाशौचं विद्यतेकचित् ॥ प्रायश्चित्तप्रवृत्तानांदातृब्रह्मविदांतथेति ॥ इद माशौचमाहिताग्नेर्दाहदिनमारभ्यानाहिताग्नेर्मरणदिनमारभ्यवेदित व्यम् ॥ तदाहपैठीनसिः ॥ अनग्निमतउत्क्रांतेराशौचादिद्विजाति षु ॥ दाहादग्निमतोविद्याद्विदेशस्थेमृतेतथेति ॥ अनुलोमक्षत्रादि विजातीयसपिंडाशौचेविशेषोबौधायनेनोक्तः ॥ क्षत्रविट्शूद्रजातीया येस्युर्विप्रस्यबांधवाः ॥ तेषामाशौचेविप्रस्यदशाहाच्छुद्धिरिष्यत इति ॥ यत्तुहारीतवचनम् ॥ दशाहाच्छुध्यतेविप्रोजन्महानौस्व योनिषु ॥ षड्भिस्त्रिभिरथैकेनक्षत्रविट्शूद्रयोनिष्विति ॥ एतदापद्वि षयम् ॥ विष्णुरपि ॥ क्षत्रियस्यविट्शूद्रेषुसपिंडेषुषड्रात्रत्रिरात्रा भ्यांवैश्यस्यशूद्रेसपिंडेषड्रात्रेणशुद्धिः ॥ हीनवर्णानांतु प्रकृष्टेषु सपिंडेषुजातेषुमृतेषुवा तदाशौचव्यपगमेशुद्धिरिति ॥ आप स्तंबेनविशेषउक्तः ॥ क्षत्रविट्शूद्रजातीनांयद्वाचेन्मृतसूतके ॥ ते षांतुपैतृकंशौचंविभक्तानांतुमातृजमिति ॥ विजातीयानांतुसापिंड्यं त्रिपुरुषमेव ॥ तदुक्तम् ॥ यद्येकजाताबहवःपृथक्क्षेत्राःपृथग्जनाः ॥ एकपिंडाःपृथक्शौचाःपिंडस्त्वावर्ततेत्रिष्विति ॥ पृथग्जनाभिन्नजा

तीयाः ॥ प्रतिलोमानांतुसूतकंनास्त्येव ॥ प्रतिलोमाधर्महीनाइ
तिस्मृत्युक्तत्वात् ॥ संग्रामेभिमुखप्रहारेणमृतानांगोब्राह्मणार्थंचमृ
तानांसद्यःशौचम् ॥ तथाचमनुः ॥ उद्यतैराहवेशस्त्रैःक्षत्रधर्महत
स्यच ॥ सद्यःसंतिष्ठतेयज्ञस्तथाशौचमितिस्थितिरिति ॥ यज्ञःपिं
डदानादिरूपःसंतिष्ठतेसमाप्ताभवतीत्यर्थः ॥ तथाच ॥ डिंभा
हवहतानांचविद्युतापार्थिवेनच ॥ गोब्राह्मणस्यचैवार्थेयस्यचेच्छतिपा
र्थिवइति ॥ डिम्भोबहुजनसंकुलः॥अशस्त्रकलहोवा ॥ यस्यचेच्छ
तिपार्थिवइति ॥ स्वकार्यपरिपालनाधिकृतस्य॥ ननु राज्ञःपरिपालन
एवाशौचनिवृत्तिःकुतस्तदिच्छयान्याशौचाभावइत्याशंक्यतेनैवोक्त-
म् ॥ सोमाग्न्यर्कानिलेंद्राणांवित्तपत्युर्यमस्यच ॥ अष्टानांलोकपाला
नांवपुर्धारयतेनृपइति ॥ स्मृत्यर्थसारेपि ॥ स्त्रीविप्रार्थगवार्थेचसंग्रामे
विद्युताचहतानांसपिंडानांनाशौचमिति ॥ यत्तुवचनम् ॥ ब्राह्मणार्थे
विपन्नायेयोषितांगोग्रहेपिच ॥ आहवेषुहतानांचएकरात्रमशौचक
मिति ॥ एतद्युद्धक्षतेनकालांतरमृतविषयम् ॥ तदुक्तंस्मृत्यर्थसारे ॥
युद्धक्षतेनकालांतरमरणेग्रामेश्वरेकुलपतौचमृतेत्वेकाहामिति ॥ गोब्रा
ह्मणादिहतानांविधिनात्मघातिनांचयेसपिंडास्तेषांसद्यःशुद्धिः ॥ त
दाहयाज्ञवल्क्यः ॥ हतानांनृपगोविप्रैरन्वक्षंचात्मघातिनामिति ॥
गौतमोपि ॥ गोब्राह्मणहतानामन्वक्षंराजक्रोधाच्चयुध्यतइति ॥ अन्व
क्षंसद्यः ॥ समानोदकानांतुत्रिरात्राच्छुद्धिः ॥ तदाहमनुः ॥ दशा
हंशावमाशौचंसपिंडेषुविधीयते ॥ जननेप्येवमेवस्यान्निपुणंशुद्धिमि
च्छताम् ॥ जन्मन्येकोदकानांतुत्रिरात्राच्छुद्धिरिष्यतइति ॥
जन्मनीतिमरणस्याप्युपलक्षणम् ॥ क्वचिदाशौचविषयेजन्ममरणकृत
कालविभेदाभावात् ॥ एकोदकाःसमानोदकाः ॥ तेचसप्तपुरुषा
दूर्ध्वंयावज्जन्मनाम्नोरज्ञानंतत्पर्यंताः ॥ तदाहमनुः ॥ सपिंडतातु
पुरुषेसप्तमेविनिवर्त्तते ॥ समानोदकभावस्तुजन्मनाम्नोरवेदनइति ॥
तथाचस्मृत्यर्थसारे॥ जाताशौचेमृताशौचेसोदकानांत्रिरात्रकमिति॥
असगोत्रमातामहाचार्यमातुलविषयेतुविशेषउच्यते॥तत्रबृहस्पतिः ॥

ऽयहंमातामहाचार्यश्रोत्रियेष्वशुचिर्भवेदिति ॥ अत्रश्रोत्रियस्तुसंनि
हितोगुणवान्वाविवक्षितः ॥ तदुक्तम् ॥ श्रोत्रियेतूपसंपन्नेत्रिरा
त्रमशुचिर्भवेत् ॥ मातुलेपक्षिणीरात्रिःशिष्यर्त्विग्बांधवेषुचेति ॥
उपसंपन्नोगुणयुक्तः ॥ असंनिहितेत्वेकाहमेव ॥ तदाहाश्वलायनः ॥
एकाहंसब्रह्मचारिणिसमानग्रामिणिचश्रोत्रियइति ॥ एकाचार्योपनी
तःसब्रह्मचारी ॥ उपनीययोविद्यांप्रयच्छतिसआचार्यः ॥ तस्यपुत्रा
दिविषयेमनुनाविशेषउक्तः॥ त्रिरात्रमाहुराशौचमाचार्येसंस्थितेसति॥
तस्यपुत्रेचपत्न्यांचदिवारात्रमितिस्थितिरिति ॥ याज्ञवल्क्योपि॥गुर्व
न्तेवास्यनूचानमातुलश्रोत्रियेषुचेति ॥ अत्रासंनिधानेअहरित्यनुवर्त्त
ते ॥ तथाचस्मृत्यर्थसारे ॥ याज्यर्त्विग्दौहित्रसहाध्यायिसहोपनीता
त्मबंधुपितृबंधुमातृबंधुश्वशुरशिष्योपाध्यायानूचानगुरुपुत्राचार्यपुत्र
मित्रभागिनेयेषुश्वश्रूभगिनीमातामहेषुमातृष्वसृपितृष्वसृमातुलानी
गुर्वाचार्यपत्नीषुचमरणएकग्रामेपाक्षिण्याशौचम् ॥ ग्रामान्तरेत्वे
काहमाशौचम् ॥ अगुणवत्सुत्वेकग्रामेप्येकाहम् ॥ ग्रामांतरेस्नान
मिति ॥ आत्मबंध्वादयस्तेनैवोक्ताः ॥ यथा ॥ आत्मपि
तृष्वसुःपुत्राआत्ममातृष्वसुःसुताः ॥ आत्ममातुलपुत्राश्चविज्ञे
याआत्मबांधवाः ॥ एवंपितुःपितृष्वस्रादिपुत्राःपितृबान्धवाः ॥
तथामातुःपितृष्वस्रादिपुत्रामातृबांधवाः ॥ प्रचेताः ॥ संस्थिते
पाक्षिणीरात्रिर्दौहित्रेपितृबांधवइति ॥ वृद्धप्रचेताअपि ॥ सं
स्थितेपक्षिणीरात्रिर्दौहित्रेभागिनीसुते ॥ संस्कृतेतुत्रिरात्रंस्यादि
तिधर्मोव्यवस्थितः ॥ संस्कृतेत्रिरात्रमित्युक्तत्वादसंस्कृतेदौहि
त्रेभागिनेयेवासंस्कृतेपक्षिणीति ॥ पक्षिणीतिरात्रिविशेषणम् ॥
तथा ॥ पित्रोरुपरमेस्त्रीणामूढानांतुकथंभवेत् ॥ त्रिरात्रेणैव
शुद्धिःस्यादित्याहभगवान्यमइति॥ऊढानांपरिणीतानाम् ॥ तथाच॥
श्वशुरयोर्भगिन्यांचमातुलान्याञ्चमातुले॥ पित्रोःस्वसरितद्वच्चपक्षिणीं
क्षपयेन्निशम् ॥ श्वशुरयोःपित्रोरितिचैकशेषः ॥ तथाच ॥ मातुले
श्वशुरेमित्रेगुरौगुर्वंगनासुच॥ आशौचंपक्षिणींरात्रिंमृतामातामहीयदी

ति ॥ यत्तुवृद्धविष्णुवचनम् ॥ भगिन्यांसंस्कृतायांतुभ्रातर्यपिचसंस्कृते ॥ मित्रेजामातरिप्रेतेदौहित्रेभगिनीसुते ॥ श्यालकेतत्सुतेचैवसद्यःस्नानेनशुध्यतीति ॥ एतद्ग्रामांतरमृतगुणवद्विषयमगुणवद्विषयञ्च ॥ तच्चस्मृत्यर्थसारेउक्तम् ॥ अगुणवत्सुएकग्रामेएकाहंग्रामांतरेस्नानमिति ॥ भ्रातरीतिभगिन्यांसंबंधः ॥ परिणीतायाःपुत्र्याःप्रसवेमरणेचस्मृत्यर्थसारेविशेषउक्तः ॥ यथा ॥ मातापितृगृहेषूढायाः पुत्र्याःप्रसवेमातापित्रादीनामेकाहमाशौचम्॥तत्रस्थायामरणेतेषांत्रिरात्रम् ॥ गृहांतरमरणेपिपित्रोरेवत्रिरात्रम्॥ग्रामांतरमरणेपक्षिणीमिति॥ विष्णुरपि ॥ संस्कृतासुस्त्रीषुनाशौचं पितृपक्षे ॥ तत्प्रसवमरणेचेत्पितृगृहेस्यातांतदेकरात्रंत्रिरात्रंचेति ॥ गृहमृतासपिंडविषयेगृहपतेस्तत्सपिंडानांचतत्रैवविशेषउक्तः॥ असपिंडेगृहेमृतेत्रिरात्रंसपिंडानामेकाहमिति॥यत्तुविष्णुवचनम् ॥ असपिंडेस्ववेश्मनिमृतेएकरात्रमिति तद्गृहपतिव्यतिरिक्ततत्पत्न्यादिविषयम् ॥ वृद्धविष्णुनातुविशेषउक्तः ॥ ग्राममध्यगतोयावच्छवस्तिष्ठतिकस्यचित्॥ग्रामस्यतावदाशौचंनिर्गतेशुचितामियादिति ॥ अनौरसक्षेत्रजादिपुत्रविषयेयाज्ञवल्क्येन विशेषउक्तः ॥ अत्राहोरात्रमित्यनुवर्त्तते ॥ अनौरसेषुपुत्रेषुभार्यास्वन्यगतासुचेति ॥ अन्यगतास्वित्यन्यगतस्वभार्याप्रसवमरणयोःपरिणेतुरहोरात्रमाशौचमिति ॥ एतदसन्निधानविषयम् ॥ सन्निधौतुविष्णुः ॥ अनौरसेषुपुत्रेषुजातेषुचमृतेषुच ॥ परपूर्वासुभार्यासुप्रसूतासुमृतासुचेति ॥ अत्रत्रिरात्रमित्यनुवर्त्तते ॥ परपूर्वास्वितिपरःपूर्वश्चपतिर्यासांताःपरपूर्वाउच्यंते ॥ इदमाशौचंपुत्रसंबंधेनयस्यपुत्रस्तस्यैव॥भार्यासंबंधेनतत्पत्युरेव॥सपिंडानांसद्यःशुद्धिः ॥तदाहप्रजापतिः॥अन्याश्रितेषुदारेषुपरपत्नीसुतेषुच॥ गोत्रिणःस्नानशुद्धाःस्युस्त्रिरात्रेणैवतात्पितेति ॥ एतच्चसंनिधौ॥असन्निधौ याज्ञवल्क्योक्तएवाहोरात्रः ॥ मरीचिनातुविशेषउक्तः ॥ सूतकेमृतकेचैवत्रिरात्रंपरपूर्वयोः ॥ एकाहस्तुसपिंडानांत्रिरात्रंयत्रवैपितुरिति॥रात्रिदिनमृतेतद्दशवासिनामस्तमयपर्यन्तमाशौचम्॥रात्रिमृतेसूर्योदयपर्यंतम् ॥ तदा

हमनुः ॥ प्रेतेराजनिसज्योतिर्यस्यस्याद्विषयेस्थितिरिति ॥ राज्ञां प्रजापालननिमित्तकशांतिकपौष्टिकादिकर्मणिदासदासीशिल्पादीनां स्वामिगृहकर्मणिसद्यःशुद्धिः ॥नित्यनैमित्तिकादिकर्मसुस्ववर्णाशौच मस्त्येव॥ तत्रप्रचेताः ॥ कारवःशिल्पिनोवैद्यादासीदासास्तथैवच ॥ राजानोराजभृत्याश्चसद्यःशौचाःप्रकीर्तिताइति ॥ कारवःसूपकाराद्याः शिल्पिनश्चित्रकारांचलनिर्णेजकाद्याः ॥दासीदासविषयेअंगिरसाविशे षउक्तः॥दासीदासश्चसर्वोवैयस्यवर्णस्ययोभवेत् ॥ तद्वर्णस्यभवेच्छौ चंदास्यामासस्तुसूतकामिति ॥ तद्वर्णस्येतिस्वाम्याशौचेतस्याशौ चम् ॥ दास्यामासस्त्विति॥प्रसूतायादास्यायाःकर्माधिकारस्तुमासा वधिरेवेत्यर्थः ॥ विष्णुरपि ॥ नराज्ञांराजकर्मणिनव्रतिनांव्रते ॥ नसत्रिणांमहासत्रे ॥ नकारूणांकारुकर्मणीति ॥ शातातपोपि ॥ मूल्यकर्मकराः शूद्रादासीदासास्तथैवच ॥ स्नानेशरीरसंस्कारेगृह कर्मण्यदूषिताः॥तथा॥सद्यःस्पृश्योगर्भदासोभक्तदासस्त्र्यहाच्छुचिः ॥ चिकित्सकोयत्कुरुतेतदन्येननशक्यते ॥ तस्माच्चिकित्सकःस्पर्शेशु द्धोभवतिनित्यशइति॥इत्याशौचकालनिर्णयः ॥ अथदेशान्तरजनने मरणेचाशौचमुच्यते ॥ तत्रदशरात्रमध्येजननमरणवार्त्ताश्रवणेसत्य वशिष्टाच्छौचकालाच्छुद्धिः॥ तदाहमनुः॥ विगतंतुविदेशस्थंशृणुया द्योह्यनिर्दशम् ॥ यच्छेषंदशरात्रस्यतावदेवाशुचिर्भवेदिति ॥ विग तंमृतम् ॥ इदंजननस्याप्युपलक्षणम् ॥ दशरात्रस्येत्याशौचकाल स्योपलक्षणम् ॥ अतश्चश्रवणानंतरमेवाशौचं दशरात्रादिसंख्यात्वा शौचोत्पत्तिप्रभृत्येव ॥ याज्ञवल्क्योपि ॥ प्रोषितेकालशेषःस्यादि ति ॥ स्मृत्यर्थसारेपि ॥ विदेशस्थस्यजननेमरणेवाप्रथमादिवसादू र्ध्वंज्ञातेपुत्रादीनांस्वाशौचशेषेणैवशुद्धिरिति ॥ दशाहाद्याशौचका लानंतरंमृतादिवार्ताश्रवणेतुमनुनैवोक्तम् ॥ निर्दशंज्ञातिमरणं श्रुत्वापुत्रस्यजन्मच ॥ सवासाजलमाप्लुत्यशुद्धोभवतिमानव इति ॥ अत्रपुत्रस्येतिसंबंधशब्दत्वादतीतजननाशौचश्रवणेपिपितुरेव स्नानम्॥ नज्ञातीनाम् ॥ज्ञातिमरणंश्रुत्वासवासाजलमाप्लुत्यशुद्धोभ

वतीत्येतदपिसपिंडानांमरणवार्ताश्रवणानंतरमावश्यकंसचैलस्नान विधिपरम् ॥ नत्वाशौचाभावप्रतिपादनपरम् ॥ मासत्रयपर्यान्त्यादिषुत्रिरात्रमाशौचस्यवक्ष्यमाणत्वात् ॥ प्रसवेत्वतीताशौचंसपिंडानां नास्त्येवेति ॥ तदाहदेवलः॥ नशुद्धिः प्रसवाशौचव्यतीतेषुदिनेष्वपीति ॥ स्वाशौचकालानंतरंमासत्रयपर्यंतंमृतवार्त्ताश्रवणेत्रिरात्रमाशौचम् ॥ तदूर्ध्वंषण्मासपर्यन्तंपक्षिणी ॥ ततोनवमासात्पूर्वमेकाहः ॥ ततःसंवत्सरपर्यन्तंस्नानोदकदानाभ्यामेवशुद्धिः ॥ संवत्सरादूर्ध्वंस्नानमात्रेणैवसपिंडानांशुद्धिः ॥ तदाहवृद्धवसिष्ठः ॥ मासत्रयेत्रिरात्रंस्यात्षण्मासेपक्षिणीतथा ॥ अहस्तुनवमादर्वागूर्ध्वं स्नानेनशुध्यतीति ॥ अत्रस्नानंस्वसहचरितमुदकदानमप्याक्षिपति ॥ मनुनासंवत्सरानंतरमपिस्नानमात्रस्योक्तत्वात् ॥ यथा ॥ संवत्सरेव्यतीतेतुस्पृष्ट्वैवापोविशुध्यतीति ॥ स्पृष्ट्वास्नात्वेत्यर्थः ॥ इदमतीताशौचंपितृव्यतिरिक्तसपिंडमरणविषयम् ॥ तद्विषयेतुपैठीनसिरप्याह ॥ पितरौचेन्मृतौस्यातांदूरस्थोपिहिपुत्रकः ॥ श्रुत्वातद्दिनमारभ्यदशाहंसूतकीभवेदिति॥दशाहमितिद्वादशाहाद्युपलक्षणम् ॥ सूतकीभवेदित्येतेनाकृतप्रेतकार्यस्यतदपिकर्तव्यमितिसूच्यते ॥ तथाचोक्तंमिताक्षरायाम्॥महागुरुनिपातेतुचार्द्रवस्त्रोपवासिना ॥अतीतेऽब्देपिकर्तव्यंप्रेतकार्यंयथाविधीति॥मातृसपत्नीविषयेतुदक्षेणोक्तम्॥ पितृपत्न्यामपेतायांमातृवर्जंद्विजोत्तम॥ संवत्सरेव्यतीतेतुत्रिरात्रमशुचिर्भवेदिति॥स्मृत्यर्थसारेविशेषउक्तः॥मातापितृमरणंदशाहादेरूर्ध्वं दूरदेशोपिसंवत्सरादूर्ध्वमपिपुत्रःश्रुत्वामरणश्रवणदिनमारभ्यदशाहादिकंयथावर्णंपूर्णमाशौचंकुर्यात् ॥ उदकपिंडदानंचमहागुरुमरणेचदूरदेशोप्यतीतेअब्देप्यार्द्रवस्त्रोपवासिनातथैवाशौचादिकंकार्यम् ॥स्त्रीपुरुषयोःपरस्परंत्वेवमेव॥सवर्णोत्तमसपत्नीषुचैवम् ॥ देशांतरेकालांतरेचहीनवर्णायामातुःसपत्न्याःमरणेपुत्रस्यत्रिरात्रमिति॥ अतश्चदक्षवचनमपिहीनवर्णमातृसपत्नीविषयएवयोज्यम्॥देशांतरमृतेत्वतीताशौचं ज्ञातीनांनास्ति ॥ तदुक्तंस्मृत्यंतरे ॥ देशांतरमृतंश्रुत्वाक्लीबेवैखानसे

यतौ॥मृतेस्नानेनशुध्यंतिगर्भस्रावेचगोत्रिणइति ॥ देशान्तरमृतमिति क्लीबादिव्यतिरिक्तविषयम्॥क्लीबादिषुसन्निहितेष्वपिसद्यःशुद्धिः ॥ देशांतरस्वरूपंचवृद्धमनुनोक्तम्॥महानद्यंतरंयत्रगिरिर्वाव्यवधायकः॥ वाचोयत्रविभिद्यंतेतद्देशांतरमुच्यतइति॥बृहस्पतिरपि ॥ देशांतरंवदंत्येकेषष्टियोजनमायतम्॥चत्वारिंशद्वदंत्यन्येत्रिंशदन्येतथैवच ॥एषु देशेषुदेशाचारतोव्यवस्थाकल्पनीया॥योजनप्रमाणंतुस्मृत्यर्थसारेप्रोक्तम्॥तिर्यग्यवोदराण्यष्टावूर्ध्वावाव्रीहयस्त्रयः॥ प्रामाणमंगुलस्योक्तंवितस्तिर्द्वादशांगुलः ॥वितस्तिर्द्विगुणाहस्तस्ततःकिष्कुस्ततोधनुः ॥ धनुःसहस्रेद्वेक्रोशश्चतुष्क्रोशंतुयोजनमिति ॥ इदमतिक्रांताशौचंब्राह्मणादिवर्णानामुपनयनादनंतरंवेदितव्यम् ॥ तदुक्तंस्मृत्यर्थसारे ॥अतीताशौचेतुस्वाशौचकालादूर्ध्वंस्त्रीशूद्राणांविवाहादूर्ध्वंभवतीति॥इदं सर्वेषामपिवर्णानांसाधारणम्॥तदाहव्याघ्रपादः॥ तुल्येवयासिसर्वेषामतिक्रांततथैवच ॥ उपनीतेतुविषमंतस्मिन्नेवतुकालजमिति ॥ अस्यार्थः ॥ वयोवस्थाकृतमाशौचमतिक्रांताशौचंचसर्ववर्णसाधारणम् ॥ दशाहद्वादशाहादिरूपमुपनीतविषयएव ॥ अतिकालजमतिक्रांताशौचंचतस्मिन्नेवोपनीतविषयएवभवतिनानुपनीतविषयइत्यर्थः ॥ अतिक्रांताशौचंगृहिणएवनतुतद्व्यस्य ॥ तदाहांगिराः ॥ अतिक्रांते दशाहेतुपश्चाज्जानातिचेद्गृही ॥ त्रिरात्रंसूतकंतस्यनतद्व्यस्यकर्हिचिदिति ॥ देशांतरमृतस्यास्थिभिःप्रतिकृतिंकृत्वास्थ्नामभावेपर्णशरेणपिष्टकेनवाप्रतिकृतिंयथास्वाचारंकृत्वादाहःकार्यः ॥ अनाहिताग्नेःप्रतिकृतिदाहेत्रिरात्रमाशौचम् ॥ आहिताग्नेर्यथावर्णसंपूर्णाशौचमस्त्येव ॥ तदुक्तंस्मृत्यर्थसारे ॥ सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्चतथाग्निना॥असौस्वर्गायलोकायस्वाहेत्युक्त्वासबांधवैः॥एवंपर्णशरंदग्ध्वा त्रिरात्रमशुचिर्भवेदिति॥ वसिष्ठोपि॥आहिताग्निश्चेत्प्रवसन्म्रियतेपुनःसंस्कारंकृत्वाशववच्छौचमिति ॥अत्रानाहिताग्नेस्त्रिरात्रमितिपूर्वंगृहीताशौचपुत्रपत्नीविषयम् ॥ अगृहीताशौचविषयेतुदशाहादिसंपूर्णाशौ

१ रत्निःततःकिंचित्ततो धनुः इ० पा० । २ यवसंमिश्रैः इ० पा० ।

चम्॥तदुक्तंस्मृत्यर्थसारे॥अतीतेसूतकेतुपूर्वमगृहीताशौचस्यपुत्रस्य पत्न्याश्चदशाहादिकंसंपूर्णाशौचम्॥ गृहीताशौचस्यपुत्रस्यपत्न्याश्च त्रिरात्रम्॥ पत्नीपुनःसंस्कारेपत्युश्चैवंसपत्न्योश्चैवमिति॥पुनःसंस्कारेसपिंडेषुतत्रैवोक्तम्॥अगृहीताशौचानांसपिंडानांत्रिरात्रम्॥गृहीताशौचानांसपिंडानांपुनराशौचंनास्ति॥प्रोषितस्यजीवद्वार्त्तानाकर्णने विशेषोबृहस्पतिनोक्तः॥ यस्यनश्रूयतेवार्त्तायावद्द्वादशवत्सरम्॥कुशपुत्रकदाहेनतत्रस्यादवधारणमिति॥एतत्पितृव्यतिरिक्तविषयमितिगम्यते॥ पितृविषयेजातूकर्णेनविशेषाभिधानात्॥ पितरिप्रोषिते यस्यनवार्त्तानैवचागतिः॥ऊर्ध्वंपंचदशवर्षात्तुकृत्वातत्प्रतिरूपकम्॥कुर्यात्तस्यतुसंस्कारंयथोक्तविधिनाततइति॥अत्रैवस्मृत्यर्थसारेविशेषउक्तः॥दूरदेशांतरगतेजीवद्वार्त्तांपुनःपुनः॥पुत्रःपर्यालोच्यजीवद्वार्तायामश्रूयमाणायांपूर्ववयस्केएकविंशत्यब्दादूर्ध्वंमध्यमवयस्केपंचदशाब्दादूर्ध्वमपरवयस्केद्वादशाब्दादूर्ध्वंचांद्रायणत्रयंत्रिंशत्कृच्छ्राणिवाकृत्वापालाशवृंतैकुशैर्वाप्रतिकृतिंकृत्वादशाहाशौचोदकपिंडोदकश्राद्धानिकार्याणीति॥श्राद्धादिकेकृतेयदिजीवन्समागच्छेत्तदातंघृतकुंडे निधायजातकर्मादिसंस्कारान्कुर्यात्॥ तदाहवृद्धमनुः॥ जीवन्यदि समागच्छेद्घृतकुंडेनिधापनम्॥ उद्धृत्यस्नापयित्वास्यजातकर्मादि कारयेत्॥द्वादशाहंव्रतंकुर्यात्त्रिरात्रमथवापुनः॥ स्नात्वोद्वहेततांभार्यामन्यांवातदभावतः॥ अग्नीनाधायविधिवद्व्रात्यस्तोमेनयाजयेत्॥ अथैंद्राग्नेनपशुनागिरिंगत्वाचतत्रतु॥ इष्टिमायुष्मतींकुर्यादीप्सितांश्चक्रतूंस्ततइति॥ शवानुगमनेतन्निमित्ताशौचंतुयाज्ञवल्क्येनोक्तम्॥ ब्राह्मणेनानुगतव्योनशूद्रोनाद्विजःक्वचित्॥ अनुगम्यांभसिस्नात्वास्पृष्ट्वाग्निंघृतभुक्छुचिरिति॥ ब्राह्मणेनासपिंडेनद्विजोविप्रादिःशूद्रोवाप्रेते नानुगन्तव्यइत्यर्थः॥ अत्रघृतभोजनंपावित्र्यार्थंनतृप्त्यर्थम्॥ इयंशुद्धिःसमानोत्कृष्टजातीयानुगमनविषया॥ तदाहमनुः॥ अनुगम्येच्छ

१ ऊर्ध्वंपञ्चदशाद्वर्षात् इ०पा०।

याप्रेतंज्ञातिमज्ञातिमेवच ॥ स्नात्वासचैलंस्पृष्ट्वाग्निंघृतंप्राश्यविशु
ध्यतीति॥अत्रज्ञातिमितिज्ञातयोमातृसपिण्डाः॥पितृसापिण्डानुगमन
स्यविहितत्वात् ॥ हीनवर्णविषयेतुस्मृत्यर्थसारेविशेषउक्तः॥ ब्राह्मण
स्यक्षत्रियानुगमनेएकाहमाशौचम्॥वैश्यानुगमनेपक्षिणी ॥ शूद्रानुग
मनेत्रिरात्रमाशौचंकृत्वासमुद्रगायांनद्यांस्नात्वाप्राणायामशतंकृत्वा
घृतंप्राश्यविशुध्येत् ॥ क्षत्रियस्यवैश्यानुगमनेत्वेकाहमाशौचम् ॥
शूद्रानुगमनेपक्षिणी ॥ वैश्यस्यशूद्रानुगमनेत्वेकाहंरोदनेचैवमिति ॥
यत्तुवसिष्ठवचनम् ॥ मानुषास्थिस्निग्धंस्पृष्ट्वात्रिरात्रमाशौचम् ॥ अ
स्निग्धेत्वहोरात्रमाशौचम् ॥ शेषानुगमनेचैवमिति ॥ इदमपिब्राह्मण
स्यक्षत्रियानुगमनविषयम्॥ ॥ शूद्रानुगमनेतुपराशरः॥ प्रेतीभूतंतु
यःशूद्रंब्राह्मणोज्ञानदुर्बलः ॥ अनुगच्छेन्नीयमानंसत्रिरात्रेणशुध्यति ॥
त्रिरात्रेतुततस्तीर्णेनदींगत्वासमुद्रगाम् ॥ प्राणायामशतंकृत्वाघृतंप्रा
श्यविशुध्यतीति ॥ इदमनुगमनादिसंसर्गाशौचंसंसर्गिणएवनतत्पुत्रा
दीनाम्॥ तदाहांगिराः॥ आशौचंयस्यसंसर्गादापतेद्गृहमेधिनः ॥
क्रियास्तस्यनलुप्यंतेगृह्याणांनचतद्भवेदिति ॥ असपिंडप्रेतस्यालंक
रणेतुशंखेनप्रायश्चित्तमुक्तम्॥कृच्छ्रपादोऽसपिंडस्यप्रेतालंकरणेकृते॥
अज्ञानादुपवासःस्याद्दशकोस्नानामिष्यतइति॥ज्ञानात्कृतेतुद्विगुणम्
॥ ॥ पारस्करः ॥ मृतस्यबांधवैःसार्द्धंकृत्वातुपरिदेवनम् ॥ वर्जये
त्तदहोरात्रंदानंश्राद्धादिकर्मचेति ॥ ॥ इतिदेशांतरमरणजननाशौ
चनिर्णयः॥ ॥ अथाशौचसन्निपातेविशेषउच्यते॥ तत्रजननाशौच
मध्येशावाशौचमध्येवाजननाशौचेतत्समेततोन्यूनेवासतिपूर्वाशौच
शेषेणैवांतरापतितसूतकस्यनिवृत्तिः॥ तदाहयाज्ञवल्क्यः ॥ अन्तरा
जन्ममरणेशेषाहोभिर्विशुध्यतीति ॥ शावाशौचमध्येतत्समेततोन्यू
नेवाशावाशौचांतरेसतिपूर्वशेषेणैवशुद्धिः ॥ जननाशौचमध्येशावा
शौचेसतिशावाशौचंसंपूर्णकार्यम्॥नजननाशौचशेषेणशुद्धिः॥ शावा
शौचेसमुत्पन्नेसूतकंतुयदाभवेत् ॥शावेनशुध्यतेसूतिर्नसूतिःशावशो

धिनी ॥ अंगिरसाप्युक्तम् ॥ सूतकेमृतकंचेत्स्यान्मृतकेत्वथ सूतकम् ॥ तत्राधिकृत्यमृतकंशौचंकुर्यान्नसूतकमिति॥ स्वल्पाशौच मध्येअधिकेसूतकेवासतिनपुनःपूर्वशेषेणशुद्धिःकिन्तुस्वकालेनैव ॥ तदाहोशना ॥ स्वल्पाशौचस्यमध्येतुदीर्घाशौचंभवेद्यदि ॥ नपूर्वेणै वशुद्धिःस्यात्स्वकालेनैवशुध्यतीति ॥अत्राशौचपदेनसूतकंमृतकंचो च्यते ॥ अत्रस्वल्पत्वंदीर्घत्वंचकालकृतमेवाशौचस्यज्ञेयम् ॥ मा तापित्राशौचसन्निपातेचांगिरसाविशेषउक्तः ॥ मातर्यग्रेप्रमीतायामशु द्धौम्रियतेपिता ॥ पितुःशेषेणशुद्धिःस्यान्मातुःकुर्यात्तुपक्षिणीमिति ॥ मात्राशौचस्यमध्येपित्राशौचेसतिपित्राशौचंसंपूर्णकार्यम् ॥ पित्राशौ चमध्येमात्राशौचेसतिपित्राशौचंसमाप्यमात्राशौचंपक्षिणींकुर्यादित्य र्थः ॥शातातपेनत्वपरोविशेषउक्तः ॥ रात्रिशेषेद्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहादिति॥अस्यार्थः ॥ पूर्वाशौचेआशौचांतरात्रिमात्रावशेषेस तिसूतकांतरेजातेसत्यपरेणाहर्द्वयेनशुद्धिः ॥ आशौचांतरात्रिपश्चि मयाममात्रावशेषेसत्यपरैस्त्रिभिरहोरात्रैःशुद्धिर्नपूर्वशेषेणेति ॥ यत्तु ब्रह्मपुराणवचनम् ॥ आद्यंभागद्वयंयावत्सूतकस्यतुसूतके ॥ द्विती येपतितेचाद्यात्सूतकाच्छुद्धिरिष्यते ॥ अतऊर्ध्वंद्वितीयांतात्सूतकां ताच्छुचिःस्मृतः ॥ एवमेवविचार्यस्यान्मृतकेमृतकांतरइति ॥ अ स्यार्थः ॥ सूतकसंबंधिचरमाहोरात्रस्ययदाद्यभागद्वयंतच्चतुर्धावि भक्तेअहोरात्रेअहोरूपमेव ॥ तत्रांतिमदिनेद्वितीयेसूतकेपतितेआ द्यात्सूतकाच्छुद्धिः ॥ अतऊर्द्ध्वमस्तमयानंतरंरात्रिरूपभागद्वयेसू तकांतरापातेसतिद्वितीयात्सूतकांताच्छुद्धिरित्यविरोधः ॥ अन्यथा बहुवाक्यविरोधःस्यात् ॥अत्रैवगौतमोपि॥रात्रिशेषेसतिद्वाभ्यांप्रभाते तिसृभिरिति॥ आशौचमध्येआशौचांतरेसतिपिंडजातकर्मादिकर्मणि शातातपेनविशेषउक्तः ॥ अंतर्दशाहेपश्चात्स्याज्जननान्मरणंयदि ॥ प्रेतमुद्दिश्यकर्त्तव्यंपिंडदानंस्वबंधुभिः ॥ प्रारब्धेशावपिंडेतुमध्येच जननंभवेत् ॥ तथैवाशौचपिंडांस्तुशेषान्दद्याद्यथाविधीति ॥ प्रजा

पतिरपि ॥ आशौचेतुसमुत्पन्नेपुत्रजन्मयदाभवेत् ॥ कर्तुस्तात्कालिकीशुद्धिःपूर्वाशौचेनशुध्यतीति ॥ उक्ताशौचसन्निपातशुद्धिःसूतिकामग्निदंचविहायज्ञातव्या ॥ सूतिकामग्निदंचहित्वेत्याद्यैःस्मृतिसंग्रहोक्तत्वात् ॥ अत्रोक्ताशौचप्रकरणेयान्यधिकाशौचविषयेसंकुचिताशौचविधायकवाक्यानितानिसमानोदकापदादिविषयत्वेनव्यवस्थापनीयानि ॥ यानिस्वल्पाशौचविधायकानितानिगुणवदनापत्सन्निहितविषयत्वेनव्यवस्थापनीयानि ॥ नतुविरोधआशंकनीयः ॥ तथाचस्मृत्यर्थसारे ॥ एवंदशाहस्थानेत्रिरात्रपक्षिण्येकाहसद्यःशौचपराणिवाक्यान्यापद्विषयाणियोज्यानि ॥ समानोदकविषयश्चसंकुचिताशौचकल्पः ॥ पक्षिण्येकाहसद्यःशौचरूपाआपद्विषयपराः॥ येनप्रतिग्रहादिनार्तिनाशस्तद्विषयानसर्वत्रेति ॥ ॥ इत्याशौचसंकरनिर्णयः ॥ ॥ अथाशौचेयत्कर्मकार्यंवर्ज्यंवातदुच्यते ॥ तत्र पुलस्त्यः ॥ संध्यामिष्टिश्चरुंहोमंयावज्जीवंसमाचरेत् ॥ नत्यजेत्सूतकेवापियज्ञंनोच्छेदयेद्द्विजइति[1] ॥ विष्णुपुराणेतु ॥ सर्वकालमुपासत्तिःसंध्ययोःपार्थिवेष्यते ॥ अन्यत्रसूतकाशौचविभ्रमातुरभीतितइतिसंध्योपासनमाशौचेनिषिद्धम् ॥ अत्रायमभिप्रायः ॥ संध्यांप्राणायाममंत्रोच्चारणपूर्वकंनोपासीतेति पुलस्त्यवचनस्यतुप्राणायामवर्ज्जंमानसिकमंत्रोच्चारपूर्वकंसंध्यामुपासीतेति नसर्वथात्यजेदित्यभिप्रायः ॥ अमुमेवार्थंपुनःपुलस्त्यएवाह ॥ यथा ॥ सूतकेमृतकेचैवसंध्याकर्मसमाचरेत् ॥ मनसोच्चारयेन्मंत्रंप्राणायाममृतेद्विजइति ॥ अंजलिप्रक्षेपस्तुगायत्रीमुच्चार्यैवकार्यः ॥ तदाहपैठीनसिः ॥ सूतकेसावित्र्याचांजलिंप्रक्षिप्यप्रदक्षिणांकृत्वासूर्यंध्यायन्नमस्कुर्यादिति ॥ ॥ स्मृत्यर्थसारेतुविशेषउक्तः ॥ स्मार्त्तत्वेपिसंध्यायांगायत्र्यांजलिदानंकार्यम् ॥ मार्जनंकार्यंनवा ॥ यद्वा ॥ प्राणानायम्यमनसामंत्रमुच्चार्यन्मार्जनादिकृत्वावाचागायत्रीमुच्चार्यांजलिंदद्यादिति ॥ इष्टिहोमा

१ त्यजन्गच्छेदधोद्विजः इ० पा० ।

दिकमप्यसगोत्रेणकारयेत् ॥ तदाहजातूकर्ण्यः ॥ सूतकेतुसमुत्पन्ने स्मार्तकर्मकथंभवेत् ॥ पिंडयज्ञंचरुंहोममसगोत्रेणकारयेदिति ॥ पिंडयज्ञःपिंडपितृयज्ञः ॥ चरुःश्रावणीकर्माश्वयुज्यादिकंस्थालीपाकश्च॥बृहस्पतिरपि॥सूतकेमृतकेचैवमशक्तौश्राद्धभोजने ॥प्रवासादिनिमित्तेषुहावयेन्नतुहापयेदिति ॥ यजमानस्तूद्देशत्यागंकुर्यात् ॥ नित्याग्निहोत्रादीनिस्वयमेवकुर्यात् ॥ तदाहपारस्करः ॥ नित्यानिविनिवर्त्तेरन् ॥ वैतानवर्ज्यंशालाग्नौचैकएतानिकुर्युरिति ॥ अस्यार्थः ॥ वैतानंवर्जयित्वाअन्यानिनित्यानिनिवृत्तानिभवेयुः ॥नित्यमपिवैतानंननिवर्तते ॥ वितानोनामाग्नीनांविस्तारस्त्रेताग्निस्तत्रविधीयमानानिनित्याग्निहोत्रादीनिवैतानानितानिस्वयमेवकुर्यात् ॥ शालाग्निर्गृह्याग्निस्तत्संबंधीनिगृह्याग्निसायंप्रातर्होमस्थालीपाकादीनितान्यपिननिवर्तेरन्नित्येकेआहुः ॥ अतश्चैषांकरणमकरणंवा ॥करणपक्षेतान्यन्येअसगोत्राःकुर्युरित्यर्थः ॥यत्तुस्मृत्यर्थसारे॥उपासनाग्निसाध्याःसायंप्रातर्होमपार्वणस्थालीपाकाद्यानित्यनैमित्तिकाःश्रुतिचोदितत्वात्कार्यएवेति ॥अत्रापिद्रव्यत्यागात्मकंप्रधानंस्वयमेवकुर्यात् ॥ अन्यदंगमन्येनकारयेदित्यभिप्रायः ॥ अतएवअसंभवेहावयेत्सर्वथानहापयेदितितेनैवोक्तम् ॥ असंभवेप्रधानकरणासंभवेनैमित्तिकान्यपिदर्शपौर्णमासादीनिश्रुत्युक्तानिकार्याणि ॥तदुक्तंस्मृत्यर्थसारे ॥ जातेआशौचेत्रेताग्निसाध्याग्निहोत्रदर्शपौर्णमासाद्यानित्यनैमित्तिकाःक्रियाःश्रुत्युक्तत्वात्कार्याएवेति ॥ अतश्चनित्याग्निहोत्रव्यतिरिक्तानामपिनित्यनैमित्तिकानांश्रौतानांस्मार्त्तानांवासर्वथानत्यागःकिंत्वन्येनकारयेत् ॥काम्यंसर्वमपिवर्ज्यमेव॥वैश्वदेवपंचमहायज्ञादीनिस्मार्त्तानिवर्जयेदेव ॥ तहादसंवर्त्तः ॥ विप्रोदशाहमासीतवैश्वदेवविवर्जितः ॥ पंचयज्ञविधानंतुनकुर्यान्मृत्युजन्मनोरिति ॥ यत्पुनर्वचनम् ॥ दानंप्रतिग्रहोहोमःस्वाध्यायश्चानिवर्ततइति॥तत्काम्यहोमविषयम् ॥ नित्यस्नानादिकंकार्यमेव ॥ तदुक्तंस्मृत्यर्थसारे ॥ नित्यस्नानशौचाचमनभोजन

नियमानस्पृश्यास्पर्शनस्नानंचकुर्यादेवेति ॥ इदमाशौचंज्ञातमेवदोषापादकंनाज्ञातम् ॥ तदुक्तंब्रह्मपुराणे॥अपिदातृग्रहीत्रोश्चसूतकेमृतकेथवा॥अविज्ञातेनदोषःस्याच्छ्राद्धादिषुकदाचन ॥ विज्ञातेभोक्तुरेवस्यात्प्रायश्चित्तादिकंक्रमादिति ॥ अत्रविज्ञातेभोक्तुरितिदात्राभोक्त्राउभाभ्यांवाज्ञातेभोक्तुरेवदोषइत्यर्थः ॥ तदुक्तंषट्त्रिंशन्मते ॥ उभाभ्यामपरिज्ञातेसूतकंनैवदोषकृत् ॥ एकेनापिपरिज्ञातेभोक्तुर्दोषमुपावहेदिति ॥ उभाभ्यांदातृभोक्तृभ्यामेकेनापिदातृभोक्त्रोरन्यतरेणदात्राभोक्त्रावाज्ञातेसूतकान्नभोजनदोषोभोक्तुरेव ॥ दातुस्तुसूतकान्नभोजयितृत्वदोषोस्त्येवनभोजनदोषइत्यर्थः ॥ सूतकान्नस्याभोज्यत्वंयमेनोक्तम् ॥ उभयत्रदशाहानिकुलस्यान्नंनभुज्यतइति ॥ उभयत्रसूतकेमृतकेचकुलस्यसूतकिकुलस्य ॥ भोजनमध्येसूतकेसतिअन्यगृहोदकेनाचमनेनशुद्धिः॥तदुक्तंषट्त्रिंशन्मते ॥ भुंजानेषुतुविप्रेषुत्वंतरामृतसूतके ॥ अन्यगेहोदकाचांताःसर्वेतेशुचयःस्मृताइति ॥ पूर्वसंकल्पितेष्वन्नादिषुनदोषः ॥ तदाहबृहस्पतिः ॥ विवाहोत्सवयज्ञेषुत्वंतरामृतसूतके ॥ परैरन्नंप्रदातव्यंभोक्तव्यंचद्विजोत्तमैरिति ॥ परैःसूतकरहितैः ॥ अतएवस्मृत्यर्थसारेप्रोक्तम् ॥ दातृभोक्त्रश्चनस्पृशेदिति॥आशौचग्राह्याणिमरीचिराह॥लवणेमधुमांसेचपुष्पमूलफलेषुच॥शाककाष्ठतृणेष्वप्सुदधिसर्पिःपयःसुच ॥ तिलौषधादिकेचैवपक्वापक्वेस्वयंग्रहः ॥ शुष्केषुचैवसर्वेषुनाशौचंमृतसूतकइति ॥ स्वयंग्रहइतिस्वाम्यनुज्ञातंस्वयंगृह्णीयादित्यर्थः ॥ पक्वापक्वइति॥पक्वभक्ष्यजातमपक्वंतंडुलादिकंचाममम् ॥ तच्चअन्नसत्रप्रवृत्तादेवग्राह्यंनान्यस्मात् ॥ तदाहांगिराः ॥ अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम्॥भुक्त्वापक्वान्नमेतेषांत्रिरात्रंतुपयःपिबेदिति ॥ व्रतादिकेषुप्रांतेष्वंतरासूतकादिप्राप्रारब्धमात्रकरणेआशौचाभावः ॥ अन्यकर्मस्वाशौचमस्त्येव॥तविष्णुः ॥ व्रतयज्ञविवाहेषुश्राद्धेहोमार्चनेजपे॥प्रारब्धेसूतकंनरब्धेतुसूतकमिति॥सूतकमितिमृतकस्याप्युपलक्षणम् ॥

येप्रारंभविशेषश्चतेनैवोक्तः॥प्रारंभोवरणंयज्ञेसंकल्पंव्रतसत्रयोः॥नांदीमुखंविवाहादौश्राद्धेपाकपरिक्रियेति ॥ यज्ञेवरणमितिवृतानामृत्विजांयजमानस्यचतस्मिन्कर्मणिनाशौचमितिभावः ॥ एवंश्राद्धादिष्वपिदातृभोक्त्रोर्वेदितव्यम् ॥ तदुक्तंस्मृत्यर्थसारे ॥ वृतानामृत्विजांदीक्षणीयेष्ट्यादीक्षितानाम् ॥ यज्ञियंकर्मकुर्वतामन्नसत्रिणांकृच्छ्रचान्द्रायणादिव्रतिनांप्रायश्चित्तत्वेनप्रवृत्तानांब्रह्मचर्यादिव्रतानांचप्रवृत्तेश्राद्धकर्मणिभोक्तृणामेतेषांयावदुपाधिस्तावदाशौचंनास्त्येवेति ॥ प्रारंभाभावेपिकन्यायाअधार्यत्वेसन्निहितलग्नांतराभावेचकूष्मांडमंत्रैर्घृतंहुत्वाविवाहःकार्यएव ॥ तदाहविष्णुः ॥ अनारब्धेविशुद्ध्यर्थंकूष्मांडैर्जुहुयाद्घृतम् ॥ गांदद्यात्पंचगव्याशीततःशुध्यतिसूतकीति ॥ अनारब्धेकर्मणिसूतकविशुद्ध्यर्थंयद्देवादेवहेलनमित्यादिकूष्मांडसंज्ञकैर्मन्त्रैर्घृतंहुत्वाविप्रायगांदत्त्वापंचगव्यंप्राश्यसूतकीशुद्ध्यतीति ॥ शुद्धश्चावश्यकंविवाहमंगलंकुर्यादितिमंगलम्॥इत्याशौचकृत्याकृत्यनिर्णयः॥ ॥ श्रीसूर्यसेनभूभृद्विमलयशःक्षीरसागरादुदिते ॥ इतिनिर्णयामृतेस्मिन्नाशौचस्यनिर्णयोजातः ॥ ॥ इतिश्रीसूर्यसेनमहीमहेन्द्रविरचितेनिर्णयामृतेआशौचप्रकरणंचतुर्थंसंपूर्णम् ॥ ॥ श्रीमत्पंडितसिद्धलक्ष्मणसुतःश्रीसिद्धलक्ष्मीपदद्वंद्वाराधनसुप्रसिद्धमहिमायःसिद्धसारस्वतः ॥ आदेशादकृतैषसूर्यमहसाश्रीसूर्यसेनप्रभोर्वैधेकर्मणिकालनिर्णयमसावल्लाटनाथःसुधीः॥छ॥ श्रीरामगोविंदार्पणमस्तु॥

---

१ एतदग्रेऽयमेक एतादृशः श्लोकः ' बुधानामुपकारायकारुण्यान्मूढचेतसाम् ॥ गोपीनारायणेनेदंनिर्मितंनिर्णयामृतम् ॥ इति ' पुस्तकद्वये दृश्यते परंत्वेतादृशो नामोल्लेखउपक्रमेनकृत इत्यसंगतइवप्रतिभातीतिमूलेननिवेशितोऽस्माभिः ॥

पुस्तक मिलनेका ठिकाना-

खेमराज श्रीकृष्णदास-

" श्रीवेङ्कटेश्वर " छापाखाना-मुंबई.

श्रीः ।

# निर्णयामृतम् ।

## ( धर्मशास्त्रनिबन्धः )

[illegible]

[illegible] ।






[illegible]

प्राचीनपुस्तकोपलब्धपाठनिवेशनपुरःसरसंशो
धनेन शास्त्रिद्वारा परिष्कृत्य

मुम्बय्यां

**खेमराजश्रीकृष्णदास**

श्रेष्ठिना

स्वकीये "श्रीवेंकटेश्वर" मुद्रणालये

मुद्रयित्वा प्रकाशितम् ।

संवत् १९५२ शके १८१७ ८५

स्मार्तधर्मकर्मानुष्ठानपरस्य ...

परमो धर्मः । यस्य प्रतिष्ठापको भगवान्साक्षात् । यथा चोक्तं श्रीभगवता स्वमुखेनैव श्रीगीतासु—"परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥" इति—"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥" इति च । एतावता चायं भारतखण्डप्रचलितो वेदोक्तः स्मृत्युक्तश्च धर्मः स साक्षाद्भगवदुपदिष्ट इति तावत्सिद्धम् । वेदोक्तो हि धर्मो वैदिकः स्मृत्युक्तः स्मार्त इति हि व्यवहारः । स्मृत्युक्तो हि धर्मो वेदोक्तधर्माविरुद्धः । स्मृतीनां वेदार्थपरिबृंहणैकनिबन्धनत्वात् । वेदस्य चानादित्वान्नित्यत्वाद्भगवतोत्पादितत्वाच्चाप्तत्वेन धर्ममूलत्वमस्ति—"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।" इति मनुस्मृत्यादौ स्पष्टम् । वेदो हि कर्मकाण्ड-ज्ञानकाण्ड-उपासनाकाण्डात्मकः । तत्र कर्मकाण्डो विधिनिषेधात्मकः । अप्राप्तं फलवन्तं चार्थं यः स्वसामर्थ्येन प्रकाशयति स विधिः । स विधिश्चतुर्धा-उत्पत्तिविधिः, विनियोगविधिः, प्रयोगविधिः, अधिकारिविधिश्चेति । तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः । अंगसंबंधबोधको विधिर्विनियोगविधिः । प्रयोगे शैघ्र्यबोधको विधिःप्रयोगविधिः । फलस्वाम्यबोधको विधिरधिकारिविधिश्च । निषेधश्च विधिप्रतियोगी । अनयोर्विधिनिषेधयोरुभयोः पुरुषार्थानुबंधित्वम् । तत्र विवेकश्चेत्थम्-यथा विधेर्विधेयार्थपरिच्छेदकत्वेनार्थवत्त्वं, तथाऽनर्थहेतुकर्मणः सकाशात्पुरुषस्य निवृत्तिकरणत्वं निषेधस्येति द्वयोरपि पुरुषार्थानुबन्धनानुकूलत्वमेकमेव फलं पर्यवसन्नम् । ज्ञानकाण्डोपासनाकाण्डयोर्विचारः प्रकृतेऽप्रयोजनकतया नेह लिखितः—एवंच कर्मकाण्डात्मकवेदस्य नितरां गूढार्थपरिज्ञानमल्पज्ञसांसारिकजीवानां दुर्लभमिति मत्वा परमकारुणिका महर्षयो वेदार्थविशदीकरणाय नानाविधान्स्मृतिग्रन्थानरीरचन् । तथाच महर्षिबाहुल्यान्मतिबाहुल्येनानन्तवेदार्थविवरणरूपास्ते स्मृतिग्रन्थाः सुबोधा बभूवुः केवलं वेदापेक्षया । परंतूत्तरोत्तरमस्मादृशानां मन्दमतीनां जीवानां तेष्वतिविशालेषु स्मृतिग्रन्थरत्नाकरेष्ववगाहनासामर्थ्यमालोच्य "राजा धर्मस्य रक्षकः" इति शाश्वतिकशास्त्रानुशासनानुसारेणानेकैः सद्धर्मनिष्ठैर्भूपालैरनेकविद्वज्जनेभ्यः स्वाश्रयं दत्त्वा तद्द्वारा नानाधर्मस्मृतिग्रन्थोहापोहनपुरःसरं वर्णधर्माचारप्रतिपादकान्धर्मनिबंधग्रन्थान्निर्माप्याचारप्रबन्धोऽप्रतिहतः पृथिव्यां यथापरंपरं प्रवर्तितः । सोऽयं तेषामुर्वीपतीनामुपकारो यदद्यापि वयं सर्वेऽपि वर्गाः स्वस्ववर्णाश्रमधर्माचारान्प्रतिपालयामः । अस्त्येवेदं प्रायः सकलविदुषां विदितम् । प्रकृतं तावत्प्रस्तुमः किंचित् । पूर्वमुक्तरीत्या श्रीसूर्यसेनमहीमहेन्द्रेण सकलवेद-



# प्रस्तावना।

कर्मप्रवृत्तिपरिज्ञानाय प्रेरितेन स्वाश्रितेन पण्डितमण्डलायमानेन मीमांसकसीमंतमणिना श्रीमदल्लाढनाथपण्डितेन सर्वधर्मस्मृतिपुराणग्रंथपर्यालोचनपूर्वकं सकलस्वधर्मकर्माचारबोधनायायं "**निर्णयामृत**" नामा निबन्धो विरचितः। अयं च निबन्धग्रन्थो निर्णयसिन्धोरपि प्राचीन इत्युपलभ्यते।निर्णयसिन्धौ निर्णयामृतनिबन्धस्थवचनानां प्रामाण्येनोपादानदर्शनात्। तथा चायं ग्रन्थः प्राचीनः सन्नप्रमाणो महन्मान्यतया सर्वमान्यतामर्हत्येवेति तावत्सिद्धम्।

सोऽयं "**निर्णयामृत**" नामा ग्रन्थोऽस्माभिर्महतायासेन संपाद्य शास्त्रिजनद्वारा संशोध्य च स्वकीये "**श्रीवेङ्कटेश्वर**" मुद्रणालये मुद्रयित्वा प्रकाशितः।

विज्ञापयामश्च विद्वज्जनान्-इमं ग्रंथं संगृह्यैतदुक्तरीत्या स्वधर्मकर्माण्यनुष्ठाय सफलयंतु स्वकीयं मानवीयं जन्मेति।

विद्वज्जनकृपाकांक्षी-

**खेमराज श्रीकृष्णदास.**

"श्रीवेङ्कटेश्वर" छापाखाना-मुंबई.

श्रीः ।

# अथ निर्णयामृतानुक्रमणिका ॥

| विषयाः | पृ. पं. |
|---|---|

विषयाः. पृ. पं.



विषयाः. पृ. पं.



---

## इति निर्णयामृतस्यानुक्रमणिका समाप्ता ॥

श्रीः ।

# अथ निर्णयामृतप्रारम्भः ।



॥ श्रीमद्रमारमणचरणाभ्यांनमः ॥ ॥ ॐनमोभगवतेवासुदेवाय ॥ कारणमेकंजगतांवारणमास्येनवारणंविपदाम् ॥ किमपिमहोमहनीयंप्रत्यूहव्यूहदारणंवंदे ॥१॥ भावयामिदृढभक्तिभावनाभावितांघ्रियुगलांसुमंगलाम् ॥ इष्टदांसततमिष्टदेवतांमंत्रवत्सकलमंत्रमातरम् ॥२॥ औपाधिकःस्फुरतियत्रकलादिभेदस्तद्ब्रह्मतत्वमपियस्यनवेदवेदः ॥ सर्गस्थितिप्रलयहेतुमहेतुमेकंकालस्वरूपमहमन्वहमानमामि ॥ ३ ॥ यैःकृतःश्रुतिमहार्णवपारप्राप्तिहेतुरिहसंग्रहसेतुः ॥ तान्नमामिमनुविष्णुयमाद्यान्कालनिर्णयकृतोप्यहमाद्यान् ॥ ४ ॥ अव्यादव्याहतैश्वर्यभव्याभाव्यार्त्तिनाशिनी ॥ दिष्टादिष्टानमद्भक्तकामाकामारिकामिनी ॥ ५ ॥ जयंतिभूमाविहबाहुबाणाःक्षितीश्वराविश्रुतबाहुबाणाः ॥ प्रकुर्वतेयेविशदायशोभिर्जगत्पवित्रंचसदायशोभिः ॥ ६ ॥ बभूवभूपस्त्रिदशैःसरूपस्तदन्ववायेबलवान्सरूपः ॥ चकारनित्यंचसमाहितानांपरिक्षयंयःपरमाहितानाम् ॥ ७ ॥ तस्यात्मजन्माजनिकर्णदेवस्त्यागेनयोविश्रुतकर्णदेवः ॥ वपुःश्रियानिर्जितकामदेवःसदासमाराधितवामदेवः ॥८॥ तदात्मभूरुद्धगणःक्षितीन्द्रःकृतींद्रभोगींद्रनिभानुभावः ॥ शुभावदातायतकीर्त्तिरार्त्तिहरःसतांश्रीपतिमूर्तिरासीत् ॥ ॥ ९ ॥ स्वकीर्त्तिवल्लीप्रभवालवालस्थलीवढिल्लीनगरीमतल्ली ॥ भल्लीशतप्रोतशकेशकुंभीकुंभास्त्रनीरैःसमसिंचितेन ॥१०॥ प्रव्यक्तमासुक्तमहेभकुंभमुक्ताढ्यमुक्तागणपोषसक्ताः ॥ रक्तासवैःसंयतियेनकालीव्यालीढविश्वाप्यभितर्प्यतेस्म ॥११॥ उद्धरणंशुद्धरणमुद्धरणंविद्विषांसमुद्ध

१ प्रकुर्वतेयेविशदाश ( स ) शोभिर्जगत्समग्रंचसदायशोभिरितिमूलपाठः । २ निर्जित इति पाठां० ।

रणम् ॥ सुहृदांपुरानतहृदांनमतितमांकोननामतमनामः ॥१२॥सौंदर्येणविजृंभितोरतिपतिःशौर्येणचश्रीपतिर्गांभीर्येणसरित्पतिर्विलसताधैर्येणभूभृत्पतिः ॥ सत्कांत्योडुपतिः श्रियाधनपतिर्यस्तेजसाऽहर्पतिस्तेनार्योद्धरणेश्वरेणसुमतिःस्पर्द्धेतकःक्ष्मापतिः ॥ १३ ॥ असावसावाहितसत्प्रतापःस्वसन्निवेशोचितरम्यदेशम् ॥ अध्यास्तऋध्यास्तसमस्तशक्रास्पदंपुरंसादरमेकचक्रम् ॥ १४ ॥ राजते यत्पुरंरम्यंराजमंडलमंडितम् ॥ कमलोल्लासिसद्रत्नंरत्नाकरविभूतिमत् ॥ १५ ॥ लसद्विलासिनीसिंजन्नूपुरंभातियत्पुरम् ॥ पुरंपुरंदरस्येवभूरिसुंदरमंदिरम् ॥ १६ ॥ यस्योपकंठेशितिकंठकंठस्पर्द्धिप्रभाभानुसुतावहंती ॥ तदुत्थवेदध्वनिसन्निकर्षादभ्यस्यतीवाखिलपावनत्वम् ॥ १७ ॥ यत्रानिशंसत्रकृतःपवित्राः सत्रास्वगोत्रैर्गृहिणोवसंति ॥ यद्धोमधूमःकुरुतेतिभूमाघनाघनैर्मेदुरमंतरिक्षम् ॥ १८ ॥ यत्सौधजालेषुनिविश्यरात्रौतद्वासधूपैःपृथुलीकृतांगाः ॥ निर्याणनिर्यत्नतयाभजंतेनीलांबुदानीलशिलाविलासम् ॥ १९ ॥ यदुच्चसौधध्वजचैलजालजातानिलैर्हेलिहयाःसलीलम् ॥ विश्रान्तिमश्रांतमितःश्रयंतःकुतोपिनःश्रांतिमवाप्नुवंति ॥२०॥ व्यजेषिभूलोकपुरींसुराणांपुरींव्यजैषिध्वजदंडघातैः ॥ जेष्यामिपातालमितिस्रवंतीविवक्षतीदंप्रतिबिंबदंभात् ॥ २१ ॥ प्रत्याशमापूरितयाचकाशमान्यंवदान्यान्वयमत्रवीक्ष्य ॥ वृंदारकाणांत्रिदिवेपिवृंदैर्मंदारकाणांवसतिर्विगीता ॥ २२ ॥ पुरंशशासैषपुरंदराभस्तदेवचक्राख्यमनेकचक्रः ॥ असंख्यसंख्यारिजयोर्जिताख्याविख्यातशुष्मोद्धरणःक्षितीशः ॥ २३ ॥ असुद्रैरपियःसतसमुद्रैर्मुद्रितांमहीम् ॥ पालयंस्तन्महीपालःपुरालंकुरुतेपुरम् ॥ ॥२४ ॥ गुणरत्नकराच्चन्द्रश्चंद्रसेनस्ततोभवत् ॥ महामहामहादेवशालिमौलिविभूषणः ॥ २५ ॥ यस्यविश्वोपकारायदातुमभ्युद्यतेकरे॥ सशंकेधनदःस्वैरंचकंपेकनकाचलः ॥ २६ ॥ अमनोवृत्तिगम्येनय

१ पुनरपनन्दमितिपाठः । २ जालचैल इतिवापाठः ।

स्यदानेनदीव्यता ॥ अर्थिप्रत्यर्थिनोप्युच्चैःप्रापुरेवनदुर्गतिम् ॥ २७॥
यस्यधाटीषुघोटीनांप्रखरंखुरजंरजः ॥चकाराच्छाद्यगगनंदुर्दिनंरिपुमं
दिरे ॥२८॥ यस्यविश्राणनस्योच्चैःश्रवणेननरस्यच ॥सुराःसुरालयंस्व
ल्पमनल्पमपिमेनिरे॥२९॥तस्यात्मजन्माचरितार्थजन्माश्रीसूर्यसेनो
जयतिक्षितींद्रः ॥सुदर्शनेनैवबिभर्त्तिगोपीनारायणत्वंभुवियःप्रसिद्धम्
॥ ३० ॥ संतानशोभमानःकविगुरुबुधमित्रमंगलैःसहितः ॥ जिष्णु
र्यदेषयुक्तंश्रितशतकोटिःसुधर्माढ्यः ॥ ३१ ॥ यस्मिन्धारायतिक्षोणि
मेणीदृक्चित्तहारिणि ॥ शेषेपिफणिनामीशेनविशेषधियोवयम्॥३२॥
ददतोयस्यपाणिस्थपारिहार्यरवच्छलात् ॥ रमारौतीवसततंराजावि
तरतीतिमाम् ॥ ३३ ॥ द्विषोस्ययत्रावलिभिःपरिधानंप्रकुर्वते ॥
तद्योषितांततोमन्येतच्छून्याः स्तनमंडलाः ॥३४॥ बुधानानंदयन्स
र्वान्राजावसुभिरूर्जितैः॥कथंमौलौमहेशानंनपदंकुरुतेसदा ॥३५॥नि
हत्यशत्रून्निखिलांस्तदीयादेशाःसदावग्रहखिन्नवेषाः ॥ तदंगनानांघन
नादयुक्तैर्नेत्रांबुभिर्येनकृताःसवर्षाः ॥३६॥ समुद्यतेयस्यकरेप्रदातुमा
लोक्यतेह्यत्रमहद्विचित्रम् ॥ वनीपकानामवनीपकत्वं वनीपकत्वंतव
वनीपकानाम् ॥ ३७ ॥ जलेनदिव्येनसदाभिषिक्ताःसिंहासनाध्याश्र
यिणोनिरस्ताः ॥ श्रीसूर्यसेनेनवनेपिराज्यंकांतातपत्राःकलयंत्यमि
त्राः ॥ ३८ ॥ यत्कीर्तिश्वरिकीर्तिकांतिकशशिश्येनीयमन्यादृशं
धातुःसर्गनिसर्गमित्रकुतुकंस्पर्शादमुष्यायतः ॥ केलासंतिनगावलंति
मनुजाःक्षीरार्णवंत्यर्णवाश्चक्रायंतिखगाहरंत्यपिसुराःशेषंत्यशेषाहयः
॥ ३९ ॥ चकास्तियस्यातिबलप्रतापःप्रतापसेनोवरजःप्रसिद्धः ॥
भक्त्याभिरामस्यसदाग्रजस्ययोलक्ष्मणाकारमुपैतिभव्यम् ॥ ४० ॥औ
दार्यसौंदर्यदयानयाज्ञाविज्ञानशौर्यादिगुणेष्वनान्यम् ॥प्रतापसेनस्यस
मंसमंताल्लोकेविलोकेत्रविचित्रलोके ॥४१॥ श्रीदेवसेनस्तनयोपिगोपी
नारायणस्याजनिकामरूपः ॥ लब्ध्वाप्रसादेनमहेश्वरस्यरामारतिस्तु

१ लब्धप्रसादाशशिखंडमौलेर्नूनम् इतिपाठोन्यः ।

ष्टिमुपैतियत्र ॥४२॥ देवसेनकुमारस्यकुमारस्यचनान्तरम्॥आर्यानं दकृतोनित्यंबिभ्रतःशक्तिमुत्तमाम् ॥४३॥श्रीसूर्यसेनःपुरमेकचक्रंवरां गमध्यास्यजयत्यजस्रम्॥यमेत्यकांतांजितनाककांतंगुर्वीयमुर्वीचसदो वरास्ते॥४४॥विद्वत्सुसत्स्वपिमहत्सुसमाश्रितेषुश्रीसिद्धलक्ष्मणसुतः सुतराममुष्य ॥ श्रीसूर्यसेननृपतेरुपतेजसोभूद्बल्लाटनाथमतिमानाति मानपात्रम् ॥ ४५ ॥ एवंकदापिसुमतिर्नृपतिःस्वनाम्नाश्रौतादिकर्म सुसकालविनिर्णयाय ॥ आदिक्षदक्षपतिसाम्ययशोनिशातशस्त्राहता हितशतःशतमन्युकल्पः ॥ ४६ ॥ अगाधग्रंथपाथोधिमथालोड्याधि यामया ॥ समुद्धृतंनृपादेशात्तेनेदंनिर्णयामृतम् ॥ ४७ ॥ मनुस्मृतिं विष्णुपराशरापस्तंबस्मृतीर्वीक्ष्यमिताक्षरांच ॥ तथापरार्कार्णवपारि जातान्स्मृत्यर्थसारंस्मृतिचंद्रिकांच ॥ ४८ ॥ मात्स्यंकौर्मंचवाराहंद ष्ट्वावैष्णववामने ॥ मार्कंडेयपुराणंच भविष्योत्तरभारते ॥ ४९ ॥ परिशिष्टंहेमाद्रिमनंतभट्टीयगृह्यपरिशिष्टे ॥ कालादर्शंचिंतामणित्रिदं डींचकृत्यकल्पतरुम् ॥ ५० ॥ धवलपुराणसमुच्चयदुर्गोत्सवराम कौतुकानितथा ॥ संवत्सरप्रदीपंसभोजराजीयदेवदासीयम् ॥ ५१ ॥ रूपनारायणीयंविद्याभट्टपद्धतिंविततम् ॥ वीक्ष्यमहादेवीयंशुभंनि बंधंचविश्वरूपकृतम् ॥ ५२ ॥ श्रीसूर्यसेननृपतेरादेशात्सिद्धलक्ष्मण तनूजः ॥ वल्लाटनाथसूरिःसंग्रहमिहकालनिर्णयेकृतवान् ॥ ५३ ॥ इतिग्रंथावतारः ॥ ॥ अथानुक्रमणी ॥ ॥ ग्रंथेश्रीसूर्यसेनस्यनि र्णयामृतसंज्ञके ॥ आदावस्मिन्नुदाहारःकथितःप्रथितक्रमः ॥ १ ॥ एकभक्तादिकानांतुव्रतानांतदनंतरम् ॥ निरूपितंस्वरूपंचतत्ति थीनांचनिर्णयः ॥ २ ॥ साधारणेद्वितीयादियुग्मानामथनिर्णयः ॥ प्रतिपन्निर्णयश्चाथसामान्यःसमुदाहृतः ॥ ३ ॥ चैत्रप्रतिपदत्रैववह्न च्छयानंगपूजनम् ॥ मौनव्रतप्रतिपदोनिर्णयस्तद्विधिस्तथा ॥ ४ ॥

१ मुदिताविरास्ते इतिपाठः ।

दीपोत्सवप्रतिपदोर्निर्णयःकृत्यमत्रच ॥ अथसिद्धविरुद्धादियोगाः
प्रतिपदीरिताः ॥ ५ ॥ तत्रकार्यविवर्ज्यादिप्रतिपत्स्वखिलासुच ॥
वह्नेःपूजेतिकथितःप्रतिपन्निर्णयक्रमः ॥ ६ ॥ अथद्वितीयासामान्य
निर्णयःसमुदाहृतः ॥ अशून्यशयनाख्येचद्वितीयानिर्णयोव्रते ॥ ७ ॥
चैत्रशुक्लद्वितीयायामुमेशाग्निप्रपूजनम् ॥ अथोयमद्वितीयायांयमपू
जादिकक्रमः ॥ ८ ॥ अथसिद्धविरुद्धादियोगायेचद्वितीयया ॥
तत्रकार्याणिवर्ज्यानिवेधसश्चप्रपूजनम् ॥ ९ ॥ ततस्तृतीयासामान्य
निर्णयस्तदनंतरम् ॥ आंदोलनतृतीयायांविधिश्चैत्रेप्रकीर्त्तितः ॥
॥ १० ॥ सौभाग्यशयनाख्यंचव्रतंतत्रैवकीर्तितम् ॥ मन्वादिकतिथी
नांचवर्णनंतदनन्तरम् ॥ ११ ॥ अथाक्षय्यतृतीयायानिर्णयःकृत्यमत्र
यत् ॥ विधानवर्णनंचात्रश्राद्धदानादिवर्णनम् ॥ १२ ॥ अत्रैवलक्ष्मी
सहितविष्णुपूजाततःपरम् ॥ ज्येष्ठेरंभातृतीयायानिर्णयस्तद्विधिस्तथा
॥ १३ ॥ भाद्रशुक्लतृतीयायांहिमगौरीप्रपूजनम् ॥ माघशुक्लतृतीयायां
गुडदानादिकंतथा ॥ १४ ॥ तथासर्वतृतीयासुगौरीपूजाप्रकीर्त्तिता ॥
ततःसिद्धविरुद्धादिकार्यवर्ज्यादिवर्णनम् ॥ १५ ॥ ततश्चतुर्थीसामान्य
निर्णयःपरिकीर्त्तितः ॥ गणनाथचतुर्थ्याश्चनिर्णयस्तदनंतरम् ॥ १६ ॥
चैत्रेगणेशपूजाचचतुर्थ्यांज्येष्ठमासिच ॥ उमापूजाभाद्रपदेगणेशाभ्य
र्चनेविधिः ॥ १७ ॥ चंद्रदर्शनदोषश्चतत्रतच्छांतिरेवच ॥ अथाश्विनचतु
र्थ्यांतुदेवीकेशप्रसाधनम् ॥ १८ ॥ माघेकुंभेचतुर्थ्यांतुकुंदपुष्पैःशिवार्च
नम् ॥ तत्रैवपार्वतीपूजाविधिर्दानफलादिकम् ॥ १९ ॥ व्रतंवरचतु
र्थ्यांतुचातुर्मास्यव्रतंपरम् ॥ नागोपवासःसर्वासुगणेशस्यचपूजनम् ॥
॥ २० ॥ अथसिद्धविरुद्धादिकार्याकार्यनिरूपणम् ॥ पंचम्यास्त्वथसामा
न्यनिर्णयःकथितोत्रच ॥ २१ ॥ स्कंदोपवासश्चैत्रेतुपंचम्यांनागपू
जनम् ॥ तथाश्रावणपंचम्यांनागलेखप्रपूजनम् ॥ २२ ॥ तत्रैवकृ

१ युगादिवर्णनमितिवापाठः । २ कुंदचतुर्थ्यामितिवापाठः ।

षिपूजादिपंचम्यामाश्विनस्यतु ॥ नागपूजासहेंद्राण्यादेव्याश्चस्नपन
क्रिया ॥ २३ ॥ माघशुक्लस्यपंचम्यांकामपूजोत्सवादिके ॥ पंचमी
षुचपूजासुफणीशानांप्रपूजनम् ॥ २४ ॥ तथासिद्धविरुद्धादिकार्या
कार्यविनिर्णयः ॥ अथसामान्यतःषष्ठीनिर्णयःसमुदाहृतः ॥ २५ ॥
आषाढशुक्लषष्ठ्यांचकार्त्तिकेयस्यपूजनम् ॥ भाद्रषष्ठ्यांतुस्नानादि
कार्त्तिकेयावलोकनम् ॥ २६ ॥ तत्रैवसूर्यपूजादिकपिलाषष्ठ्यतः
परम् ॥ कृष्णपक्षेतथाचैवचंद्रषष्ठीव्रतंशुभम् ॥ २७ ॥ आश्विनेशु
क्लषष्ठ्यांतुबिल्ववृक्षनिमंत्रणम् ॥ कार्त्तिकेशुक्लषष्ठ्यांतुप्रोक्तोवह्निम
होत्सवः ॥ २८ ॥ मार्गशीर्षस्यषष्ठ्यांतुस्कंदपूजाप्रकीर्त्तिता ॥ सर्वा
सुचैवषष्ठीषुकार्त्तिकेयस्यपूजनम् ॥२९ ॥ तथासिद्धविरुद्धादिकृत्या
कृत्यविनिश्चयः ॥ अथसामान्यतःप्रोक्तःसप्तम्यास्तुविनिर्णयः ॥३०॥
चैत्रेतत्ररवेःपूजावैशाखेनिंबसप्तमी ॥ तथैवाषाढसप्तम्यांविवस्व
त्पूजनव्रतम् ॥ ३१ ॥ सप्तम्यामाश्विनेमासिपत्रिकायाःप्रवेशनम् ॥
मार्गशीर्षेतथामित्रसप्तम्यांरविपूजनम् ॥ ३२ ॥ अचलासप्तमी
माघेयोगःपद्मार्कसंज्ञकः ॥ सप्तमीषुचसर्व्वासुपूजनंभास्करस्य
तु ॥३३॥ तथासिद्धविरुद्धादिकार्याकार्यविनिर्णयः ॥ अथाष्टम्यास्तु
सामान्यनिर्णयःपरिकीर्तितः ॥ ३४ ॥ चैत्रेशोकाष्टमीकृत्यंवैशाखे
चाष्टमीव्रतम् ॥ ज्येष्ठाष्टम्यांतथादेवीशिवयोःपूजनंक्रमात् ॥ ३५ ॥
आषाढमासिचाष्टम्यांमहिषघ्न्याःप्रपूजनम् ॥ श्रावणेमासिकृष्णस्यज
न्माष्टम्याविनिर्णयः॥३६॥भाद्रेदूर्वाष्टमीशुक्लातथाज्येष्ठाष्टमीविधिः ॥
महालक्ष्मीव्रतंतद्वन्महाष्टम्याविनिर्णयः ॥ ३७ ॥ देवीपूजाविधिश्चा
त्रबलिदानविनिर्णयः॥लोहाभिसारिकंकर्ममंत्राश्छत्रादिपूजने ॥३८॥
तथापराजितायाश्चपूजाप्रोक्ताप्रसंगतः ॥ पौषाष्टम्यामीशपूजामाघे
भीष्माष्टमीविधिः ॥ ३९ ॥ फाल्गुनेमासिचाष्टम्यांसीतालक्ष्मीप्रपू
जनम् ॥ बुधाष्टमीनिर्णयश्चसर्वासुशिवपूजनम् ॥ ४० ॥ तथासिद्ध

विरुद्धादिकार्याकार्यविनिर्णयः॥ नवम्यानिर्णयःप्रोक्तःसामान्यस्तदनं
तरम् ॥ ४१॥ नवम्यांमासिवैशाखेचंडिकापूजनेविधिः ॥ ज्येष्ठकुमा
रिकापूजात्वाषाढेनवमीद्वये ॥ ४२ ॥ ऐंद्र्याःपूजाश्रावणेतुकौमार्या
नवमीद्वये ॥ भाद्रेतुनंदानवमीशुक्लाकृष्णाप्रबोधिनी ॥ ४३ ॥ नवमी
नंदिनीमार्गेमहानंदातपस्यथ ॥ उक्तासरस्वतीपूजासर्वासुनवमीष्वपि
॥ ४४ ॥ अथसिद्धविरुद्धादिकार्याकार्यविनिर्णयः ॥ अथसामान्यतः
प्रोक्तोदशम्यास्तुविनिर्णयः ॥ ४५ ॥ यमपूजातत्रचैत्रेज्येष्ठेदशहरा
विधिः ॥ विधिर्विजययात्रायादशम्यामाश्विनस्यच ॥ ४६ ॥ दशमी
षुचसर्वासुप्रोक्तापूजांतकस्यच ॥ तथासिद्धविरुद्धादिकार्याकार्यविनि
र्णयः ॥४७॥ एकादशीनिर्णयोथतद्भेदाश्चप्रकीर्त्तिताः॥व्रतानुकल्पा
श्चात्रोक्ताःसूतकादौव्रतक्रमः ॥ ४८ ॥ व्रतस्यान्यनियोगेनकरणेफल
निर्णयः॥चैत्रेतुरुक्मिणीपूजावास्तुपूजाहरेर्दिने ॥४९॥आन्दोलनंचात्र
विष्णोर्निर्जलैकादशीव्रतम् ॥ आषाढशुक्लैकादश्यांविष्णोःप्रस्वापन
क्रमः ॥ ५० ॥ एकादश्यांभाद्रपदेतत्पार्श्वपरिवर्त्तनम् ॥ कार्त्तिके
मासिशुक्लायामेकादश्यांप्रबोधनम् ॥ ५१ ॥ रथयात्रोत्सवश्चैवहरेः
प्रोक्तस्ततःपरम् ॥ मार्गशीर्षादिमासेषुद्वादशैकादशीषुच ॥ ५२ ॥
प्रोक्तःक्रमेणधरणीव्रतदानार्चनेविधिः ॥ शिवपूजासुसर्वासुपक्षयोरुभ
योरपि॥५३॥अथसिद्धविरुद्धादिकार्याकार्यविनिर्णयः॥द्वादशीनिर्णय
श्चाथश्रवणद्वादशीव्रतम् ॥ ५४ ॥ शक्रध्वजोत्थापनंचद्वादश्यां
वत्सपूजनम् ॥ माघेतिलद्वादशीचविष्णुपूजाचसर्वतः ॥ ५५ ॥ तथा
सिद्धविरुद्धादिकार्याकार्यविनिर्णयः ॥ त्रयोदशीनिर्णयोथतथाऽनंगत्र
योदशी ॥ ५६ ॥ त्रयोदशीगजच्छायायमदीपश्चकार्त्तिके ॥ पूजाश
नित्रयोदश्यांप्रदोषेशंकरस्यच ॥ ५७ ॥ तथासिद्धविरुद्धादिकार्या
कार्यविनिर्णयः॥सामान्योऽथचतुर्दश्यानिर्णयश्चैत्रमासिच ॥५८॥ शि
वपूजाचतुर्दश्यांदमनेनतथात्रच ॥ कामनिर्वापणविधिःकथितःक्रीड

नादिभिः ॥ ५९ ॥ हेमधेनुप्रदानंचज्यैष्ठेवैशिवतुष्टये ॥ तथानंतव्रत
स्यापिनिर्णयःपरिकीर्त्तितः ॥ ६० ॥ तथाप्रेतचतुर्द्दश्याआरटत्या
स्तथैवच ॥ शिवरात्रिश्चतुर्द्दश्याःसर्वासुशिवपूजनम् ॥ ६१ ॥ तथासि
द्धविरुद्धादिकार्याकार्यविनिर्णयः॥सामान्योऽथसमुद्दिष्टः पौर्णमास्या
विनिर्णयः॥६२॥ कृत्यंचैत्रस्यपूर्णायांवैशाख्यांतदनंतरम् ॥ ज्यैष्ठ्यां
कृत्यमथाषाढ्यांश्रावण्यांकृत्यमप्यथ ॥ ६३ ॥ उपाकर्मविधिश्चात्र
सप्रपंचोनिरूपितः ॥ भाद्रपद्यांपौर्णमास्यांसावित्रीपूजनक्रमः ॥६४॥
तत्रैवलोकपालानांपूजनंपरिकीर्त्तितम् ॥ आश्विन्यांचनिकुंभोपद्रवशां
तिरुदाहृता ॥ ६५ ॥ कौमुद्याख्यात्रलक्ष्मींद्रपूजादानंघृतस्यच ॥
कार्त्तिक्यामथदुग्धाब्धिदानंदामोदरार्चनम् ॥ ६६ ॥ वृषोत्सर्गक्रिया
नीलवृषदानमिहात्रच ॥ मार्गशीर्ष्यांचंद्रपूजाप्रदानंलवणस्यच॥६७॥
अलक्ष्मीनाशनंस्नानादिकंपौष्यामथोदितम् ॥ माघ्यांचतिलपात्रादि
दानंश्राद्धंतिलैस्तथा६८॥ होलिकानिर्णयश्चाथपूर्णिमालभ्ययोगकाः॥
स्नानंतीर्थविशेषाणांमहाचैत्र्यादिषूदितम् ॥ ६९ ॥ चंद्रपूजातुसर्वासु
पूर्णिमासुसमीरिता ॥ तथासिद्धविरुद्धादिकार्याकार्यविनिर्णयः॥७०॥
व्रतादिषुततःप्रोक्तश्चामासामान्यनिर्णयः ॥ निर्णयोवटसावित्र्याःसुख
रात्रेश्चनिर्णयः ॥ ७१ ॥ माघामायांब्रह्मपूजालभ्ययोगास्तथोदिताः ॥
अर्द्धोदयविधिश्चात्रकालभागस्ततःपरम् ॥ ७२ ॥ यागानुष्ठानसि
द्ध्यर्थंपर्वद्वयविनिर्णयः ॥ तिथयश्चाप्यनध्यायेमासकृत्यान्यतःपरम्
॥ ७३ ॥ अगस्त्यार्घ्यविधिश्चैवचातुर्मास्यव्रतानिच ॥ निर्णयोव्रत
बंधस्यविवाहस्यतथैवच ॥ ७४ ॥ द्विरागमनकालश्चप्रोक्तःप्रकरणे
त्विह ॥ ७५ ॥ ॥ इति श्रीसूर्य्यसेनमहीमहेंद्रविरचितेनिर्णयामृ
तेव्रततिथिनिर्णयप्रकरणस्याद्यानुक्रमणिकासमाप्ता ॥१॥ ॥ अथद्वि
तीयस्यश्राद्धप्रकरणस्यानुक्रमणिका॥ तत्रादौकथ्यतेश्राद्धविषयामा
विनिर्णयः ॥ श्राद्धस्वरूपंतद्भेदाःश्राद्धकालास्ततःपरम् ॥ १ ॥

अष्टकानिर्णयश्चाथमृताहस्यचनिर्णयः ॥ श्राद्धदेशाश्चतत्रोक्तास्त
थैकोद्दिष्टपार्वणे ॥ २ ॥ नियमाश्चतथास्त्रीणांपृथक्श्राद्धविधि
क्रमः ॥ एकस्मिन्नह्न्यनेकेषांश्राद्धानां करणक्रमः ॥ ३ ॥ तथा
शौचाद्यंतरितेश्राद्धेकालांतरक्रमः ॥ आमश्राद्धविधिश्चाथतत्काला
श्चप्रकीर्त्तिताः ॥ ४ ॥ श्राद्धकालास्तथाजीवत्पितृकस्येहकीर्त्तिताः ॥
जीवत्पितामहादेश्चप्रोक्तःश्राद्धविधिस्तथा ॥ ५ ॥ ततश्चाहरहःश्राद्धं
महालयविनिर्णयः ॥ काम्यश्राद्धंततःप्रोक्तंनवश्राद्धान्यतःपरम् ॥ ६॥
निर्णयोमासिकानांचसपिंडीकरणंतथा ॥ सपिंडीकरणेस्त्रीणांपतिश्व
श्वादिभिःक्रमात् ॥ ७ ॥ सापिंड्यंक्षत्रियादीनांसंकल्पश्राद्धमेवच ॥
तथाभ्युदयिकंश्राद्धंजीवच्छ्राद्धंततःपरम् ॥ ८ ॥ संक्रांतिनिर्णयश्चा
थमलमासविनिर्णयः ॥ शुक्रगुर्वोस्तथामौढ्यंग्रहणस्याथनिर्णयः ॥
॥ ९ ॥ ॥ इति श्रीसूर्य्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेद्वितीय
स्यश्राद्धप्रकरणस्यानुक्रमणिकासमाप्ता ॥ २ ॥ ॥ अथतृतीयस्य
द्रव्यशुद्धिप्रकरणस्यानुक्रमणिका ॥ ॥द्रव्यप्रकरणेत्वादौश्राद्धीयद्रव्य
संग्रहः ॥ ततोनिषिद्धद्रव्याणिद्रव्यशुद्धिस्ततःपरम् ॥ १ ॥ भूशुद्धि
रत्रप्रथमंपात्रशुद्धिस्ततःपरम् ॥ ततोधान्यादिशुद्धिस्याज्जलशुद्धि
स्तथैवच ॥ २ ॥ वस्त्रादिशुद्धिस्तदनुक्रमेण परिकीर्त्तिता ॥ अशुद्धेर
पवादश्चद्रव्याणांकथितस्ततः ॥ ३ ॥ ॥ इतितृतीयस्यद्रव्यशुद्धिप्रकर
णस्यानुक्रमणिका॥३॥अथचतुर्थस्याशौचप्रकरणस्यानुक्रमणिका ॥
शावाशौचंतुतत्रादौपाताशौचंततः परम् ॥ ततश्चजननाशौचंषष्ठ्या
दिविधिरत्रच ॥ १ ॥ वयोवस्थाकृताशौचंसर्वसाधारणंततः ॥ दाहा
दिकेषुसंस्कारेष्वधिकारिक्रमस्ततः ॥ २ ॥ नारायणबलिस्तद्वत्सर्प
पूजाक्रमस्ततः ॥ तथान्वारोहणविधिःसंघातमरणेविधिः ॥ ३ ॥
प्रत्यवायोहीनवर्णसंस्कारेषूत्तमस्यच ॥ बीजक्षेत्रविवेकश्चानेकपुत्रक्रि
याक्रमः ॥ ४ ॥ रजस्वलासूतिकयोर्मृतयोःशुद्धिरप्यथ ॥ रजस्वला

याःशुद्धिश्चकालभेदास्तथोदिताः ॥ ५॥ पंचकेषुमृतानांचदोषशांति रतःपरम् ॥ कालस्तथांगस्पर्शस्यदशायातेक्रियाक्रमः ॥ ६ ॥ पुनःसंस्कारकालश्चकथितस्तदनंतरम् ॥ तथावर्णविशेषेणविशेषःसूतकस्यच॥७॥ दशाहादिकसंख्याचदिनरात्रिविभागतः॥देशभेदास्तथाशौचेसद्यःशौचादिकंततः ॥८॥ अनुलोमविजातीयसपिंडाशौचमप्यथ ॥ तथामातामहाचार्याद्याशौचनियमस्ततः ॥ ९ ॥ अनौरसादिकाशौचंनृपाशौचमतःपरम् ॥ सद्यःशौचंराजशिल्पिप्रभृतीनांस्वकर्मसु ॥ १० ॥ देशांतरमृताशौचंतद्देशांतरलक्षणम् ॥ अस्थिपर्णशरादेश्चसंस्कारविधिरीरितः ॥ ११ ॥ प्रोषितस्यतथाजीवद्वार्तानाकर्णनेविधिः ॥ अथानुगमनाशौचंप्रायश्चित्तंचतत्रयत् ॥ १२ ॥ आशौचसन्निपातस्यनिर्णयस्तदनंतरम् ॥ आशौचेकार्यवर्ज्यादिकर्मणोनिर्णयस्ततः ॥ १३ ॥ ॥ इति श्री० निर्णयामृतेचतुर्थस्याशौचप्रकरणस्याऽनुक्रमणिकासमाप्ता ॥ ४ ॥ ॥ अथतिथयोविध्युक्तकर्मानुष्ठानफलसिद्ध्यर्थंतदंगतयानिर्णीयंते॥अत्यंताप्राप्तप्रापणंहिविधिः ॥तदुक्तम्॥ विधिरत्यंतमप्राप्तौनियमःपाक्षिकेसति ॥ तत्रचान्यत्रचप्राप्तौपरिसंख्याविधीयतइति ॥ सचविधिर्वेदवाक्यम् ॥ तस्यचप्रामाण्यंसिद्धमेव ॥ तन्मूलत्वात्स्मृतिपुराणानामपिविधित्वेनप्रामाण्यम् ॥ सद्विविधः ॥ प्रवर्तकोनिवर्तकश्चेति ॥ तत्रप्रवर्तको यथा ॥ अमावास्यायामपराह्णेपिंडपितृयज्ञेनचरंतीति ॥ तथा ॥ दर्शेस्नात्वापितृभ्योथदद्यात्कुशतिलोदकम् ॥ अन्नंच विधिवद्द्यात्संततिस्तेनवर्द्धतइति ॥ निवर्तकोयथा ॥ अमावास्यायांनाधीयीतनाध्यापयेत् ॥ नछिंद्यादार्द्रदारुनाद्यादन्नंपरस्यचेति ॥ तथा ॥ अमावास्यांनगच्छेत्तुप्राप्तकालमपिस्त्रियम् ॥ तैलंचनस्पृशेदामवृक्षादींश्चनछेदयेदिति ॥ एवमुक्तोभयविधाविध्युक्तकर्मणोधिकरणत्वेनतिथयोगम् ॥ तदुक्तम् ॥ कालेहिकर्मचोद्यतेनकर्माणिकालइति ॥ तासा

मंगत्वमपिविधिसिद्धमेव ॥ तथाचविधिः ॥ पौर्णमास्यांपौर्णमा स्यांयजेत ॥ अमावास्यायाममावास्यायांयजेतेति ॥ गर्गेणाऽ प्युक्तम् ॥ तिथिनक्षत्रवारादिसाधनंपुण्यपापयोः ॥ प्रधानगुणभा वेननस्वातंत्र्येणतेक्षमाइति ॥ अतश्चतिथयोविध्यंगत्वेननिर्णेतव्याः ॥ ननुतिथयोनिर्णेतव्याइत्युक्तम्॥कास्तास्तिथयइतिचेत् ॥ सत्यम् ॥ प्रतिपदाद्याःषोडश तिथयःप्रसिद्धाएव ॥ तत्रत्रिंशन्मुहूर्त्तात्मके नाहोरात्रेणसूर्यमंडलात्सकाशाच्चंद्रस्यप्रथमकलानिर्गमेशुक्लप्रतिपद्भ वति॥द्वितीयाहोरात्रेणद्वितीयकलानिर्गमेद्वितीयाभवति॥ एवंतृतीया दयोद्रष्टव्याः ॥ एवंक्रमेणपंचदशेनाहोरात्रेणपंचदश्याःकलायानिर्ग मेसूर्याचंद्रमसोरत्यंतविप्रकर्षात्पूर्णिमाभवति ॥ एवमस्यांपूर्णिमायां संपूर्णमंडलस्येंदोःषोडशेनाहोरात्रेणएकं[१]कलायारविमंडलप्रवेशेकृष्ण प्रतिपद्भवति ॥ एवंप्रवेशक्रमेणद्वितीयाद्याविज्ञेयाः ॥ एवंत्रिंशत्त मेनाहोरात्रेणपंचदश्याःकलायाःप्रवेशे सूर्याचंद्रमसोरत्यंतसंनिकर्षाद मावास्याभवति ॥ तदुक्तंगोभिलेन ॥ यःपरोविप्रकर्षःसूर्या चंद्रमसोःसापौर्णमासी ॥ यःपरःसंनिकर्षःसामावास्येति ॥ श्रुति रप्याह ॥ " अहोरात्राणिविदधद्विश्वस्यामिषतोवशी ॥ सूर्याचंद्रम सौधातायथापूर्वमकल्पयत् " इति ॥ ननुत्रिंशन्मुहूर्त्तात्मकेनाहोरा त्रेणेत्युक्तम् ॥ तत्रमुहूर्तस्वरूपंनिरूपणीयम् ॥ सत्यम् ॥ लोक प्रसिद्धौद्वौनिमेषौत्रुटिः ॥ तौद्वौलवः ॥ तौद्वौक्षणः ॥ तेदशकाष्ठा ॥ तास्त्रिंशत्कला ॥ तास्त्रिंशन्मुहूर्त्तइति ॥ तथाचगार्ग्यः ॥ अक्षिपक्ष्मज निक्षेपोनिमेषःपरिकीर्तितः॥ द्वौनिमेषौत्रुटिर्नामद्वौत्रुटीतुलवःस्मृतः॥ द्वौलवौक्षणइत्युक्तःकाष्ठाप्रोक्तादशक्षणैः ॥ त्रिंशत्काष्ठाःकलाप्रोक्ता कलास्त्रिंशन्मुहूर्तकः ॥ तेतुत्रिंशदहोरात्रइत्याहभगवान्हरिरिति ॥ अस्यप्रमाणंप्रकारांतरेणमहाभारतेनिरूपितम् ॥ कर्षेणाभ्यधिकैःषड्भिःपलैस्ताम्रस्यभाजनम्॥ त्रिंशदंगुलिविस्तारमुच्छ्रितंचतुरंगुलम्॥

१ प्रथमकलाया इतिपाठांतरम् ।

स्वर्णमाषेणकृत्वाचचतुरंगुलकंटिकाम् ॥ मध्यभागेतयाविद्धंसानाम घटिकास्मृता ॥ तद्रंध्रेणांभसापात्रंयावत्कालेनपूर्यते ॥ सकालो नाडिकातस्याःषष्टिभागोविनाडिका ॥ नाडीद्वयंमुहूर्त्तस्तुतेपंचद शवासरः ॥ एवंरात्रिस्तथापक्षमासर्त्वयनवत्सराइति ॥ स्वर्णमा षादिमानंचागस्त्येनोक्तम् ॥ यवःस्यात्सर्षपैःषड्भिर्गुंजाचस्यात्रिभिर्य वैः॥गुंजाभिःपंचभिश्चैकोमाषकःपरिकीर्त्तितः ॥ भवेत्षोडशभिर्माषैः सुवर्णस्तैःपुनःस्मृतः ॥ पलंसुवर्णाश्चत्वारःपंचवापरिकीर्तितमिति॥ कर्षस्तुपलस्यचतुर्थोभागः॥ सएवसुवर्णोपि ॥तदुक्तंत्रिकांडचाम् ॥ मानंतुलांगुलिप्रस्थैर्गुंजापंचाथमाषकः ॥ तेषोडशाक्षःकर्षोऽस्त्रीपलं कर्षचतुष्टयमिति ॥ नन्वेवमपितिथीनांविध्यंगत्वेनविधिनैवसिद्धत्वा त्तन्निर्णयस्याप्यप्रयोजकतयानारंभणीयत्वमितिचेत् ॥ सत्यम् ॥ त्रिं शन्मुहूर्त्तात्मकाहोरात्रकालावच्छिन्नानांतिथीनांसंपूर्णत्वेनानिर्णेयत्वे ऽपिन्नृणांधर्माधर्माभ्यांयत्रवृद्धिह्रासौभवतः तत्रैकस्यास्तिथेर्दिन द्वयव्यापित्वेनतत्तिथौविहितंकर्मकुत्रकर्तव्यमिति संदेहेऽवश्यंनिर्णयः कर्त्तव्यइतिसिद्धम् ॥ धर्माधर्मवशात्तिथेर्वृद्धिह्रासौगोभिलेनोक्तौ ॥ खर्वोदर्पस्तथाहिंसात्रिविधंतिथिलक्षणम्॥धर्माधर्मवशादेवतिथिस्त्रेधा विवर्त्ततइति॥ खर्वःसमतिथिः ॥ यथा ॥ एका तिथिःपूर्वदिनेमध्याह्न व्यापिनी अन्याप्यन्यस्मिन्दिनेतावत्येवेति ॥ तद्योगात्तिथिरपिख र्वइत्युपचारः ॥ दर्पो यथा ॥ एका पूर्वेह्निमध्याह्नादधिकावर्तते ॥ अन्याप्यन्यस्मिँस्तथैवपूर्वतिथेरधिका ॥ हिंसाक्षयः तद्योगात्ति थिरपिहिंसेत्युपचारः॥ यथा ॥ एका पूर्वदिनेमध्याह्नन्यूनाअन्याप्य न्यस्मिँस्तथैवपूर्वतिथेर्न्यूनेति ॥ ननुतथापिद्वितीयादितिथौविहित स्यकर्मणः पूर्वदिनेपरदिनेवाद्वितीयादिभागएवविधानान्निर्णयोप्रयोज कइतिचेन्न॥तैलाभ्यंगादिनिषेधविषयकस्यापूर्वस्यतिथिभागमात्रेसि द्धावपिनित्यनैमित्तिककाम्यरूपविधिजन्यस्यापूर्वस्यासिद्धिः॥ पूर्ववि

द्धात्वेनपरविद्धात्वेनवापूज्यायामपि तिथौभवति ॥ तथाचोक्तंवृद्धगार्ग्येण॥ निमित्तकालमादायवृत्तिर्विधिनिषेधयोः॥विधिःपूज्यतिथौतत्र निषेधःकालमात्रके ॥ तिथीनांपूज्यतानामकर्मानुष्ठानतामता ॥ निषेधस्तुनिवृत्त्यात्माकालमात्रमपेक्षतइति ॥ ननुपूर्वविद्धात्वेनपरविद्धात्वेनचपूज्यायांतिथावित्युक्तंसवेधःकीदृशइतिचेत् ॥ उच्यते ॥ सर्वास्तिथयःपक्षद्वयेपिसामान्येन पूर्वयापरयाचतिथ्यात्रिभिर्मुहूर्तैर्विद्धाः स्युः ॥ तदाहपैठीनसिः ॥ पक्षद्वयेपितिथयस्तिथिंपूर्वांमथोत्तराम् ॥ त्रिभिर्मुहूर्तैर्विध्यंतिसामान्योयंविधिःस्मृतइति ॥ नन्वयंवेधविधिस्तिथिसामान्यविषयोनसंभवति ॥ तदुक्तंस्कंदपुराणे ॥ नागोद्वादशनाडीभिर्दिक्पंचदशभिस्तथा ॥ भूतोष्टादशनाडीभिर्दूषयत्युत्तरांतिथिमिति ॥ सत्यम् ॥ अयंविशेषवेधउत्तरतिथिविषयः ॥ सामान्यविहितस्तुत्रिमुहूर्तवेधःपूर्वतिथिविषयः ॥ तदुक्तंकूर्मपुराणे ॥ चतुर्दशीपंचमीचतथाचदशमीतिथिः ॥ पूर्वांतिथिंदूषयंतित्रिभिरेवमुहूर्तकैरिति ॥ ननुदशमीपंचदशनाडीभिरेकादशींविद्ध्यतीत्युक्तम् ॥ तत्तु ॥ अरुणोदयकालेतुदशमीयदिदृश्यते ॥ पापमूलंतदाज्ञेयमेकादश्यामुपोषणम् ॥ तथा ॥ कलार्द्धेनापिविद्धास्याद्दशम्येकादशीयदा ॥ तदाह्येकादशींत्यक्त्वाद्वादशींसमुपोषयेदितिभविष्यत्पुराणस्मृतिवाक्याभ्यांविरुद्धमिवदृश्यते ॥ सत्यम् ॥ अरुणोदयादिसर्वप्रकारवेधस्तुवैष्णवोपवासविषयः॥यश्चपंचदशनाडीवेधस्तुवैष्णवव्यतिरिक्तविषयः ॥ तदुक्तंनिगमे ॥ सर्वप्रकारवेधोयमुपवासस्यदूषकः ॥ सार्द्धसप्तमुहूर्त्तस्तुवेधोयंबाधतेव्रतमिति ॥ नन्वत्रवाक्येवैष्णवव्रतव्यतिरिक्तेति यदाश्रयणात्पंचदशनाडीवेधस्यतद्विषयत्वंकुतोवगम्यतइति चेत् ॥ सत्यम् ॥ प्रदोषव्यापिनीग्राह्यासदानक्तव्रतेतिथिः ॥ उदयस्थासदापूज्याहरिनक्तव्रतेतिथिरिति स्कंदपुराणवचनेनसर्वनक्तव्रतानांप्रदोषव्यापिनीतिथावेवविहितत्वेपिहरिनक्तव्रतस्योदयिकातिथावेव

विधानेनपूज्यत्वमभिहितम् ॥ किमुतोपवासादीनामिति॥अयंचत्रिमुहूर्तादिवेधउदयादूर्ध्वंपूर्वतिथ्या अस्तमयात्प्राक्परतिथ्याचेत्यवगम्यते ॥ कुतोवचनसामर्थ्यात् ॥ सातिथिस्तदहोरात्रंयस्यामभ्युदितोरविः ॥ वर्द्धमानस्यपक्षस्यह्रासेत्वस्तमयस्तिथिः ॥ यांतिथिंसमनुप्राप्यउदयंयातिभास्करः ॥ सातिथिःसकलाज्ञेयास्नानदानजपादिषु॥ उदयन्नेवसवितायांतिथिंप्रतिपद्यते ॥ सातिथिःसकलाज्ञेयादानाध्ययनकर्मसु ॥ सातिथिस्तदहोरात्रंयत्रास्तंयातिभास्करः ॥ उदितेदैविकंभानौपित्र्यंचास्तंगतेरवौ ॥ द्विस्त्रिमुहूर्त्तमह्नोयासातिथिर्हव्यकव्ययोरिति॥अस्यायमर्थः॥उदयाद्विमुहूर्त्तव्यापिन्यांदैविकंकर्म॥अस्तमयात्रिमुहूर्त्तव्यापिन्यांपित्र्यंकर्मकार्यमिति ॥ एवंजाबालिविष्णुसुमंतुवचनैरुदयास्तमयव्यापिनीनामेवतिथीनांसामस्त्येनप्राशस्त्याभिधानात्पूर्वापरवेधोप्युदयास्तमयकालीनएवेत्यवसीयते ॥एवंपूर्वापरवेधेनप्रशस्तासुतिथिषुविहितस्यकर्मणः फलातिशयप्रापकत्वात्तदर्थंतिथयोवश्यंनिर्णेतव्याइतिसिद्धम् ॥ ॥इतितिथ्युदाहरणप्रकरणम् ॥ श्रीसूर्यसेनभूभृद्विमलयशःक्षीरसागरादुदिते॥इतिनिर्णयामृतेऽस्मिन्नाद्यउदाहरणनिर्णयोजातः ॥ श्रीमत्पंडितासिद्धलक्ष्मणसुतःश्रीसिद्धलक्ष्मीपदद्वंद्वाराधनसुप्रसिद्धमहिमायःसिद्धसारस्वतः ॥ आदेशादकृतैषसूर्यमहसःश्रीसूर्यसेनप्रभोर्वैधेकर्मणिकालनिर्णयमसावल्लाडनाथः सुधीः ॥ ॥ एवंतिथीनां निर्णयत्वेसिद्धेतासांतिथीनामेकभक्तादिव्रतांगत्वादेकभक्तादिव्रतानांस्वरूपंकालश्चनिरूप्यते॥ ॥तत्रतानिव्रतान्येकभक्तनक्तायाचितोपवासभेदेनचतुर्धाभवंति॥तत्रैकभक्तंनामदिनार्धरूपमध्याह्नादुपरिनियमेनभोजनम् ॥ तदुक्तम् ॥ दिनार्द्धसमयेऽतीतेभुज्यतेनियमेनयत् ॥ एकभक्तमितिप्रोक्तमतस्तत्स्याद्दिवैवहीति ॥ एतच्चैकभक्तव्रतंमध्याह्नव्यापिन्यांतिथौकर्त्तव्यम् ॥ तदुक्तंस्मृतिसंग्रहे॥ मध्याह्नव्यापिनीयास्यादेकभक्तेसदातिथिरिति॥

बौधायनोप्याह ॥ उदयेतूपवासस्यभक्तस्यास्तमयेतिथिःमध्याह्न व्यापिनीग्राह्याएकभक्तव्रतेतिथिरिति ॥ अत्रमध्याह्नोनामपं चधाविभक्तस्याह्नस्तृतीयोभागः ॥ विभागक्रमश्चामावास्या निर्णयेवक्ष्यते ॥ एवंत्रयोदशींघटिकामारभ्याष्टादशींघटिकांया वत् षड्घटिकात्मकोमध्याह्नस्तत्राप्युत्तरस्मिन्घटिकात्रयेएकभक्तं कर्त्तव्यम्॥अन्यथादिनार्द्धसमयेऽतीतइतिवचनस्यानर्थक्यंप्रसज्येत॥ एकस्यांचैकभक्ततिथौपूर्वदिनेमध्याह्नव्यापिन्यांसत्यां द्वितीयदिनेम ध्याह्नपर्यंतंस्थितायामपि तदुत्तरतिथिवृद्धौवृद्धिनाडिकार्द्धसंयोगे नद्वितीयदिनेपिमध्याह्नव्यापित्वंप्रसज्येत ॥ तथापूर्वदिनेमध्याह्नादुप रिप्रवृत्तायां द्वितीयदिनेक्षयवशान्मध्याह्नैकदेशव्यापिन्यां परतिथेः परमह्रासादस्याअपिह्रासनाडिकार्द्धवियोगेनमध्याह्नव्यापित्वंप्रसज्ये त॥ तदाहलौगाक्षिः॥तिथेःपरस्याघटिकाश्चयाःस्युर्न्यूनास्तथाचाभ्य धिकाश्चतासाम् ॥ अर्द्धंवियोज्यंचतथाप्रयोज्यंह्रासेचवृद्धौप्रथमेदिने स्यादिति॥एवंचसतिकुत्रैकभक्तव्रतमितिचेत्सत्यम्॥तस्यामेवमध्या ह्नव्यापिन्यांकार्यम् ॥अत्रपरतिथिसंबंधिन्योर्ह्रासवृद्ध्योरप्रयोजकत्वा त् ॥ तथाचोक्तम् ॥ कर्मणो यस्ययःकालस्तत्कालव्यापिनी तिथिः ॥ तयाकर्माणिकुर्वीतह्रासवृद्धीनकारणमिति ॥ यदातुपूर्वदि नार्द्धोत्तरघटिकात्रयेस्वल्पंस्पृष्ट्वापरादिनेमध्याह्नादूर्ध्वमप्येकभक्तति थिर्व्याप्नोति तदाद्वितीयएवदिनेएकभक्तंकार्यम् ॥ मध्याह्नव्यापिन्या मेवैकभक्तविधानात् ॥ बहुमुख्यकर्मकालव्यापित्वाच्च तिथिवृद्धौदर्प त्वाच्च ॥ तथाचोक्तम्॥खर्वदर्पौपरौपूज्यौहिंसास्यात्पूर्वकालिकीति ॥ योयस्यविहितःकालः कर्मणस्तदुपक्रमे ॥ विद्यमानोभवेदंगंनोज्झि तोपक्रमेणत्विति वचनाच्च ॥ यदापुनर्दिनद्वयेपिमुख्यकर्मणःकालैकदे शमपिनव्याप्नोति ॥ तदापूर्वैवग्राह्या ॥ मुख्यकालव्यापित्वेपिगौण कर्मकालस्पर्शनात् ॥ तिथिक्षयेणहिंसात्वाच्च ॥ हिंसास्यात्पूर्वका

लिकीतिवचनात् ॥ यदापुनरेकास्मिन्नपिदिनेकृत्स्नंमध्याह्नंनव्या प्नोति ॥ किंतुपूर्वस्मिन्नपिदिनेस्वल्पंमध्याह्नंस्पृशति उत्तरस्मिन्न पिदिनेतावंतमेवतदातिथेःसाम्येनखर्वत्वादुत्तरैवग्राह्या ॥ खर्वदर्पौ वौपूज्यावित्युक्तत्वात् ॥ यदापुनर्दिनद्वयेपिमध्याह्नव्यापिनीतदायु ग्मवाक्येननिर्णीयते ॥ तदुक्तंमोक्षेश्वरेण ॥ व्याप्नोतिकर्मकालंया तिथिर्भवतितिथिद्वये ॥ वेधवाक्येननिर्णीयग्राह्यापूर्वपरापिचेति ॥ अ यंचनिर्णयःस्वतंत्रैकभक्तविषयः॥अन्यव्रतांगभूतमेकभक्तंतुतत्तिथावे वकार्यम्॥तथाचोक्तं ॥तिथिर्यथोपवासेस्यादेकभक्तेपिसातिथिरिति॥ तत्तूपवासानुकल्पत्वेनविधीयमानैकभक्तविषयमितिगम्यते ॥ अन्य थास्मृतिसंग्रहबौधायनवाक्याभ्यांमध्याह्नव्यापिन्यामेवैकभक्तविधा नाद्विरोधः स्यात् ॥ अस्यचोपवासानुकल्पत्वमेकादशीविषयेकूर्मपु राणेनिदर्शितम् ॥ यथा॥ एकभक्तेननक्तेनक्षीणवृद्धातुरःक्षपेदिति ॥ ॥ ॥ इत्येकभक्ततिथिनिर्णयः ॥ ॥ अथनक्ततिथिनिर्णयः ॥ नक्तंनामाहरशनंवर्जयित्वा रात्रौभोक्तव्यमितिनियमाद्दिवारात्रिव्रतम् तस्मादेतद्दिवारात्रिव्यापिन्यामेवतिथौकर्त्तव्यम्॥तदुक्तंस्कंदपुराणे॥ दिवारात्रिव्रतंयच्चएकमेवतिथौस्मृतम् तस्यामुभयव्यापिन्यांकुर्या देवव्रतंव्रती॥ अत्रोभयव्यापिन्यामेवेत्यन्वयः॥कूर्मपुराणेपि ॥ प्रदोष व्यापिनीयत्रत्रिमुहूर्तादिवायदि ॥तदानक्तव्रतंकुर्यात्स्वाध्यायस्यनिषे धवदिति ॥ ॥ प्रदोषलक्षणंचतत्रैवोक्तम्॥ ॥ उदयात्प्राक्तनीसंध्या घटिकात्रयमिष्यते ॥ सायंसंध्यात्रिघटिका अस्तादुपरिभा स्वतः ॥ प्रदोषस्त्रिमुहूर्त्तःस्याद्रवावस्तंगतेसति ॥ इति ॥ अत्रयदि कश्चिद्ब्रूयात् ॥ षड्घटिकात्मकेप्रदोषेआद्यंघटिकात्रयंसंध्याकालः । तदतिक्रम्योत्तरास्मिन्घटिकात्रये नक्तव्रतनिमित्तंभोजनंकार्यम्॥ सं ध्यायांभोजननिषेधात्॥ तथाचस्मृतिः॥ चत्वारीमानिकर्माणिसंध्या यांपरिवर्जयेत् ॥ आहारंमैथुनंनिद्रांस्वाध्यायंचचतुर्थकमिति ॥ संप्र

त्युच्यते॥भोजननिषेधस्यमुख्यसंध्याकालसंबंधेनैववक्तुंशक्यत्वात्॥ गौणत्रिघटिकात्मकसंध्याश्रयणेकारणाभावात् ॥ संध्यानामादिनरात्र्योःसंधौविहितासंध्योपासनादिक्रिया ॥ संधिश्चखंडमार्त्तंडमंडलोपलब्धिसमयः॥तस्यालपत्वात्क्रियायाश्चविततत्वेनतावत्कालेकर्त्तुमशक्यत्वान्मुख्यार्थबाधेसति संध्याशब्देनसंधिसंबंधीपूर्वापरोवाक्रियापर्याप्तकालोलक्ष्यते ॥ अतश्चखंडमण्डलोपलब्ध्यादिस्तारकोदयांतोमुख्यःसायंसंध्याकालः । किंचिदलक्ष्यतारकात्सूर्यदर्शनावधिर्मुख्यःप्रातःसंध्याकालइति ॥ यथाचोक्तम्॥ याज्ञवल्क्येन ॥ प्रातःसंध्यां सनक्षत्रांसायंसंध्यांसभास्कराम् इति प्रक्रम्य॥ जपन्नासीतसावित्रींप्रत्यगातारकोदयात् ॥ संध्यांप्राक्प्रातरेवंहितिष्ठेदासूर्यदर्शनात् इति ॥ त्रिघटिकात्मकःसंध्याकालस्तुमुख्यकालेदैवादकृतानांसंध्योपासनादीनांघटिकात्रयपर्यंतंकर्तव्यताभ्यनुज्ञापनार्थंसंध्यागर्जितादिनाविहितानध्ययनादिपरश्च॥नक्तव्रतविहितभोजनंतुनक्षत्रदर्शनएवकर्त्तव्यम् ॥ नक्तभोजनस्यनक्षत्रदर्शनाविधानं भविष्यपुराणेभिहितम्॥ यथा॥ मुहूर्त्तोनन्दिनंनक्तंप्रवदंतिमनीषिणः । नक्षत्रदर्शनान्नक्तमहंमन्येगणाधिपेति ॥ अत्रवचनेननक्षत्रदर्शनादितिल्यब्लोपेपंचमी॥अतश्चनक्षत्रदर्शनंप्राप्यनक्तविहितंभोजनंविधेयमित्यर्थः॥ नक्तस्यपूर्वार्द्धेनैवविधानात्॥ ननु यातिथिर्दिवात्रिमूहूर्त्तव्यापिनीप्रदोषव्यापिनीच तस्यांनक्तव्रतंकार्यमित्युक्तम् ॥ यदापुनर्नक्ततिथिः पूर्वदिनेप्रदोषंव्याप्नोति परदिनेऽस्तमयादर्वाचीनंत्रिमुहूर्त्तंव्याप्नोति किंचिद्वास्पृशति तदाकुत्रनक्तव्रतंकार्यमितिचेत्॥ उच्यते॥ पूर्वत्रैवकार्यम्॥ प्रदोषव्यापित्वात् ॥ तदुक्तं जाबालिना ॥ अतःस्युस्तिथयःपुण्याःकर्मानुष्ठानतोदिवा ॥ नक्तव्रतेषुसर्वत्ररात्रियोगःप्रशस्यते इति ॥ एवमेकादशीनक्तव्रतेपिप्रसक्तौ व्यासेनोक्तम्॥ ॥ प्रदोषव्यापिनीग्राह्यासदानक्तव्रतेतिथिः ॥ एकादशीं

विनासर्वांशुक्लाकृष्णाऽपिवासमेति ॥ यदानक्ततिथिःपूर्वापरयोरह्नोः प्रदोषंव्याप्नोति तदापरैवग्राह्या ॥ दिवारात्रिव्यापित्वात् ॥ तदाहजाबालिः ॥ यदिस्यादुभयोरह्नोःप्रदोषव्यापिनीतिथिः ॥ तत्रोत्तरत्र नक्तंस्यादुभयत्रापिसायत " इति ॥ उभयत्रापिदिवारात्रावपीत्यर्थः ॥ यदानक्ततिथिःपूर्वापरयोरह्नोःप्रदोषंनव्याप्नोति तदापिपरैवग्राह्या किंतु दिवैवात्मनश्छायाद्वैगुण्येननक्तंकार्यम् ॥ तदुक्तंस्कन्दपुराणे ॥ "प्रदोषव्यापिनीनस्याद्दिवानक्तंविधीयते ॥ आत्मनोद्विगुणांछायामतिक्रामतिभास्करे ॥ तन्नक्तंनक्तमित्याहुर्ननक्तंनिशिभोजनमिति ॥ ननुनक्तव्रतस्यरात्रौभोजनमनेकवचनविहितम् ॥ आत्मच्छायाद्वैगुण्यभोजनेतद्विरोधइतिचेन्न ॥ विषयविशेषवचनेनसामान्यवचनानांबाधइतिनविरोधः ॥ यदानक्ततिथिःपूर्वदिनेप्रदोषमधिकंस्पृशति परदिनेस्वल्पंस्पृशति तदाप्युत्तरत्रैवस्यात् ॥ दिवारात्रिव्रतत्वेनदिवारात्रिस्पृश्यैवातिथौविधेयत्वात् ॥सौरनक्तव्रतंतुप्रदोपव्यापिन्यामेवतिथौदिवानक्तंकार्यं॥तदाहसुमन्तुः ॥ " त्रिमुहूर्त्तंस्पृशेवाह्निनिशिवातावतीतिथिः ॥ तस्यांसौरंचरेन्नक्तमहन्येवतुभोजनम्"इति ॥ कूर्मपुराणेप्युक्तम् ॥ " नरस्यद्विगुणांछायामतिक्रामेद्यदारविः॥ तदा सौरंचरेन्नक्तंनकुर्यान्निशिभोजनम्"इति॥ ॥इतिनक्ततिथिनिर्णयः॥ ॥ अथप्रसंगान्नक्षत्रव्रतकालउच्यते ॥ ॥ सूर्यास्तमयकालव्यापिनिनक्षत्रे नक्षत्रव्रतंकार्यम् ॥ यदाऽत्यंतक्षयगामिनक्षत्रंदिनद्वयेप्यस्तमयकालव्यापिनभवतितदार्द्धरात्रादर्वाक्चंद्रेणयुक्तेनक्षत्रेकायम् ॥ तदुक्तंविष्णुधर्मोत्तरे ॥ "उपोषितव्यंनक्षत्रंयस्मिन्नस्तमियाद्रविः ॥ युज्यतेयत्रवातारानिशीथेशशिनासह "इति ॥ अत्रनिशीथशब्देनार्द्धरात्रादर्वाचीनकालोलक्ष्यते ॥ अन्यथासुमंतुवचनेनविरोधःस्यात् ॥ यदुक्तम्॥"यत्रार्द्धरात्रादर्वाक्तुनक्षत्रंप्राप्यतेतिथौ ॥तन्नक्षत्रेव्रतंकुर्यादतीते पारणंतथा" इति ॥ नक्षत्रोपवासेयातिथिःसैवनक्षत्रविहितनक्तैकभक्त

तंयस्मिन्नभ्यवहरणेतदयाचितंनाम ॥ननु "एकभक्तेननक्तेनतथैवाया
चितेनेच " इत्यादिवचनेष्वयाचितस्याभ्यवहारविषयत्वाविशेषदर्श
नात्तद्विषयत्वंकुतोवसीयतइतिचेत् ॥ सत्यम् ॥ शिष्टाचारादेवाभ्य
वहारश्चभक्ष्यभोज्यलेह्यपेयचोष्यभेदेनपंचविधः ॥ तत्र दंतैरवखं
ड्यावखंड्ययन्निगीर्यते तद्भक्ष्यम् ॥ दंतावखंडनमंतरेणमुखव्यापारेणै
वयन्निगीर्यतेतद्भोज्यम् ॥ लेह्यंनाम जिह्वयागृहीत्वायदंतर्गिल्यते ॥ पे
यंप्रसिद्धंक्षीरादि॥चोष्यंनाम द्रव्यांतर्गतंसाररसंमुखव्यापारेणदंतव्या
पारेणवागृहीत्वायन्निगिल्यतेअसारंत्यज्यते यथाम्रफलेक्षुदंडादि ॥अ
तश्चायाचितमेवान्यप्रार्थनयाभ्यवहरिष्याम्येवेतिप्रातःसंकल्प्यतथा
विधमभ्यवहरणमयाचितव्रतम्॥ अस्यचसामान्यतएकभक्तरूपत्वादे
कभक्तवन्मध्याह्नव्यापिन्यामेवतिथौसतिसंभवेविधेयत्वम् ॥ दिवसेप
रप्रार्थनयाभोजनासंभवेसतिरात्रौवापरप्रार्थनयाभोक्तव्यम् ॥ अन्य
थाभ्यवहरिष्याम्येवेतिसंकल्पभग्नप्रसंगात् ॥ नन्वयाचितस्यैकभक्त
तुल्यत्वेनैकभक्तकालएवविधानात् ॥ तत्रासंभवेतन्नक्रियतएवेतिचे
न्न ॥ कालस्यांगभूतत्वेनांगभूतस्यकालस्यलोपेंऽगिनोव्रतस्यलोपा
संभवात् ॥ ननुयत्कर्मयस्मिन्कालेविहितंतस्याप्राप्तौतन्नक्रियतएवे
तिप्रसिद्धविरोधइतिचेत् ॥ सत्यम् ॥ स्वतंत्रकर्मविषयत्वात्प्रसिद्धेः ॥
अयाचितस्यचपराधीनत्वात्॥किंच ॥दैवादंतरितस्योपासनस्यदिनां
तरेविधानदर्शनात् ॥ तथा तन्मासिकृष्णैकादश्यांकुर्यादिंदुक्षयेऽपि
वेत्यतीतस्यप्रत्याब्दिकादेरपिकृष्णैकादश्यादिकालांतरेविधानाच्च ॥
अन्यथादैवादंतरितस्योपासनादेरपि कालांतरेविधानायोग्यत्वादकर
णंप्रसज्येत ॥ क्रियतेचकालांतरइतिशिष्टाचारप्राप्तप्रसिद्धिसद्भावा





च्चनप्रसिद्धविरोधइतिनकिंचित्कष्टम् ॥ एवमेकभक्तादिव्रतानांखंड तिथिंविहायखंडतिथावेवोपक्रमसमाप्त्योर्विहितत्वात्खंडाखंडस्वरूपं निरूप्यतंनिषेधविधीअभिधीयेते ॥ यातिथीरुदयादारभ्यदिनार्द्ध व्याविनीनस्यात्साखंडातिथिः ॥ तस्यांव्रतानांप्रारंभंसमापनंचनकुर्यात् ॥ तदाहसत्यव्रतः ॥ उदयस्थातिथिर्याहिनभवेद्दिनमध्यगा ॥ साखंडानव्रतानांस्यात्तत्रारंभःसमापनम् इति ॥ यातिथिरुदयादारभ्यदिनार्द्धव्यापिनीसात्वखंडा ॥ तस्यांव्रतानामारंभंसमाप्तिंचकुर्यात् ॥ तदाहबृहद्वसिष्ठः॥ अखंडवर्त्तिमार्तंडाह्यखंडाभवेत्तिथिः॥ व्रतप्रारंभणंतस्यामनष्टगुरुशुक्रयुग्इति ॥ नन्वत्रवचनेसमाप्तिपदाश्रयणादत्रसमाप्तिःकर्त्तव्येतिकुतोऽवगम्यतइतिचेत् ॥ सत्यम् ॥खंडतिथौनिषेधबलादेवाखंडतिथौविधानंप्राप्तम् ॥ भावाभावौविहायतृतीयावस्थायाःक्वचिद्दर्शनात्॥ ॥इति श्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतएकभक्तादिनिर्णयः ॥ ॥ श्रीसूर्यसेनभूभृद्विमलयशःक्षीरसागरादुदिते॥ श्रीनिर्णयामृतेस्मिञ्छुभैकभक्तादिनिर्णयोजातः ॥ श्रीमत्पंडितसिद्धलक्ष्मणसुतःश्रीसिद्धलक्ष्मीपदद्वंद्वाराधनसुप्रसिद्धमहिमायाःसिद्धसारस्वतः ॥ आदेशादकृतैषसूर्यमहसःश्रीसूर्यसेनप्रभोर्वैधेकर्माणि कालनिर्णयमसावल्लाटनाथःसुधीः॥ ॥अथउपवासादिव्रतसाधारण युग्मतिथिनिर्णयःप्रस्तूयते ॥ ॥ तत्रशुक्लपक्षेद्वितीयातृतीयायुक्ता ग्राह्या ॥ तृतीयाचद्वितीयायुक्ता ॥ चतुर्थीपंचम्या ॥ पंचमीचतुर्थ्या ॥ षष्ठीसप्तम्या ॥ सप्तमीषष्ठ्या ॥ अष्टमीनवम्या ॥ नवम्यष्टम्या॥एकादशीद्वादश्या॥ द्वादश्यैकादश्या ॥ चतुर्दशीपौर्णमास्या ॥ पौर्णमासीचतुर्दश्या ॥ अमावास्याप्रतिपदा ॥ प्रतिपदमावास्ययेति॥ तदुक्तंनिगमे ॥ " युग्माग्नियुगभूतानिषण्मुनिर्वसुरंध्रके ॥ रुद्रेणद्वादशीयुक्ताचतुर्दश्यातुपूर्णिमा॥ प्रतिपद्यप्यमावास्यातिथ्योर्युग्मंमहत्फ

दतानिशुक्लपक्षयुग्मानीतिकथंज्ञायते॥उच्यते॥चतुर्दश्याचपूर्णिमाति
प्रतिपद्यमावास्येति च चतुर्दशीपूर्णिमायुग्मसाहचर्यात्प्रतिपदमावा
स्यायुग्मसाहचर्याच्च॥एतयोःकृष्णपक्षेऽसंभवात् ॥ दशमीएकादशी
युतानवमीयुतावाकार्या ॥ तदुक्तम् ॥ "संपूर्णादशमीकार्यापरयापूर्व
याथवा ॥ युक्तानदूषितायस्मादतःसासर्वतोमुखी ॥ पुराणसमुच्चयेऽ
पि ॥ संपूर्णादशमीकार्यामिश्रितापूर्वयाथवेइति ॥ अत्रसंपूर्णेति
शुक्लपक्षसंबंधिनीत्यर्थः ॥ संपूर्णचंद्रसंबंधात् ॥ पूर्वयाथवेतिपक्षांत
रस्वीकारएकादशीव्रतांगभूतदशमीनियमेषुएकादशीयुताकार्य्या[1] ॥
तदसंभवेननवमीयुतावाकार्येत्यर्थः ॥ केवलदशमीसंबंधिव्रतेषुतुप्राये
णनवमीयुताकार्या ॥ तदुक्तमापस्तंबेन ॥ दशमीचप्रक
र्त्तव्यासदुर्गाद्विजसत्तमेति ॥ सदुर्गानवमीयुक्ता ॥ शुक्लत्रयोदशीतु
द्वादशीयुताकार्या ॥ तदाहसुमंतुः ॥ " त्रयोदशीतुकर्त्तव्या
द्वादशीसहितामुने"इति ॥ ननुयुग्मवाक्येएकादशीद्वादश्योरेवयुग्म
त्वमुक्त्वाएतद्व्यस्तंमहादोषमित्युक्तत्वाद्दशम्येकादश्योर्द्वादशीत्रयो
दश्योश्चयुग्मत्वकथनेतान्नियमवैपरीत्यंस्यादितिचेत् ॥सत्यम् ॥ महा
दोषत्वकथनमेकादशीद्वादशीविहितकर्माभिप्रायेण नतुदशमीत्रयोद
शीविहितकर्माभिप्रायेण॥इदंतुवचनद्वयंदशमीत्रयोदश्योर्विहितकर्मा
भिप्रेत्यप्रवृत्तमितिनवैपरीत्यम्॥ ॥अथकृष्णपक्षयुग्मानि ॥ ॥तत्र
प्रतिपदादिकाविषमातिथिःपरयुताकार्या ॥ द्वितीयादिकासमातिथिः
पूर्वयुताकार्या ॥ तदुक्तमापस्तंबेन ॥ प्रतिपत्सद्वितीयास्याद्द्वि
तीयाप्रतिपद्युता ॥ चतुर्थीसंयुतायाचसातृतीयाफलप्रदा॥पंचमीचप्र
कर्त्तव्याषष्ठ्यायुक्तातुनारद ॥ कृष्णपक्षेष्टमीचैवकृष्णपक्षेचतुर्दशी ॥

१ ग्राह्येतिवा ।



पूर्वविद्धातुकर्तव्यापरविद्धानकुत्रचित् ॥ दशमीचैवकर्तव्यासदुर्गा द्विजसत्तम ॥ कृष्णाष्टमी[1]ह्यमावास्याकृष्णपक्षेत्रयोदशी ॥ एताःपर युताःपूज्याः परापूर्वेणसंयुता " इति ॥ अत्रकृष्णपक्षेत्रयोदशीति कृष्णपक्षसंबंधस्त्रयोदश्याएव नतुषष्ठ्यष्टम्योः ॥ तयोपूर्वयुतयो रेववचनसामर्थ्येनोपादानात् ॥ वचनंच ॥ "पंचमीतुप्रकर्त्तव्याप ष्ठ्यायुक्ताचनारद" ॥कृष्णपक्षेऽष्टमीत्यादिच॥एकादशीकृष्णपक्षेपि द्वादशीयुतैवकार्या ॥ रुद्रेणद्वादशीयुक्तेत्येतद्युग्मवचनविरोधिव चनांतराभावात् ॥ एवंतिथीनांयुग्मत्वेनप्राशस्त्येसत्वेकस्मिन्दिने द्वितीयादितिथिद्वयसंभवेद्वितीयादिविहितंकर्म द्वितीयादिभागेएव कार्यम् ॥नतुतृतीयादिभागेइतिचेत्॥ न॥तिथिद्वयभागेपिकर्त्तव्यम्॥ सामान्यवेधस्यत्रिमुहूर्त्तात्मिकत्वात् ॥ त्रिमुहूर्त्तादिकाले इतरव्रता नांशक्यविधानत्वेपिनक्तोपवासयोःकर्त्तुमशक्यत्वात् ॥ ननुतृती यादिविहितनक्तोपवासादपिद्वितीयादिभागमतिक्रम्य तृतीयादिभा गप्रवेशमारभ्यक्रियेतामितिचेत् ॥ मैवम् ॥ व्रतस्यप्रातरेवोपक्रम्य कर्त्तव्यताविधानात् ॥ तदाहदक्षः ॥ "प्रातरारभ्यमतिमान्कुर्या न्नक्तव्रतादिकम् ॥ नापराह्णेनमध्याह्नेपित्र्यकालोदितौस्मृतौइति ॥ अत्रप्रारंभश्चसंकल्परूपः ॥ उक्तंच ॥ भारंभोवरणंयज्ञेसंकल्पोव्र तसत्रयोः ॥ नांदीमुखंविवाहादौश्राद्धेपाकपरिक्रिया"इति ॥ नन्वेवं युगभूतानीतिचतुर्थ्याःपरविद्धत्वेनपूज्यत्वम्॥ पंचम्याःपूर्वविद्धात्वेन पूज्यत्वम्॥अतश्चतुर्थीविहितंकर्मपंचमीविद्धतिथौप्रसक्तम् ॥पंचमीवि हितंकर्मचतुर्थीविद्धातिथौप्रसक्तम् ॥एवंचसतिव्रतद्वयस्यैकस्मिन्दिने कर्तव्यत्वेप्रातेकथंविधानम् ॥एकेनप्रातरारभ्यैकभक्तनक्तादिरूपद्वय स्यकर्तुमशक्यत्वात् ॥ उत्तरम् ॥ कर्तृभेदेनकर्तुंशक्यत्वान्ना नुपपत्तिः ॥ एकेनारब्धेव्रतद्वयेतादितरस्यकर्तृत्वाभावात्कर्तृभेदे

[1] षष्ठ्यष्टमीतिपाठः।

नकर्त्तुंशक्यत इत्यसंगतामितिचेन्न ॥ कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् इतिविधानोदकभक्तायाचितोपवासादिषुभार्यादिनियोगाद्विधानमुपपद्यते ॥ देवार्चनादिनियमस्वरूपव्रतादिष्वेकेनैवकर्तुंशक्यत्वान्नानुपपत्तिः ॥ नन्वेवंतिथिद्वयविहितस्य स्नानाद्याह्निकस्यापिद्विविधानंप्रसज्येत ॥ मैवम् ॥ तिथिद्वयमेकेनकर्त्तुंशक्यंव्रतद्वयमेवपृथक्कुर्यात् ॥ तदुक्तंमरीचिना ॥ तिथिद्वयोदितंयत्तुव्रतंतत्पृथगाचरेत् ॥ तिथ्योर्द्वैधेतुस्नानादि सकृदाह्निकमाचरेत् इति ॥ अतस्तिथिद्वयभागेपिनक्तादिव्रतंकुर्यादितिसिद्धम् ॥ नन्वेवंयुग्मतिथीनामेवंपूर्वपरविद्धतयाप्राशस्त्येसति ॥ वर्द्धमानस्यपक्षस्यसोदयापूज्यतेतिथिः ॥ यदापक्षक्षयंयातितदास्यादापराह्निकी ॥ तथा ॥ त्रिमुहूर्त्तापिकर्त्तव्यायातिथिर्वृद्धिगामिनी ॥ षण्मुहूर्तानकर्त्तव्यायातिथिःक्षयगामिनी इतिचबौधायनषट्त्रिंशन्मतवाक्याभ्यांतिथीनांक्षयवृद्धिभ्यांपूज्यत्वमुक्तम् ॥ शुक्लपक्षेतिथिर्ग्राह्यायस्यामभ्युदितोरविः ॥ कृष्णपक्षेतिथिर्ग्राह्यायस्यामस्तमितोरविः ॥ इत्यत्रापिवाक्येशुक्लपक्षकृष्णपक्षपदाभ्यांवृद्धिक्षयावेवलक्ष्येते ॥ तदुक्तम् ॥ शुक्लपक्षेहिचंद्रस्यवृद्धिर्भवतिभास्करात् ॥ कृष्णपक्षेक्षयस्ताभ्यांतिथीनामपितौखलु इति ॥ अतश्चशुक्लपक्षकृष्णपक्षपदयोर्वृद्धिक्षयोपलक्षकत्वादनेनशंखवचनेनापिवृद्धिक्षयाभ्यामेवतिथीनांपूज्यत्वमुक्तम् ॥ तच्चव्यर्थंस्यादिति चेत् ॥ मैवम् ॥ विषयभेदादुपपत्तेः ॥ युग्मादिवाक्यस्यव्रतादिविषयत्वाद्वृद्धिह्रासयोः प्रत्याब्दिकादिविषयत्वात् ॥ तथाचनिगमे ॥ द्वितीयादिकयुग्मानां पूज्यतानियमादिषु ॥ एकोद्दिष्टाब्दवृद्ध्यादौवृद्धिह्रासादिचोदनेति ॥ नियमादिषुव्रतादिष्वित्यर्थः ॥ ब्रह्मवैवर्त्तेऽपि ॥ तिथिह्रासादियुग्मानां वृद्धिह्रासविधिःसदा ॥ व्रत

श्राद्धविभागेनविज्ञातव्याव्यवस्थितिरिति ॥ अतश्चद्वितीयादिक युग्मतयापूज्यासुतिथिषुव्रतादिकंकर्त्तव्यम् ॥ तिथिक्षयवृद्धिभ्यांपू ज्यास्वेकोद्दिष्टाब्दिकादिकर्तव्यमितिव्यवस्थासुस्था ॥ ॥ इति श्री सूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेसामान्यतिथिनिर्णयप्रकरणम् ॥ ॥ श्रीसूर्यसेनभूभृद्विमलयशःक्षीरसागरादुदिते ॥ इतिनिर्णयामृतेऽ स्मिंस्तिथिसामान्यस्यनिर्णयोयमभूत् ॥ श्रीमत्पंडितसिद्धलक्ष्मण सुतःश्रीसिद्धलक्ष्मीपदद्वंद्वाराधनसुप्रसिद्धमहिमायःसिद्धसारस्वतः ॥ आदेशादकृतैषसूर्यमहसःश्रीसूर्यसेनप्रभोर्वैधेकर्मणिकालनिर्णयमसा वल्लाटनाथःसुधीः ॥ ॥ अथप्रतिपदादिविशेषतिथिनिर्णयःप्रारभ्यते ॥ ॥ तत्रनिर्णयोनामविप्रतिपन्नानांवाक्यानांपरस्परविरोधपरिहारः ॥ तदेवतत्त्वदर्शनमुच्यते ॥ तदुक्तम् ॥ तत्त्वेविप्रतिपन्नानांवाक्याना मितरेतरम् ॥ विरोधपरिहारोत्रनिर्णयस्तत्त्वदर्शनम् इति ॥ तत्रप्र थमंप्रतिपन्निर्णीयते ॥ अस्याश्चनिरुक्तिर्भविष्योत्तरेप्रोक्ता ॥ यथा ॥ तिथीनां प्रवरायस्माद्ब्रह्मणा समुदाहृता ॥ प्रतिपद्यपरेपूर्वेप्रतिप त्तेनसोच्यते इति ॥ शुक्लप्रतिपदमावास्यायुतैवग्राह्या ॥ तदुक्तं युग्मवाक्ये ॥ प्रतिपद्यप्यमावास्या इति ॥ पैठीनसिनाप्युक्तम् ॥ पंच मीसप्तमीचैवदशमीचत्रयोदशी ॥ प्रतिपन्नवमीचैवकर्तव्यासंमुखी तिथिरिति ॥ संमुखीसायाह्नव्यापिनी ॥ वृद्धवसिष्ठोपि ॥ द्वितीया पंचमीवेधाद्दशमीचत्रयोदशी॥चतुर्दशीचोपवासेहन्युः पूर्वोत्तरेतिथी॥ उपवासेसप्तमीतुवेधाद्धंत्युत्तरंदिनम् इति ॥ द्वितीयापंचमीदशमी त्रयोदशीचतुर्दश्यःस्ववेधादुपवासादिविषयेस्वस्मात्पूर्वामुत्तरांचति थिंहन्युः ॥ सप्तमीतुस्ववेधादुत्तरामेवतिथिंहंतीत्यर्थः ॥ एतेनप्रति पत्तृतीयाचद्वितीयाविद्धानोपोष्यत इति लभ्यते ॥ एवंचतुर्थी षष्ठीचपंचमीयुतानोपोष्यते ॥ नवम्येकादशीचदशमीयुतानोपो ष्यते ॥ द्वादशीचतुर्दशीचत्रयोदशीयुतानोपोष्यते ॥ त्रयोदशीपूर्णि

मामावास्याश्चतुर्दशीयुतानोपोष्यन्ते ॥ नन्वेवंसतिप्रतिपत्सद्वितीया स्यादित्यापस्तंबवचनविरोधःस्यादितिचेन्न॥आपस्तंबवचनस्यतिल काशोककरवीरव्रतविषयत्वात्॥ ननुचतुर्थीषष्ठ्योः पंचमीवेधानिषेधेऽपियुग्मभूतानीतिनिगमवचनविरोधइतिचेत्॥ मैवम्॥ युग्मवचनस्य गणेशचतुर्थ्यतिरिक्तविषयत्वात् ॥ पंचमीवेधानिषेधस्यगणेशव्रत विषयत्वादित्यविरोधः॥ नन्वत्रवाक्येचतुर्दशीस्ववेधात्पूर्वांत्रयोदशीं परांपूर्णिमांचहंतीत्युक्तम् ॥ तच्च षष्ठ्यष्टमीअमावास्याकृष्णप क्षेत्रयोदशी॥ एताःपरयुताःपूज्याःपरापूर्वेणसंयुता॥ इत्यापस्तंबवच नेनचतुर्दश्याचपूर्णिमेतियुग्मवचनेनचविरुध्येतेतिचेत्॥ मैवम्॥आप स्तंबवचनस्यकृष्णत्रयोदशीविषयत्वात्॥ निषेधस्यशुक्लत्रयोदशी विषयत्वादित्यविरोधः॥ युग्मवाक्यस्यचवटसावित्रीव्रतव्यतिरिक्त व्रतविषयत्वादित्यविरोधः॥ ननुसप्तमीस्ववेधादष्टमींहंतीत्युक्तम्॥त दपि॥कृष्णपक्षेष्टमीचैवकृष्णपक्षेचतुर्दशी॥ पूर्वविद्धाप्रकर्त्तव्यापरवि द्धानकुत्रचित्॥इत्यापस्तंबवचनेनविरुद्धमितिचेन्न॥ निषेधवाक्यस्य शुक्लाष्टमीविषयत्वात् ॥ एवंवृद्धवसिष्ठवाक्यस्यनिगमादिवाक्यैर्विरोधः परिहृतः ॥ अन्यान्यप्येवंविधविरुद्धवाक्यान्युक्तविषयेष्वेवव्यवस्थापनीयानि॥ ॥ इतिप्रतिपत्सामान्यनिर्णयः॥ ॥ अथविशेषनिर्णयः॥ ॥ तत्रचैत्रकृष्णप्रतिपदिपूर्वविद्धायांनीराजनादिकर्मकर्त्तव्यम्॥अस्यचहोलिकानंतरकर्त्तव्यत्वाद्धोलिकायाश्चपूर्वविद्धायाएवप्र शस्तत्वादेतदपिपूर्वविद्धायामेवेत्यवसीयते॥ अत्रप्रतिपदिप्रातरुत्थाय श्वपचंस्पृष्ट्वास्नानंकुर्यात् ॥ ततोहोलिकाविभूतिंवंदित्वागोमहिषी बालकादीनलंकृत्यतोरणाधोनयेत्॥तदुक्तंभविष्योत्तरे॥चैत्रेमासिमहा बाहोपुण्यप्रतिपदापरा॥यस्तस्यांश्वपचंस्पृष्ट्वास्नानंकुर्यान्नरोत्तमः॥ नतस्यदुरितंकिंचिन्नाधयोव्याधयोनृप ॥ भवंतिकुरुशार्दूलतस्मा

१ दृष्ट्वेतिपाठः। २ दृष्ट्वेत्येवपाठांतरम्।

त्स्नानंसमाचरेत् ॥ दिव्यंनीराजनंतद्धिसर्वरोगविनाशनमिति ॥
तथा॥ प्रवृत्तेमधुमासेतुप्रतिपद्युदितेरवौ ॥ कृत्वाचावश्यकार्याणिसं
तर्प्यपितृदेवताः॥ वंदयेद्धोलिकाभूतिंसर्वदुष्टोपशांतये॥ विभूतिवंदन
मंत्रः॥ वंदितासिसुरेंद्रेणब्रह्मणाशंकरेणच ॥ अतस्त्वंपाहिनोदेविविभूते
भूतिदाभवेति ॥ तथाच ॥ गोमहिष्यादियत्किंचित्तत्सर्वंभूषयेन्नृपः ॥
चूर्णवस्त्रादिभिःसर्वैस्तोरणाधस्ततोनयेदिति ॥ अत्रैवकृत्यांतरमाह ॥
गोमयेनोपलिप्तेचतुष्कैश्चार्चितेगृहांगणेशुक्लवस्त्राच्छादितेशुभआसने
प्राङ्मुखउपविष्टोब्राह्मणैःकृतस्वस्त्ययनः मंगलद्रव्यान्वितस्थालह
स्तयासुलक्षणयासुवासिन्याकृतचंदनातिलकनीराजनादिमंगलःसचंद
नमाम्रमुकुलंप्राश्नीयात् ॥ एषाचहृच्छयकामपूजाक्रियतेजनैरिति ॥
तदुक्तंयुधिष्ठिरंप्रतिकृष्णेन ॥ यत्पिबन्तिवसंताद्येचूतपुष्पंसचंदनम् ॥
सत्यंहृत्स्थस्यकामस्यपूजनंक्रियतेजनैरिति ॥वसंताद्येचैत्रकृष्णप्रति
पदीत्यर्थः॥ पुराणसमुच्चयेप्युक्तम् ॥ वृत्तेतुषारसमयेसितपंचदश्यां
प्रातर्वसंतसमयेसमुपस्थितेच ॥ संप्राश्यचूतकुसुमंसहचंदनेनसत्यं
हिपार्थपुरुषोथसमांसुखीस्यात्॥ समांसंपूर्णसंवत्सरइत्यर्थः ॥ काला
ध्वनोरत्यंतसंयोगेइति द्वितीया ॥ प्राशनमंत्रश्च॥चूतमग्र्यंवसंतस्यमा
कंदकुसुमंतव ॥ सचंदनंपिबाम्यद्यसर्वकमार्थसिद्धयइति॥ततःप्रातर्द्वि
तीयायांपुत्रमित्रादिसंयुतः॥ नृपतिर्विततेदेशेवितानवरशोभिते॥सर्व
तश्चसमाकीर्णेरत्नकंबलशोभिते ॥ उपविश्यासनेरम्येपौरजानपदैः
सह॥सिंदूरकुंकुमक्षोदपट्टवासैः सचंदनैः॥विकीर्यलोकांस्तांबूलैःसंमा
न्यचपृथक्पृथक्॥नृत्यगीतविनोदैश्चकुर्यात्काममहोत्सवम्॥एवंकुर्वन्न
वाप्नोतियावत्संवत्सरंसुखमिति ॥ ॥ इतिचैत्रप्रतिपन्निर्णयः ॥ ॥
अथभाद्रपदशुक्लप्रतिपत् ॥ ॥ तत्रमहत्तमाख्यंशिवव्रतंकार्यं तदेवमौ
नव्रतमित्युच्यते ॥ तदुक्तंस्कंदपुराणे ॥ नंदिकेश्वरउवाच ॥ देवकेन
विधानेनव्रतपुण्यंमहत्तमम्॥कस्यांतिथौप्रकर्त्तव्यंविधानंतद्वदस्वमे ॥

॥ स्कंद उवाच ॥ मासिभाद्रपदेशुक्लेपक्षेचप्रतिपत्तिथौ ॥ नैवेद्यंतुपचे न्मौनात्षोडशत्रिगुणानिच॥फलानिपिष्टपक्वानिदद्याद्विप्रायषोडश ॥ देवायषोडशैतानिदातव्यानिप्रयत्नतः ॥ भुज्यंतेषोडशतथाव्रतस्य नियमाश्रयादित्यादि ॥ इदंचव्रतंपूर्वविद्धायामेवकर्तव्यं रुद्रव्रत त्वात् ॥ तदुक्तंब्रह्मवैवर्ते ॥ रुद्रव्रतेषुसर्वेषुकर्त्तव्यासंमुखीतिथिरिति ॥ ॥इतिभाद्रप्रतिपन्निर्णयः॥ ॥ अथकार्त्तिकशुक्लप्रतिपत् ॥ ॥ साचति थिक्षयेगोक्रीडादौपूर्वयुतैवकार्या॥तिथिवृद्धौतूदयव्यापिनीग्राह्या ॥ तदुक्तंपुराणसमुच्चये ॥ " वर्द्धमानेतिथौनंदायदासार्धत्रियामिका ॥ द्वितीयावृद्धिगामित्वादुत्तरातत्रचोच्यत इति ॥ तथाचोक्तम् ॥ त्रियामगादर्शतिथिर्भवेच्चेत्सार्धत्रियामाप्रतिपद्विवृद्धौ ॥ दीपोत्स वेतेमुनिभिःप्रदिष्टेअतोन्यथापूर्वयुतेविधेयेइति ॥ ननु पूर्वविद्धाप्रकर्त व्याशिवरात्रिर्बलेर्दिनमिति ॥ तथा ॥ याकुहूः प्रतिपन्मिश्रातत्रगाःपू जयेन्नृप ॥ पूजनात्रीणिवर्धंतेप्रजागावोमहीपतिरितिच ॥ पूर्वयुता याएवविधानात् ॥ तथाच ॥ नंदायादर्शनेरक्षाबलिदानंदशासुवा॥ भद्रायांगोकुलक्रीडासदेशोवैविनश्यतीति ॥ भद्रायांद्वितीयायाम् ॥ ॥ देवलोपि ॥ प्रतिपद्दर्शसंयोगेक्रीडनंतुगवांमतम् ॥ परविद्धेषुयः कुर्यात्पुत्रदारधनक्षयइति ॥ तथा ॥ प्रतिपद्यग्निकरणंद्वितीयायां तुगोर्चनम् ॥ छत्रच्छेदंकारिष्यतेवित्तनाशंकुलक्षयमित्यादिवाक्यैःप रविद्धानिषेधाच्च वर्धमानतिथौनंदेतित्रियामगादर्शतिथिरितिचवाक्या भ्यांविरोधःस्यादितिचेत्सत्यं ॥ यस्यांप्रतिपदिद्वितीयायुक्तायांचंद्रद र्शनंसंभाव्यतेतद्विषयत्वान्निषेधवाक्यानामितिनविरोधः ॥ प्रतिपद्यप राह्णात्मकत्रिमुहूर्तव्यापिन्यांद्वितीयायांचंद्रदर्शनंसंभाव्यते ॥तदुक्तम न्वाधानविषयेवृद्धशातातपेन ॥ द्वितीयात्रिमुहूर्ताचेत्प्रातिपद्याप पराह्णिकी ॥ अन्वाधानंचतुर्दश्यांपरतःसोमदर्शनादिति ॥ अपराह्णश्च पंचधाविभक्तस्याह्नश्चतुर्थोभागः ॥ अतश्चयत्रप्रतिपदिषण्मुहूर्तव्या

पिनीद्वितीयातत्रचंद्रदर्शनसंभवाद्गोक्रीडनंनकार्यम् ॥ तदुक्तं पुराणसमुच्चये ॥ गवांक्रीडादिनेयत्ररात्रौदृश्येतचंद्रमाः ॥ सोमो राजापशून्हंतिसुरभिःपूजकांस्तथेति ॥ चंद्रदर्शनेतुद्वितीयायुते वतिथेर्वृद्धगामित्वाद्ग्राह्या ॥ किंच ॥ सार्धत्रियामाप्रतिपद्विवृद्धा वित्यत्रप्रतिपदःसार्धत्रियामव्यापित्वेनद्वितीयावेधोपिनसंभवति ॥ वेधस्यत्रिमुहूर्तात्मकत्वात् ॥ तिथिवृद्धौपूर्वविद्धानिषेधाच्चपरविद्धा प्राप्तिः ॥ तदुक्तंभाविष्योत्तरे ॥ यथाद्वादशभिर्मासैर्मासोवृद्धो मलिम्लुचः॥तथैवाहोरात्रवृद्धातिथिःप्रोक्तामलिम्लुचा॥यथामलिम्लुचः पूर्वोमासोदैवस्तथोत्तरः॥त्याज्यातिथिस्तथापूर्वाग्राह्याचैवतथोत्तरेति ॥ सर्वथाद्वितीयास्पर्शनिषेधाग्रहस्तुनयुक्तः ॥ तादृशवाक्यश्रवणात् ॥ चंद्रोदयेतुतत्रैवपूजयेत्सुरभीःसदेत्यादिवाक्यानर्थक्याप्रसंगाच्चातश्चंद्रदर्शनासंभावनायांपूर्वाह्णेक्रीडनं गवामितिकर्मकालव्यापित्वात्तिथिवृद्धौपरैवप्रतिपद्गोक्रीडादौग्राह्येतिसर्वमनवद्यम् ॥

॥ अथात्रकृत्यमुच्यते ॥ ॥अत्रप्रातरेवगोवर्धनपूजाकार्या ॥ गावश्चालंकृत्यपूज्याः ॥ वाहनदोहनेवर्जयेत् ॥ तदुक्तंस्कन्दपुराणे॥ प्रातर्गोवर्धनःपूज्योद्यूतंचापिसमाचरेत् ॥ भूषणीयस्तथागावः पूज्याश्चावाहदोहनादिति ॥ गोवर्धनपूजामंत्रः ॥ गोवर्धनधराधारगोकुलत्राणकारण ॥ बहुबाहुकृतच्छायगवांकोटिप्रदो भव ॥ गोपूजामंत्रौच ॥ लक्ष्मीर्यालोकपालानांधेनुरूपेणसंस्थिता॥घृतंवहतिसंज्ञार्थंममपापंव्यपोहतु॥अग्रतःसंतुमेगावोगावोमे संतुपृष्ठतः॥गावोमेहृदये संतु गवांमध्येवसाम्यहमिति॥अत्रैवापराह्णेपूर्वस्यांदिशिस्तंभवृक्षादिषुकुशकाशनिर्मितांमार्गपालींनिबध्यतस्या अधस्तलेनसर्वैवर्णागच्छेयुः॥ तदुक्तंस्कन्दपुराणे॥ततोपराह्णसमये पूर्वस्यांदिशिभारत॥मार्गपालींप्रबध्नीयात्तुंगस्तंभेचपादपे॥कुशकाशमयींदिव्यांलंबकैर्बहुभिर्वृताम्॥ कृतेहोमेद्विजेंद्रैस्तुबध्नीयान्मार्गपालि

काम्॥नमस्कारंततःकुर्यान्मंत्रेणानेनसुव्रत ॥मार्गपालिनमस्तेस्तुसर्व लोकसुखप्रदे ॥ विधेयैःपुत्रदाराद्यैःपुनरेहिव्रतस्यमे॥नीराजनंचतत्रैव कार्यंराष्ट्रजयप्रदम्॥मार्गपालीतलेनेत्थंयांतिगावोगजावृषाः ॥ राजानो राजपुत्राश्चब्राह्मणाःशूद्रजातयः ॥मार्गपालींसमुल्लंघ्यनीरुजःस्युःसुखा न्विताइति॥अथतत्रैवचवष्टिकाकर्षणमपिकार्यम्॥ तदुक्तमादित्यपुरा णे॥कुशकाशमयींकुर्याद्वष्टिकांसुदृढांनवाम्॥तामेकतोराजपुत्राहीनव र्णास्तथान्यतः ॥गृहीत्वाकर्षयेयुस्तांयथासारंमुहुर्मुहुः॥जयेत्रहीनजा तीनांजयोराज्ञस्तुवत्सरम्॥जयचिह्नमिदंराजाविदधीतप्रयत्नतइति ॥ अथतत्रैवरात्रौराजास्वसदनस्यांतेपंचरंगकैर्वक्ष्यमाणलक्षणंबलिमालि ख्यसपरिवारःषोडशोपचारैर्बलिंपूजयित्वातत्प्रीत्यर्थंयथाशक्तिदानंद द्यात्तद्दानमक्षयफलंभवति ॥ पौराश्चस्वस्वगृहेशय्यायांतंडुलैर्बलिमा लिख्यपूजयेयुः॥तदुक्तंस्कंदपुराणे ॥ कृत्वैतत्सर्वमेवेहरात्रौदैत्यपतेर्ब लेः॥पूजांकृत्वानृपःसाक्षाद्भूमौमंडलकेशुभे ॥बलिमालिख्यदैत्येंद्रंवर्ण कैः पंचरंगकैः॥सर्वाभरणसंपूर्णंविंध्यावल्यासहान्वितम्॥कूष्मांडबाण जंभोरुमयदानवसंवृतम्॥संपूर्णहृष्टवदनंकिरीटोत्करसंकुलम् ॥ द्विभु जंदैत्यराजानंकारयित्वानृपःस्वयम्॥गृहस्यमध्येशालायांविशालायां ततोऽर्चयेत्॥लोकैश्चापिगृहस्यांतःशय्यायांशुक्लतण्डुलैः॥संस्थाप्यब लिराजानंफलैःपुष्पैश्चपूजयेत्॥बलिराजनमस्तुभ्यंविरोचनसुतप्रभो॥ भविष्येन्द्रसुराराते पूजामेप्रतिगृह्यताम् ॥ इतिपूजामंत्रः ॥ बलिमु द्दिश्यदीयंतेदानानिकुरुनंदन ॥यानितान्यक्षयान्याहुर्मयैवंसंप्रदर्शित म्॥यदस्यांदीयतेदानंस्वल्पंवायदिवाबहु ॥तदक्षयंभवेत्सर्वंविष्णोःप्री तिकरंपरमिति ॥ ॥ इतिदीपोत्सवप्रतिपन्निर्णयः ॥ ॥ अन्यमासप्र तिपत्सुकाश्चिद्व्रतादिविशेषोनप्रसिद्धः ॥ यदिकाचित्स्यात्तदासोऽपि युग्मवाक्येनपूर्वविद्धायामेवकार्यः॥नक्तादिव्रतविशेषेतुतत्तत्कालव्या पिनीग्राह्येतिसिद्धांतः॥ ॥ अत्रप्रासंगिकंकिंचिल्लिख्यते॥ ॥इयंप्रतिप

च्छुक्रवारेणयुक्तासिद्धोच्यते ॥ तदुक्तम् ॥ शुक्रेणप्रतिपत्षष्ठीएका
दश्यात्रयोदशी ॥ सिद्धाभाग्योत्तराषाढाहस्तश्रवणरेवतीइति ॥ अत्र
सर्वाणिशुभकर्माणिकार्याणि॥इयंभौमवासरेणबुधवारेणचविरुद्धा॥ त
दुक्तम् ॥ कुजेतुवैश्वदेवार्द्राप्रतिपत्पूर्वभाद्रपात्॥वारुणंवसुदेवंचपूर्णया
सहवर्जयेदिति॥तथा ॥ बुधेधनिष्ठाभरणीदंस्रेमूलसमन्विता ॥ तृतीया
नवमीप्रतिपद्रेवतीभिर्विवर्जयेदिति ॥ ॥ सामान्यतःसर्वास्वपिप्रति
दादितिथिष्वग्न्यादयस्तिथिपाःस्वतिथौपूज्याः ॥ तिथयश्चरत्नमाला
यामुक्ताः॥वह्निर्विरिंचोगिरिजागणेशः फणीविशाखोदिनकृन्महेशः ॥
दुर्गांतकोविष्णुहरिस्मराश्वशर्वःशशीचेतिपुराणदृष्टाइति ॥कालादर्शे
पि ॥ अग्निंविरिंचिंगौरींश्चगणेशंफणिनंगुहम् ॥ सूर्यंशंभुंसरस्वतींयम
मीशंहरिंस्मरम्॥ शिवंचंद्रंचप्रतिपदाद्यासुतिथिषुक्रमात्॥ शुक्लेकृष्णे
पिवापक्षेविधिकृत्परिपूजयेदिति ॥ रत्नमालायामेकादशीद्वादश्योर्वि
ष्णुर्वदेवतोक्ता ॥ अत्रत्वेकादश्याःशिवोद्वादश्याविष्णुरितीयान्भेदः॥
अतश्चसर्वमासपक्षद्वयगतासुचतुर्विंशतिसंख्यास्वपिप्रतिपत्सुतिथि
पत्वेनवह्निपूजासर्वोपचारैरवश्यंकार्या॥तदुक्तंवह्निपुराणे॥ प्रतिपद्यग्नि
पूजास्याद्द्वितीयायांचवेधसः॥ दशम्यामंतकस्यापिपष्ठ्यांपूजागुहस्य
च ॥चतुर्थ्यांगणनाथस्यगौर्यास्तत्पूर्ववासरे ॥ सरस्वत्यानवम्यांचस
प्तम्यांभास्करस्यच ॥अष्टम्यांचचतुर्दश्यामेकादश्यांशिवस्यच॥द्वाद
श्यांचत्रयोदश्यांहरेश्चमदनस्यच॥ शेषादीनांफणीशानांपंचम्यांपूजनं
भवेत्॥ पर्वणींदोस्तिथिष्वासुपक्षद्वयगतास्वपीति॥प्रतिपदादीनांपंच
दशतिथीनांत्रिरावृत्त्यानंदाभद्राजयारिक्तापूर्णेतिचसंज्ञाभवंति ॥ तदु
क्तंरत्नमालायाम् ॥नंदाचभद्राचजयाचरिक्तापूर्णेतिसर्वास्तिथयःक्रमा
त्स्युः ॥ कनिष्ठमध्येष्टफलास्तुशुक्लेकृष्णेभवंत्युत्तममध्यहीनाइति ॥
॥अथप्रतिपत्कृत्यमुच्यते ॥ ॥ सर्व्वासुप्रतिपत्सुविवाहक्षेत्रवास्तुचि

---

१ हस्तेतिवापाठः ।

त्रासवाद्यवश्यंकार्यं ॥ यथाहभोजः ॥ विवाहःप्रतिपत्षष्ठ्योःक्षेत्रंवा
स्तुतथासवमिति ॥ भास्करोपि ॥ नदासुनर्तनंक्षेत्रंवास्तुचित्रंतथा
सवमिति॥ नंदाः प्रतिपत्षष्ठ्येकादश्यः ॥ अत्रप्रतिपदिदंतकाष्ठंपूर्व
दिग्गमनंचवर्जयेत् ॥ तदुक्तम् ॥ नष्टेंदुषष्ठीप्रतित्सुधीमान्नजातुदंतो
त्कषणंविदध्यादिति ॥ तथाच ॥ क्रमात्पूर्वोत्तराग्नेयानैर्ऋत्येया
म्यपश्चिमे॥ वायव्येशानयोर्योगिन्यःस्युःप्रतिपदादिषु॥ अयमर्थः॥
प्रतिपदिनवम्यांचपूर्वस्यांयोगिनी ॥ द्वितीयादशम्योरुत्तरस्याम्॥
तृतीयैकादश्योराग्नेय्याम्॥ चतुर्थीद्वादश्योर्नैर्ऋत्यांपंचमीत्रयोदश्यो
र्दक्षिणस्याम् ॥ षष्ठीचतुर्दश्योःपश्चिमायाम् ॥ सप्तमीपौर्णमास्योः
वायव्याम् ॥ अष्टम्यमावास्ययोरैशान्यां योगिन्यः ॥ प्रतिवसंति
अतस्तासांसांमुख्येनयात्रानिषिद्धेत्यर्थः ॥ रविभौमशनीनामन्यतमे
क्रूरग्रहेमेषस्थेसतिप्रतिपत्पंचमीचदुष्टाभवति॥तदुक्तम्॥ आद्याश्चत
स्रःक्रियपूर्वकाणामेषांचतुर्णामपिपंचमीस्यात् ॥ पराःपरेषांपरतस्त
थैवसक्रूरराशेरशुभातिथिःस्यादिति ॥ अयमर्थः ॥ प्रतिपदाद्याश्च
तस्रस्तिथयोमेषादीनांचतुर्णांसंबंधिन्यः ॥ पंचमीप्रत्येकंचतुर्णांसंबं
धिनी अतश्चरविभौमशनीनामन्यतमेक्रूरग्रहेमेषस्थेसतिप्रतित्पंचमी
चदुष्टा ॥ वृषस्थेसतिद्वितीयापंचमीच ॥ मिथुनस्थेतृतीया
पंचमीच॥कर्कस्थेचतुर्थीपंचमीच॥ पराःषष्ठ्याद्याश्चतस्रस्तिथयोद
शमीच सिंहादीनांचतुर्णां संबंधिन्यः॥ दशमीप्रत्येकंचतुर्णाम् ॥ अत
श्चक्रूरग्रहेसिंहराशिस्थितेषष्ठीदशमीचदुष्टे ॥ कन्यास्थेसप्तमीदशमी
च ॥ तुलास्थेअष्टमीदशमीच॥वृश्चिकस्थेनवमीदशमीच॥ परतएका
दश्यादयश्चतस्रस्तिथयःपूर्णिमाचैवंधनुरादीनांचतुर्णांसंबंधिन्यः॥अ
तश्चधनुस्थेक्रूरेएकादशीपूर्णिमाचदुष्टे॥मकरस्थेद्वादशीपूर्णिमाच॥
कुंभस्थेत्रयोदशीपूर्णिमाच ॥ मीनस्थेचतुर्दशीपूर्णिमाचेत्यर्थः ॥
॥ ॥ इति श्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेप्रतिपन्निर्णयः॥

॥ अथद्वितीयानिर्णीयते ॥ ॥ द्वितीयातिथिरुपवासादिषुतृतीयायुतै वग्राह्या ॥ तदुक्तंनिगमे ॥ युग्माग्नीति॥तथा ॥ एकादश्यष्टमीषष्ठीद्वितीयाचचतुर्दशी॥त्रयोदशीअमावास्याउपोष्याःस्युःपरान्विताइति॥ अत्राष्टमीचतुर्दश्यौशुक्लेत्रयोदशीकृष्णा ॥ अमावास्यावटसावित्रीव्रतव्यतिरिक्ता ॥ ननुप्रतिपत्सद्वितीयास्याद्वितीयाप्रतिपद्युतेतिवाक्येनप्रतिपद्युक्तायाद्वितीयायाविधानात् ॥तृतीयैकादशीषष्ठी तथाचैवाष्टमीतिथिः॥ वेधादधस्ताद्धन्युस्ताउपवासेतिथीस्त्विमाइतिवाक्येनतृतीयायुतायानिषेधाच्चविरोधइतिचेत् ॥सत्यम् ॥ पूर्वविद्धाविधानस्यपरविद्धानिषेधस्यचयमद्वितीयाऽशून्यशयनव्रतविषयत्वादविरोधः ॥ यमद्वितीयायांतुभगिनीभिर्भ्रातरोभोज्यन्ते नतूपवासादिकंक्रियतइति ॥ अशून्यशयनस्यचंद्रोदयव्रतत्वात्तत्कालव्यापितिथावेवकर्तव्यम् ॥ यदुक्तम् ॥ एकभक्तदिवानक्तेनिशिचंद्रोदयव्रते॥ तिथिस्तात्कालिकीग्राह्यापारणेत्वपरातिथिरिति ॥ संवर्त्तोपि ॥ कृष्णाष्टमीबृहत्तल्यासावित्रीवटपत्रिका ॥ कामत्रयोदशीरंभाउपोष्याः पूर्वसंयुताइति ॥ बृहत्तलपाऽशून्यशयनद्वितीया ॥ उपोष्येत्यत्रोपवासशब्दोव्रतपरः ॥ यत्तु चतुर्ष्वसितपक्षेषुमासेषुश्रावणादिषु ॥ अशून्याख्यंव्रतंकुर्य्याज्जययातुफलाधिकामिति तृतीयायुक्तायांप्राशस्त्यविधानं तद्दिनद्वयेपिपरमवृद्ध्याचंद्रोदयव्यापित्वेनतिथिदर्पत्वात्तद्विषयत्वम् ॥ खर्वदर्प्पौपरौपूज्यावितिदर्पतिथेःपरयुतायाएवपूज्यत्वविधानादित्यविरोधः ॥ ॥ इतिद्वितीयासामान्यनिर्णयः ॥ ॥ अथविशेषनिर्णयः॥ ॥ तत्रचैत्रशुक्लद्वितीयायामुमापूजाशिवपूजाग्निपूजाचकार्या ॥ तदुक्तंभविष्योत्तरे ॥ चैत्रशुक्लद्वितीयायामुमापूजाफलार्थिभिः॥ शिवपूजाग्निपूजाचकर्त्तव्यामुनिसत्तमेति ॥ देवीपुराणे ॥ उमांशिवंहुताशंचद्वितीयायांप्रपूजयेत् ॥ हविष्यमंन्नैनैवेद्यंदेयंगंधार्चनान्वितम् ॥फलमा

१ शिवार्थिभिरितिपाठः ।

मोतिविप्रेंद्रसर्वक्रतुसमुद्भवमिति॥ ॥इतिचैत्रद्वितीयानिर्णयः॥ ॥श्राव
णादिचातुर्मास्यकृष्णद्वितीयासुचतसृष्वशून्यशयनव्रतंकुर्यात् ॥चतु
र्ष्वसितपक्षेष्वित्युक्तमेव ॥ अस्यव्रतस्यप्रसिद्धत्वाद्विधिर्नलिखितः ॥
कार्तिकशुक्लद्वितीयाचयमद्वितीया ॥ अस्यांयमुनास्नानंकृत्वा
यमंपूजयेत्तर्पयेच्च ॥ भगिनीभिर्भ्रातरोभोजनीयाः ॥ भ्रातृभिश्चभ
गिन्योवस्त्रालंकारादिभिःसत्कार्याः ॥ तदुक्तंस्कंदपुराणे ॥ ऊर्जेशुक्ल
द्वितीयायामपराह्णेऽर्चयेद्यमम्॥स्नानंकृत्वाभानुजायांयमलोकंनपश्य
ति ॥ तथा ॥ ऊर्जेशुक्लद्वितीयायांपूजितस्तर्पितोयमः ॥ महिषा
सनमारूढोदंडमुद्गरधारिभिः ॥ वेष्टितःकिंकरैर्हृष्टैस्तस्मैयच्छति
वांछितम् ॥ कार्तिकेशुक्लपक्षस्यद्वितीयायांतुनारद ॥ यमोयमुन
यापूर्वंभोजितःस्वगृहेऽर्चितः ॥ द्वितीयायांमहोत्सर्गेनारकीयास्तुत
र्पिताः ॥ पापेभ्योविप्रयुक्तास्तेमुक्ताःसर्वनिबंधनात् ॥ तेषांमहोत्स
वोवृत्तोयमराष्ट्रेसुखावहः ॥ अतोयमद्वितीयेयंत्रिषुलोकेषुविश्रुता ॥
अस्यांनिजगृहेविप्रनभोक्तव्यंततोबुधैः ॥ स्नेहेनभगिनीहस्ताद्भोक्तव्यं
पुष्टिवर्द्धनम् ॥ दानानिचप्रदेयानिभगिनीभ्योविधानतः ॥ स्वर्णा
लंकारवस्त्राद्यैःपूज्याःसत्कारभोजनैः ॥ सर्वाभगिन्यःसंपूज्याअभावे
प्रतिपन्नकाइति ॥ पितृव्यादिपुत्र्यः अन्याश्चयाभगिनीत्वेनप्रतिपन्नाः
॥ ॥इतियमद्वितीयानिर्णयः॥ ॥ अन्यमासद्वितीयासुव्रतविशेषः
कश्चित्प्रसिद्धोनास्ति ॥ यदिकश्चित्स्यात् तर्हियुग्मवाक्येनपरवि
द्धायामेवकार्यः ॥ नक्तादिव्रतविशेषेतुतत्कालव्यापिन्यामेवेतिसिद्धां
तः ॥ पक्षद्वयगतासुचतुर्विंशतिसंख्यकास्वपिद्वितीयासुतिथिपोवे
धाः सर्वोपचारैःसंपूज्यः ॥ तदुक्तम् ॥ द्वितीयायांचवेधसइति ॥
अथसिद्धविरुद्धाधिकमुच्यते ॥ द्वितीयाबुधवारेणसिद्धाभवति ॥
तदुक्तम् ॥ बुधवारेद्वितीयाचद्वादशीसप्तमीपुनः ॥मृगोनुराधाहस्तश्च
कृत्तिकासिद्धिदायकेति ॥ अत्रसर्वत्रकार्यारंभःसिद्धिदोभवति ॥

॥ श्रीपतिनाप्युक्तम् ॥ सोमपुत्रेचभद्रासर्वारंभेष्वेवसिद्धातिथिः स्यादिति ॥ इयंशुक्रवारेणविरुद्धा ॥ अत्रशुभकर्मनकार्यम् ॥ तदुक्तम् ॥ भार्गवेरोहिणीज्येष्ठाद्वितीयासप्तमीपुनः ॥ पुष्योमघातथाऽऽश्लेषासर्वकार्येषुवर्जितेति ॥ द्वितीयायांवैवाहिकंकर्मभूषणकर्मरथादिनामार्गगमनंव्रतारंभंपौष्टिकंकर्मचकुर्वीत ॥ तदुक्तंभास्करेण ॥ ॥ व्रतपौष्टिकेद्वितीयाद्वादश्योःसप्तमीषुकुर्वीत ॥ प्रत्युद्वहनविशेषं गृहशयनशकटयानाध्वकर्माणीति ॥ द्वितीयायांब्राह्मणव्यतिरिक्तास्त्रयोवर्णामलापकर्षकस्नानंनकुर्युः ॥ तत्रस्नानात्पुत्रधननाशोभवति॥ तदुक्तंभास्करेण ॥ त्रयोदश्यांद्वितीयायांदशम्यांचविशेषतः ॥ शूद्रविट्क्षत्रियाःस्नानंनाचरेयुःकथंचनेति ॥ स्नातुस्तनूजान्दशमीत्रयोदश्यर्थंद्वितीयाद्वितयान्निहंति ॥ मलापहस्नाननिषेधएषनित्यनैमित्तिककाम्यकानामिति ॥अत्रोत्तरस्यांदिशियोगिनीसांमुख्याद्यात्रा नकार्या॥क्रमात्पूर्वोत्तरेतियोगिनीसांमुख्यंप्रागेवोक्तम् ॥ धनुर्मीनस्थे रवौद्वितीयादग्धाभवति॥तदुक्तंश्रीपतिना ॥ एकांतरादिनकरेतिथयो द्वितीयापूर्वाधनुःशफरयोर्वृषकुंभयोश्च ॥कर्काजयोश्चमिथुनाबलयोर्मृगेंद्रकौर्प्योस्तुलामकरयोश्चभवंतिदग्धाइति॥शफरोमीनः ॥अजोमेषः ॥ अबलाकन्या ॥ मृगेंद्रःसिंहः ॥ कौर्पिर्वृश्चिकः ॥ क्रूरग्रहेवृषास्थिते द्वितीयादुष्टाभवति ॥ आद्याश्चतस्रइत्याद्युक्तमेव ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेद्वितीयानिर्णयः॥ ॥ अथतृतीया निर्णीयते ॥ ॥ तत्ररंभाव्यतिरिक्तातृतीयाचतुर्थीयुतैवोपवासादिषु ग्राह्या ॥ तदुक्तंविष्णुधर्मोत्तरे ॥ एकादश्यष्टमीषष्ठीपौर्णमासीचतुर्दशी ॥ अमावास्यातृतीयाचताउपोष्याःपरान्विताइति ॥ ननुयुग्माग्नीतियुग्मवाक्येनतृतीयाद्वितीयायुक्ताग्राह्येत्युक्तम् ॥ तेनाविरोधइति चेन्न युग्मवाक्यस्यरंभाव्रतविषयत्वात् ॥ तदुक्तंब्रह्मवैवर्ते ॥ रंभाख्यांवर्जयित्वातुतृतीयांद्विजसत्तम ॥ अन्येषुसर्वकार्येषुगणयुक्ता

प्रशस्यतइति ॥ तथा अनंगत्रयोदशीरंभाउपोष्याःपूर्वसंयुताइति ॥ स्कंदपुराणेपि ॥ कृष्णाष्टमीचतुर्थीचसावित्रीवटपैतृकी ॥ शुक्लत्रयोदशीरंभानोपोष्याःपरसंयुताइति ॥ अतश्चरंभातृतीयापूर्वयुतैव कार्या॥अन्याचतुर्थीयुतैव॥रंभाव्रतादन्यत्रद्वितीयायुतायांप्रत्यवायोऽपिश्रूयते॥तदुक्तंब्रह्मवैवर्ते ॥ तृतीयानतुकर्त्तव्याद्वितीयोपहताप्रभो ॥ द्वितीयोपहतायांतुयःकरोतिनराधमः ॥ संवत्सरकृतेनेहनरोधर्मेणमुच्यतइति ॥ पुराणसमुच्चयेऽपि ॥ द्वितीयाशेषसंयुक्तांतृतीयांकुरुतेतुयः ॥ सयातिनरकंघोरंकालसूत्रंभयंकरमिति ॥ तथाच तत्रैव ॥ द्वितीयाशेषसंयुक्तांयाकरोतिविमोहिता॥सावैधव्यमवाप्नोति प्रवदंतिमनीषिणइति ॥ एवंस्त्रीणांद्वितीयासहिततृतीयाकरणेदोषंप्रदर्श्यचतुर्थीयुतायांफलाधिक्यंचप्रदर्शितम् ॥ तथाच ॥ चतुर्थीसहितायातुसातृतीयाफलप्रदा ॥ अवैधव्यकरीस्त्रीणांपुत्रपौत्रप्रवर्द्धिनीति ॥ एवमन्यान्यपिपूर्वविद्धाप्रतिपादकानिवाक्यानिरंभाव्रत विषयेयोजनीयानीतिसिद्धांतः॥ ॥ इतितृतीयासामान्यनिर्णयः ॥

॥ अथविशेषनिर्णयः ॥ ॥ अत्रचैत्रशुक्लतृतीयांऽऽदोलनतृतीयेत्युच्यते तत्रपार्वतीमीश्वरंचसंपूज्यांदोलयेत् ॥ रात्रौजागरणंदक्षिणादानंच कुर्यात् ॥ तदुक्तंदेवीपुराणे ॥ तृतीयायांयजेद्देवींशंकरेणसमन्विताम् ॥ कुंकुमागुरुकर्पूरमणिवस्त्रसुगंधकैः ॥ स्रग्गंधधूपदीपैश्च दमनेनविशेषतः ॥ आंदोलयेत्ततोवत्सशिवोमातुष्टयेसदा ॥ रात्रौजागरणंकार्यंप्रातर्देयाचदक्षिणा ॥ हेमवस्त्रान्नपानानितांबूलानिस्रजस्तथेति॥शंकरोमामूर्तिस्वरूपंचतत्रैवोक्तम् ॥सौवर्णीतुउमाकार्याराजतः शंकरस्तथा॥चतुर्भुजस्तुदेवेशोद्विभुजातुउमास्मृतेति ॥ अत्रैवसौभाग्यशयनव्रतं ॥तदुक्तंमत्स्यपुराणे ॥ वसंतमासमासाद्यतृतीयायांजनप्रिये ॥ सौभाग्यायसदास्त्रीभिःकार्यंपुत्रसुखेप्सुभिरिति ॥ अस्यचविधिर्मत्स्यपुराणएवद्रष्टव्यः विस्तरत्वादस्माभिर्नालिखितः ॥ इयंम

न्वादिरपि॥तदुक्तंमत्स्यपुराणे ॥आश्वयुक्शुक्लनवमीद्वादशीकार्त्तिके सिता ॥ तृतीयाचैत्रमासस्यतथाभाद्रपदस्यच ॥ श्रावणेचाष्टमी कृष्णापौषेचैकादशीसिता॥सिताषाढस्यदशमीमाघमासस्यसप्तमी ॥ श्रावणेचाप्यमावास्याज्येष्ठेपंचदशीतथा ॥ आषाढीकार्त्तिकीमाघीचै त्रीचैवविशेषतः ॥ एतामन्वादयःप्रोक्तामुनिभिःपूर्वदर्शिभिः ॥ ॥ इति चैत्रतृतीयानिर्णयः ॥ ॥ अथवैशाखशुक्लतृतीयायांगौरीपूजांकृत्वा जलपूर्णकलशंदद्यात् ॥ तदुक्तंदेवीपुराणे गौरीपूजाप्रक्रमे ॥ तृतीयायांतुवैशाखेरोहिण्यृक्षेप्रपूज्यतु ॥ उदकुंभप्रदानेनशिवलोके महीयतइति ॥ इयंचतृतीयात्रेतायुगादिरक्षय्यतृतीयेतिचो च्यते ॥ तदुक्तंरत्नमालायाम् ॥ माघेपंचदशी कृष्णानभस्येचत्रयो दशी ॥ तृतीयामाधवेशुक्लानवम्यूर्जेयुगादयः ॥ भविष्योत्तरेऽपि ॥ नवम्यांशुक्लपक्षस्यकार्त्तिकेकृतनिर्गमः ॥ त्रेतासिततृतीयायांवैशा खेसमपद्यत ॥ दर्शेतुमाघमासस्यप्रवृत्तंद्वापरंयुगम् ॥ कलिःकृष्णत्र योदश्यांनभस्येमासिनिर्गतइति ॥ यत्तुब्रह्मपुराणे ॥ वैशाखेमासि शुक्लायांतृतीयायांजनार्दनः ॥ ब्रह्मलोकात्त्रिपथगांपृथिव्यामवतारय त् ॥ यवानुत्पादयामासयुगंचारब्धवान्कृतमितीयंकृतयुगादिरित्यु क्तम् ॥ तत्तुकल्पभेदेनव्यवस्थाप्यम्॥ इयंचविष्णुपूजाहोमदानादिषु पूर्वाह्णव्यापिनीग्राह्या ॥ तदुक्तंभविष्योत्तरे ॥ द्वेशुक्लेद्वेतथाकृष्णे युगाद्याःकवयोविदुः ॥शुक्लेपूर्वाह्णिकेग्राह्येकृष्णेचैवापराह्णिकेइति ॥ ॥ नारदीयेऽपि ॥ वसिष्ठउवाच ॥ वैशाखेशुक्लपक्षेतुतृतीया रोहिणीयुता ॥ दुर्लभाबुधवारेणसोमेनाऽपियुतातथा ॥ रोहिणी बुधयुक्तापिपूर्वविद्धाविवर्जिता ॥ भक्त्याकृताऽपिमांधातर्हंतिपुण्यं पुराकृतम् ॥ गौरीविनायकोपेतारोहिणीबुधसंयुता ॥ विनापिरोहिणी योगात्पुण्यकोटिप्रदासदेति ॥ गौरीतृतीया विनायकश्चतुर्थी॥यत्तुका लादर्शेऽमावास्यानिर्णयेश्राद्धेऽमावास्याऽऽपराह्णिकीग्राह्येत्युक्तम् ॥

एवंमन्वंतरादीनांयुगादीनांविनिर्णयः ॥ महालयस्यपक्षस्याष्टकादीनामपिस्मृतइति॥ युगादीनामपिसर्वेषामपराह्णव्यापित्वेनप्राशस्त्यमुक्तंतत्तुतत्रविहितश्राद्धादिविषयम् ॥ तत्रश्राद्धविधानं विष्णुपुराणेप्रोक्तम् ॥ पानीयमप्यत्रतिलैर्विमिश्रंदद्यात्पितृभ्यःप्रयतोमनुष्यः ॥ श्राद्धंकृतंतेनसमाःसहस्रंरहस्यमेतन्मुनयोवदंतीति ॥ मत्स्यपुराणेऽपि ॥ कृतंश्राद्धंविधानेनमन्वादिषुयुगादिषु ॥ हायनानिद्विसाहस्रंपितॄणांतृप्तिदंभवेत् ॥ महाभारतेऽपि ॥ यामन्वाद्यायुगाद्याश्चतिथयस्तासुमानवः ॥ स्नात्वाहुत्वाचदत्त्वाचजप्त्वानंतफलंलभेदिति ॥ अतश्चयुगादिप्रयुक्त्याविहितश्राद्धविषयेमावास्यावदापराह्णिकीग्राह्या ॥ विष्णुपूजादौचतुर्थीयुतैवग्राह्येतिसिद्धांतः ॥ अत्रैवलक्ष्मीसहितविष्णुपूजाभविष्योत्तरेऽभिहिता ॥ वैशाखस्यतृतीयायांश्रीसमेतंजगद्गुरुम् ॥ नारायणंपूजयेथाःपुष्पधूपविलेपनैरिति ॥ विशेषांतरंचतेनैवोक्तम् ॥ वैशाखेशुक्लपक्षेतुतृतीयायांतथैवच ॥ गंगातोयेनरःस्नात्वामुच्यतेसर्वकिल्बिषैः॥ तस्यांकार्योयवैर्होमोयवैर्विष्णुंसमर्चयेत् ॥ यवान्दद्याद्द्विजातिभ्यःप्रयतःप्राशयेद्यवानिति ॥ ॥ इत्यक्षय्यतृतीयानिर्णयः॥ ॥ अथज्येष्ठेमासिरंभातृतीयायथा ॥ ॥ ज्येष्ठशुक्लतृतीयायांपतिपुत्रफलार्थिनी नारी सूर्योदयेस्नात्वासतीव्रतनियमंगृहीत्वाचतसृषुदिक्षुकुंडेषु स्थंडिलेषुवाग्नीन्संस्थाप्यपंचमोभास्करइतिपंचाग्निमध्येवेदिकायांरंभास्तंभोपशोभितां पुष्पमंडपिकांकृत्वातत्रसर्वशक्तिमयींदेवीमावाह्य॥तस्याःसंमुखीपूर्वाभिमुखीवोपविश्य॥ सर्वोपचारैर्देवींनमोऽतैर्नाममंत्रैःसंपूज्यसूर्यास्तमयपर्यंतंतिष्ठेत् ॥ ब्राह्मणाश्चप्रणवादिभिर्नमोंतैर्नाममंत्रैः सौभाग्यद्रव्याणितेष्वग्निषुजुहुयुः ॥ ततोद्विजदांपत्यंचतुर्थ्यांभोजयित्वायथाशक्त्याचार्यायगृहदानादिकंदद्यात्॥इदंव्रतंभविष्योत्तरेप्रोक्तम् ॥ यथा ॥ ज्येष्ठशुक्लतृतीयायां स्नातानियमतत्परा ॥ कुरुपार्श्वेषुपंचाग्नीञ्ज्वलमानान्हुताहुतीन्[1] ॥

[1] घृताहुतीन् इत्यपिपाठः ।

गार्हपत्यं दक्षिणाग्निं सभ्यं चाहवनीयकम् ॥ पंचमंभास्करंतेजइत्येते पंचवह्नयः॥एतेषांमध्यगाभूत्वातिष्ठेःपूर्वमुखीस्थिरा ॥ चतुर्भुजांध्यात्वपरांपंकजोपरिसंस्थिताम् ॥ मृगाजिनाच्छन्नकटींजटावल्कलधारिणीम् ॥ सर्वाभरणसंयुक्तांदेवीमभिमुखींकुरु ॥ महालक्ष्मीर्महाकाली महामायामहामही॥गंगाचयमुनासिंधुःशरयूर्नर्मदानदी॥सरस्वतीवैतरणीसैवप्रोक्तामहासती॥सप्रणवैर्नमोंतैश्चनामभिःपूजनंभवेत् ॥चतुर्थीसहितैश्चैवस्वाहांतैर्होमइष्यते॥तदास्यप्रेक्षणपराभवतद्भावनान्विता॥होमंकुर्युर्यतात्मानोब्राह्मणाःसर्वतोदिशम् ॥ देव्याःपूजाप्रकर्तव्यापुष्पधूपादिनाततः॥बहुप्रकारंनैवेद्यंदातव्यंघृतपाचितम् ॥ स्थापयेदग्रतोदेव्याःसौभाग्याष्टकमेवच ॥ जीरकंधान्यकंचैवकौसुंभंकुंकुमंतथा॥ निष्पावाःपावनातिलालवणंशर्करागुडम् ॥ निष्पावाःशिंबिधान्यानि ॥ पावनातिलाभृष्टतिलाः ॥ शर्करागुडमिति शर्करागुडोवेत्यर्थः ॥ पुष्पमंडपिकाकार्यारंभास्तंभोपशोभिता ॥तत्रसंपूजयेद्देवींशक्त्यास्वर्णादिनिर्मिताम्॥ पद्मासनेनसंतिष्ठयावत्परिणतोरविः ॥ततःप्रणम्यरुद्राणींमंत्रमेतमुदीरयेत् ॥ "वेदेषुसर्वशास्त्रेषुदिविभूमौरसातले ॥ श्रुतोदृष्टश्चबहुशोनशक्त्यारहितःशिवः॥ त्वंशक्तिस्त्वंस्वधास्वाहात्वंसावित्रीस्वरस्वती॥पतिंदेहिसुतान्देहिगृहंदेहिनमोऽस्तुते" ॥एवंक्षमापयेद्देवींप्रणिपत्यपुनःपुनः॥देहिभक्त्यागृहंरम्यंविचित्रंबहुभूमिकम् ॥ गृहदानविधानेनब्राह्मणायतपस्विने ॥ सपत्नीकायसंपूज्यसर्वोपस्करसंयुतम् ॥ निर्वर्त्यविधिनानेनततःपश्चात्समापयेत् ॥ दांपत्यानिचभोज्यानिचतुर्थ्यांमधुरैरसैः ॥ इत्युक्तंतेमयासर्वंरंभाव्रतमनुत्तमम्॥ व्रतांतेऽगस्त्यमुनयेत्वंप्रदत्स्वगृहंशुभम् ॥ इदंव्रतंमयाप्रोक्तंयाश्चरिष्यंतियोषितः ॥ कांतार्थीपुरुषोवापिख्यातंरंभाव्रतंभुवि ॥ भार्यापुत्रगृहंभोगाःकुलवृद्धिर्भविष्यति ॥ स्त्रीणांचातुलसौभाग्यंगार्हस्थ्यंसार्वकामिकम् ॥ सपत्नीदर्पदलनंवशीकरणमुत्तमम् ॥ मृताशिवपुरंयाति

ततोविष्णुपुरंव्रजेदिति ॥ ॥ इतिरंभातृतीयाव्रतम् ॥ ॥ अथभाद्रपदतृतीयायांकांचनगौरींकृत्वासंपूज्यगुडापूपनैवेद्यंदद्यात् ॥ तदुक्तंभविष्योत्तरे ॥ गुडापूपास्तुदातव्यामासिभाद्रपदेतथा ॥ तृतीयाशुक्लपक्षस्यसर्वपापहरास्मृतेति ॥ ॥ इतिभाद्रपदतृतीया ॥ ॥ अथमाघशुक्लतृतीयायामुमामहेश्वरप्रीत्यर्थंगुडलवणदानंकुर्यात् ॥ तदुक्तंभविष्योत्तरे ॥ माघेशुक्लतृतीयायांगुडस्यलवणस्यच ॥ दानंश्रेयस्करंराजन्स्त्रीणांचपुरुषस्यच ॥ गुडेनतुष्यतेदेवीलवणेनस्वयंप्रभुरिति ॥ एवमन्यान्यपितृतीयाव्रतानिचतुर्थ्यायुक्तायामेवकार्याणीतिसिद्धांतः ॥ पक्षद्वयगतासुसर्वास्वपितृतीयासुतिथिपतित्वेनगौरीपूज्या ॥ तदुक्तम् ॥ चतुर्थ्यांगणनाथस्यगौर्यास्तत्पूर्ववासरइति ॥ तत्पूर्ववासरेचतुर्थीपूर्वदिनेतृतीयायामित्यर्थः ॥ अथसिद्धविरुद्धादिकम् ॥ तृतीयाभौमवारेणसिद्धा॥तदुक्तम् ॥ भौमेषष्ठीतृतीयास्यादष्टमीचत्रयोदशी ॥ मूलाश्विन्यौमृगाश्लेषासिद्धाउत्तरभाद्रपादिति ॥ तृतीयाबुधवारेणविरुद्धा॥तदुक्तम्॥बुधेधनिष्ठांभरणींहस्तमूलसमन्विताम् ॥ तृतीयांनवमींप्रतिपद्वेवतींचविवर्जयेदिति ॥ विरुद्धयोगेशुभकर्मनकार्यम् ॥ अथात्रकृत्यान्याह ॥ तृतीयादिजयातिथिषुसंग्रामोपयोगिबलोपयोगिचकर्मसिद्ध्यति ॥ तदुक्तंरत्नमालायाम् ॥जयासुसंग्रामबलोपयोगिकार्याणिसिद्ध्यंतिविनिर्मितानीति ॥ भास्करेणापि॥जयासुविदधीत॥जिबलकार्याणिनिवृतइति ॥ इयंतृतीया रविभौमशनीनामन्यतमेक्रूरग्रहेमिथुनराशिस्थितेसति दुष्टाभवति ॥ आद्याश्चतस्रइत्याद्युक्तमेव ॥ तृतीयायामाग्नेय्यांदिशियोगिन्यःप्रतिवसंति ॥ अतस्तत्रयात्रानकार्या ॥ क्रमात्पूर्वोत्तराग्नेय्यामित्याद्युक्तमेव ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेतृतीयानिर्णयः ॥ ॥ अथोपवासादिषुचतुर्थीनिर्णीयते ॥ ॥ चतुर्थीगणेशव्रतकुंडचतुर्थीव्रतबहुला चतुर्थीव्रतव्यतिरिक्तेषु पंचमीयु

१ दद्यादिति पाठांतरम् । २ श्रीपतिनेतिपाठांतरम् ।

तैवग्राह्या ॥ तदुक्तंनिगमे ॥ युगभूतानीति ॥ विष्णुधर्मोत्तरेऽपि ॥ एकादशीतथाषष्ठीअमावास्याचतुर्थिका ॥ उपोष्याःपरसंयुक्ताः पराःपूर्वेणसंयुताइति ॥ गणेशचतुर्थीतुतृतीयायुतैवोपोष्या ॥ चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यतइति ॥ ब्रह्मवैवर्तेऽपि ॥ चतुर्थीसहितायातुसातृतीयाफलप्रदा ॥ चतुर्थीचतृतीयायांमहापुण्यफलप्रदा॥ कर्तव्याव्रतिभिर्वत्सगणनाथसुतोषणीति ॥ गणनाथंसुतरांतोषयतीतिगणेशचतुर्थीत्यर्थः ॥ तथाचस्कंदपुराणे ॥ कृष्णाष्टमीचतुर्थीचसावित्रीवटपैतृकी ॥ शुक्लत्रयोदशीरंभानोपोष्याःपरसंयुताइति ॥ अत्रापिचतुर्थीगणेशचतुर्थ्येववेदितव्या ॥ अन्यथायुगभूतानीतिनिगमवाक्यविरोधःस्यात् ॥ एवंमाघशुक्लपक्षेगौरीचतुर्थी॥ कुंडचतुर्थीतियाप्रसिद्धासाचबहुलाचतुर्थीचतृतीयायुतेएवोपोष्ये॥ तदुक्तंपुराणसमुच्चये ॥ गौर्याश्चतुर्थीवटधेनुपूजादुर्गार्चनंदुर्भरहोलिकेच ॥ वत्सस्यपूजाशिवरात्रिरेताःपराविनिघ्नंतिनृपंसराष्ट्रमिति ॥ अत्रधेनुपूजेतिबहुलाचतुर्थीविहितादीपोत्सवप्रातिपद्विहिताचधेनुपूजागम्यते ॥ वत्सस्यपूजेतिवत्सद्वादशीविहितधेनुपूजायाःपृथगुपादानात् ॥ अत्रविनायकव्रतानुष्ठानेपिचतुर्थ्यामध्याह्नव्यापित्वंमुख्यंप्रयोजकम् ॥ चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यते ॥मध्याह्नव्यापिनीचेत्स्यात्परतश्चेत्परेहनीतिमाधवोदाहृतरहस्यवचनात् ॥ यदापूर्वेद्युर्मध्याह्नव्यापिनीभवति ॥ तदामुख्यप्रयोजकस्यविद्यमानत्वान्मातृविद्धात्वगुणस्यचसंभवात्साग्राह्या ॥ तादृशेविषयेपरेद्युःसत्यामपिमध्याह्नव्यापिन्यांसात्याज्या॥ ॥अतएवप्रशस्यतइत्युक्तम्॥यदातुपरेद्युरेवमध्याह्नव्यापिनीतदामातृविद्धायागुणाभावेपि प्रधानप्रयोजनानुरोधेन परविद्धैव ग्राह्या ॥ तदाचतत्रैवस्मृत्यंतरवचनम् ॥ मातृविद्धाप्रशस्तास्याच्चतुर्थीगणनायके ॥ मध्याह्नात्परतश्चेत्स्यान्नागविद्धाप्रशस्यते ॥ ॥ इति चतुर्थीसामान्यनिर्णयः ॥ ॥ अथविशेषनिर्णयः ॥ ॥ चैत्रशुक्लचतु

थ्यांलड्डुकादिभिर्गणेशमर्चयित्वासर्वकामान्प्राप्नुयात् ॥ तदुक्तंदेवी पुराणेचैत्रमासतिथिकृत्यप्रकरणे ॥ गणेशेकारयेत्पूजांलड्डुकादिभिरादरात् ॥ चतुर्थ्यांविघ्ननाशायसर्वकामसमृद्धयइति ॥ ज्येष्ठ शुक्लचतुर्थ्यांस्त्रीभिरुमापूज्या ॥ तदुक्तंब्रह्मपुराणे ॥ ज्येष्ठशुक्लचतुर्थ्यांतुजातापूर्वमुमासती ॥ तस्मात्सातत्रसंपूज्यास्त्रीभिःसौभाग्यवृद्धये॥उपहारैश्चविविधैर्गीतनृत्योत्सवादिभिः ॥ होमैःपयोभिर्वस्त्रैश्चपत्रपुष्पैःसुगंधिभिरिति॥ ॥इतिज्येष्ठचतुर्थी॥ ॥ अथभाद्रपदशुक्लचतुर्थीशिवाख्या ॥ तत्रगणेशपूजनंस्नानदानादिकंचानंतगुणंभवति ॥ तदुक्तंभविष्योत्तरे ॥ शिवाशांतसुखाराजंश्चतुर्थीत्रिविधास्मृता ॥ मासिभाद्रपदेशुक्लाशिवलोकेप्रपूजिता ॥ तस्यांस्नानंतथादानमुपवासोजपस्तथा ॥ क्रियमाणंशतगुणंप्रसादाद्दंतिनोनृपेति॥ इयमेवगणेशचतुर्थीरविवारेणभौमवारेणवासमन्विता महाचतुर्थीत्युच्यते ॥ अत्रकल्पोक्तविधिनागणेशपूजनात्सर्वकार्यसिद्धिर्भवति ॥ तदुक्तंवाराहपुराणे॥भाद्रशुक्लचतुर्थीयाभौमेनार्केणवायुता॥महतीसात्रविघ्नेशमर्चित्वेष्टंलभेन्नरइति ॥ अत्रैवरात्रौचंद्रंनपश्येत् ॥ चंद्रदर्शनान्मिथ्याभिशस्तिर्भवति ॥ प्रमादाद्दृष्ट्वापिविष्णुपुराणोक्तंश्लोकंतद्दोषशांत्यर्थंपठेत् ॥ तदुक्तं पाराशरस्मृतौ ॥ कन्यादित्येचतुर्थ्यांतुशुक्लेचंद्रस्यदर्शनम् ॥ मिथ्याभिदूषणंकुर्यात्तस्मात्पश्येन्नतंतदा ॥ तद्दोषशांतयेसिंहःप्रसेनमितिवैपठेदिति ॥ कन्यादित्येभाद्रशुक्लपक्षे॥श्लोकश्च ॥ सिंहःप्रसेनमवधीत्सिंहोजांबवताहतः॥सुकुमारकमारोदीस्तवह्येषस्यमंतकइति ॥ अन्यापिशुक्लचतुर्थीभौमवारेणयुतासूर्यग्रहणतुल्या ॥ तदुक्तंशंखेन ॥ अमावास्यातुसोमेनसप्तमीभानुनासह ॥ चतुर्थीभूमिपुत्रेणसूर्यपुत्रेणचाष्टमी ॥ चतस्रस्तिथयस्त्वेताः सूर्यग्रहणसन्निभाइति ॥ ब्रह्मपुराणेशुक्लचतुर्थ्यांचंद्रदर्शनविषयेविशेषउक्तः ॥ वासुदेवोभिशस्तस्तुनिशाकरमरीचिषु ॥

स्थितश्चतुर्थ्यामाद्यायांमनुष्याणांपतिश्चसः ॥ ततश्चतुर्थ्यांचंद्रंतुप्र यत्नाद्वीक्ष्यमानवः॥पठेत्पौराणिकंवाक्यंप्राङ्मुखोवाप्युदङ्मुखइति ॥ प्रयत्नात्पठेदित्यन्वयः ॥ वाक्यं सिंहःप्रसेनमिति॥आद्यायांचतुर्थ्यांशुक्लचतुर्थ्यामित्यर्थः॥ ॥ इतिभाद्रपदशुक्लचतुर्थी ॥ ॥ अथभाद्रपद शुक्लनवम्यांप्रबोधितायादेव्याआश्वयुक्शुक्लचतुर्थ्यामभ्यंगादिसंस्कारैःकेशान्विशोधयेत् ॥ ततःशुक्लपंचम्यांपूर्वाह्णेगंधोदकैस्तांदेवींस्नापयेत् ॥ तत्सप्तम्यांतांबिल्वपत्रैःप्रपूजयेत् ॥ तदष्टम्यामुपोष्यरात्रौजागरणंकृत्वाप्रतियामंदेवींपूजयेत् ॥ तन्नवम्यांविधिवत्संपूज्यबलिदानंकुर्यात् ॥ तद्दशम्यांदेवींरथमारोप्यगीतवादित्रशब्दैःसहनगरेभ्रामयेत् ॥ तदुक्तंदेवीपुराणे ॥ कन्यायांकृष्णपक्षेतुपूजयित्वार्द्रभेऽपिवा ॥ कन्यायांभाद्रपदइत्यर्थः ॥ नवम्यांबोधयेद्देवींगीतवादित्रनिःस्वनैः ॥ शुक्लपक्षेचतुर्थ्यांतुदेवीकेशविशोधनम् ॥ प्रातरेवतुपञ्चम्यांस्नापयेत्सलिलैःशुभैः ॥ सप्तम्यांपत्रिकापूजाह्यष्टम्यामप्युपोषणम् ॥ पूजनंजागरंचैवरथमारोप्यवैपुरइति ॥ ॥ इत्याश्विनचतुर्थी॥ माघशुक्लचतुर्थींतुवरदाख्यातत्रकुंदपुष्पैःशिवमभ्यर्च्यनरोनक्तभोजी श्रियमाप्नोति॥तदुक्तंकूर्मपुराणे॥कुंभेशुक्लचतुर्थ्यांतुकुंदपुष्पैःसदाशिवम्॥संपूज्ययोहिनक्ताशीसप्राप्नोतिश्रियंनरइति ॥ इयमेवकुंदचतुर्थीतिप्रसिद्धा ॥ अत्रैवब्रह्मपुराणेविशेषउक्तः ॥ उमाचतुर्थ्यांमाघेतु शुक्लायांयोगिनीगणैः॥प्राग्भक्षयित्वासृष्टाचभूयःस्वांगात्स्वकैर्गुणैः॥ ससृजुःसहितायस्मात्तस्मात्प्रोक्तासतीह्युमा॥तस्मात्सातत्रसंपूज्यानरैःस्त्रीभिर्विशेषतः ॥ कुंदपुष्पैःप्रयत्नेनसम्यग्भक्त्यासमाहितैः ॥ कुंकुमालक्तकाभ्यांचरक्तसूत्रैःसकंकणैः ॥ अर्घैःपुष्पैस्तथाधूपैर्दीपैर्बलिभिरेवच ॥ गुडार्द्रकाभ्यांपयसालवणेनाथपालकैः ॥ पूज्याःस्त्रियश्चाविधवातथाविप्राश्चशोभनाः ॥ सौभाग्यवृद्धयेपश्चाद्भोक्तव्यंबंधुभिःसहेति ॥ पालकैःकुंदैः ॥ देवीपुराणेत्वियंकुंडचतुर्थ्युक्ता ॥

१ कृष्णनवम्यामितिपाठः । माघशुक्लचतुर्थ्यामितिपाठः ।

यथा॥माघमासेतुसंप्राप्तेचतुर्थीकुंडसंज्ञिता ॥ सोपोष्याचसुरश्रेष्ठास्त
तोराज्यंभविष्यति ॥ ॥ इतिमाघचतुर्थी ॥ ॥ अन्यच्चवर्षचतुष्टयसा
ध्यंवरचतुर्थ्याव्रतमस्ति ॥ तदुक्तंस्कांदे ॥ चतुर्थ्यांमार्गशीर्षेतु
शुक्लपक्षेनृपोत्तम ॥ प्रारभ्यप्रतिमासंचचतुर्थ्यांगणनायकम् ॥
संपूज्यविधिनाकुर्यादेकभक्तंसमाहितः॥ अक्षारलवणंत्वेवंपूर्णेसंवत्सरे
ततः ॥ द्वितीयवत्सरेचाथनक्तंप्रतिचतुर्थिच ॥ कुर्याद्गणेशमभ्यर्च्य
तृतीयेयाचितंतथा ॥ एवमेवप्रकुर्वीतचतुर्थेस्यादुपोषणम् ॥ ततश्च
तुर्थेसंपूर्णेतदुद्यापनमाचरेदिति ॥ इदंवरचतुर्थ्याख्यंव्रतंसर्वार्थसाध
कमिति ॥ ॥इतिवरचतुर्थीव्रतम् ॥ ॥अथफाल्गुनादिमासचतुष्टय
साध्यंगणेशचतुर्थीव्रतम्॥ तदुक्तंवाराहपुराणे ॥ अथाविघ्नव्रतंराजन्क
थयामिशृणुष्वतत्॥चतुर्थ्यांफाल्गुनेमासिग्रहीतव्यंव्रतंत्विदम्॥नक्ता
हारेणराजेंद्रतिलान्नंपायसंस्मृतम् ॥ तदेवाग्नौचहोतव्यंतद्देयंब्राह्मणेषु
च॥चातुर्मास्यव्रतंचैवकृत्वैवंपंचमेतथा॥ सौवर्णंगजवक्त्रंतुकृत्वाविप्रा
यदापयेत् ॥ आयसैःपंचभिःपात्रैरुपेतंपंचाभिस्तथा ॥ एवंकृत्वा
व्रतंचैवसर्वविघ्नैर्विमुच्यतइति॥पूजाहोमादिमंत्रश्च ॥ दिव्यायशूरायग
जाननायलंबोदरायैकदंतायुधाय ॥ नगात्मजादेहसमुद्भवायकुठार
हस्तायनमोवरायेति ॥ अनेनमंत्रेणपूजांकृत्वास्वाहांतेनतिलान्हु
त्वाब्राह्मणेभ्योदत्त्वास्वयमपितदेवनक्तमश्नीयात् ॥ एवंमासचतुष्टयं
व्रतंकृत्वा आषाढशुक्लचतुर्थ्यांसौवर्णविनायकदानमात्रं कुर्य्यादितिप्र
योगः ॥ भविष्योत्तरेतुविशेषउक्तः ॥ चतुर्थ्यांतुयदाराजन्नारवारो
व्रतान्वितः ॥ दद्यात्तिलान्नंविप्रायस्वयंभुंक्तेतिलौदनम् ॥ वर्षत्रयं
समाप्तिर्हिव्रतस्यतुयदाभवेत् ॥ विनायकस्तदातुष्टोददातिफल
मीहितमिति ॥ मत्स्यपुराणेतु ॥ चतुर्थ्यांनक्तभुग्दद्यादन्दां
तेहेमवारणम् ॥ व्रतंवैनायकंनामशिवलोकफलप्रदमिति ॥ इदं
व्रतंद्वादशस्वपिमासेषूभयचतुर्थ्योर्विधेयमितिगम्यते ॥ एवंमनोरथ

विनायकचतुर्थ्यादि विनायकव्रतानि कुंडचतुर्थ्यादिगौरिव्रतानिचतृतीयायुक्तचतुर्थ्यामेवकार्याणि ॥ अन्यानिनागचतुर्थ्यादीनिव्रतानि पंचमीयुक्तायांचतुर्थ्यामितिसिद्धांतः ॥ केषुचिद्देशेषुचतुर्थ्यांचमध्याह्नव्यापिन्यामुपोष्यनागान्क्षीरेणाप्यायय्यपंचम्यांपारणंप्रकुर्युः ॥ तदुक्तंपुराणसमुच्चये॥ युगंमध्यंदिनेयत्रतत्रोपोष्यफणीश्वरान् ॥ क्षीरेणाप्याय्यपंचम्यांपारयेत्प्रयतोनरः ॥विषाणितस्यनश्यंतिनैनंहिंसंतिपन्नगाइति॥युगंचतुर्थी ॥ कूर्मपुराणेपि ॥ तिथौयुगाह्वयायांचसमुपोष्ययथाविधि॥ शंखपालादिनागानांशेषस्यचमहात्मनः ॥ पूजाकार्यापुष्पगंधक्षीराप्यायनपूर्विकेति ॥ एतच्चकार्त्तिकशुक्लचतुर्थ्यांनागव्रतमितिकालादर्शे ॥ पक्षद्वयगतासुसर्वास्वपिचतुर्थीषुतिथ्यधिपोगणेशः पूज्यः॥चतुर्थ्यांगणनाथस्येत्युक्तत्वात्॥ ॥अथसिद्धविरुद्धादिकं॥चतुर्थीशनिवारेणसिद्धाभवति ॥ तदुक्तम् ॥ शनौचतुर्थीनवमीचतुर्दश्यथरोहिणी॥शततारास्वातिमघाभाग्यंचैवतुसिद्धयइति॥ चतुर्थीगुरुवारेणविरुद्धा ॥तदुक्तम्॥जीवेऽष्टमीचतुर्थीचआर्द्राचोत्तरफाल्गुनी॥रोहिणीवारुणंचैवविरुद्धंमृगसंमितमिति॥अत्रकृत्यमुच्यते॥शत्रुवधाग्निविषप्रयोगाद्यनिष्टकर्मचतुर्थ्यादिरिक्तातिथिषुकार्यं॥तदुक्तंभास्करेण ॥ चतुर्थ्यांचचतुर्दश्यांनवम्यांचारिमर्दनम् ॥ दमनंबंधनंभेदमभियोगाभिचारकम् ॥ विषाग्निसंप्रयोगंचकुर्वीतकपटानिचेति ॥ चतुर्थ्यांनैर्ऋत्यांयोगिन्यःप्रतिवसंति ॥ अतस्तत्संमुख्यात्तत्रयात्रानकार्या ॥ क्रमात्पूर्वोत्तराग्नेयनैर्ऋत्यइत्युक्तत्वात् ॥ रविभौमशनीनामन्यतमेक्रूरग्रहेकर्कस्थेसतिचतुर्थीशुभकार्येषुवर्जिता ॥ आद्याश्चतस्रइत्युक्तत्वात् ॥ सूर्येवृषकुंभस्थितेसतिचतुर्थीदग्धाभवति ॥ एकांतरादिनकरइत्यादिद्वितीयानिर्णयएवोक्तम् ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेचतुर्थीनिर्णयः ॥ ॥ अथपंचमीनिर्णीयते ॥ ॥ पंचमीतिथिरुपवासादिषुचतुर्थ्यायुतैवग्राह्या ॥ तदुक्तंनि

गमे ॥ युगभूतानीति ॥ जाबालिरपि ॥ प्रतिपत्पंचमीचैव उपोष्यापूर्वसंयुतेति ॥ पैठीनसिरपि ॥ पंचमीसप्तमीचैवदशमीचत्रयोदशी ॥ प्रतिपन्नवमीचैवकर्त्तव्यासंमुखीतिथिरिति ॥ संमुखीसायाह्नव्यापिनी ॥ अत्रत्रयोदशीशुक्ला ॥ तथाच ॥ एकादशीतथाषष्ठीअमावास्याचतुर्थिका॥ उपोष्याःपरसंयुक्ताःपराःपूर्वेणसंयुताइति॥ चतुर्थ्याःपरापंचमीपूर्वयुताचतुर्थ्यायुतो पोष्येत्यर्थः ॥ एतैर्वाक्यैः पंचम्याश्चतुर्थीयुतायाएवविधानात् ॥ ब्रह्मवैवर्तवचनेनपरविद्धानिषेधाच्च ॥ यथा ॥ प्रतिपत्पंचमीचैवसावित्रीवटपूर्णिमा ॥ नवमीदशमीचैवनोपोष्याःपरसंयुताइति ॥ यत्तुब्रह्मवैवर्त्तवचनम् ॥ पंचमीतुप्रकर्त्तव्याषष्ठीयुक्तातुनारद ॥ नहिषष्ठ्यानागविद्धाकर्त्तव्यातुकदाचनेति ॥ तत्तुस्कंदोपवासविषयंनागपूजाविषयंच॥ननुकृष्णाष्टमीस्कंदषष्ठीशिवरात्रिश्चतुर्दशी॥एताःपूर्वयुताःकार्यास्तिथ्यंतेपारणंभवेदिति ॥ स्कंदोपवासस्यषष्ठ्यांविधानात्पंचम्याः षष्ठीयुतत्वेनप्राशस्त्याभिधानं स्कंदोपवासविषयाविरुद्धमितिचेत् ॥ सत्यम् ॥ देशभेदेनव्यवस्था कल्पनीया॥केषुचिद्देशेषुपंचम्यामुपोष्यषष्ठ्यांस्कंदंपूजयंति॥तदुक्तं वाराहपुराणे॥आषाढेशुक्लपक्षेतुतिथिःकौमारिकास्मृता ॥कुमारमर्चयेत्तत्रपूर्वत्रोपोष्यवैदिनइति॥ पूर्वत्रादिनेपंचम्यामित्यर्थः ॥स्कंदपुराणेपि॥स्कंदोपवासेस्वीकार्यापंचमीपरसंयुता॥त्रिमुहूर्त्तातुषष्ठ्यांस्यात्पूर्वयुक्तान्यथाभवेदिति ॥एषुवचनेषुस्कंदोपवासस्यपंचम्यांविधानात्पंचम्याःषष्ठीयुतायाउपोष्यत्वविधानं देशभेदेनव्यवस्थितस्कंदोपवासविषयमित्यविरोधः॥ अतश्चस्कंदोपवासव्यतिरिक्तोपवासादिषुचतुर्थीयुतैवपूज्येतिसिद्धांतः ॥ चैत्रशुक्लपंचम्यांत्वनंतादीन्नागाधिपान्संपूज्यक्षीरघृतनैवेद्यंदद्यात् ॥ तदुक्तंदेवीपुराणेचैत्रमासतिथिप्रक्रमे ॥ पंचम्यांपूजयेन्नागाननंताद्यान्महोरगान् ॥ क्षीरंसर्पिस्तुनैवेद्यंदेयं सर्वसुखावहमिति ॥ मत्स्यपुराणेऽपिनागमूर्तिस्वरूपमुक्तम् ॥ यथा ॥

१ भूतेतिपाठान्तरम् ।

नागाश्चैवतुकर्त्तव्याःखङ्गखेटकधारिणः॥ अधःसर्पाकृतिस्तेषांनाभेरू र्ध्वंतुपौरुषी ॥ फणाश्चमूर्ध्निकर्तव्याद्विजिह्वाबहवोऽसमाइति ॥ अस मा विषमसंख्याकाः ॥ ॥ इतिचैत्रपंचमीनिर्णयः॥ ॥अथश्रावणशु क्लपंचम्यांद्वारस्योभयोः पार्श्वयोर्गोमयेननागान्विलिख्यदधिदूर्वांकुर पुष्पोपहारादिभिः संपूज्यतत्प्रीतयेब्राह्मणान्भोजयेत् ॥ एतेनसर्प भयंकुत्रचिन्नभवति ॥ तदुक्तंभविष्योत्तरे ॥ श्रावणेमासिपंचम्यां शुक्लपक्षेनराधिप ॥ द्वारस्योभयतोलेख्यागोमयेनविषोल्बणाः ॥ पूज येद्विधिवद्वीरदधिदूर्वांकुरैःकुशैः ॥ गंधपुष्पोपहारैश्चब्राह्मणानांच तर्पणैः ॥ एतस्यांपूजयंतीहनागान्भक्तिपुरःसराः ॥ नतेषांसर्पतो वीरभयंभवतिकुत्रचिदिति ॥ ॥ इतिश्रावणपंचमी ॥ ॥ अथभाद्र शुक्लपंचम्यांऋषिपंचमीव्रतम् ॥ तत्रप्रायेणनार्यःकश्यपादीन्सप्तऋ षीन्संपूज्याकृष्टभूम्युत्पन्नश्यामाकादिमुन्यन्नशाकाहारेणोपोष्यसर्वपा पविनिर्मुक्ताःसर्वान्कामान्प्राप्नुवंति॥तदुक्तंब्रह्मपुराणे ॥ ऋषिरुवाच॥ सुशीलेशृणुतत्सम्यग्व्रतानामुत्तमंव्रतम् ॥ येनचीर्णेनसहसापापात्त स्मात्प्रमुच्यते ॥ दुःखत्रयाभिघातश्चजायतेनात्रसंशयः॥कल्याणानि विवर्धंतेसंपदश्चनिरापदः॥नभस्यशुक्लपक्षेतुयदाभवतिपंचमी ॥ नद्या दिकेतदास्नात्वाकृत्वानियममेवच॥ब्राह्मणीक्षत्रियावैश्याशूद्राचापिव रानने ॥ कृत्वानैमित्तिकंकर्मगत्वानिजगृहंपुनः ॥ वेदींसम्यक्प्रकुर्वी तगोमयेनोपलेपिताम् ॥ रंगवल्लीसमायुक्तांनानापुष्पोपशोभिताम्॥ तत्रसप्तऋषीन्दिव्यान्भक्तियुक्ताप्रपूजयेत् ॥ गंधैश्चविविधैःपुष्पैर्धूपैर्दी पैःसुशोभनैः ॥ ततोनैवेद्यसंपन्नमर्घ्यंदद्याच्छुभैःफलैः ॥ अर्घ्यमं त्रश्च ॥ "कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौतमः ॥ जमदग्निर्वसिष्ठ श्चसप्तैतेऋषयःस्मृताः ॥ गृह्णीतार्घ्यंमयादत्तंतुष्टाभवतसर्वदेति ॥ एवं पूजांविनिर्वर्त्यऋषीन्ध्यात्वासमाहिता ॥ अकृष्टपृथ्वीसंजातशाकाहा रंप्रकल्पयेत् ॥ शयीतब्रह्मचर्येणऋषीन्ध्यात्वासमाहिता॥अनेनविधि

नासप्तवर्षाणिव्रतमाचरेदिति ॥ अस्योद्यापनम् ॥आदौमध्येतथाचांते कुर्यादुद्यापनंबुधः ॥ आचार्यान्वरयेत्सप्तवेदवेदांगपारगान् ॥ प्रतिमाःसप्तकुर्वीतसुवर्णेनस्वशक्तितः ॥ जटिलाःसाक्षसूत्राश्चकमंडलुसमन्विताः ॥ संस्थाप्यकलशेष्वेतान्मृन्मयेष्वव्रणेषुच॥ स्नापयेद्विधिवद्भक्त्यापंचामृतविधानतः ॥ एवंपूजांविनिर्वर्त्यअर्घ्यंदद्याद्यथापुरा ॥ आचार्यान्पूजयेद्भक्त्यावस्त्रालंकारभूषणैः॥ अनुज्ञयागुरोःपश्चाद्ब्राह्मणेभ्योनिवेदयेत्॥प्रतिमावस्त्रसंयुक्ताभोजयित्वायथाविधि ॥ अनेनविधिनासम्यग्व्रतमेतत्समाचरेत् ॥ सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयत्फलम् ॥ सर्वदानेषुयद्देयंतदेतद्व्रतधारणादिति ॥ ॥ इतिऋषिपंचमीव्रतम् ॥ अथाश्विनशुक्लपंचम्यांशचीसहितंकुशमयंनागंघृतक्षीरसलिलैःस्नापयित्वासंपूज्य क्षीरसिक्तगोधूमान्नंनैवेद्यंदद्यात् ॥ तदुक्तंभविष्योत्तरे ॥ तथाचाश्वयुजेमासिपंचम्यांकुरुनंदन कृत्वाकुशमयंनागमिंद्राण्यासहपूजयेत् ॥ घृतोदकाभ्यांपयसास्नापयित्वाविशांपते ॥ गोधूमैःपयसासिक्तैर्भक्ष्यैश्चविविधैस्तथा ॥ पूजयेत्कुरुशार्दूलतस्यशेषादयोनृप ॥ नागाःप्रीताभवंतीहशांतिमाप्नोतिवैविभो इति ॥ अत्रैव प्रशोधितकेशायादेव्याःपूर्वाह्णस्नानंकारयेत् ॥ तदुक्तंदेवीपुराणे ॥ प्रातरेवतुपंचम्यांस्नापयेत्सलिलैःशुभैरिति ॥ ॥ इत्याश्विनपंचमी॥ ॥ अथमाघशुक्लपंचमीश्रीपंचमी॥ तत्ररतिसहितंमदनंसंपूज्यवसंतोत्सवारंभःकार्यः ॥ तदुक्तंपुराणसमुच्चये॥ माघमासेनृपश्रेष्ठशुक्लायां पंचमीतिथौ ॥ रतिकामौतुसंपूज्यकर्त्तव्यःसुमहोत्सवः॥दानानिचप्रदेयानितेनतुष्यतिमाधवइति॥ ॥ इतिश्रीपंचमी॥एवमन्यान्यपिस्कंदोपवासनागपूजाव्यतिरिक्तानिपंचमीव्रतानि चतुर्थीयुक्तपंचम्यामेवकार्याणीतिसिद्धम् ॥ अथसिद्धविरुद्धादिकंलिख्यते ॥ पंचमीगुरुवारेणसिद्धाभवति ॥ तदुक्तम् ॥ गुरौदशमीपंचम्यौपौर्णमासीविशाखिका ॥ भाग्यानुराधेसिद्धाःस्युस्तथापुष्यपुनर्वसूइति ॥ इयंश

१ अन्नंदद्यादितिपाठः ।

निवारेणाविरुद्धा ॥ तदुक्तम् ॥ सौरेहस्तोत्तराषाढारेवतीचित्रयासह ॥ पंचमीचैवषष्ठीचअर्यम्णासहवर्जितेति॥अर्यम्णोत्तराफाल्गुन्या॥ अथात्रकृत्यमुच्यते ॥ पंचम्यादिषुपूर्णातिथिषुमांगल्यविवाहयात्राशांतिकपौष्टिकादिकर्माणिकार्याणि ॥ अमावास्यायांपूर्णात्वेपिपितृकर्ममुक्त्वान्यच्छुभंकर्मनकार्यम्॥तदुक्तंभास्करेण॥विवाहयात्रोत्सवशांतिकानिपूर्णासुकार्याणिचपौष्टिकानीति॥श्रीपतिरपि॥ पूर्णासुमांगल्यविवाहयात्रासपौष्टिकंशांतिककर्मकार्यम् ॥ सदैवदर्शेपितृकर्ममुक्त्वानान्यद्विदध्याच्छुभमंगलादीति॥ पौष्टिकंनामायुर्वृद्ध्यर्थंक्रियमाणंहोमादिकंकर्म ॥शांतिकंतुग्रहपीडोत्पातादिशांतयेक्रियमाणंदानहोमादि॥ शुभंशांतिकादि ॥ मंगलंविवाहादि ॥ इयंपंचमीरविभौमशनीनामन्यतमेक्रूरग्रहेमेषादिराशिचतुष्टयस्थितेसतिदुष्टाभवति ॥ एषांचतुर्णामपिपंचमीस्यादित्युक्तत्वात् ॥ अत्रदक्षिणस्यांदिशियोगिनीसांमुख्यात्तत्रयात्रानकार्या ॥ नैर्ऋत्येयाम्यपश्चिमइत्याद्युक्तमेव॥ पक्षद्वयगतासुसर्वास्वपिपंचमीषुतिथिपतित्वेनशेषादयोनागाःपूज्याः ॥ उक्तंच ॥ शेषादीनांफणीशानांपंचम्यांपूजनंभवेदिति ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेपंचमीनिर्णयः ॥ ॥ अथषष्ठीनिर्णयः ॥ ॥ षष्ठीतिथिरुपवासादिषुसप्तमीयुतैवग्राह्या ॥ तदुक्तं षण्मुन्योरिति ॥ बृहस्पतिनाप्युक्तम् ॥ एकादश्यष्टमीषष्ठीद्वितीयाचचतुर्दशी ॥ अमावास्यातृतीयाचताउपोष्याःपरान्विताइति ॥ षष्ठ्याःसप्तमीयुतायाःपूज्यत्वविधानात् ॥ तथाच ॥ नागविद्धातुयाषष्ठीभानुविद्धोमहेश्वरः ॥ चतुर्दशीकामविद्धातिस्रस्तामलिनामताइति ॥ तथाच ॥ नहिषष्ठीनागविद्धाकर्त्तव्यातुकदाचन ॥ तथाच ॥ नागविद्धातुयाषष्ठीशिवविद्धातुसप्तमी ॥ दशम्येकादशीविद्धानोपोष्याःस्युःकथंचनेति ॥ तथाच ॥ द्वितीयापंचमीवेधादित्यादिभिर्जाबालिब्रह्मवैवर्त्तसौरपुराणवृद्धवसिष्ठवाक्यैः पंचमीयुक्तायानिषेधाच्च

१ पौर्णमासीति पाठान्तरम् ।

[illegible]ति ॥ ॥ इतिषष्ठीसामान्यनिर्णयः ॥ ॥ आषाढशुक्लषष्ठीस्कंदषष्ठी॥तत्रपंचम्यामुपोष्यषष्ठ्यांस्कंदं पूजयेत्॥ तदुक्तंवाराहपुराणे ॥ आषाढेशुक्लषष्ठीतुतिथिःकौमारिका स्मृता ॥ कुमारमर्चयेत्तत्रपूर्वत्रोपोष्यवैदिनइति ॥ भाद्रपदशुक्लषष्ठ्यामपिदक्षिणापथस्थंकार्त्तिकेयंदृष्ट्वाब्रह्महत्यादिपापैर्मुच्यते तत्र स्नानदानपूजादिकंकृतमक्षय्यंभवति ॥ ॥ तदुक्तंभविष्योत्तरे ॥ ॥ येयंभाद्रपदेमासिषष्ठीस्याद्भरतर्षभ ॥ इयंपापहरापुण्याशिवाशांताशुभानृप ॥ स्नानदानादिकंसर्वमस्यामक्षय्यमुच्यते ॥ येस्यां पश्यतिगांगेयंदक्षिणापथमाश्रितम् ॥ ब्रह्महत्यादिपापैस्तेमुच्यंतेनात्र संशयइति ॥ इयमेवसूर्यषष्ठी ॥ अत्रस्नात्वाभास्करंसंपूज्यपञ्चगव्यं प्राश्याश्वमेधफलंप्राप्यते ॥ तदुक्तम् ॥ शुक्लेभाद्रपदेषष्ठ्यांस्नानंभास्करपूजनम् ॥ प्राशनंपञ्चगव्यस्यअश्वमेधफलप्रदमिति ॥ भाद्रपदकृष्णषष्ठीभौमवारेणरोहिणीनक्षत्रेणव्यतीपातयोगेनच युक्ता कपिलाषष्ठीत्युच्यते ॥ तत्रव्रतोपवासादिभिर्भास्करंपूजयित्वाब्राह्मणायकपिलांदद्यात् ॥ तदुक्तंवाराहपुराणे ॥ नभस्यकृष्णपक्षेतुरोहिणीपातभूसुतैः ॥ युक्ताषष्ठीपुराणज्ञैःकपिलापरिकीर्तिता ॥ व्रतोपवासनियमैर्भास्करंतत्रपूजयेत् ॥ कपिलांचद्विजाग्र्यायदत्त्वाक्रतुफलं लभेदिति ॥ पुराणसमुच्चयेतुविशेषउक्तः ॥ भाद्रेमास्यसितेपक्षेभानौचैवकरेस्थिते ॥ पातेकुजेचरोहिण्यांसाषष्ठीकपिलाभवेदिति ॥ अत्रभाद्रपदकृष्णषष्ठीचांद्रमासाभिप्रायेणोक्ता ॥ अतश्चापरपक्षेकपिलाषष्ठीभवेदिति॥ अत्रभाद्रपदमासकृष्णपक्षषष्ठ्यांरोहिणीनक्षत्रभौमवारव्यतीपातयोगानांसर्वेषांयौगपद्येनयोगेनैवप्राशस्त्यं नकेवलष

ष्ठ्यादीनाम् ॥तदुक्तम् ॥ संयोगेतुचतुर्णांतुनिर्दिष्टापरमेष्ठिना ॥सूर्यस्यहस्तस्थितत्वंसतिसंभवेफलातिशयप्रदम् ॥अतश्चेयंषष्ठीपूर्वदिनेपरदिनेवायत्रैवयोगचतुष्टयसंभवःसैवग्राह्या ॥ भाद्रपदकृष्णषष्ठीचंद्रषष्ठीचोच्यते ॥ साचंद्रोदयव्यापिनीग्राह्या ॥ उभयत्रचंद्रोदयव्यापित्वे पूर्वविद्धैवप्रशस्यते॥तदुक्तम् ॥तद्भाद्रपदेमासिषष्ठ्यांपक्षेसितेतरे ॥ चंद्रषष्ठीव्रतंकुर्यात्पूर्वविद्धाप्रशस्यतइति ॥ तथा ॥ चंद्रोदयेयदाषष्ठी पूर्वाह्णेवापरेहनि ॥ चंद्रषष्ठ्यसितेपक्षेसैवोपोष्याप्रयत्नतइति ॥ ॥ इतिभाद्रपदषष्ठी ॥ ॥ अथाश्विनशुक्लषष्ठ्यांज्येष्ठानक्षत्रयुक्तायामसंभवेकेवलायांबिल्ववृक्षनिमंत्रणंकार्यम् ॥ तत्रायंमंत्रः ॥ "ॐरावणस्य वधार्थायरामस्यानुग्रहायच ॥ अकालेब्रह्मणाबोधोदेव्यास्त्वयिकृतःपुरा ॥ श्रीशैलशिखरेजातःश्रीफल श्रीनिकेतन ॥ नेतव्योसिमयागच्छपूज्योदुर्गास्वरूपतइति " ॥ ॥ इत्याश्विनषष्ठी ॥ ॥ कार्तिकशुक्लषष्ठ्यांभौमवारयुक्तायांवह्निंसंपूज्य वह्निमहोत्सवंकुर्यात् ॥ तदुक्तं मत्स्यपुराणे ॥ वृश्चिकार्केशुक्लषष्ठीभौमवारेप्युपस्थिता ॥ महाषष्ठीतिसाप्रोक्तासर्वपापहरातिथिः ॥ तस्यांस्वपितिवैवह्निःपूर्वत्रोपोष्यवैदिने ॥ षष्ठ्यांवह्निसमभ्यर्च्यकुर्याद्वह्निमहोत्सवमिति ॥ वृश्चिकार्केकार्त्तिकेमासीत्यर्थः॥ ॥इतिकार्तिकषष्ठी॥ ॥अथमार्गशीर्षशुक्लषष्ठ्यांस्कंदस्तारकंहतवानतस्तत्रस्कंदंसंपूज्य स्नानदानादिकृतमक्षय्यंभवति ॥ तदुक्तंभविष्योत्तरे ॥ येयंमार्गशिरेमासिषष्ठी भरतसत्तम ॥ पुण्यापापहराधन्याशिवाशांतागुहप्रिया ॥ निहत्यतारकंषष्ठ्यांगुहस्तारकराजजित् ॥ रराजतेनदयिताकार्त्तिकेयस्यसातिथिः ॥ स्नानदानादिकंकर्मतस्यामक्षय्यमुच्यतइति ॥ ॥ इतिमार्गशीर्षषष्ठी ॥ ॥ पक्षद्वयगतासुसर्वमासषष्ठीषुतिथिपतित्वेन स्कंदंसंपूजयेत् ॥ तदुक्तम् ॥ षष्ठ्यांपूजागुहस्यचेति ॥ अथसिद्धविरुद्धादिकंलिख्यते ॥ तदुक्तंप्रतिपन्निर्णये ॥ शुक्रेणप्रतिपत्ष

ष्ठीत्यादि॥ षष्ठीभौमेनापिसिद्धा॥ भौमेषष्ठीतृतीयास्यादितिचोक्तमे
व॥ षष्ठीशनिवारेणविरुद्धा॥तदुक्तम्॥सौरेहस्तोत्तराषाढरेवतीचित्र
यासह॥पंचमीचैवषष्ठीचअर्यम्णासहवर्जितेति॥ षष्ठ्यांशनिवारेणक्र
कचाभिधानोयोगः॥ तदुक्तंरत्नमालायाम्॥ तिथेश्चवारस्यचयत्रसं
ख्ययात्रयोदशस्युर्मिलनेकृतेसति॥स्मृतः सयोगःक्रकचाभिधानको
विवर्जनीयःशुभकर्मसुध्रुवमिति॥अत्रापिप्रतिपद्विहितमेवविवाहादिक
मेकार्यम्॥ विवाहंप्रतिपत्षष्ठ्योरित्याद्युक्तमेव॥अत्रदंतकाष्ठंतैलाभ्यं
गस्नानंनिषिद्धम्॥ यथा॥ दंतकाष्ठेकुलद्रव्यजातिनाशोयथाक्रमम्॥
जायतेषष्ठ्यमावास्याप्रतिपत्सुकृतेसतीति॥ तथाचरत्नमालायाम्॥
षष्ठीषुतैलंपलमष्टमीषुक्षुरक्रियांचैवचतुर्दशीषु॥ स्त्रीसेवनंनष्टक
लासुपुंसामायुःक्षयार्थंमुनयोवदंति॥ अयंदंतकाष्ठादिनिषेधस्ता
त्कालिकतिथावेव॥तदुक्तम्॥ स्नानेचाभ्यंजनेचैवदंतधावनमै
थुने॥ तिथिस्तात्कालिकीज्ञेयातथामरणजन्मनोरिति॥ अत्र
षष्ठीषुतैलमित्युक्तत्वात्तिलतैलस्नानमेवनिषिद्धम्॥ नतुसर्षपादि
तैलस्नानम्॥ तदुक्तंस्मृतिसमुच्चये॥ यत्रतैलनिषेधःस्यात्तिलतै
लंनिषिध्यते॥ अभ्यंगस्यनिषिद्धेतुसर्षपादेरपीष्यतइति॥ रवि
भौमशनीनामन्यतमेक्रूरग्रहेसिंहस्थितेसतिषष्ठीदुष्टाभवति॥ पराः
परेषामित्याद्युक्तत्वात्॥ तथाच॥ कर्कमेषस्थेसूर्येषष्ठीदग्धाभव
ति॥ तत्रशुभकर्मनकार्यम्॥ तच्चद्वितीयानिर्णयेएकांतरादिनकरइ
त्याद्युक्तम्॥ षष्ठ्यांपश्चिमेयोगिनीसांमुख्याद्यात्रानकार्या॥ याम्य
पश्चिमइत्याद्युक्तत्वात्॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णया
मृतेषष्ठीनिर्णयः॥ ॥अथसप्तमीनिर्णयः॥ ॥ सप्तमीतिथिरुपवासादि
षुषष्ठीयुतैवग्राह्या॥तदुक्तम्॥ षण्मुन्योरिति॥ तथाच॥ षष्ठ्यष्टमी
अमावास्याकृष्णपक्षेत्रयोदशी॥ एताःपरयुताःपूज्याःपराःपूर्वेणसं
युताइति॥ षष्ठ्याःपरासप्तमी॥ सापूर्वयुतापूज्येत्यर्थः॥ पैठीन

सिरपि ॥ पंचमीसप्तमीचेति ॥ एभिर्वचनैःसप्तम्याःपूर्वविद्धायाएवविधानात् ॥ तथा॥नागविद्धातुयाषष्ठीरुद्रविद्धोदिवाकरः ॥ कामविद्धोभवेद्विष्णुर्नग्राह्यास्तेतुवासराइति ॥अत्रनागःपंचमी ॥ रुद्रोऽष्टमी ॥ दिवाकरःसप्तमी ॥ कामस्त्रयोदशी ॥ विष्णुर्द्वादशी ॥ तथाच ॥ सप्तमीनाष्टमीयुक्तानसप्तम्यायुताष्टमीति ॥ तथाच ॥ सप्तमीपरविद्धातुनोपोष्यैवकदाचनेत्यादिवचनैःपरविद्धानिषेधाच्चसप्तमीषष्ठीयुतैवोपोष्येतिसिद्धांतः ॥ ॥ इतिसप्तमीसामान्यनिर्णयः ॥ ॥ अथविशेषनिर्णयः ॥ ॥ अथचैत्रशुक्लसप्तम्यांदमनकादिभिःसूर्यपूजाकर्त्तव्या ॥ तदुक्तंदेवीपुराणे चैत्रमासतिथिप्रक्रमे ॥ भास्करस्यतुसप्तम्यांपूजांदमनकादिभिः ॥ कृत्वाप्राप्नोतिभोगादीन्विगतारिर्महातपाइति ॥ वैशाखशुक्लसप्तम्यांनिंबसप्तमीव्रतंकुर्यात् ॥ तदुक्तंभविष्योत्तरेसप्तमीप्रकरणे॥तृतीयासप्तमीवीरतच्छृणुष्वाग्रतोमम ॥ निंबपत्रैःस्मृतायातुपापघ्नीशोकनाशिनी॥ ॥अथआषाढशुक्लसप्तम्यांविवस्वान्नामसूर्योजातः ॥ तत्रवर्तुलमंडलस्थितंसूर्यंधूपदीपानुलेपनादिभिःसंपूज्यभक्ष्यभोज्यादिनैवेद्यंदद्यात् ॥ तदुक्तंब्रह्मपुराणे ॥ आषाढशुक्लसप्तम्यांविवस्वान्नामभास्करः ॥ जातःपूर्वंतुतस्मात्तंतत्रोपोष्यजपेत्सदा ॥ रथचक्राकृतौरम्येमंडलेसर्वकामदम् ॥ भक्ष्यैर्भोज्यैस्तथापेयैःपुष्पैर्धूपैर्विलेपनैरिति ॥ ॥ आश्विनशुक्लसप्तम्यांमूलयुक्तायांकेवलायांवापूर्वनिमंत्रितांफलद्वययुक्तांबिल्वपत्रिकामानीयतयासहपंचम्यांस्नापितांदेवींपूजयेत् ॥ तदुक्तंलिंगपुराणे ॥ मूलाभावेचसप्तम्यांकेवलायांप्रवेशयेत् ॥ युग्मभिन्नांचबिल्वस्यफलाभ्यांशाखिकांतथा॥ तथाचप्रतिमांदेव्याःस्नात्वाभ्युक्ष्यप्रवेशयेदितिच ॥ पूजाचबिल्वपत्रैरेवकार्या ॥ तदुक्तंब्रह्मपुराणे ॥ सप्तम्यांपत्रिकापूजेति ॥ ॥ मार्गशीर्षशुक्लसप्तमीमित्रसप्तमी ॥ तत्रपूर्वदिनेउपोष्यकृतवपनःस्नात्वारविंसर्वोपचारैःसंपूज्यब्राह्मणान्भोजयेत् ॥ ततःस्वयंम

घृप्लुतंपिष्टान्नंभुंजीत ॥ तदुक्तंब्रह्मपुराणे ॥ यद्विष्णोर्दक्षिणंनेत्रंतदे
वाकृतिमत्पुनः ॥ अदितेःकश्यपाज्जज्ञेमित्रोनामदिवाकरः॥ सप्तम्यां
तेनसाख्यातालोकेस्मिन्मित्रसप्तमी ॥ षष्ठ्यांचस्नपनंकार्यंतस्मैमित्रा
यभानवे ॥ तत्रोपवासःकर्त्तव्योभक्ष्याण्यथफलानिच ॥ रात्रौजागरणं
कार्यंगीतनृत्यपुरस्कृतम्॥ सप्तम्यांवपनंकुर्यात्तत्रस्नात्वायजेद्रविम् ॥
नानाकुसुमसंभारैर्भक्ष्यपिष्टमयैःशुभैः ॥ मधुनाचप्रभूतेनहोमजाप्य
समाधिभिः ॥ ब्राह्मणान्भोजयेत्पश्चाद्दीनानाथांश्चमानवान् ॥ अष्ट
म्यांसंविभज्यांश्चतथाचनटनर्तकान्॥ दिनद्वयेचभोक्तव्यंपिष्टमन्नंमधु
प्लुतमिति ॥ दिनद्वयेसप्तम्यामष्टम्यांच ॥ ॥ माघशुक्लसप्तमीअचला
सप्तमी जयंतीचोच्यते ॥ ॥ सासूर्यग्रहणतुल्या तस्यामरुणोदयव्या
पिन्यांस्नात्वासूर्यायार्घ्यंदद्यात् ॥ तदुक्तंभविष्योत्तरे ॥ माघस्यशुक्ल
पक्षेतुसप्तमीयात्रिलोचन ॥ जयंतीनामसाप्रोक्तासर्वपापहरातिथिरिति
॥ स्मृतिचंद्रिकायामपि ॥ सूर्यग्रहणतुल्यातुशुक्लामाघस्यसप्तमी ॥
अरुणोदयवेलायांतत्रस्नानंमहाफलमिति॥ तथा ॥माघेमासिसितेपक्षे
सप्तमीकोटिभास्करा ॥ कुर्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसंपदइ
ति ॥ अर्घ्यदानमंत्रश्च ॥ यद्यज्जन्मकृतंपापंमयाजन्मसुसप्तसु ॥
तन्मेरोगंचशोकंचमाकरीहंतुसप्तमीति ॥ इयमेवरविवारेणपुंनामनक्ष
त्रेणचयुक्तामहतीप्रोक्तातत्रसूर्यमर्चयेत् ॥ तदुक्तंगर्गेण ॥ रविवारेणयु
क्तायांसप्तम्यामुत्तरायणे ॥पुन्नामधेयनक्षत्रेपूजयेच्चदिवाकरमिति ॥ उ
त्तरायणेमाघमासे ॥ पुन्नामनक्षत्राणिच ॥ हस्तोमैत्रस्तथापुष्योमृग
शीर्षःपुनर्वसू ॥ पुंनामधेयनक्षत्राण्येतान्याहुर्मनीषिण इति ॥
अन्यापिसप्तमीभानुवारयुक्तामहाफलप्रदा ॥ तदुक्तम् ॥ सोमवारेत्व
मावास्याभानुवारेचसप्तमी ॥ अंगारकदिनेप्राप्तेचतुर्थीवाचतुर्दशी ॥
षष्टिवर्षसहस्राणितत्कर्त्ताविंदतेफलमिति ॥ अत्रचतुर्थीशुक्ला॥ चतुर्द
शीकृष्णाप्रशस्ततरा ॥ षष्ठीरविवाराभ्यांयुक्तायांसप्तम्यांपद्मकाख्यो

योगोभवति ॥ तदुक्तम् ॥ षष्ठीसप्तमिकायोगेवारश्चेदंशुमालिनः ॥ योगोयंपद्मकोनामसहस्रार्कग्रहैःसमइति ॥ पक्षद्वयगतासुसर्वमाससप्तमीषुतिथिपतित्वेनादित्यःपूज्यः॥ उक्तंच ॥सप्तम्यांभास्करस्यचेति ॥ ॥ अथसिद्धविरुद्धादिकंलिख्यते ॥ ॥सप्तमीबुधवारेणसिद्धाभवति ॥ तदुक्तम् ॥ बुधवारेद्वितीयाचद्वादशीसप्तमीपुनरिति ॥ सप्तम्यांरविवारेणसंवर्त्ताख्योविरुद्धोयोगोभवति॥ तदुक्तम् ॥सप्तम्यांदिनकरवासरोयदिस्याद्वारश्चेत्प्रतिपदिवेंदुनंदनस्य॥ संवर्तोमुनिभिरुदीरितःसयोगःसंत्याज्यःशुभफलकांक्षिभिःप्रयत्नादिति ॥सप्तमीरविवारादिविरुद्धयोगेषुकश्चिद्विशेषोलिख्यते॥यथा ॥ विरुद्धयोगास्तिथिवारजातानक्षत्रवारप्रभवाश्चयेऽत्र ॥हूणेषुवंगेषुखशेषुवर्ज्याःशेषेषुदेशेषुनतेनिषिद्धा इति॥सप्तम्यांचद्वितीयांचतद्व्रतपौष्टिकादिकर्मकार्यम् ॥व्रतपौष्टिकेद्वितीयाद्वादशीसप्तमीषुकुर्वीतेत्युक्तवात् ॥सप्तम्यामामलकस्नानंलक्ष्मीनाशकरम् ॥ तदुक्तम् ॥ सप्तम्यांनिंदुनवमीषुचसंपदित्सुःस्नायात्कदाचिदपिनामलकैर्मनुष्यइति ॥ रविभौमशनीनामन्यतमेक्रूरग्रहेकन्याराशिस्थितेसप्तमीशुभकर्मसुनिषिद्धा ॥ तदुक्तम् ॥ पराःपरेषामित्यादि॥सप्तम्यांवायव्यांदिशियोगिनीसांमुख्याद्यात्रानकार्या वायव्येशानयोरित्युक्तत्वात् ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृते सप्तमीनिर्णयः ॥ ॥ अथाष्टमीनिर्णयः ॥ तत्रशुक्लाष्टमीनवमीयुतैव ग्राह्या ॥ तदुक्तम् ॥ वसुरंध्रयोरिति ॥ ब्रह्मवैवर्त्तेपि ॥ नवम्यासहकार्यास्यादष्टमीसर्वदाबुधैरिति॥स्मृत्यंतरेपि ॥शुक्लपक्षेष्टमीचैवशुक्लपक्षे चतुर्दशी ॥पूर्वविद्धानकर्त्तव्याकर्त्तव्यापरसंयुता॥ उपवासेषुकार्येषुएषधर्मःसनातनइति॥बृहस्पतिरपि॥ एकादश्यष्टमीषष्ठीपौर्णमासीचतुर्दशी ॥ अमावास्यातृतीयाचताउपोष्याःपरान्विताइति ॥ निगमेपि॥ षष्ठ्यष्टमीअमावास्येति॥एषुवाक्येष्वष्टमीचतुर्दश्योशुक्लेवेदितव्ये॥इत्यादिभिर्वाक्यैः परविद्धाविधानात् ॥ तथाच ॥ नाष्टमीसप्तमीयु

क्तासप्तमीनाष्टमीयुतेति ॥ तथा ॥ भानुविद्धोमहेश्वरइति ॥ तथा ॥
उपवासेसप्तमीतुवेधाद्धंत्युत्तरांतिथिमित्यादिवाक्यैः पूर्वविद्धानिषेधा
च्चशुक्लाष्टमीनवमीयुतैवोपोष्येतिसिद्धांतः ॥दूर्वाष्टमीतुशुक्लापिपूर्वैवो
पोष्या॥कृष्णपक्षाष्टमीतुसामान्यतः पूर्वयुतैवग्राह्या॥ तदुक्तम्॥कृष्ण
पक्षेष्टमीचैव कृष्णपक्षेचतुर्दशी॥पूर्वविद्धातुकर्त्तव्यापरविद्धानकुत्रचि
दिति॥ननु अष्टमीनवमीयुग्मेमहोत्साहोमहाधनैः ॥शिवशक्त्योःशिव
क्षेत्रेपक्षयोरुभयोरपीतिवाक्येनपक्षद्वयगतयोरष्टम्योर्नवमीयुक्तत्वेनप्रा
शस्त्यमभिहितं कृष्णपक्षेष्टमीचेतिवाक्येनपूर्वविद्धाष्टम्याःप्राशस्त्य
मुक्तमितिविरोधइतिचेत्॥सत्यम्॥नवमीयुक्ताष्टम्याअर्द्धनारीश्वररूप
त्वादुमामहेश्वरपूजाविषयेकृष्णाष्टमीनवमीयुतैवग्राह्या॥अन्यव्रतेषुसा
मान्यतः सप्तमीयुतैवेत्यविरोधः ॥ तदुक्तम् ॥ अष्टम्यानवमीविद्धान
वम्याचाष्टमीतथा ॥ अर्द्धनारीश्वरप्रायाउमामाहेश्वरीतिथिः ॥ अष्टमी
नवमीयोगेतूमामहेश्वरपूजाभोजराजीयेनोक्ता ॥ यथा ॥ अष्टम्यां
पूज्यतेरुद्रोनवम्यांशक्तिरर्च्यते ॥ द्वयोर्योगेतुसंप्राप्तेपूजायांतुमहाफल
मिति ॥ अष्टमीनवम्योर्योगेद्वयोःशक्तिरुद्रयोःपूजायांमहाफलमित्य
र्थः ॥ अतश्चोमामहेश्वरपूजाकृष्णाष्टम्यामपिनवमीयुक्तायामेवकार्ये
तिसिद्धम्॥ ॥इत्यष्टमीसामान्यनिर्णयः॥ ॥अथविशेषनिर्णयः॥ ॥तत्र
चैत्रशुक्लाष्टमीत्वशोकाष्टमी ॥ तस्यांपुनर्वसुनक्षत्रयुतायामष्टावशोक
कलिकाःप्राश्याः ॥ तदुक्तंलिंगपुराणे ॥ अशोककलिकाश्चाष्टौ
येपिबंतिपुनर्वसौ ॥ चैत्रेमासिसिताष्टम्यांनतेशोकमवाप्नुयुरिति ॥
प्राशनमंत्रश्च ॥ त्वामशोककराभीष्टमधुमाससमुद्भवम् ॥ पिबामि
शोकसंतप्तोमामशोकंसदाकुर्विति ॥ अत्राप्याश्विनशुक्लाष्टम्यामिव
देव्यामहापूजाकार्या ॥ तदुक्तम् ॥ मार्कंडेयपुराणे ॥ शरत्कालेमहापू
जाक्रियतेयाचवार्षिकी ॥ तस्यांममैतन्माहात्म्यंश्रुत्वाभक्तिसमन्वित
इत्यत्रयाचवार्षिकीत्यनेनसंवत्सरस्यादौचैत्रशुक्लप्रतिपदुपक्रम्याष्टमी

पर्यंतंक्रियमाणापूजाभिधीयते ॥ अतश्चशरद्वसंतयोस्तुल्यएवदुर्गोत्सवःकार्यः ॥ ॥ इतिचैत्राष्टमी ॥ ॥ अथवैशाखशुक्लाष्टम्यामुपोषितआम्रफलरसेनस्नात्वाऽपराजिताख्यांदेवींमांसीवालकवारिभिः स्नापयित्वासंपूज्यशर्कराक्षीरनैवेद्यंदत्त्वानवम्यांतदेवब्राह्मणान्कुमारीश्चभोजयित्वापारणंकुर्यात् ॥ तदुक्तंदेवीपुराणे ॥ सहकारफलैःस्नानंवैशाखेह्यष्टमीदिने ॥ आत्मनोदेवतांस्नाप्यमांसीवालकवारिभिः ॥ लेपनंफलकर्पूरंधूपंदीपंसुगंधिकमिति ॥ फलंजातीफलम् ॥ संवत्सरप्रदीपे ॥ देव्याःपूजाप्रकुर्वीतकेतक्याचंपकेनच ॥ शर्कराक्षीरनैवेद्यंकन्याविप्रेषुभोजनम् ॥ आत्मनःपारणंतद्वद्दक्षिणांशक्तितोददेत् ॥ सर्वतीर्थाभिषेकंतुअनेनाप्नोतिभार्गवेति ॥ ॥इतिवैशाखशुक्लाष्टमी ॥ अथज्येष्ठशुक्लाष्टम्यांशुक्लांदेवींपूजयेत् ॥ तदुक्तंब्रह्मपुराणे ॥ शुक्लाष्टम्यांपुराजाताशुक्लादेवीमहाशनिः ॥ वधायदानवेंद्राणांशुक्लपक्षेततोयजेदिति॥ज्येष्ठकृष्णाष्टम्यांशिवपूजाकार्या ॥ तदुक्तंभविष्योत्तरे ॥ ज्येष्ठेमासिद्विजश्रेष्ठकृष्णाष्टम्यांत्रिलोचनम् ॥ यःपूजयतिदेवेशमीशलोकंव्रजेन्नरइति ॥ ॥ इतिज्येष्ठाष्टमी ॥ ॥ अथाषाढशुक्लाष्टम्यामुपोषितोहरिद्रातोयेनस्नात्वा महिषघ्नीनाम्नींदेवीं तेनैवस्नापयित्वापूजयेत् ॥ तदुक्तंदेवीपुराणे॥अष्टम्यांचतथाषाढेनिशातोयेनस्नापयेत् ॥स्वयंस्नात्वाचकर्पूरैश्चंदनैस्तांविलेपयेत्॥धूपचंदनकर्पूरैर्वालकैःसितसिद्धकैः ॥ भक्ष्याञ्छर्करयापूर्णान्पानकानिशुभानिच ॥ दापयेत्कन्यकाविप्रभोजनंचात्मनस्तथा ॥ शक्तितोदक्षिणांदद्यान्महिषघ्नींचकीर्त्तयेत् ॥ दीपमालाघृतेनैवसर्वान्कामान्प्रयच्छतीति ॥ ॥ इत्याषाढाष्टमी ॥ अथश्रावणेमासिमहाविष्णोरष्टमावतारस्यश्रीकृष्णदेवस्यजन्माष्टमीनिर्णीयते ॥ तत्रसकामैर्निष्कामैरपिसर्वथोपवासःकर्त्तव्यः ॥अकरणेप्रत्यवायश्रवणात्॥यथा॥गृध्रमांसंखरंकाकंश्येनंवामुनिसत्तम॥मांसंवाद्विपदांभुंक्तेकृष्णजन्माष्टमीदिने ॥तथा॥कृष्णाष्टमी

दिनेप्राप्तेयेनभुक्तंद्विजोत्तम ॥ त्रैलोक्यजनितंपापंभुक्तंतेननसंशयः ॥ ब्रह्मघ्नश्चसुरापश्चगोवधःस्त्रीवधोऽपिवा ॥ नलोकोमुनिशार्दूलजयंतीविमुखस्यच॥येनकुर्वंतिजानंतःकृष्णजन्माष्टमीव्रतम् ॥ तेभवंतिमहाप्राज्ञव्यालामहतिकानने॥श्रावणेबहुलेपक्षेकृष्णजन्माष्टमीव्रतम्॥नकरोतिनरोयस्तुसभवेत्क्रूरराक्षसः॥नकरोतियदाविष्णोर्जयंतीसंभवंव्रतम् ॥यमस्यवशमापन्नःसहतेनारकींव्यथाम्॥अतीतानागतंतेनकुलमेकोत्तरंशतम् ॥पातितंनरकेघोरेयोभुंक्तेकृष्णवासरइत्यादिवाक्यैर्जन्माष्टम्यांभोजनेमहादोषःश्रूयते॥उपवासेमहाफलसंबंधश्च ॥ तदुक्तंविष्णुरहस्ये ॥ प्राजापत्यर्क्षसंयुक्ताकृष्णानभसिचाष्टमी ॥ मुहूर्तमपिलभ्येतसोपोष्यासामहाफलेति ॥ भविष्योत्तरेपि ॥ प्रतिवर्षंविधानेनमद्भक्तोधर्मनंदन ॥ नरोवाप्यथवानारीयथोक्तंफलमाप्नुयात् ॥ पुत्रसंतानमारोग्यंसौभाग्यमतुलंलभेत् ॥ इहधर्मरतिर्भूत्वामृतोवैकुंठमाप्नुयात् ॥ तत्रदिव्यविमानेनवर्षलक्षंयुधिष्ठिर ॥ भोगान्नानाविधान्भुक्त्वापुण्यशेषादिहागतः ॥ सर्वकामसमृद्धेतुसर्वासुखविवर्जिते ॥ सर्वधर्मयुतेपार्थसर्वगोकुलसंयुते ॥ कुलेनृपवरिष्ठानांजायतेत्रिदशोपमः ॥ यस्मिन्सदैवदेशेतुलिखितंवापटार्पितम् ॥ समजन्मदिनंपुण्यंसर्वालंकारशोभितम् ॥ पूज्यतेपांडवश्रेष्ठजनैरुत्सवसंयुतैः ॥ परचक्रभयंतत्रनकदाचिद्भवेन्नृप ॥ पर्जन्यःकालवर्षी[1]स्यादीतिभ्योनभयंभवेत् ॥ गृहेवापूज्यतेयस्मिन्देवक्याश्चरितंमम॥ तत्रसर्वसमृद्धिःस्यान्नोपसर्गादिकंभयमिति ॥ तथा स्कंदपुराणे ॥ व्रतेनाराध्यदेवेशंदेवकीसहितंहरिम् ॥ त्यक्त्वायमपथंघोरंयातिविष्णोःपरंपदम्॥जन्माष्टमीव्रतंयेवैप्रकुर्वंतिनरोत्तमाः ॥ कारयंत्यथवालोकेलक्ष्मीस्तेषांसदास्थिरा॥स्मरणंवासुदेवस्यमृत्युकालेभवेन्मुने ॥ सिद्ध्यंतिसर्वकार्याणिकृतेजन्माष्टमीव्रतइत्यादिवाक्यैःसोपवासव्रतकरणेऐहिकामुष्मिकादिमहाफलश्रवणाच्चसर्वैरेवात्रो

१ कामवर्षीस्यादित्यपिपाठः।

पवासव्रतंकार्यम्॥तच्चव्रतंकीदृश्यामष्टम्यांक्रियतइतीदानींविचार्यते। साचजन्माष्टमीशुद्धाविद्धाभेदेनषोडशप्रकारा ॥ तत्रशुद्धायाअष्टौभेदाः ॥ यथा॥शुद्धासमान्यूनाधिकाचेतित्रिधा॥ तत्रशुद्धासमारोहिणीसहितातद्रहिताचेतिद्विविधा॥शुद्धान्यूनापिरोहिणीसहितातद्रहिताचेति द्विविधा॥ शुद्धाधिकातु पूर्वदिनएवरोहिणीसहिता परदिनएवरोहिणीसहिता उभयत्ररोहिणीसहिता उभयत्ररोहिणीरहिताचेतिचतुर्विधा ॥ एवंशुद्धाष्टविधा ॥ एवंविद्धासमापि रोहिणीसहितातद्रहिताचेतिद्विविधा ॥ विद्धन्यूनापिरोहिणीसहितातद्रहिताचेतिद्विविधा विद्धाधिकातुपूर्वदिनएवरोहिणीसहिता परदिनएवरोहिणीसहिता उभयत्ररोहिणीसहिता उभयत्ररोहिणीरहितेतिचतुर्धा ॥ एवंविद्धाष्टविधा ॥ उभयेषांशुद्धाविद्धाभेदानांमेलनेषोडशविधाभवंति ॥ द्वावन्याववांतरभेदौ ॥ यथा ॥ अर्द्धरात्रेरोहिणीयुक्ताजन्माष्टमीजयंत्येका ॥ द्वितीयानवम्यांरोहिण्याबुधवारसोमवारयोरन्यतमेनचयुक्ता ॥ एवमष्टादशप्रकाराजन्माष्टमी ॥ तत्रशुद्धसमाशुद्धन्यूनाविद्धसमाविद्धन्यूनाचरोहिणीसहितारोहिणीरहितायासैवोपोष्या ॥ द्वितीयदिने अष्टम्या अभावात् ॥ एतेष्वष्टसुभेदेष्वविवादः ॥ तत्र रोहिणीसहितत्वंमुहूर्तमात्रेणापिग्राह्यम् ॥ तदुक्तम् ॥ प्राजापत्यर्क्षसंयुक्ताकृष्णानभसिचाष्टमी ॥ मुहूर्तमपिलभ्येतसोपोष्यासामहाफलेति॥ नभसीतिचांद्रमासाभिप्रायेण ॥ शुद्धाधिकापियोभयत्ररोहिणीरहितातस्यांसंपूर्णायामुपवासंकृत्वाद्वितीयेह्नितिथ्यंतेपारणंकुर्यात् ॥ ॥ तदुक्तम् ॥ तिथिनक्षत्रनियमेतिथिभांतेचपारणम् ॥ अतोऽन्यथापारणेतुव्रतभंगमवाप्नुयादिति ॥ अथयाशुद्धाधिकापूर्वदिनेपरदिनेरोहिणीयुक्तासैवोपोष्या ॥ तदुक्तंविष्णुरहस्ये ॥ मुहूर्त्तमप्यहोरात्रेयस्मिन्युक्तंतुलभ्यते ॥ अष्टम्यांरोहिणीऋक्षंतांसुपुण्यामुपावसेदिति ॥ याशुद्धाधिकोभयत्ररोहिणीयुक्तातांसंपूर्णामुपोष्याद्वि

तीयदिनेतिथिनक्षत्रवियोगेपारणंकुर्यात् ॥ तदुक्तम् ॥ रोहिणीसंयु
ताचेयंविद्वद्भिःसमुपोषिता॥वियोगेपारणंकुर्युर्मुनयोब्रह्मवादिनइति ॥
तथा॥सांयोगिकेव्रतेप्राप्तेयत्रैकोपिनयुज्यते ॥ तत्रैवपारणंकुर्यादेवंवेद
विदोविदुरिति॥तथाच॥भांतेकुर्यात्तिथेर्वापिशस्तंभारतपारणमिति॥
अथविद्धाधिकायोभयत्ररोहिणीरहितातस्यांविद्धायामेवोपोष्यतिथ्यं
तेपारणंकुर्वीत ॥ तदुक्तम् ॥ कृष्णाष्टमीस्कंदषष्ठीशिवरात्रिश्चतुर्द
शी ॥ एताःपूर्वयुताः कार्यास्तिथ्यंतेपारणंभवेदिति ॥ निगमेऽपि ॥
पूर्वविद्धासुतिथिषुभेषुचश्रवणंविना ॥ उपोष्यविधिवत्कुर्यात्तत्तदंतेतु
पारणमिति ॥ विद्धाधिकापिपूर्वदिनेवायस्मिन्रोहिणीसहितासै
वोपोष्या ॥ तदुक्तम् ॥ मुहूर्त्तमप्यहोरात्रेयस्मिन्युक्तंतुलभ्यते ॥
अष्टम्यारोहिणीऋक्षंतांसुपुण्यामुपावसेदिति ॥ यापुनर्विद्धाधिकोभय
त्ररोहिणीसहितातांपूर्वामेवोपोष्यतिथ्यंतेपारणंकुर्यात् ॥ तदुक्तं
ब्रह्मवैवर्ते॥कार्याविद्धापिसप्तम्यारोहिणीसहिताष्टमीति ॥अत्राष्टम्यंते
पारणंकार्यंरोहिण्यंतोनापेक्षितः ॥ भांतेपारणविधानस्यरोहिणीश्र
वणव्यतिरिक्तनक्षत्रविषयत्वात् ॥तदुक्तम्॥ याःकाश्चित्तिथयःपुण्याः
प्रोक्तानक्षत्रसंयुताः ॥ ऋक्षांतेपारणंकुर्याद्विनाश्रवणरोहिणीमिति ॥
ननुयदापूर्वविद्धोपवासेपरदिनेर्द्धरात्रेतदूर्ध्वंवातिथ्यंतोभवति ॥ तदा
महानिशायांभोजननिषेधात् द्वितीयदिनेप्युपवासःप्रसज्येत सचन
युक्तः॥पारणस्यचपारयातिकर्मत्वेनव्रतमितिसमाप्त्यर्थत्वात्तदभावेपू
र्वव्रतस्यापरिसमाप्तिरेवस्यादितिचेत्॥सत्यम्॥ तिथिभांतकालःपार
णस्यांगंपारणमंगि॥नह्यंगाभावेंगिनएवलोपइतिप्रसिद्धिरस्ति॥अतश्च
तिथ्यंताभावेपिदिवैवपारणंकार्यम् ॥तदुक्तम् ॥ तिथ्यृक्षयोर्यदोच्छेदो
नक्षत्रांतमथापिवा॥अर्धरात्रेऽथवाकुर्यात्पारणंत्वपरेहनीत्यस्यायमर्थः
तिथ्यृक्षयोश्छेदेनक्षत्रांतेवापारणंकुर्यात् ॥ अथवायद्यर्धरात्रेतिथिभां
तःस्यात्तदापरेऽहनिदिवसएवपारणं कुर्यात् ॥ दिवसपारणंचसर्वो

पवाससाधारणम्॥तदुक्तम्॥सर्वेष्वेवोपवासेषुदिवापारणमिष्यतइति॥ ॥ तथा ॥ तिथ्यंतेवोत्सवांतेवाव्रतीकुर्वीतपारणमिति ॥ अतश्च यदाभोजनानिषिद्धेकालेतिथिभांतोभवतितदातत्रैवपारणंकार्यम्॥ अन्यथोत्सवांतेएवपारणंकार्यमित्यलमितिप्रपंचेन ॥ ननुसप्तमीविद्धायामष्टम्यामुभयत्ररोहिणीयुक्तायांद्वितीयाष्टम्याएवाष्टयामिकत्वेनप्राशस्त्याभिधानात्पूर्वविद्धोपवासविरोधइतिचेत् ॥ यथा ॥ सप्तमीसंयुताष्टम्यांभूत्वाऋक्षंद्विजोत्तम ॥ प्राजापत्यंद्वितीयेऽह्निमुहूर्त्तार्द्धंभवेद्यदि ॥ तदाष्टयामिकंज्ञेयंप्रोक्तंव्यासादिभिःपुरेति ॥ सत्यम् ॥ एतद्वचनंनोपवासविषयम्॥उपवासशब्दाभावात्॥किंतु॥पूर्वदिनउपोष्यद्वितीयदिनविहितस्यपारणस्यांगत्वेन विधीयमानंब्राह्मणभोजनदक्षिणादिकंरोहिण्यष्टम्यतिक्रमेणापिसंपूर्णत्वाभिधानेनरोहिण्यष्टम्योरेवकृतंस्यादितिमहाफलत्वंबोधयति ॥ अथशुद्धाविद्धावायाष्टमीअर्द्धरात्रेरोहिणीयुक्तासाजयंतीत्युच्यते ॥ तदुक्तम् ॥ अर्द्धरात्रेतुरोहिण्यांयदाकृष्णाष्टमीभवेत् ॥ तस्यामभ्यर्च्चनंशौरेर्हंतिपापंत्रिजन्मजम्॥ सोपवासोहरेःपूजांकृत्वातत्रनसीदति ॥ तथाच ॥ रोहिणीसहिताकृष्णमासिभाद्रपदेऽष्टमी ॥ अर्द्धरात्रादधःसाहिकलामात्रायदाभवेत् ॥ तत्रजातोजगन्नाथःकौस्तुभीहरिरव्ययः ॥ तमेवोपवसेत्कालंकुर्यात्तत्रैवजागरम् ॥ अर्द्धरात्रेतुयोगःस्यात्तारापत्युदयेसति ॥ जयंतीनामसारात्रिस्तत्रजातोजनार्द्दनः ॥ नियतात्माशुचिःस्नात्वापूजांतत्रप्रवर्तयेदिति ॥ अत्रभाद्रपदइतिकृष्णप्रतिपदादिमासाभिप्रायम् ॥ मार्कण्डेयोऽपि ॥ प्राजापत्येनसंयुक्ताकृष्णानभसिचाष्टमी ॥ जयंतीनामसाप्रोक्तासाह्युपोष्यामहाफलेति ॥ इयंपूर्वदिनेपरदिनेवायत्रैवार्द्धरात्रेरोहिणीयोगःसैवोपोष्या ॥ यदातुदिनवृद्ध्यादिनद्वयेऽप्यर्द्धरात्रेरोहिणीयोगस्तदातूत्तरैवोपोष्या ॥तदुक्तम् ॥ वर्जनीयाप्रयत्नेनसप्तमीसंयुताष्टमी ॥ सऋक्षापिनकर्त्तव्यासप्तमीसहिताष्टमी ॥

यदातुसूर्योदयेस्वल्पाप्यष्टमीसाचरोहिणीयुक्ताउपरि सकलानवमीबु धवारेणसोमवारेणवाभवतिसामुक्तिदा॥संपूर्णामष्टमींपरित्यज्यसैवस्व ल्पाप्युपोष्या ॥ तदुक्तंपद्मपुराणे ॥ उदयेचाष्टमीकिंचित्सकलान वमीयदि ॥ भवेत्तुबुधसंयुक्ताप्राजापत्यर्क्षसंयुता ॥ अपिवर्षशतेनाऽ पिलभ्यतेवानवाविभोइति ॥ तथाच ॥ प्रेतयोनिगतानांचप्रेतत्वंना शितंनरैः ॥ यैःकृताश्रावणेमासिअष्टमीरोहिणीयुता ॥ किंपुनर्बुध वारेणसोमेनापिविशेषतः ॥ किंपुनर्नवमीयुक्ताकुलकोट्यास्तुमुक्तिदे ति॥ ॥ इति श्रीकृष्णजन्माष्टमीनिर्णयः ॥ ॥ अथभाद्रपदशुक्लाष्टमी निर्णीयते ॥सैवदूर्वाष्टमी ॥साशुक्लापिपूर्वविद्धैवग्राह्या॥ तदुक्तम् ॥श्रा वणीदुर्गनवमीदूर्वाचैवहुताशनी॥ पूर्वविद्धातुकर्त्तव्याशिवरात्रिर्बलेर्दि नमिति॥ अस्यांपूर्वविद्धायांज्येष्ठामूलनक्षत्ररहितायांसिंहस्थेसवितर्य गस्त्यानुदयेदूर्वामभ्यर्च्यानग्निपक्वमन्नंभोक्तव्यम् ॥ एवंकृतेनारीसप्त जन्मानिपतिपुत्रविरहंनाप्नुयात् ॥ उक्तवैपरीत्येमहादोषः ॥ तदुक्तंपु राणसमुच्चये॥ शुक्लाष्टमीतिथिर्यातुमासिभाद्रपदेभवेत् ॥ दूर्वाष्टमीतु साज्ञेयानोत्तरासाविधीयतइति ॥ तथा ॥ प्राप्तेभाद्रपदेमासिशुक्लाष्ट म्यांचभारत ॥ दूर्वामभ्यर्चयेद्भक्त्याज्येष्ठांमूलं चवर्जयेदिति ॥ तथाज्येष्ठायांपूजनेदोषश्च ॥ ऐंद्रर्क्षेपूजितादूर्वाहंत्यपत्यानिनान्यथे ति ॥ अथदूर्वायाअपूजनेदोषश्चपुराणसमुच्चयएवोक्तः ॥ यानपूजय तेदूर्वांमोहादिहयथाविधि ॥ त्रीणिजन्मानिवैधव्यंलभतेनात्रसंशयः ॥ तस्मात्संपूजनीयासाप्रतिवर्षंवधूजनैः ॥ सुखसंतानजननीभर्त्तुःसौ ख्यकरीसदेति ॥ स्कंदपुराणेऽपि॥ शुक्लेभाद्रपदेमासिदूर्वासंज्ञातथाष्ट मी॥ सिंहेऽर्केसाचकर्त्तव्यानकन्यास्थेकदाचन॥सिंहस्थेसोत्तमासूर्येऽ नुदितेमुनिसत्तम॥अगस्त्यउदितेपूजायांदोषश्चत्तत्रैवोक्तः ॥ अगस्त्य उदितेतातपूजयेदमृतोद्भवाम्॥वैधव्यंपुत्रशोकंचदशजन्मानिपंचच ॥ तथा ॥ दूर्वाष्टमीसदात्याज्याज्येष्ठमूलर्क्षसंयुता ॥ परविद्धातथाक्व

ष्णामुनिःशातातपोऽब्रवीदिति॥ननुयानपूजयतेमोहादित्यादिनाप्राति वर्षंदूर्वायाअपूजनेवैधव्यादिदोषोऽभिहितः॥ यदापुनर्ज्येष्ठादिविरहोन संभवतितदाकिंकार्यमितिचेत् ॥ सत्यम् ॥ तदादूर्वामभ्यर्च्यैकभ क्तंकार्यम् ॥तदुक्तम्॥ कर्त्तव्याचैकभक्तेनज्येष्ठामूलंयदाभवेत्॥ दूर्वा मभ्यर्चयेद्भक्त्यानवंध्यंदिवसंनयेदिति ॥ अतएवयदाज्येष्ठामूलेनभ वतस्तदाग्निपक्वंनाश्नीयादितिगम्यते ॥ दूर्वापूजामध्यादुपरिकर्त्त व्या ॥ तदुक्तम् ॥ मुहूर्त्तेरौहिणेऽष्टम्यांपूर्वावायदिवापरा ॥ दूर्वाष्टमीतु साकार्याज्येष्ठामूलंचवर्जयेदिति ॥ रौहिणोनवमोमुहूर्त्तः ॥ परविद्धा निषेधेऽपियदिवापरेतिपरविद्धाविधानंपूर्वस्यांकर्मकालव्यापिन्यांपरा पिकार्येतिज्ञापनार्थम् ॥ ॥इतिदूर्वाष्टमीनिर्णयः॥ ॥अथभाद्रपदशुक्ला ष्टमीज्येष्ठानक्षत्रयुक्ताकेवलावाज्येष्ठाष्टमीत्युच्यते ॥ अत्रज्येष्ठादेवींपू जयेत् ॥ तदुक्तंकालादर्शे ॥ भाद्रेशुक्लाष्टमीज्येष्ठानक्षत्रेणसम न्विता ॥ महतीकीर्त्तितातस्यांज्येष्ठांदेवींप्रपूजयेत् ॥ उपहारैर्बहुवि धैरलक्ष्मीविनिवृत्तयइति ॥ लिंगपुराणेऽपि ॥ कन्यार्केयाष्टमीशुक्ला ज्येष्ठर्क्षेमहतीस्मृता ॥ अलक्ष्मीपरिहारायज्येष्ठांतत्रप्रपूजयेदिति ॥ पूजामंत्रश्च ॥ ज्येष्ठायैतेनमस्तुभ्यंश्रेष्ठायैतेनमोनमः ॥ शर्वायैतेनम स्तुभ्यंशांकर्यैतेनमोनमइति ॥ प्रतिवर्षंक्रियमाणंज्येष्ठाव्रतंनक्षत्राभा वेतिथावेवकार्यम् ॥ यज्ज्येष्ठानक्षत्रयुक्तायांयस्यांकस्यांचित्तिथौनक्ष त्रप्राधान्येनकेवलंव्रतंक्रियतेतत्केवलनक्षत्रएवकार्यम् ॥ तदुक्तंमत्स्य पुराणे ॥ प्रत्याब्दिकंतथाउक्तंयज्ज्येष्ठादैवतंव्रतम् ॥ प्रतिज्येष्ठाव्रतंयच्च विहितंकेवलोडुनि ॥ तिथावेवाचरेदाद्यंद्वितीयंकेवलर्क्षतइति ॥ ऋक्ष तऋक्षे ॥ तसिप्रत्ययांतः ॥ ॥इतिज्येष्ठाव्रतम् ॥ ॥ अथाश्विनेमासि कृष्णपक्षाष्टम्यांदोषचतुष्टयरहितायांमहालक्ष्मीव्रतंकार्यम् ॥ तच्चचं द्रोदयकालव्यापिन्यामेव चंद्रोदयएवपूजार्घ्यादिविधानात् ॥ हस्तप्रा ंतदलस्थेसूर्येतद्व्रतंनसमापयेत् ॥ तदुक्तंपुराणसमुच्चये ॥ कन्यागतेऽ

कैंप्रारभ्यकर्त्तव्यंनश्रियोर्चनम् ॥ हस्तप्रांतदलस्थेर्कैतद्व्रतंनसमापये दिति ॥ ब्रह्मांडपुराणेऽपि॥सप्तमीपुष्यसंयुक्ताकर्त्तव्याचाश्विनाष्टमी ॥ दुर्गोत्सवेसितेपक्षेबहुलेश्रव्रितेशुभेइति ॥ अत्रसप्तमीपुष्यसंयुक्तेतिबहु लाष्टम्याएवविशेषणम्॥सिताष्टम्यांपुष्यनक्षत्रासंभवात् ॥आश्विनासि ताष्टम्यांदुर्गोत्सवः कार्यइत्येतावन्मात्रंविधीयते ॥ तथाच ॥ अ र्द्धरात्रमतिक्रम्यवर्ततेयोत्तरातिथिः ॥ तदातस्यांतिथौकार्यमहाल क्ष्मीव्रतंशुभमिति॥ दोषचतुष्टयवर्जनंचपुराणसमुच्चयेप्रोक्तम्॥पूजनी यागृहस्थेनअष्टमीप्रावृषिश्रियः ॥ दोषैश्चतुर्भिःसंत्यक्तासर्वसंपत्करी तिथिरिति ॥ दोषाश्चतत्रैवोक्ताः॥ पुत्रसौभाग्यराज्यायुर्नाशिनीसाप्र कीर्त्तिता ॥ तस्मात्सर्वप्रयत्नेनत्याज्याकन्यागतेरवौ ॥ विशेषेणप रित्याज्यानवमीदूषितायदीति ॥ अत्रकन्यागतेरवौनिषेधोव्रतप्रारंभ विषयः॥ तथाच ॥ त्रिदिनेचावमेचैवअष्टमींनोपवासयेत् ॥ पुत्रहान वमीविद्धास्वघ्नीहस्तार्कगेरवौ॥ धर्मघ्नीत्रिदिनेप्रोक्तात्याज्याचैषावमेऽ पिसेति ॥ स्वंद्रव्यंहंतीतिस्वघ्नी ॥ नवमीवेधः रवेर्हस्तोत्तरद लगतंत्रिदिनमवमंचेतिदोषचतुष्टयम् ॥ त्रिदिनावमदिनयोर्लक्षणं चरत्नमालायामुक्तम् ॥ यत्रैकःस्पृशतितिथित्रयावसानंवारश्चेदवम दिनंतदुक्तमाद्यैः ॥ यास्पर्शाद्भवतितिथित्रयस्यचाह्नांत्रिद्युस्पृक्क थितमिदंद्वयंचनेष्टमिति ॥ एतद्दोषवर्जनमुपक्रमोद्यापनयोरेवप्रायेणज्ञे यम् ॥ अन्यथाषोडशवर्षसाध्यस्यव्रतस्यांतरासंभवेऽकरणंप्रसज्ये त ॥ अतःसतिसंभवेदोषवर्जनंनतुनियमेन ॥ तथाचोक्तम् ॥ श्रियोर्चनंभाद्रपदेसिताष्टमींप्रारभ्यकन्यार्धगतेनसूर्ये ॥ समापयेत्तत्र तिथौचयावत्सूर्यस्यपूर्वार्द्धगतोयुवत्याइति ॥ नवमीवेधनिषेधोपि परदिनेचंद्रोदयादर्वाग्ज्ञेयः॥चंद्रोदयादूर्ध्वंत्रिमुहूर्तव्यापित्वेतूत्तरैवनव मीविद्धापिकार्या ॥तदुक्तम्॥पूर्वावापरविद्धावाग्राह्याचंद्रोदयेसदा॥त्रि मुहूर्त्तापिसापूज्यापरतश्चोर्ध्वगामिनीति ॥चंद्रोदयादूर्ध्वगामिनीत्रिमुहू र्त्ताष्टमीचेत्तदापराकार्यानचेत्पूर्वेत्यर्थः॥॥इतिमहालक्ष्मीव्रतनिर्णयः॥

अथाश्विनेमासिशुक्लामहाष्टमीनिर्णीयते॥ साचनवमीयुक्तैवदुर्गोत्सवोपवासादिषुग्राह्या॥तदुक्तंवसुरंध्रयोरिति॥तथा ॥नाष्टमीसप्तमीयुक्तासप्तमीनाष्टमीयुता॥नवम्यासहकार्यास्यादष्टमीसर्वदाबुधैरिति॥ तथाच ॥अष्टमीनवमीयुग्मेमहोत्साहोमहोत्सवइति ॥तथाच॥ अष्टम्यांचनवम्यांचजगन्मातरमंबिकाम्॥पूजयित्वाऽऽश्विनेमासिविशोकोजायतेनर इत्यादिभिर्वाक्यैर्नवमीयुक्तायाएवप्राशस्त्याभिधानात् ॥ सप्तमीयुक्तातुसतिसंभवेसर्वथावर्जनीया॥अत्रमहादोषश्रवणात् ॥ यथा ॥ पुत्रान्हंतिपशून्हंतिहंतिराष्ट्रंसराजकम् ॥ हंतिजातानजातांश्वसप्तमीसहिताष्टमी ॥तस्मात्सर्वप्रयत्नेनसप्तमीवेधसंयुता ॥ वर्जनीयाष्टमीपार्थभुवोराष्ट्रमभीप्सुभिरिति ॥ तथाच ॥ सप्तमीशल्यसंविद्धावर्जनीयासदाष्टमी ॥ स्तोकापिसातिथिःपुण्यायस्यांसूर्योदयोभवेदिति ॥ भोजराजीये ॥ भीमपराक्रमोपि॥नदिवाननिशापिचविष्टिहतानशुभाखलुसप्तमिकोपहता ॥यदिचाष्टमिशेषभवानवमीअमरैरपिपूज्यतमानवमीति ॥ इयंनवम्याभौमवारेणचयुक्ताप्रशस्ततरा ॥ यदुक्तम् ॥ अष्टम्यामुदितेसूर्येदिनांतेनवमीभवेत् ॥ कुजवारोभवेत्तत्रपूजनीयाप्रयत्नतइति ॥ इयमष्टमीमूलनक्षत्रेणपूर्वाषाढानक्षत्रेणवायुक्तामहानवमीप्रोक्ता ॥ यथोक्तम् ॥ आश्वयुक्शुक्लपक्षेतुयाष्टमीमूलसंयुता ॥ यापूर्वाषाढयासार्द्धमृक्षद्वययुताथवा ॥ सामहानवमीज्ञेयात्रैलोक्येपिसुदुर्लभा ॥ तथाच ॥ कन्यागतेसवितरिशुक्लपक्षेऽष्टमीतुया ॥ मूलनक्षत्रसंयुक्तासामहानवमीस्मृतेति ॥ मूलनक्षत्रयुक्तापिसप्तमीलेशसहिताचेत्तर्हिदुष्टैव ॥ यदुक्तं दुर्गोत्सवे ॥ मूलेनापिहिसंयुक्तासदात्याज्याऽष्टमीबुधैः ॥ लेशमात्रेणसप्तम्याअपिस्याद्यादिदूषितेति ॥ नवमीयुतायाःप्राशस्त्यंदेवीपुराणेप्रोक्तम् ॥ संतर्जयंतीहुंकारैःखड्गोद्यतपरायणा ॥ नवम्यांपूजितादेवीददात्यानंदजंफलम् ॥ सापुण्यासापवित्राचसाधर्म्यासुखदायिनी ॥ तस्यांसंपूजनीयातुचामुंडामुंडमालि

नीति ॥ तथाच ॥ मूलपूर्वाषाढयोरेवंपूजाप्रशस्ता ॥ उत्तराषाढायांतुनिषिद्धा ॥ तदुक्तंरूपनारायणीये ॥मूलेप्रपूजयेद्देवींतथासलिलदैवते ॥ वैश्वदेवेतुनक्षत्रेपूजितादुःखदाभवेदिति ॥ उत्तराषाढायांतुनिषेधश्वसतिसंभवेज्ञेयः ॥ तदुक्तंदुर्गोत्सवे ॥ मूलाभावेतुकर्त्तव्या अष्टमीतोयसंयुता ॥ विश्वयुक्तापिकर्त्तव्याअष्टमीनवमीयुतेति ॥तथा च ॥ प्रतिपद्यांहरेत्खङ्गंद्वितीयायांधृतंधनुः ॥ तृतीयायांकरेचं[1]क्रं चतुर्थ्यांचर्मनिर्मलम् ॥ पंचम्यामाददेशूलंषष्ठ्यांतुपरशुंतथा ॥ गदांबिभर्तिसप्तम्यामष्टम्यांशक्तिमुत्तमाम् ॥ नवमींचसदादेव्यामूर्तिर्दैत्यविनाशिनी॥अतएवहिपूज्यासाअष्टमीनवमीयुतेति॥ अत्रैवग्रथांतरेविशेषउक्तः ॥ यथा ॥ मूलेनागमनंदेव्याः पूर्वाषाढासुपूजनम् ॥ उत्तरासुबलिंदद्याच्छ्रवणेचापराजितेति ॥ एवंनवमीयुक्ताष्टम्यांदेवींसंपूज्योदयव्यापिन्यांनवम्यांबलिंदद्यात्॥तदुक्तंदेवीपुराणे ॥ सूर्योदयेपरंरिक्तापूर्णास्यादपरायदि ॥ बलिदानंप्रकर्त्तव्यंतत्रदेशशुभावहम् ॥ बलिदानेकृतेऽष्टम्यांपुत्रभंगोभवेन्नृपेति ॥ तथाच ॥ अष्टम्यामुदितेसूर्येदिनांतेनवमीभवेत् ॥ प्रभातेबलिदानेचकियन्मात्रापिलभ्यते ॥ नवम्यांतत्रसंपूज्यादुर्गादुर्गविनाशिनी ॥ नन्वत्रविरुद्धानिवाक्यानिश्रूयंते ॥ यथा ॥ अहंभद्राचभद्राहंनावयोरंतरंक्वचित् ॥ सर्वसिद्धिंप्रदास्यामिभद्रायामर्चिताप्यहम् ॥ भद्रायाभद्रकाल्याश्चमध्येस्यादर्चनक्रिया ॥ तस्माद्वैसप्तमीविद्धाकार्यादुर्गाष्टमीबुधैरिति ॥ तथा ॥विद्धित्यक्त्वामहाष्टम्यांममपूजांकरोतियः ॥ तस्यपूजाफलंनस्यात्तेनाहमवमानितेत्यादिभिर्वाक्यैः सप्तमीविद्धायामेवदुर्गोत्सवविधानाद्विरोधइतिचेत् ॥ सत्यम् ॥ याष्टमीसप्तमीविद्धासतीद्वितीयदिनेतिथिक्षयवशान्नवर्धयतेतद्विषयत्वात्पूर्वविद्धाविधायकवाक्यानाम् ॥ तदुक्तंस्मृतिसंग्रहे ॥ यदासूर्योदयेनस्यान्नवमीचापरेहनि ॥ तदाष्टमीं

[1] वज्रमित्यपिपाठः।

प्रकुर्वीतसप्तम्यासहितांनृपेति ॥ तथाचदुर्गोत्सवे ॥ उत्तरास्तिथयो यत्रक्षयंयांतिनराधिप ॥ पूर्वाष्टमींतदाकुर्यादन्यथात्वशुभंभवेदिति ॥ यानिपुनः सप्तम्यामुदितेसूर्येपरतोयाष्टमीभवेत् ॥ तत्रदुर्गोत्सवंकुर्यान्नकुर्यादपरेहनि ॥ यदाष्टमींतुसंप्राप्यअस्तंयातिदिवाकरः ॥ तत्र दुर्गोत्सवंकुर्यान्नकुर्यादपरेहनि॥दुर्भिक्षंतत्रजानीयान्नवम्यांयत्रपूज्यतइत्यादीनि नवमीयुक्ताष्टमीनिषेधकवाक्यानि॥ तानिकृष्णपक्षनवमीविहितेदेवीप्रबोधविषयाणि तदंगत्वेनकृष्णाष्टम्यां क्रियमाणदेवीपूजाविषयाणि ॥ कृष्णपक्षेष्टमीचैवकृष्णपक्षेचतुर्दशीत्यादिवाक्यैःकृष्णाष्टम्याःपूर्वविद्धायाएवप्राशस्त्यविधानात् ॥ कृष्णपक्षनवम्यांदेवीप्रबोधनमष्टम्यांदेवीपूजनंचदेवीपुराणएवोक्तम्॥ यथा ॥ कन्यायांकृष्णपक्षेतुपूजयित्वार्द्रभेऽपिवा ॥ नवम्यांबोधयेद्देवींगीतवादित्रनिःस्वनैरिति॥ अत्रपूजयित्वेतिपूजनक्रियायाःसमानकर्तृकायाःपूर्वकालइतिक्त्वाप्रत्ययस्यनवम्यांप्रबोधयेदितिबोधनक्रियाकालान्नवमीरूपात्पूर्वकाले नवमीरूपात्पूर्वकालेष्टमीरूपविधानात् ॥ क्त्वाप्रत्ययसामर्थ्यादेवाष्टम्यांपूजानिश्चीयते ॥ आर्द्रभेपिवेत्यार्द्रानक्षत्रसहयोगाभिधानात् ॥ आर्द्रानक्षत्रस्यचाष्टम्यामेवसंभवादष्टम्यांपूजा नवम्यांप्रबोधइत्यर्थः सिद्धोभवति ॥ एवमन्यान्यप्येवंविधानिवाक्यानिउक्तविषयएवयोज्यानीत्यविरोध ॥ किंचः ॥ अष्टमीद्वयेपिपूजनमविशेषेणदेवीमाहात्म्ये प्रोक्तम् ॥ यथा ॥ अष्टम्यांचचतुर्दश्यांनवम्यांचैकचेतसः ॥ स्तोष्यंतिचैवयेभक्त्यामममाहात्म्यमुत्तमामिति॥अत्राष्टम्यामित्यविशेषेणाष्टम्यामुपादानात्स्तोत्रपाठस्यचपूजापूर्वकत्वात्कृष्णाष्टम्यामपिदेवीपूजादेवीमाहात्म्यस्तोत्रपाठश्चप्राप्तः ॥ अतश्चविरुद्धवाक्यानिकृष्णपक्षाष्टमीविषयाण्येवेत्यलमतिप्रपंचेन ॥ दुर्गोत्सवरूपनारायणभोजराजीयादिनीर्णयग्रंथेष्वेतान्यांतरालिककृतानिस्मृतिविरुद्धत्वादनादरणीयानीत्युक्तम् ॥ ननुरूपनारायणीयभोजराजीयादिवा

क्येभ्योविश्वरूपानिबंधलिखितमुनिवचनानांवैशिष्ट्यात्प्रागल्भ्यमि
तिचेत्॥ न ॥तत्रतेषांवचनानांमुनिप्रणीतत्वमेवसंदिग्धम्॥यदिताानि
मुनिवचनानिस्युस्तर्हिवचनानीवतत्प्रणेतृमुनीनांनामापिलिख्येत ॥
नचलिखितमितितेषांमुनिप्रणीतत्वेसंदेहः॥इयंग्रंथशैली यन्मुनिना
मपुरःसरंवचनानिलिख्यंते ॥ किंच ॥ संतुवामुनिवचनानि ॥ तथापि
नसप्तमीविधपराणि ॥तथाहि॥ महाष्टम्याश्विनेमासिशुक्लाकल्याणका
रिणी ॥ सप्तम्यापियुताकार्यामूलेनतुविशेषतइतियद्वचनम् ॥इदंयत्र
सप्तमीविद्धाष्टमीपूर्वेदिने परदिनेकियन्मात्रापिनवर्धते ॥ सकला
नवम्येवतद्विषयम् ॥ किंच॥मूलेनतुविशेषतइतिमूलयोगवैशिष्ट्यवि
धिरयम् ॥सप्तम्यापियुताकार्येतिनिषिद्धापिसप्तमीयुतामूलेनयुताचेत्
कार्य्येतिमूलयोगवैशिष्ट्यविधेरर्थवादरूपमित्यपिशब्दात्प्रतीयते ॥
यथावैश्वदेवेतुनक्षत्रेपूजितादुःखदाभवेदित्युत्तराषाढायोगंनिषिध्यवि
श्वयुक्तापिकर्त्तव्याअष्टमीनवमीयुतेति नवमीयुताविधेः प्रशंसार्थंपु
नर्विधिः॥ एवमत्रापि सप्तमीशल्यसंविद्धावर्जनीयासदाष्टमीतिसप्तमी
विद्धायानिषेधेपिमूलयोगविधेःप्रशंसार्थंपुनर्विधिः ॥किंच ॥ सप्तमीवि
द्धाविधिःकृष्णपक्षेसिद्धत्वादनुवाद्यः मूलयोगप्राशस्त्यविधेःसांनि
ध्यस्यसिद्ध्यर्थमुपदिश्यते ॥ तथाचोक्तं मीमांसैकदेशिना ॥ भूतभ
व्यसमुच्चारणेभूतंभव्यायोपदिश्यतइति ॥ भूतमनुवाद्यंभव्यंसा
ध्यंतयोःसमुच्चारणेसहाभिधानेभूतभव्यसिद्ध्यर्थमुपदिश्यतइत्यर्थः॥
तथाचयत्परःशब्दःसशब्दार्थइत्यनुवाद्यस्यविधेयएवतात्पर्याभिधा
नात्सप्तमीविद्धाविधेर्मूलयोगवैशिष्ट्यविधिपरत्वमेवन्याय्यम्॥ नसप्त
मीविद्धाविधानार्थत्वम् ॥ यच्चवचनम्॥ महाष्टम्यांभगवतिभद्रायाम
पिपूजिता ॥ ददातिचायुरारोग्यंयतोभद्रास्वरूपिणीति ॥ अत्रापिभ
द्राशब्दोनसप्तमीवचनः ॥ किंतुविष्टिकरणवचनः ॥ तत्रसंपूर्णाष्ट
म्यांदिवाविष्टिसंभवाद्दिवारात्रिविहितेपूजाद्वयेतावद्दिवापूजासकल

कार्येविरुद्धेपिविष्टिकरणेकार्यैत्यर्थः ॥ तदतिक्रमणेप्रत्यवायश्रव णात् ॥ यथा ॥ विष्टिंत्यक्त्वामहाष्टम्यांममपूजांकरोतियः ॥ तस्य पूजाफलंनस्यात्तेनाहमवमानितेति ॥ पूजाद्वयविधानंचपुराणप्रसि द्धं यथाभविष्योत्तरे ॥ तत्राष्टम्यांभद्रकालीदक्षयज्ञविनाशिनी ॥ प्रादुर्भूतामहाघोरायोगिनीकोटिभिःसह ॥ हितार्थंपूजनीयासातस्मि न्नहनिमानवैरिति ॥ अत्राहनीतिश्रवणात्दिवापूजाप्रतीयते ॥तथा निशायांपूजितादेवीवैष्णवीपापनाशिनी ॥ तस्मात्सर्वप्रयत्नेनअष्ट म्यांनिशिपूजयेदिति ॥ यत्तुभोजराजीयवचनम् ॥ नदिवाननिशासु चविष्टिहतानचसप्तमिशल्यसमोपहतेति ॥ इदंसप्तमीशल्यनिषेधप रम् ॥ सप्तमीविद्धायाएवदिवारात्रौचविष्टिहतत्वसंभवात् ॥ नकेलं दिवाविष्टिहता ॥ रात्रावपिविष्टिहतानकार्यैत्यर्थः ॥ इदंचसंभवा भिप्रायंवेदितव्यम् ॥ अतश्चयान्यन्यान्यप्येवंविधानिवाक्यानि तान्युक्तविषयेष्वेवयोजनीयानीति ॥ नकिंचिद्विश्वरूपवाक्यानांवै शिष्ट्यम् ॥रूपनारायणादिभिरष्टमीसामान्यनिर्णयवाक्यान्येवलिखि तानि नमहाष्टमीविशेषनिर्णयवाक्यानीतिचनाशंकनीयम् ॥ यतः ॥ आश्वयुक्शुक्लपक्षेतुयाष्टमीमूलसंयुतेति ॥ कन्यागतेसवितरिशुक्ल पक्षेष्टमीतुयेति॥ तथा ॥ मूलेनापिहिसंयुक्तासदात्याज्याष्टमीबुधैः ॥ लेशमात्रेणसप्तम्याअपिस्याद्यदिदूषितेति ॥ इत्यादिवाक्यानितत्रैव लिखितानि तानिनसामान्यनिर्णयपराणि ॥ आश्वयुजीति क न्यागतइति मूलयुक्तेत्यादिविशेषलिंगैर्महाष्टम्याएवप्रतिपादनात्॥ तथा अनंतभट्टीयादिषु महाष्टम्यादिविशेषनिर्णयो नकृत इति चनाशंकनीयम् ॥ तेषांग्रंथकर्तॄणामियंशैली यत्रसामान्यनिर्ण येनैवविशेषनिर्णयोदीपोत्सवमहाष्टम्यादिषुसतुनप्रपंचितः ॥ तत्रतुन सामान्येनविशेषसिद्धिः ॥ तत्रजन्माष्टम्यादौविशेषनिर्णयःप्रपंचित इति ॥ अतश्चतदनुक्तःकश्चिद्विशेषोनाधुनिकनिबंधकारैःकृतइति

मंतव्यम् ॥ एवंसतिचिरंतनानंतभट्टादिनिर्णयानांस्मृतिमूलत्वात्॥ तद्विरुद्धनिर्णयस्त्वप्रामाणिकत्वादुपेक्षणीयइत्यलमतिविस्तरेण ॥ ॥ अथात्रैवकश्चिद्विशेषोलिख्यते ॥ यदुक्तंविश्वरूपनिबंधे ॥ आश्विनस्यसितेपक्षेप्रारब्धेनवरात्रके ॥ शावेसूतेसमुत्पन्नेक्रियाकार्याकथंबुधैरितिप्रश्ने सूतकंवर्तमानेचेत्तत्रोत्पन्नंयदाभवेत् ॥ देवीपूजाप्रकर्त्तव्यापशुयज्ञविधानतः ॥ तत्रनवरात्रेवर्तमानेसूतकंयदोत्पन्नंभवेदित्यन्वयः ॥ यथा ॥ सूतकेपूजनंप्रोक्तंदानंचैवविशेषतः ॥ देवीमुद्दिश्यकर्त्तव्यंतत्रदोषोनविद्यतइति ॥ अत्रप्रारब्धेदेवीपूजादिकेसूतकादौप्राप्तेसतिस्वयमेवपूजादिकुर्यादितिविधानादर्थात्प्राप्तप्रारब्धमेग्निहोत्रादिवत्कारयितव्यमिति ॥ ॥ अथनवरात्रेदेवीपूजाविधिक्रियालिख्यते ॥ ॥ यथा ॥ आश्विनशुक्लप्रतिपदिकृतस्नानएकभक्तादिनियमंगृहीत्वानवमींयावद्वक्ष्यमाणलक्षणेमंडपेवक्ष्यमाणलक्षणांदेवींसंस्थाप्यवक्ष्यमाणविधिनादेव्यामहापूजांकुर्यात् ॥ तत्रमंडपलक्षणंभविष्योत्तरेप्रोक्तम् ॥ दुर्गागृहंप्रकर्त्तव्यंचतुरस्रंसुशोभनम् ॥ रहस्यंस्वस्तिकाद्यैश्चार्चितंवस्त्रादिमंडितम् ॥गौरमृद्गोमयाभ्यांचलिप्तंशस्त्रसमन्वितम्॥तन्मध्येवेदिकाकार्याचतुर्हस्तसमाशुभा ॥तस्यांसिंहासनंक्षौमकंबलाजिनसंयुतम् ॥तत्रदुर्गांप्रतिष्ठाप्यसर्वलक्षणसंयुताम् ॥ सर्वदेवमयींप्रौढांयौवनोन्मादशालिनीम् ॥भुजैश्चतुर्भीरुचिरैर्दशभिर्वाविभूषिताम् ॥ तप्तहाटकवर्णांगींत्रिनेत्रांशशिशेखराम् ॥ पीताम्बरपरिधानांनीलकौशेयसंयुताम् ॥ ग्रैवेयहारकेयूरनूपुराभरणान्विताम् ॥ नानारत्नविचित्रेणमुकुटेनविराजिताम् ॥ अनेककुसुमाकीर्णांकपर्दैनसुशोभिताम् ॥ नितम्बबिंबसंबद्धकिंकिणीक्वाणनादिनीम् ॥ शूलचक्रगदाशक्तिवज्रचापासिधारिणीम् ॥ घण्टाक्षमालाकरकपानपात्रलसत्कराम् ॥ तदग्रेछिन्नशिरसंमहिषं रुधिरप्लुतम् ॥ निःसृतार्धतनूकंठनालंचर्मासिधारिणम्॥देवीकरधृतग्रीवंशूलेनोरसिताडितम् ॥

१ चतुर्हस्ता समा शुभेत्यपि पाठः ।

दैत्यंकरालदंष्ट्रास्यंविद्युत्कपिशमूर्धजम् ॥ नागपाशेनविक्षिप्तंहर्यक्षेणा पिविद्रुतम् ॥ वमद्रुधिरवक्रेणधुन्वन्नूर्ध्वसटंरुषा ॥ ऊर्ध्वलांगूलदंडेन देव्यधिष्ठानशोभिना ॥ सर्वतोमातृचक्रेणसेव्यमानांसुरैस्तथा ॥ पूजयेत्प्रयतोदेवींनरोनियममास्थितइति ॥ अत्रनियमाश्चदेवीपुराणे एवोक्ताः ॥ कन्यासंस्थेरवौशक्रशुक्लामारभ्यनंदिकाम् ॥ अयाची ह्यथवैकाशीनक्ताशीवाथवाग्यतः ॥ नन्दिकाम्प्रतिपदम् ॥ मार्कण्डे यपुराणेपि ॥ निराहारौयतात्मानावित्युक्तत्वात् ॥ शक्तौसत्यां निराहारोवास्यात्॥विध्यंतरंचदुर्गोत्सवेप्रोक्तम् ॥ भूमौशयीतचामंत्र्य कुमारीर्भोजयेन्मुदा ॥ वस्त्रालंकारदानैश्चसंतोष्याः प्रतिवासरम् ॥ बलिंचप्रत्यहंदद्यादोदनंमांसमाषवत् ॥ त्रिकालंपूजयेद्देवींजपस्तोत्र परायणइति ॥ जपोगुरूपदिष्टविधिनामंत्रस्य ॥ स्तोत्रंसप्तशति कादि ॥ तत्रसप्तशतिकायाःपाठविधिर्दुर्गोत्सवेप्रोक्तः ॥ यथा ॥ सुस्नातःप्रक्षालितवस्त्रंपरिधायचंदनमृगमदकुंकुमैः सर्वांगमनुलि प्यत्रिपुंड्रंकृत्वापूर्वाभिमुखोदेवीमुखोवामसुखोवासम्यगुपविश्यसोपग्र हपाणिराचम्याभिमतकामनाप्राप्त्यर्थंसप्तशतिकापाठंकरिष्यइतिसंक ल्प्यैकाग्रमनाःसंभाषणादिपरिहरन्दिशोनवलोकयन्देवींमनसाध्या त्वासंपूर्णवर्णस्वरोच्चारतत्परःपदमात्रविभक्तिविवेकज्ञानवान्पठेदि ति॥नवरात्रेशुक्लप्रतिपदमारभ्यनवमीपर्यंतंप्रतिदिनमेकैकांकुमारीमे कोत्तरवृद्ध्याद्विगुणवृद्ध्यावाप्रतिदिनंनवनवापिवा वैभवानुसारेणसं पूज्यभोजयेत्॥तदुक्तंस्कंदपुराणे ॥एकैकांपूजयेत्कन्यामेकवृद्ध्यात थैवच॥ द्विगुणंद्विगुणंवापिप्रत्येकंनवकंतुवा ॥नवभिर्लभतेभूमिमैश्वर्यं द्विगुणेनच ॥ एकवृद्ध्यालभेत्क्षेममेकैकेनश्रियंलभेत्॥एकवर्षातुया कन्यापूजार्थंतांविवर्जयेत् ॥गंधपुष्पफलादीनांप्रीतिस्तस्यानविद्यते॥ द्विवर्षकन्यामारभ्यदशवर्षावधिक्रमात् ॥ पूजयेत्सर्वकार्येषुयथावि ध्युक्तमार्गतः॥कुमारिकाद्विवर्षाचत्रिवर्षाचत्रिमूर्तिनी ॥ चतुर्वर्षातुक

ल्याणीपंचवर्षातुरोहिणी ॥ षड्वर्षातुभवेत्कालीसप्तवर्षातुचंडिका ॥
अष्टवर्षाशांभवीतुदुर्गातुनवभिःस्मृता ॥ दशवर्षासुभद्रेतिनाम्नातु
परिकीर्तिता ॥ अतऊर्ध्वंतुयाकन्यासर्वकार्येषुवर्जिता ॥ दुःखदारि
द्र्यनाशायशत्रूणांनाशनायच ॥ आयुष्यबलवृद्ध्यर्थंकुमारींपूजयेन्नरः॥
आयुष्कामस्त्रिमूर्तिंतुत्रिवर्गस्यफलाप्तये ॥ अपमृत्युव्याधिपीडादुः
खानामपनुत्तये ॥ सर्वसौख्यधनारोग्यपुत्रपौत्रादिवृद्धये ॥ कल्या
णींपूजयेद्धीमान्नित्यंकल्याणवृद्धये ॥ आरोग्यसुखकामीचजयका
मीतथैवच ॥ यशःकामीनरोनित्यंरोहिणींपरिपूजयेत् ॥ विद्यार्थीचज
यार्थीचराज्यार्थीचविशेषतः॥शत्रूणांचविनाशार्थंकालिकांपूजयेन्नरः॥
ऐश्वर्यंशुभकामीचस्वर्गकामीचयोनरः ॥ संग्रामेजयकामीचचंडि
कांपरिपूजयेत् ॥ दुःखदारिद्र्यनाशायनृपसंमोहनायच ॥ महापापवि
नाशायशांभवींचप्रपूजयेत् ॥ सबलोत्कटशत्रूणामुग्रसाधनकर्माणि ॥
दुर्गांदुर्गविनाशायपूजयेत्सततंबुधः ॥ सौभाग्यधनधान्यादिवांछि
तार्थफलाप्तये ॥ सुभद्रांपूजयेन्मर्त्योदासीदासविवृद्धये ॥ अथपूजामं
त्राश्चतत्रैवोक्ताः॥ प्रातःकालेविशेषेणकृताभ्यंगोविशेषतः ॥ आवाहये
त्ततःकन्यांमंत्रेणानेनभार्गव॥आवाहनमंत्रः॥ मंत्राक्षरमयींलक्ष्मींमातॄ
णांरूपधारिणीम्॥नवदुर्गामिमांसाक्षात्कन्यामावाहयाम्यहम् ॥ ततः
संपूजयेद्धीमान्मंत्रैरेभिःपृथक्पृथक्॥ जगत्पूज्येजगद्वंद्येसर्वशक्तिस्वरू
पिणि ॥ पूजांगृहाणकौमारिजगन्मातर्नमोस्तुते ॥ इतिकुमारीपूजा ॥
त्रिपुरांत्रिपुराधारांत्रिवर्गज्ञानरूपिणीम् ॥ त्रैलोक्यवंदितांदेवींत्रिमूर्त्ति
पूजयाम्यहम् ॥ इतित्रिमूर्त्तिपूजा ॥ कलात्मिकांकलातीतांकारुण्य
हृदयांशिवाम् ॥ कल्याणज्ञानदांनित्यंकल्याणींपूजयाम्यहम् ॥ इति
कल्याणीपूजा॥अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम् ॥अनंतश
क्तिकांलक्ष्मींरोहिणींपूजयाम्यहम् ॥ इतिरोहिणीपूजा ॥ कामचारां
शुभांकांतांकालचक्रस्वरूपिणीम् ॥ कामदांकरुणोदारांकालींसं० ॥

इतिकालीपूजामंत्रः ॥ चंडवीरांचंडमायांचंडमुंडप्रभंजनीम् ॥ पूजयामिसदादेवींचंडिकांचंडविक्रमाम् ॥ चंडिकापूजामंत्रः ॥ सदानंदकरींशांतांसर्वदेवनमस्कृताम् ॥ सर्वभूतात्मिकांलक्ष्मींशांभवींपू० ॥ इतिशांभवीपूजामंत्रः ॥ दुर्गमेदुस्तरेकार्येभवदुःखविनाशनीम् ॥ पूजयामिसदाभक्त्यादुर्गांदुर्गार्तिनाशिनीम्॥इतिदुर्गापूजामंत्रः ॥ सुंदरींस्वर्णवर्णाभां सुखसौख्यप्रदायिनीम्॥सुभद्रजननींदेवींसुभद्रांपूजयाम्यहम्॥इतिसुभद्रापूजामंत्रः॥एवमभ्यर्चनंकुर्यात्कुमारीणांप्रयत्नतः॥ कंचुकैश्चैववस्त्रैश्चगंधपुष्पाक्षतादिभिः ॥ नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिरिति ॥ पूज्यापूज्यकुमारीस्वरूपंचतत्रैवनिरूपितम् ॥ हीनाधिकांगींकुष्ठांगींविशीलकुलसंभवाम् ॥ग्रंथिस्फुटितशीर्णांगींरक्तपूयव्रणांदिताम्॥जात्यंधांकेकरांकाणींकुरूपांतनुलोमशाम् ॥ संत्यजेद्रोगिणींकन्यांदासीगर्भसमुद्भवाम्॥ अरोगिणींसुपुष्टांगींसुरूपांव्रणवर्जिताम्॥ एकवंशसमुद्भूतांकन्यांसम्यक्प्रपूजयेत् ॥ ब्राह्मणींसर्वकार्येषुजयार्थेनृपवंशजाम्॥ लाभार्थेवैश्यवंशोत्थांसुतार्थेशूद्रवंशजाम् ॥ दारुणेचांत्यजातीनांपूजयेद्विधिनानरइति ॥ नवरात्रेदेवीपूजाकरणासमर्थेमहाष्टम्यामेवकुर्यात्॥ तदुक्तंब्रह्मांडपुराणे॥अत्राष्टम्यांभद्रकाली दक्षयज्ञविनाशिनी ॥ प्रादुर्भूतामहाघोरायोगिनीकोटिभिःसह ॥ अतोर्थंपूजनीयासातस्मिन्नहनिमानवैः ॥ उपोषितैर्वस्त्रधूपदीपैर्माल्यानुलेपनैः॥आमिषैर्विविधैःशाकैर्होमैर्ब्राह्मणतर्पणैः॥बिल्वपत्रैः श्रीफलैश्च चंदनेनघृतेनच ॥ नवम्यांतुकृतस्नानैःसर्वैःपूज्यास्तुब्राह्मणाइति ॥ अथाश्ववद्भिर्नृपैराश्विनशुक्लप्रतिपदमारभ्य महानवमींयावदश्वशांत्यर्थंलोहाभिसारिकंकर्मकार्यम् ॥ यथोक्तंदेवीपुराणे ॥ आश्वयुक्शुक्लप्रतिपत्स्वातियोगेशुभेदिने ॥ पूर्वमुच्चैःश्रवानामप्रथमंश्रियमावहेत् ॥ तस्मात्साश्वैर्नरैस्तत्रपूज्योऽसौश्रद्धयासदा ॥पूजनीयाश्चतुरगानवमींयावदेवहि ॥ शांतिःस्वस्त्ययनंकार्यंतदातेषांदिनेदिने ॥

धान्यंभल्लातकंकुष्ठंवचासिद्धार्थकांस्तथा॥पंचवर्णेनसूत्रेणग्रंथिंतेषांतु बंधयेत् ॥ वायव्यैर्वारुणैःसौरैःशाक्तैर्मंत्रैःसवैष्णवैः ॥ वैश्वदेवैस्तथाग्नेयैर्होमःकार्योदिनेदिने॥तुरगारक्षणीयास्तुपुरुषैःशस्त्रपाणिभिः॥नचताड्याःक्वचित्तत्रनचवाह्याःकथंचनेति ॥ भविष्योत्तरेविशेषउक्तः ॥ कन्यागतेसवितरिशुक्लपक्षेष्टमीतुया ॥ मूलनक्षत्रसंयुक्तासामहानवमीस्मृता ॥ तस्यांसदापूजनीयाचामुंडामुंडमालिनी ॥ तस्यांयेह्युपयुज्यंतेप्राणिनोमहिषादयः ॥ सर्वेतेस्वर्गतिंयांतिघ्नतांपापंनविद्यते ॥ यावन्नचालयेद्गात्रंपशुस्तावन्नहन्यते ॥ नतथाबलिदानेनपुष्पधूपविलेपनैः ॥ यथासंतुष्यतेमेषैर्महिषैर्विंध्यवासिनी ॥ बलिदानंचमांसमाषसहितौदनेनक्रियमाणम् ॥ एवंचविंध्यवासिन्यांनवरात्रोपवासिनः॥एकभुक्तेननक्तेनस्वशक्त्यायाचितेनवा॥ पूजनीयाजनैर्देवीस्थानेस्थानेपुरेपुरे ॥ स्नातैःप्रमुदितैर्हृष्टैर्ब्राह्मणैःक्षत्रियैर्नृप ॥ वैश्यैःशूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्चमानवैः ॥ स्त्रीभिश्चकुरुशार्दूलतद्विधानमिदंशृणु ॥ जयाभिलाषीनृपतिःप्रतिपत्प्रभृतिक्रमात् ॥ लोहाभिसारिकंकर्मकारयेद्यावदष्टमी॥लोहाभिसारिकविधानंतत्रैवोक्तम् ॥ प्रागुदक्प्रवणेदेशेपताकाभिरलंकृतम् ॥ मंडपंकारयेद्दिव्यंनवसप्तकरंवरम् ॥ षोडशहस्तप्रमाणमित्यर्थः ॥ आग्नेय्यांकारयेत्कुंडंहस्तमात्रंसुशोभनम् ॥ मेखलात्रयसंयुक्तंयोन्याश्वत्थदलाभया ॥ राजचिह्नानिसर्वाणिशस्त्राण्यस्त्राणियानिच ॥ आनीयमंडपेतानिसर्वाण्यत्राधिवासयेत् ॥ ततस्तुब्राह्मणःस्नातःशुक्लांबरधरःशुचिः ॥ ओंकारपूर्वकैर्मंत्रैस्तल्लिंगैर्जुहुयाद्घृतम्॥लोहनामाऽभवत्पूर्वंदानवस्तुमहाबलः॥सदेवैःसमरेक्रुद्धैर्बहुधाशकलीकृतः॥तदंगसंभवंसर्वंलोहंयद्दृश्यतेक्षितौ॥शस्त्रास्त्रमंत्रैर्होतव्यंपायसंघृतसंयुतम्॥हुतशेषंतुरंगाणांराजानमुपहारयेत् ॥लोहाभिसारिकंकर्मतेनैतदृषिभिःस्मृतम् ॥ धृतपल्याणकानश्वान्गजांश्चसमलंकृतान्॥भ्रामयेन्नगरेनित्यंनंदिघोषपुरस्कृतान्॥प्रत्यहंनृपतिःस्ना

१ असिलोमेतिपाठांतरम्।

त्वासंपूज्यपितृदेवताः॥पूजयेद्राजचिह्नानिफलमाल्यविलेपनैः॥तस्या
भिसरणाद्राज्ञोविजयःसमुदाहृतः॥पूजामंत्रान्प्रवक्ष्यामिपुराणोक्तानहं
तव॥यैःपूजिताःप्रयच्छंतिकीर्तिमायुर्यशोबलमिति॥तत्रादौछत्रमंत्रः॥
यथांबुदाश्छादयंतिशिवायेमांवसुंधराम्॥ तथाच्छादयराजानंविजया
रोग्यवृद्धयइति ॥ अथचामरमंत्रः ॥ शशांककरसंकाशक्षीरपिंडीरपां
डुर॥प्रोत्सारयाशुदुरितंचामरामरदुर्लभेति ॥अथाश्वमंत्रः ॥ गंधर्वकु
लजातस्त्वंमाभूयाःकुलदूषकः ॥ ब्रह्मणःसत्यवाक्येनसोमस्यवरु
णस्यच ॥ प्रभावाच्चहुताशस्यवर्धयत्वंतुरंगमान् ॥ तेजसाचैवसूर्य
स्यमुनीनांतपसातथा ॥ रुद्रस्यब्रह्मवीर्येणपवनस्यबलेनच ॥ स्मर
त्वंराजपुत्रत्वंकौस्तुभंचमणिंस्मर ॥ यांगतिंब्रह्महागच्छेन्मातृहापि
तृहातथा ॥भूमिहाऽनृतवादीचक्षत्रियश्चपराङ्मुखः॥सूर्याचन्द्रमसौवा
युर्यावत्पश्यंतिदुष्कृतम् ॥ व्रजाश्वतांगतिंक्षिप्रंतच्चपापंभवेत्तव ॥
निकृत्तोयदिवाछिन्नोयुधेध्वानितुरंगम ॥ रिपून्विजित्यसमरेसहभर्त्रा
सुखीभवेति ॥ अथध्वजमंत्रः ॥ शक्रकेतोमहावीर्यश्यामवर्णार्चया
म्यहम् ॥ पत्रिराजनमस्तेस्तुतथानारायणध्वज ॥ गरुत्मन्मारुतग
तेत्वयिसंनिहितान्यतः ॥ सारवंत्यायुधान्यत्ररक्षत्वंचारिपुंदहेति ॥
॥ अथपताकामंत्रः ॥ हिरण्यकशिपोर्युद्धेयुद्धेदेवासुरेतथा ॥ का
लनेमिवधेयद्वद्यद्वत्रिपुरघातने ॥ शोभितासितथैवाद्यशोभयास्मांश्च
संस्मर ॥ पूतनारेवतीनाम्नीकालरात्रिश्चयास्मृता ॥ दहस्याशुरिपू
न्सर्वान्पताकेत्वंमयार्चितेति ॥ अथहस्तिमंत्रः ॥ कुमुदैरा
वणौपद्मःपुष्पदंतोऽथवामनः॥सुप्रतीकोंजनोनीलएतेष्टौदेवयोनयः ॥
तेषांपुत्राश्चपौत्राश्चवनान्यष्टौसमाश्रिताः॥मंद्रोभद्रोगजश्चैवराजासंकी
र्णएवच ॥ वनेवनेप्रसूतास्तेयूथानितुमहांतिच ॥ पांतुत्वांवसवोरुद्रा
आदित्याःसमरुद्गणाः ॥ भर्तारंरक्षनागेंद्रस्वामीचप्रतिपाल्यताम् ॥
अवाप्नुयाज्जयंयुद्धेगमनेस्वास्तितोव्रजेति ॥ अथखड्गमंत्रः ॥

स्वयंभुवासमःखड्गस्तीक्ष्णधारोदुरासदः॥श्रीगर्भोविजयश्चैवधर्माधार स्तथैवच॥ इत्यष्टौतवनामानिस्वयमुक्तानिवेधसा॥ हिरण्यस्वश रीरंतेधातादेवोजनार्दनः॥ पितामातामहादेवतन्मेपालयसर्वदेति॥ ॥ अथचापमंत्रः॥ सर्वायुधमहामात्रसर्वदेवारिसूदन॥ चापमांस वेदारक्षसाकंसायकसत्तमेति॥ धृतंकृष्णेनरक्षार्थंसंहारार्थंहरेणच॥ त्रयीमूर्तिगतंदेवंचतुरस्त्रंनमाम्यहम्॥ अथच्छुरिकामंत्रः॥ सर्वायुधा नांप्रथमानिर्मितासिपिनाकिना॥ शूलायुधाद्विनिष्कृष्यकृत्वामुष्टि ग्रहंशुभम्॥चंद्रिकायाःप्रदत्तासिसर्वदुष्टनिबर्हिणी॥ तथाविस्तारिता चासिदेवानांप्रतिपादिता॥ सर्वसत्वांगभूतासिसर्वाशुभनिवारिणी॥ छुरिकेरक्षमांनित्यंशान्तियच्छनमोस्तुतइति॥ अथकनकदंडमंत्रः॥ प्रोत्सारणायदुष्टानांसाधूनांरक्षणायच॥ ब्रह्मणानिर्मितश्चासिव्य वहारप्रसिद्धये॥ यशोदेहिसुखंदेहिजयदोभवभूपतेः॥ ताडयस्व रिपून्सर्वान्हेमदण्डनमोस्तुतइति॥ अथदुंदुभिमंत्रः॥ दुंदुभेत्वंसपत्ना नांघोरोहृदयकंपनः॥ भवभूमिपसैन्यानांतथाविजयवर्धनः॥यथाजी मूतघोषेणप्रहृष्यंतिचबर्हिणः॥ तथास्तुतवशब्देनहर्षोस्माकंमुदावह इति॥ अथशंखमंत्रः॥ पुण्यस्त्वंशंखपुण्यानांमंगलानांचमंगलम्॥ विष्णुनाविधृतोनित्यमतःशांतिप्रदोभवेति॥ अथसिंहासनमं त्रः॥ विजयोजयदोयंतारिपुघातीशुभंकरः॥ दुर्वहोधर्मदःशां तः सर्वारिष्टविनाशनः॥ एतेष्टौसंनिधौयस्मात्तवसिंहामहाबलाः॥ तेनसिंहासनेतित्वंमंत्रैर्वैदैश्वगीयसे॥ नमस्तेसर्वतोभद्रभद्रदोभवभू पतेः॥ त्रैलोक्यजयसर्वस्वसिंहासननमोस्तुतइति॥ तथैवकर्मचि ह्नानिस्वानिपूज्यानिशिल्पिभिः॥ लोहाभिसारिकंकर्मकृत्वैवंमंत्र पूर्वकम्॥ नियमंकृत्वातथाष्टम्यांपूर्वाह्णेस्नानमाचरेत्॥ कुंकुमचं पकचंदनचतुःसमैःशलपिष्टैश्च॥ चर्चितगात्रांदेवींकुसुमैरभ्यर्चये द्बहुभिः॥ कुमुदैःसपद्मपुष्पैःसधूपदीपैःसनैवेद्यैः॥ मांसैर्बल्युप

हारैर्मंगलशब्दैःसमुच्चलितैः ॥ चिह्नितच्छत्रैर्यानैःस्यंदनसितशस्त्रधारिजनलोकैः ॥ तुष्टैरश्वास्त्रादितुनिवेद्यतेसर्वमेवभगवत्यै ॥ अथपूजामंत्रः ॥ जयंतीमंगलाकालीभद्रकालीकपालिनी ॥ दुर्गाक्षमाशिवाधात्रीस्वाहास्वधानमोस्तुते ॥ अथबिल्वपत्रीमंत्रः ॥ अमृतोद्भवंश्रीवृक्षंमहादेवप्रियंसदा ॥ बिल्वपत्रंप्रयच्छामिपवित्रंतेसुरेश्वरि ॥ दुर्गासापूजनीयाचतद्दिनेद्रोणपुष्पकैः ॥ सचाभीष्टःसुरेशान्यास्तस्यारूढायतोग्रतः ॥ ततःखङ्गंनमस्कृत्यशत्रूणांवधसिद्धये ॥ इच्छेतविजयंराज्यंसुभिक्षंचात्मनोनृपः ॥ पुनःपुनःप्रणम्यार्यांसंस्मरेद्धृदयेशिवाम्॥सर्वंकृत्वेतिकौरव्यह्यष्टम्यांजागरंनिशि॥नटनर्तकगीतैश्चकारयेत्सुमहोत्सवम् ॥ एवंहृष्टैर्निशांनीत्वाप्रभातेअरुणोदये॥ घातयेन्महिषान्मेषानटद्[1]उन्नतकंधरान् ॥ शतमर्धंशतंवापितदर्धंवायथेच्छया ॥ सुरासवभृतैःकुंभैस्तर्पयेत्परमेश्वरीम् ॥कापालिकेभ्यस्तद्देयंज्वलद्भिर्दीपवृक्षकैः ॥ कश्चिच्चोपोषितोधीरोविधृतोन्येनखङ्गवान्॥भूतेभ्यस्तुबलिंदद्यान्मंत्रेणानेनसामिषम् ॥ सरक्तंसजलंचान्नंगंधपुष्पाक्षतैर्युतम् ॥ त्रींस्त्रीन्वारान्सशूलेनदिविदिक्षुकिरेद्बलिम् ॥ मंत्राश्च॥बलिंगृह्णंत्विमंदेवाआदित्यावसवस्तथा ॥ मरुतश्चाश्विनौरुद्रासुपर्णाःपन्नगाग्रहाः ॥ असुरायातुधानाश्चपिशाचोरगराक्षसाः ॥ डाकिन्योयक्षवेतालायोगिन्यःपूतनाःशिवाः ॥ वीराश्चभैरवाश्चैवपूतनामातृमंडलम् ॥ दिक्पालालोकपालाश्चयेचविघ्नविनायकाः ॥ जगतांशांतिकर्तारोब्रह्माद्याश्चमहर्षयः ॥ माविघ्नंमाचमेपापंमासंतुपरिपंथिनइति ॥ महानवम्यांसंतुष्टाःकृत्वादुर्गामहोत्सवम् ॥ तेसर्वेपापनिर्मुक्तायांतिभागवतींपुरीम् ॥ इत्येतत्तेसमाख्यातंदुर्गादेव्यामहोत्सवम् ॥ पठतांशृण्वतांचापिसर्वाशुभनिवारणमिति ॥ ॥ इतिमहाऽष्टमीनिर्णयः॥ ॥अथदुर्गोत्सवप्रसंगाद्दशम्यामपराजितापूजाविधिः ॥ ॥ यथा ॥ दशम्यांपूजयित्वातुमृन्मयींचापराजिताम् ॥

१ रुदतोनतकंधरानितिपाठः ।

कलशिकांतोयसंपूर्णांजयंतीपल्लवाननाम् ॥ चतुर्वर्णैस्तदायात्राक र्त्तव्यासाधनेनच ॥ दशम्यांचबलंराजापूजयित्वापराजिताम् ॥ दशदिक्षुमनोयोगाद्यात्रांकृत्वाथवैनृपः ॥ नीराजनंस्वस्यकृत्वाततो नीराजयेद्बलमिति ॥ नीराजनमंत्रः ॥ चतुरंगंबलंमह्यंनिररिष्टंव्रज त्विह ॥ विजयोममसर्वत्रअस्तुयोगिप्रसादतः॥ ॥ इतिदुर्गोत्सवः॥ अथकार्तिकशुक्लाष्टमीगोपाष्टमी॥तत्रगोपूजाकार्या ॥ तदुक्तंकूर्मपुराणे॥ शुक्लाष्टमीकार्त्तिकेतुस्मृतागोपाष्टमीबुधैः ॥ तत्रपूजांगवांकुर्याद्गो ग्रासंगोप्रदक्षिणाम् ॥ गवानुगमनंकार्यंसर्वान्कामानभीप्सतेति॥ अथ पौषशुक्लाष्टमी ॥ साचबुधवारेणयुक्तामहाभद्रेत्युच्यते ॥ तत्र महेश्वरपूजादिकंकार्यम् ॥ तदुक्तंभविष्योत्तरपुराणे ॥ पौषेमासिय दादेविशुक्लाष्टम्यांबुधोभवेत् ॥ तदातुसामहापुण्यामहाभद्रेतिकी र्त्तिता ॥ तस्यांस्नानंजपोहोमस्तर्पणंब्रह्मभोजनम् ॥ मत्प्रीतयेम हादेविपूज्योहंविधिवद्बुधैरिति ॥ इयमेवभरणीनक्षत्रयोगेनतुजयंती प्रोच्यते ॥ यथाभविष्योत्तरे ॥ पौषेमासियदादेविअष्टम्यांनगजे शुभे ॥ नक्षत्रंजायतेपुण्यंयल्लोकेरौद्रमुच्यते ॥ तदातुसामहापु ण्याजयंतीअष्टमीशुभा ॥ तस्यांस्नानंतथादानंजपोहोमश्चतर्पणम्॥ सर्वंकोटिगुणंदेविकृतंभवतिकृत्स्नशइति ॥ रौद्रंभरणी ॥ वराहमिहिरेणयथाभाणि ॥ रौद्राणिपूर्वाभरणीपित्र्याणीति ॥ ॥ अथ माघशुक्लाष्टमीसाचभीष्माष्टमीत्युच्यते ॥ तत्रभीष्मतर्पणंश्रा द्धंचकार्यम् ॥ यथा ॥ माघमासिसिताष्टम्यांसतिलंभीष्मतर्पणम् ॥ श्राद्धंचयेसकृत्कुर्युस्तेस्युःसंततिभागिनइति ॥ अथफाल्गुनशुक्लाऽ ष्टम्यांलक्ष्मीःसीताचपूज्या ॥ यदेवान्नादिकंब्राह्मणेभ्योदत्तंतदेव भोज्यंनान्यत् ॥ तदुक्तंब्रह्मपुराणे ॥ प्रदत्तभुग्भिरष्टम्यांसुस्नातैः समलंकृतैः ॥ लक्ष्मीस्सीताचसंपूज्यागंधमाल्यादिभिस्तथा ॥ ततःप्रदोषसमयेदीपादेयाःसहस्रशः॥ दत्ताशिष्टंतदाभोज्यंभक्षितव्यंच

बंधुभिः॥ ॥अथबुधाष्टमी॥तस्यांसंपूर्णायांशुक्लाष्टम्यांयदायदाबुधवा रोभवतितदातदाकल्पोक्तविधिनाएकभक्तव्रतंकार्यम् ॥ तदुक्तंभवि ष्योत्तरे॥यदायदासिताष्टम्यांबुधवारोभवेद्यदि ॥ तदातदातुसाग्राह्या एकभक्ताशनेनृप ॥ बुधाष्टमीतुसंपूर्णायथोक्तफलदायिनी॥ ॥अथया निषिद्धातामाह ॥ ॥संध्याकालेतथारात्रौप्रसुप्तेचजनार्दने॥बुधाष्टमीन कर्त्तव्याहंतिपुण्यंपुराकृतामिति॥ ॥अथसिद्धविरुद्धादिकंचलिख्यते॥ अष्टमीभौमेनसिद्धा ॥ भौमेषष्ठीतृतीयास्यादष्टमीचत्रयोदशीति सिद्धत्वमुक्तम् ॥ गुरुणातुविरुद्धा ॥ यथा ॥ जीवेष्टमीचतुर्थीति॥ अत्रतृतीयावत्संग्रामबलोपयोगीनिकर्माणिकुर्यात् ॥ यथा ॥ जयासु विदधीताजिबलकार्याणिनिर्वृतइति ॥ अत्रतैलस्नानंमांसभक्षणंनारि केरभक्षणंचनिषिद्धम् ॥यथा॥नार्कोरवारेनचसंक्रमेपिनवैधृतौनव्यति पातयोगे ॥नपक्षमध्येनचविष्टिषष्ठ्योरभ्यंगइष्टोनचपर्वसूक्तः॥ पक्षम ध्येष्टम्याम्॥तथापलमष्टमीष्विति ॥तथाच॥अष्टम्यादिषुनाद्यादूर्ध्वग तीच्छुःकदाचिदपिविद्वान्॥शीर्षकपालांत्राणिचनखचर्मतिलानिचक्र मशइति॥अयमर्थः॥अष्टम्यांशीर्षंनारिकेलंनाद्यात्॥नवम्यांकपालंतुं बीफलम्॥दशम्यामंत्रंनालीशाकम्॥एकादश्यांनखानिशणपुष्पाणि॥ द्वादश्यांचर्मबिल्वम् ॥ त्रयोदश्यांतिलान् वार्त्ताकंचनाद्यादित्य र्थः ॥ तेषांभक्षणंशीर्षादिभक्षणतुल्यमित्यभिप्रायः ॥ तथाऽष्ट म्यांदिवानभोक्तव्यम् ॥ तदुक्तम् ॥ भूताष्टम्योर्दिवाभुक्त्वारात्रौ भुक्त्वातुपर्वणि ॥ एकादश्यामहोरात्रंभुक्त्वाचांद्रायणंचरेदिति ॥ अत्रचतुर्दश्यष्टमीचैवअमावास्याचपूर्णिमा ॥ पर्वाण्येतानिराजें द्ररविसंक्रांतिरेवचेत्यत्राष्टमीद्वयमेकंपर्व चतुर्दशीद्वयमेकममावास्या पूर्णिमासंक्रांतिश्चेतिपंचपर्वाणिकालादर्शोक्तत्वात् ॥ भूताष्टम्योरपि पर्वत्वेतयोःपृथगुपादानात्पर्वणीतिभूताष्टमीव्यतिरिक्तंपर्वगृह्यते ॥ अथवा ॥ शुक्लाष्टमीकृष्णचतुर्दशीचदर्शोथराकारविसंक्रमश्चेतिग्रंथा

१ चैत्रइतिपाठांतरम्।

तरे ॥ शुक्लाष्टमीकृष्णचतुर्दश्योरेवपर्वत्वाभिधानात् ॥ कृष्णाष्टमी शुक्लचतुर्दश्योरपिदिवाभोजननिषेधप्राप्त्यर्थं पर्वणीत्युक्त्वापि भूता ष्टम्योरितिपुनर्वचनम् ॥ पक्षद्वयगतासुसर्वास्वष्टमीषुतिथिषुतिथिप तित्वाच्छिवःपूज्यः ॥ अष्टम्यांचचतुर्दश्यामित्याद्युक्तमेव ॥ अष्टमी दशमीचक्रूरग्रहेतुलास्थितेसतिशुभकार्येषुवर्ज्या ॥ पराःपरेषामित्यु क्तमेव ॥ तथामिथुनकन्यास्थेरवावष्टमीदग्धा ॥ मिथुनाबलयोरि त्याद्युक्तमेव॥अष्टम्यामीशान्यांदिशियोगिन्यःप्रतिवसंति ॥ अतस्तत्र यात्रानकार्या॥वायव्येशान्ययोरित्याद्युक्तमेव ॥ ॥ इतिश्रीसूर्यसेनम हीमहेंद्रविरचितेनिर्णयामृतेअष्टमीनिर्णयः ॥ ॥ अथनवमीनिर्णयः ॥ नवमीतिथिरुपवासादिष्वष्टमीयुक्तैवग्राह्या ॥ यदुक्तम् ॥ वसुरंध्रयो रिति ॥ अथलघुतिथिनिर्णयः पद्मपुराणे ॥ अष्टम्यासहिताग्राह्या नकदाचित्परायुता॥चामुंडापूजनंकृत्वापारणंचततःपरमिति ॥ तथा देवीपुराणेप्युक्तम् ॥ अष्टम्यामुदितेसूर्येदिनांतेनवमीभवेत् ॥ पारणे सातिथिःप्रोक्ताबलिदानंपरेहनीति ॥ तथामत्स्यपुराणेपि ॥ अष्टम्या सहितारिक्ताकर्त्तव्यासर्वदाबुधैः ॥ पूर्णायुक्तांतदाकुर्यात्क्वचिन्नास्त्यष्ट मीयुतेति ॥ तथाचब्रह्मवैवर्त्ते॥ अष्टम्यानवमीविद्धाकर्त्तव्याफलकांक्षि भिरित्यष्टमीविद्धनवमीविधानात् ॥ तथा ॥ नकुर्यान्नवमींतात दशम्यांतुकदाचन ॥ तथा ॥ नवमीदशमीचैवनोपोष्यापरसं युतेतिपरविद्धानिषेधाच्च॥नवम्यष्टमीयुतैवोपोष्येतिसिद्धांतः ॥ ॥अ थवैशाखमासेउभयनवम्योरुपवासंकुर्याच्चंडिकांचपूजयेत् ॥ तदुक्तंभ विष्योत्तरे ॥ वैशाखेमासिराजेन्द्रनवम्यांपक्षयोर्द्वयोः ॥ उपवा सपरोभक्त्यापूजयानस्तु चंडिकाम् ॥ हंसकुंदेंदुसंकाशस्ते जसांबुधसंनिभः ॥ विमानवरमारूढोदेवलोकेमहीयत इति ॥ ज्येष्ठशुक्लनवम्यांब्रह्माणीनाम्नीमुमां संपूज्यब्राह्मणीःकुमारीश्चयथाश क्तिभोजयेत् ॥ तदुक्तंभविष्योत्तरे ॥ उपवासपरोभक्त्यानवम्यां

---

१ ध्रुवसन्निभइतिपाठांतरम् । २ ब्राह्मणानितिपाठांतरम् ।

पूजयेदुमाम्॥ब्रह्माणींत्विति वैनाम्नींश्वेतरूपेणरूपिणीम् ॥ज्येष्ठमासि नृपश्रेष्ठकृत्वानक्तस्यवैविधिम्॥ शाल्यन्नंपायसोपेतंस्वयंभुंजीतवाग्यतः॥कुमारींभोजयेच्चापिस्वशक्त्याब्राह्मणीस्तथेति॥अथापाढ्युभयाष्टम्योःपंचगव्यस्नातउपोषितोनवम्योर्हैमैरावणगतामैंद्रीनाम्नींदेवींपूजयित्वानक्तंकुर्यात् ॥ तदुक्तंभविष्योत्तरे ॥ उपवासपरोभक्त्या नवम्यांपक्षयोर्द्वयोः॥ आषाढेमासिराजेंद्रयःकुर्यान्नक्तभोजनम्॥पूजयेच्छ्रद्धयादुर्गामैंद्रीनाम्नींतुनामतः ॥ ऐरावणगतांसुभ्रांश्वेतरूपेणरूपिणीम्॥ स ऐरावणमारुह्यइंद्रस्यानुचरोभवेदिति॥ ॥अथश्रावणनवम्योःकौमारीनाम्नींदुर्गांसंपूज्यक्षीरान्नंनक्तंभुंजीत ॥ तदुक्तंभविष्योत्तरे ॥ श्रावणेमासिराजेंद्रयःकुर्यान्नक्तभोजनम् ॥क्षीरपाष्टिकभुक्तेन सर्वभूतहितेरतः॥ उपवासपरोवीरनवम्यांपक्षयोर्द्वयोः॥कौमारीमिति नाम्नींचचंडिकांपूजयेत्सदा ॥कृत्वारौप्यमयींभक्त्यावोरांवैपापनाशिनीम् ॥करवीरैश्चकुसुमैर्गंधैश्चागुरुचन्दनैः ॥ धूपेनचदशांगेनमोदकैश्चापिपूजयेत्॥ कुमारीभोजयेद्भक्त्यास्त्रियोविप्रांश्चशक्तितः॥भुंजीतवाग्यतःपश्चाद्बिल्वपत्रकृताशनः॥एवंयःपूजयेदार्यांश्रद्धयापरयान्वितः॥सयातिपरमंस्थानंयत्रदेवोवृषध्वजइति ॥ ॥अथभाद्रशुक्लनवम्यां नंदानाम्नींदुर्गांसंपूज्यविष्णुलोकंप्राप्नोति॥ तदुक्तंभविष्योत्तरे॥मासि भाद्रपदेयातुनवमीबहुलेतरा ॥ सातुनंदामहापुण्याकीर्तितापापनाशिनी ॥ तस्यांयःपूजयेद्दुर्गांविधिवत्कुरुनन्दन ॥ सोऽश्वमेधफलंविंद्याद्विष्णुलोकंचगच्छतीति ॥ अत्रैवकृष्णपक्षेनवम्यांदेवींबोधयेत्॥ तदुक्तंदेवीपुराणे ॥ कन्यायांकृष्णपक्षेतुपूजयित्वार्द्रभेपिवा ॥ नवम्यांबोधयेद्देवींगीतवाद्यादिनिःस्वनैरिति॥ ॥अथाश्विनशुक्लनवमीमन्वादिः॥ तदुक्तम्॥ आश्वयुक्शुक्लनवमीति ॥ ॥अथकार्तिकशुक्लनवमीयुगादिः॥ तदुक्तम्॥ नवम्यूर्जेयुगादयइति ॥ ॥अथमार्गशीर्षशुक्लनवमीनंदिनीत्युच्यते ॥ तस्यांत्रिरात्रोपोषितोदेवींसंपूज्याश्व

मेधफलंप्राप्नोति ॥ तदुक्तं भविष्योत्तरे ॥ मासिमार्गशिरेवीरशु क्लपक्षेतुयाभवेत् ॥ सानंदिनीमहापुण्यानवमीपरिकीर्तिता ॥ यस्त स्यांपूजयेद्देवींत्रिरात्रोपोषितोनरः ॥ सोऽश्वमेधमवाप्येहविष्णुलोके महीयतइति ॥ अथमाघशुक्लनवमीमहानंदाप्रोक्ता ॥ तस्यांस्ना नदानादिकृतमक्षय्यंभवति ॥ तदुक्तंभविष्योत्तरे ॥ माघमासेतु याशुक्लानवमीलोकपूजिता॥महानंदेतिसाप्रोक्तासदानंदकरीनृणाम् ॥ तस्यांस्नानंतथादानंजपोहोमउपोषितम् ॥ सर्वंतदक्षयंप्रोक्तंयद स्यांक्रियतेनरैरिति ॥ सर्वासुनवमीषुतिथिपतित्वेनसरस्वतीपूज्या ॥ तदुक्तम् ॥ सरस्वत्यानवम्यांचेति ॥ अथसिद्धविरुद्धादिकंलि ख्यते ॥ नवमीशनिवारेणसोमवारेणचसिद्धा ॥ यदुक्तम् ॥ शनौच तुर्थीनवमीति ॥ तथा ॥ सोमेतुनवमीपुष्यःश्रवणोरोहिणीमृगः ॥ एतानिसर्वदावत्ससिद्धिदानिस्वकर्मस्विति ॥ बुधवारेणविरुद्धा ॥ तृतीयानवमीत्याद्युक्तमेव ॥ नवम्यांशत्रुवधबंधनाद्युग्रकर्मका र्यम् ॥ तदुक्तम् ॥ चतुर्दश्यांचतुर्थ्यांतुनवम्यांचारिमर्दनमित्यादि ॥ अत्रामलकस्नानंनकुर्यात् ॥ तदुक्तम् ॥ सप्तम्यांनिंदुनवमीषुचेत्या दि ॥ अत्रदंतकाष्ठमपिवर्जयेत् ॥ तदुक्तंव्यासेन ॥ प्रतिपत्पर्व षष्ठीषुनवम्यांहरिवासरे ॥ दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलमि ति ॥ अत्रापिप्रतिपदीवयोगिनीसांमुख्यात्पूर्वदिशियात्रानकार्या ॥ वृश्चिकस्थेक्रूरग्रहेनवमीचाशुभाभवति ॥ उक्तंच ॥ पराःपरेषा मित्यादि ॥ नवम्यांतुंबीफलंनभक्षयेदित्युक्तमेव ॥ ॥ इति श्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेनवमीनिर्णयः ॥ ॥ अथ दशमीनिर्णयः ॥ ॥ दशमीतिथिरुपवासादिषु नवमीयुतैव ग्राह्या ॥ तदुक्तंपैठीनसिना ॥ पंचमीसप्तमीचैवदशमीचत्रयोदशी ॥ प्रतिपन्नवमीचैवकर्त्तव्यासंमुखीतिथिः ॥ आपस्तंबेनाप्युक्तम् ॥ अष्टमीनवमीविद्धाकर्तव्याफलकांक्षिभिः ॥ दशमीतुप्रकर्त्तव्यासदुर्गा

द्विजसत्तमेति ॥ यत्तुवचनम् ॥ संपूर्णादशमीकार्यापरयापूर्वयाथवा॥ युक्तानदूषितायस्मादतःसासर्वतोमुखीति॥ तत्तुपूर्वविद्धायाअलाभेउदयकालव्यापिनीग्राह्येत्येवपरम्॥ अथवैकादशीव्रतांगत्वेनक्रियमाणदशम्यामेकभक्तादिकंपरविद्धायांकार्यमितिसिद्धांतः॥अथचैत्रशुक्लदशम्यांयमपूजाकार्या॥यथादेवीपुराणे चैत्रमासतिथिकृत्यप्रक्रमे॥ धर्मराजंदशम्यांतुपूजयित्वासुगंधकैः ॥ विगतारिर्निरातंकइहचांतपरंपदमिति प्राप्नुयादितिशेषः ॥ अथज्येष्ठशुक्लदशमीदशहरेत्युच्यते॥यथास्कंदपुराणे॥ज्येष्ठस्यशुक्लदशमीसंवत्सरमुखीस्मृता ॥ तस्यांस्नानंप्रकुर्वीतदानंचैवविशेषतः॥यांकांचित्सरितंप्राप्यदद्याद्दर्भतिलोदकम् ॥ मुच्यतेदशभिःपापैःसमहापातकोपमैरिति ॥ अत्रैवब्रह्मपुराणेविशेषउक्तः ॥ ज्येष्ठमासिसितेपक्षेदशमीहस्तसंयुता ॥ हरतेदशपापानितस्माद्दशहरास्मृतेति॥भविष्योत्तरेत्वन्योविशेषउक्तः ॥यथा॥ ज्येष्ठेशुक्लदशम्यांचभवेद्भौमदिनंयदि ॥ ज्ञेयाहस्तर्क्षसंयुक्तासर्वपापहरातिथिरिति ॥ वराहपुराणेऽपि ॥ दशम्यांशुक्लपक्षेतुज्येष्ठमासिकुजेऽहनि ॥ अवतीर्णायतःस्वर्गाद्धस्तर्क्षेचसरिद्वरा ॥ हरतेदशपापानितस्माद्दशहरास्मृतेति॥स्कंदपुराणेतुदशहरायांदशयोगाउक्ताः ॥यथा॥ज्येष्ठमासिसितेपक्षेदशम्यांबुधहस्तयोः॥ व्यतीपातेगरानंदेकन्याचंद्रेवृषेरवाविति ॥ अत्रवाराहपुराणेकुजवारयोगउक्तः ॥ स्कंदपुराणेबुधवारयोगइतिविरोधः॥ सचकल्पव्यवस्थयापरिहरणीयः ॥ यथा ॥ अवतीर्णासरिद्वरेति अस्यांदशम्यांगंगावतारातिथित्वात्कस्मिंश्चित्कल्पेभौमवारयुक्तायांदशम्यांगंगावतीर्णा॥ कस्मिंश्चिद्बुधवारयुक्तायामित्यविरोधः ॥ दशपापानिचमनुनाप्रोक्तानि ॥ परद्रव्येष्वभिध्यानंमनसाऽनिष्टचिंतनम् ॥ वितथाभिनिवेशश्चमानसंत्रिविधंस्मृतम् ॥ पारुष्यमनृतंचैवपैशुन्यंचापिसर्वशः ॥ असंबद्धप्रलापश्चवाङ्मयंस्याच्चतुर्विधम् ॥ अदत्तानामुपादानंहिंसाचैवाविधानतः॥परदारोपसेवाच

कायिकंत्रिविधंस्मृतम्॥इयंदशहरायत्रैवयोगबाहुल्यंसैवकार्या ॥ इति दशहरानिर्णयः॥ ॥अस्यांदशम्यांगंगाजलेस्थितोदशवारान्स्कंदपुराणोक्तदशहरास्तोत्रपाठपूर्वकंस्नानंकुर्यात् ॥ तदुक्तंस्कंदपुराणे ॥ तस्यांदशम्यामेतच्चस्तोत्रंगंगाजलेस्थितः॥यःपठेद्दश कृत्वस्तुदरिद्रो वापिचाक्षमः॥सोपितत्फलमाप्नोतिगंगांसंपूज्ययत्नतइति ॥ गंगायाअसंभवेतीर्थांतरेष्वप्यनेनैवविधिनास्नानंकार्यम् ॥ नद्यांनद्यंतरंस्मृतमितिनिषेधस्तुगंगाव्यतिरिक्तविषयः ॥ यच्चोक्तंस्कंदपुराणे ॥ स्नानकालेऽन्यतीर्थेषुजप्यतेजाह्नवीजनैः ॥ विनाविष्णुपदींक्कान्यत्समर्थमघशोधनइति॥अघमर्षणविधौश्रुतिरप्याह ॥इमंमेगंगेयमुनेसरस्वतीति॥अतश्चगंगायमुनासरस्वतीशतद्रूणांस्मरणंतीर्थांतरेपिनदुष्यति॥ आश्विनशुक्लदशम्यांनवमीयुक्तायांश्रवणर्क्षयुक्तायां चापराजितापूजां कृत्वाप्रस्थानंकुर्यात्॥यदुक्तम्॥दशम्यांतुनरैःसम्यक्पूजनीयापराजिता॥ईशानींदिशमाश्रित्यअपराह्णेप्रयत्नतः ॥ तथापि ॥ संपूर्णानवमीयुक्तातस्यांपूज्यापराजिता ॥ क्षेमार्थंविजयार्थंचप्रसिद्धविधिनानरैः॥ नवमीशेषयुक्तायांदशम्यामपराजिता ॥ ददातिविजयंदेवीपूजिताजयवर्धिनी ॥ आश्विनेशुक्लपक्षेतुदशम्यांपूजयेन्नरः ॥ एकादश्यांनकुर्वीतपूजनंचापराजितम् ॥ स्कंदपुराणेपि॥दशमींयःसमुल्लंघ्यप्रस्थानं कुरुतेनृपः ॥ तस्यसंवत्सरंराज्येनक्वापिविजयोभवेत् ॥ इतिवचनाद्दशम्यामेवप्रस्थानंकार्यम् ॥ नचालस्यादिनादशमीमुल्लंघ्यैकादश्यां कार्यमितिनियमार्थम्॥नवमीयुक्तत्वंश्रवणासंभवेवेदितव्यम्॥श्रवणसंभवेतुश्रवणयुक्तायामेवदशम्यांप्रस्थानमपराजितापूजांच॥तदुक्तम् ॥ श्रवणर्क्षेतुपूर्णायांकाकुत्स्थःप्रस्थितोयतः ॥ उल्लंघयेयुः सीमानंतद्दिनर्क्षेततोनराइति ॥तथा॥श्रवणेचापराजितेतिच ॥ श्रवणाभावेतुकेवलदशम्यामेवकार्यम् ॥ तदुक्तंलल्लेनतिथेःप्राशस्त्ये ॥ तिथिःशरीरंतिथिरेवकारणंतिथिःप्रमाणंतिथिरेवसाधनमिति ॥ इतिविजयाद

शमीनिर्णयः ॥ ॥ पक्षद्वयगतासुसर्वास्वपिदशमीषुतिथिपतित्वेनां तकःपूज्यः ॥ यदुक्तम् ॥ दशम्यामंतकस्यापीति ॥ अथसिद्धविरुद्धादिकंलिख्यते ॥ दशमीगुरुवारेणसिद्धा ॥ यथा ॥ गुरौदशमी पंचम्याविति ॥ दशम्यांभौमवारेणककचयोगः॥दशम्यांपंचमीवन्मांगल्यविवाहयात्रादिकंकार्यमित्युक्तमेव ॥ सिंहकन्यातुलावृश्चिकराशिस्थितेक्रूरग्रहेदशमीअशुभाभवतीत्युक्तमेव ॥ एषांचतुर्णामपिपंचमीस्यादितिप्रागुक्तम्॥सिंहवृश्चिकस्थितेसूर्येदशमीदग्धाभवति ॥मृगेन्द्रकौप्यौरित्युक्तम्॥दशम्यांक्षत्रियादित्रयोवर्णाअभ्यंगस्नानंनकुर्युः । उक्तंच ॥ त्रयोदश्यांद्वितीयायांदशम्यामित्यादि॥ नालीकशाकंसर्वोऽपिनाद्यात् ॥ उक्तंच ॥ शीर्षकपालांत्राणीति ॥ दशम्यांयोगिनीसांमुख्यादुदग्दिग्गमनंनकुर्युः ॥ इति श्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेदशमीनिर्णयोजातः ॥ छ ॥ ॥ अथैकादशीनिर्णीयते ॥

एकादशीतिथिरुपवासादिषुरुद्रेणद्वादशीयुक्तेतियुग्मवाक्याद्यद्यपि द्वादशीयुतैवप्रशस्ता ॥ तथापिवृद्धिह्रासाभ्यांप्रपञ्चःप्रदर्शयिष्यते ॥ नन्वत्रैकादशीव्रतविषयेनित्यत्वविधायकानिकाम्यत्वविधायकानिच बहूनिवाक्यानिश्रूयंते ॥ तत्रनित्यत्वेयथा॥गरुडपुराणे ॥ उपोष्यैकादशीनित्यंपक्षयोरुभयोरपीति ॥ तथासनत्कुमारेणोक्तम् ॥ एकादशीसदोपोष्यापक्षयोःशुक्लकृष्णयोरिति ॥ विष्णुरहस्येपि ॥ द्वादशीनप्रमोक्तव्यायावदायुःसुवृत्तिभिरिति ॥ आग्नेयपुराणेपि ॥ उपोष्यैकादशीराजन्यावदायुःसुवृत्तिभिरिति ॥ कण्वोपि ॥ एकादशीमुपवसेन्नकदाचिदतिक्रमेदिति ॥ विष्णुस्मृतिरपि ॥ एकादश्यांनभुंजीतकदाचिदपिमानवइति ॥ तथा ॥ परमापदमापन्नोहर्षेवासमुपस्थिते ॥ सूतकेमृतकेवापिनत्याज्यंद्वादशीव्रतमिति ॥ अकरणेप्रत्यवायोपिसनत्कुमारेणदर्शितः ॥ यथा ॥ नकरोतिहियोमूढ एकादश्यामुपोषणम् ॥ सनरोनरकंयातिरौरवंतमसावृतमिति ॥

तथा ॥ एकादश्यांमुनिश्रेष्ठयोभुंक्तेमूढचेतनः ॥ प्रतिग्रासम सौभुंक्तेकिल्बिषंश्वादिविट्समिति ॥ तथा ॥ मद्यपानान्मुनिश्रेष्ठयोनैवनरकंव्रजेत् ॥ एकादश्यन्नकामस्तुपितृभिःसहमज्जतीति ॥ ॥ नारदीयेपि ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ अन्नमाश्रित्यतिष्ठंतिसंप्राप्तेहरिवासरे ॥ तानिपापान्युपाश्नातिभुंजानोहरिवासरइति ॥ स्कंदपुराणेपि ॥ मातृहापितृहाचैवभ्रातृहागुरुहा तथा ॥ एकादश्यांतुयोभुंक्तेपक्षयोरुभयोरपीति ॥ तथा ॥ वरंस्वमातृगमनंवरंगोमांसभक्षणम् ॥ वरंहत्यासुरापानंनैकादश्यांतुभोजनमिति ॥ उपक्रम्याकरणेपिविष्णुरहस्येदोषउक्तः ॥ समादायविधानेनद्वादशीव्रतमुत्तमम् ॥ तस्यभंगंनरःकृत्वारौरवंनरकंव्रजेदित्यादीनिनित्यत्वविधायकवाक्यानि ॥ अथकाम्यत्वविधायकवाक्यानि ॥ यथाह विष्णुरहस्ये ॥ यदीच्छेद्विष्णुसायुज्यंशुभांसंपदमात्मनः ॥ एकादश्यांनभुंजीतपक्षयोरुभयोपीति ॥ कात्यायनोपि ॥ संसारसागरोत्तारमिच्छेद्विष्णुपरायणः ॥ ऐश्वर्यसंततिंस्वर्गंमुक्तिंचान्यद्यदिच्छति ॥ एकादश्यांनभुंजीनपक्षयोरुभयोरपीति ॥ स्कांदेपि ॥ यदीच्छेद्विपुलान्भोगान्मुक्तिंचात्यंतदुर्लभाम् ॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपीत्यादिकाम्यत्वविधायकानि वाक्यानि॥ एवंचसतीदमेकादशीव्रतंनित्यत्वविधायकवाक्यश्रवणादकरणेप्रत्यवायश्रवणाच्च किंनित्यंकिंवाकाम्यत्वविधायकवाक्यश्रवणात्काम्यमिति ॥ अत्रकश्चिदाहनित्यंकाम्यमितितन्नयुक्तिसहंनित्यंकाम्यमितियदेवनित्यंतदेवकाम्यमितिकर्मधारयसमासस्यार्थः॥तन्नोपपद्यते॥नित्यत्वंनामफलानपेक्षत्वम्॥काम्यत्वंचफलापेक्षत्वम् ॥ नह्येकस्यैवफलापेक्षत्वंतदनपेक्षत्वंचसंभवाति॥ भावाभावयोःसामानाधिकरण्याभावात् ॥ अतश्चएकादश्यांनित्यंकाम्यंचेतिव्रतद्वयंविधीयते ॥ नन्वेकत्वेकस्मिन्नेकादशीरूपेकाले व्रतद्वयस्यविधानमशक्यमिति

चेन्न ॥ कर्तृभेदेनशक्यत्वात् ॥ तथाच ॥ पूर्वामुपवसेत्कामी निष्कामस्तूत्तरांसदेत्यग्रेवक्ष्यते ॥ एकव्रतत्वेदिनद्वयविधानंकदाचिन्नोपपद्यते ॥ तथा ॥ एकादशीव्रतांगनियमेपि ॥ जह्याद्भुक्तद्वयं नित्ये काम्येभुक्त्वाचतुष्टयमितिभेदःप्रकीर्त्तितः ॥ अतश्चनिष्कामोनित्यविधिनानित्यैकादशीव्रतंकुर्य्यात् ॥ सकामस्तुकाम्यविधिनाकाम्यैकादशीव्रतंकुर्यादितिसिद्धम् ॥ अथैकादशीव्रताधिकारिणः प्रदर्श्यंते ॥ कात्यायनः ॥ अष्टवर्षाधिकोमर्त्योह्यशीतिन्यूनवत्सरः ॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपीति ॥ एवंपक्षद्वयेप्येकादशीव्रतस्यसर्वत्रप्राप्तौव्यवस्थयाविशेषःकालादर्शेभिहितः ॥ तथा ॥ विधवायावनस्थस्ययतेश्चैकादशीद्वये ॥ उपवासोगृहस्थस्यशुक्लायामेवपुत्रिणः ॥ भुजेर्निषेधःकृष्णायांसिद्धंतस्यततोव्रतमिति ॥ अतश्चपक्षद्वयैकादशींवनस्थयतिविधवाःकुर्युः ॥ विधवावनस्थयतिसमानधर्मत्वं गारुडपुराणेप्रोक्तम् ॥ यथा ॥ पुनःप्रभातसमयेघटिकैकादशमीभवेत् ॥ तत्रोपवासोविहितोवनस्थस्ययतेस्तथा ॥ विधवायास्तुतत्रैवपरतोद्वादशीनचेदिति ॥ सकामःपुत्रवान्गृहस्थस्तुशुक्लामुपवसेत् ॥ कृष्णायामशननिवृत्तिमात्रंकुर्यात् ॥ तदुक्तम् कूर्मपुराणे ॥ एकादश्यांनभुंजीतपक्षयोरुभयोरपि ॥ वनस्थयतिधर्मोयंशुक्लामेवसदागृहीति ॥ स्कंदपुराणेपि ॥ एकादश्यांनभुंजीतपक्षयोरुभयोरपि ॥ वानप्रस्थोयतिश्चैवशुक्लामेवसदागृहीति ॥ अतःकृष्णैकादश्यांपुत्रवान्गृहीउपवासनिषेधादशननिवृत्तिमात्रमेवकुर्यान्नोपवासमितिगम्यते ॥ कृष्णैकादश्यांपुत्रिणउपवासनिषेधः ॥ कूर्मपुराणे यथा ॥ संक्रांत्यां कृष्णपक्षेचरविशुक्रदिनेतथा ॥ एकादश्यांनकुर्वीतउपवासंच पारणमिति ॥ अत्रपुत्रवानित्यनुषज्जते ॥ कात्यायनोपि ॥ एकादशीषुकृष्णासुरविसंक्रमणेतथा ॥ चंद्रसूर्योपरागेचनकुर्यात्पुत्रवान्व्रतमिति ॥ व्रतमुपवासइत्यर्थः ॥ गौतमोपि ॥ आदित्येहनिसंक्रांता

वसितैकादशीषुच ॥ व्यतीपातेकृतेश्राद्धेपुत्रीनोपवसेद्गृहीति ॥
नन्वेषुवचनेषु तथा एकादश्यांतुकृष्णायांसंक्रमेग्रहणेपिवा ॥
उपवासंनकुर्वीतगृहीपुत्रधनक्षयादित्यादिवाक्येषुचसंक्रांतिरविवारा
दियुक्तायांशुक्लैकादश्यामपिपुत्रिणोगृहिणउपवासनिषेधःप्रतीयतइ
तिचेन्न ॥ संक्रांत्यादिनिषेधस्तुसंक्रांत्यादिविहितोपवासविषयः ॥
नतुतद्युक्तैकादश्युपवासविषयः ॥ तदुक्तंजैमिनिना॥ तन्निमित्तोपवा
सस्यनिषेधोयमुदाहृतः ॥ नानुषंगकृतोग्राह्योयतोनित्यमुपोषणमि
ति॥तन्निमित्तस्यसंक्रांत्यादिनिमित्तस्योपवासस्यनिषेधः॥नत्वनुषंग
कृतःसंक्रांत्यादियोगकृतएकादश्युपवासेनिषेधोनभवतीत्यर्थः॥यतो
नित्यमुपोषणम् ॥ काम्यसंक्रांत्याद्युपवासनिषेधोनित्यैकादश्युपवास
विषयोनभवतीत्यर्थः ॥ अतश्चकृष्णपक्षैकादश्यांपुत्रवान्गृहीनित्यो
पवासंनकुर्यात् ॥ काम्योपवासेतुविशेषोवक्ष्यति ॥ नन्वेषुवाक्येषुकृ
ष्णैकादश्यामुपवासोनिषिद्धोनतुभोजननिवृत्तिरुक्ता ॥ तत्कथमुच्य
ते कृष्णैकादश्यामशननिवृत्तिमात्रमिति ॥ सत्यम् ॥ कूर्मपुराणा
दिवचनबलात् ॥ यथा ॥ नशंखेनपिबेत्तोयंनखादेत्कूर्मसूकरौ ॥
एकादश्यांनभुंजीतपक्षयोरुभयोरपीति ॥ विष्णुधर्मोत्तरेपि सब्रह्महा
सगोघ्नश्चस्तेयीचगुरुतल्पगः॥ एकादश्यांचयोभुंक्तेपक्षयोरुभयोरपी
त्यादिवाक्यैर्भोजननिवृत्तेः पक्षद्वयैकादश्योरपिप्रतिपादितत्वात् ॥
॥ तथा ॥ संक्रांत्यांकृष्णपक्षेचेत्यादिवाक्यैःकृष्णपक्षउपवासनिषेधा
च्च॥शुक्लामेवसदागृहीत्यादिवाक्यैःशुक्लैकादश्यामुपवासविधानाच्च॥
सकामैर्गृहिभिःशुक्लैकादश्यामुपवासव्रतंकार्य्यम् ॥ कृष्णैकादश्याम
शननिवृत्तिमात्रमितिसिद्धम्॥ शयनीबोधिनीमध्येतुगृहस्थमात्रेणकृ
ष्णैकादश्यामप्युपवासव्रतंकार्यम्॥तदुक्तम् ॥ शयनीबोधिनीमध्येया
कृष्णैकादशीभवेत्॥सैवोपोष्यागृहस्थेननान्याकृष्णाकदाचनेतिपुत्री
नोपवसेद्गृहीतिपुत्रवतोगृहस्थस्यकृष्णैकादश्यामुपवासनिषेधात्सोऽ

पिशयनीबोधिनीमध्येकृष्णैकादशीषुकिंचिद्भक्ष्यंकल्पयित्वोपवासं कुर्यात् ॥ तदुक्तमनंतभट्टीये ॥ उपवासनिषेधेतुकिंचिद्भक्ष्यंप्रकल्पयेत् ॥ भक्ष्यंचाविद्वाविषयेदर्शितम् ॥ अविद्वानामलाभेतुपयोदधिफलानिच॥सकृदेवाल्पमश्नीयादुपवासस्ततोभवेदिति ॥ वायुपुराणेत्वत्रैवविशेषउक्तः ॥ नक्तंहविष्यान्नमनोदनंवाफलंतिलाःक्षीरमथांबुवाज्यम् ॥ पञ्चादिगव्यंयदिवापिवायुःप्रशस्तमत्रोत्तरमुत्तरंचेति ॥ यानिपुनः॥यथोत्तरेदक्षिणेवाअयनेपरिकीर्तिते ॥ तुल्यंफलमवाप्नोति द्वादश्योरुभयोरपीति ॥तथा॥ सोमसूर्यग्रहौपुण्यौयथावैमुनिभिःस्मृतौ ॥ तथासितासितेपुण्येद्वादश्यौविष्णुतुष्टिदइति कूर्मपुराणनारदपुराणादिवाक्यानिपक्षद्वयेप्युपवासविधायकानि तानियतिवानप्रस्थविषयाणिज्ञेयानि ॥ कर्तृविशेषाभिधानात् ॥ अन्यथा ॥ शुक्लामेवसदागृहीत्यादिवाक्यविरोधःस्यात् ॥ अयंनित्यैकादश्युपवासनिर्णयोगृहस्थस्य॥काम्येतुकामनानुसारेणनिर्णयः॥सतिचोभयैकादश्युपवासेअन्यतरैकादश्युपवासेचभिन्नानिफलानि॥यथाकूर्मपुराणे॥ यदीच्छेद्विष्णुसायुज्यंश्रियंसंततिमात्मनः ॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपीति ॥ गोभिलोपि ॥ एकादश्यांसितेपक्षेयश्चकुर्यादुपोषणम् ॥ सविष्णुलोकंव्रजतितृष्णयाप्रविमुच्यतइत्यादिवाक्यैःफलविशेषाभिधानात्तत्तत्फलापेक्षयोभयैकादश्योरन्यतरैकादश्यांवा काम्योपवासंकुर्यादित्यलमतिविस्तरेण ॥ ॥ अथोपवासस्वरूपंनिरूप्यते ॥ यदुक्तंविष्णुधर्मोत्तरे ॥ उपावृत्तस्यपापेभ्योयस्तुवासोगुणैःसह ॥ उपवासःसविज्ञेयःसर्वभोगविवर्जितइति अत्रपापेभ्योनिवृत्तस्येत्युक्तम् ॥ तानिकानिपापानीत्यत्रसुमंतुराह ॥ विहितस्याननुष्ठानमिंद्रियाणामनिग्रहः ॥ निषिद्धसेवनंजैह्म्यंचवर्जनीयंप्रयत्नतइति ॥ हारीतोपि ॥ पतितपाखंडिनास्तिकादिसंभाषणमनृताश्लीलादिकमुपवासादिनेवर्जयेदिति ॥ विष्णुपुराणे ॥ तस्मात्पाखंडिभिः

पापैरालापस्पर्शनेत्यजेत् ॥ विशेषतःक्रियाकालेयज्ञादौवापिदीक्षितइति ॥ कूर्मपुराणे ॥ बहिर्ग्रामात्त्यजेत्पूर्वंपतितंचरजस्वलाम् ॥ नस्पृशेन्नाभिभाषेतनेक्षेतव्रतवासरइति ॥ पाखंड्यादिस्पर्शनविषयेप्रायश्चित्तमपिविष्णुपुराणएवोक्तम् ॥ यथा ॥ स्पर्शनेचनरःस्नात्वाशुचिरासूर्यदर्शनादिति ॥ संभाष्यताञ्छुचिषदंचिंतयेदच्युतंबुधः ॥ तेषामालोकनेसूर्यंप्रपश्येन्मतिमान्नरइति॥शुचिषदंशुद्धिप्रदम् ॥ विष्णुधर्मोत्तरे ॥ असंभाष्यान्समाभाष्यतुलस्यतासिकादलम् ॥ आमलक्याः फलंवापिपारणेप्राश्यशुद्ध्यतीति ॥ गुणैःसहवासइतिचोक्तम्॥ तत्रगुणाश्चापिविष्णुधर्मोत्तरएवोक्ताः ॥ यथा ॥ तज्जपश्चापितद्ध्यानंतत्कथाश्रवणादिकम् ॥ तदर्चनंचतन्नामकीर्तनश्रवणादयः ॥ उपवासकृतामेतेगुणाःप्रोक्तामनीषिभिरिति ॥ तच्छब्देनात्रप्रकृतत्वाद्विष्णुरेवाभिधीयते ॥ अथोपवासकृतांनियमाउच्यंते ॥ उपवासव्रतीदंतधावनंहिंसनानृतम् ॥ चौर्यमसकृज्जलपानंसकृत्तांबूलभक्षणम् ॥ स्त्रीसंयोगंदिवास्वापंमांसंचवर्जयेत्सदा ॥ तदुक्तंवृद्धवसिष्ठेन ॥ उपवासेतथाश्राद्धेनकुर्याद्दंतधावनम् ॥ दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलमिति ॥ उपवासादिषुदंतकाष्ठनिषेधेऽनुकल्पोव्यासेनोक्तः ॥ यथा ॥ अलाभेदंतकाष्ठानांनिषिद्धायांतिथावपि ॥ अपांद्वादशगंडूषैर्पत्रैर्वादंतधावनमिति ॥ दंतधावनेप्रायश्चित्तंविष्णुधर्मेप्युक्तम् ॥ श्राद्धोपवासदिवसेखादित्वादंतधावनम् ॥ गायत्र्याशतशःपूतमनुप्राश्यविशुध्यतीति ॥ हिंसाचौर्ययोःप्रायश्चित्तंस्मृतिसंग्रहेप्रोक्तम् ॥ स्तेन[3]हिंसकयोःसख्यंकृत्वास्तैन्यंचहिंसनम् ॥ प्रायश्चित्तंव्रतीकुर्याज्जपेन्नामशतत्रयमिति ॥ नाम विष्णुनाम ॥ मिथ्यावाददिवास्वापसकृज्जलपानादिषुप्रायश्चित्तंकात्यायनेनोक्तम् ॥ मिथ्यावादेदिवास्वापेबहुशोंबुनिषेवणे ॥ अष्टाक्षरंव्रतीजप्त्वाशतमष्टोत्तरंशुचिरिति ॥

१ बहिर्मार्गांत्यजान्सूतीपतितंचरजस्वलामितिपाठान्तरम् ॥ २ प्राश्नीयात्कदलीफलमितिपाठः ॥ ३ सूनिहिंसकयोरितिपाठः ॥

अष्टाक्षरमंत्रःॐनमोनारायणायेति ॥ तांबूलचर्वणेस्त्रीसंभोगेमांसनिषे वणेषुपैठीनसिनाप्रायश्चित्तमुक्तम् ॥ तांबूलचर्वणेस्त्रीसंभोगेमांसनिषे वणे ॥ व्रतलोपोनवैकुर्यात्कृष्णेतद्बुजिवर्जितमिति ॥ अत्रसामान्ये नस्त्रीसंभोगइत्युक्तेपिस्वदारेषुऋतुकालगमनादिषुव्रतलोपोनास्ति ॥ तदुक्तंकात्यायनेन ॥ रेतःसेकात्मसंभोगमृतेन्यत्रक्षयःस्मृतइति ॥ रेतःसेकऋतुकालेगर्भाधाननिमित्तंतदात्मकंसंभोगंवर्जयित्वान्यत्रअ न्यनिशासुसंभोगेव्रतस्यक्षयइत्यर्थः ॥ ऋतुकालेपिषोडशनिशा तिक्रमेदोषश्रवणात् ॥ व्रतदिवसेनकृतेपिगर्भाधानेपोडशनि शापर्यंतंकालांतरेपिकर्तुंशक्यत्वान्नातक्रमेदोषः ॥ अतश्चषो डशनिशात्मकएवऋतुकालेरेतःसेकेव्रतभंगोनास्तीत्यर्थः ॥ स्वदा रव्यतिरिक्तासुस्त्रीषुप्रेक्षणस्पर्शनादिभिरपिब्रह्मचर्यभंगोभवति ॥ यथा ॥ स्त्रीणांसंप्रेक्षणस्पर्शात्ताभिःसंकथनादपि ॥ भिद्यते ब्रह्मचर्यंतुस्वदारेष्वृतुसंगमादिति ॥ अत्रसंप्रेक्षणादिकंसरागमेव॥ अतश्चमात्रादिदर्शनेतत्पादस्पर्शनेचनदोषः ॥ ऋतुसंगमादि ति ॥ ऋतुरपिषोडशनिशायाअर्वाचीनःसावकाशएवऋतुकालो ज्ञेयः ॥ अन्यथाकात्यायनवचनविरोधःस्यात् ॥ अतश्चस्वदाराणां स्पर्शनादिभिरपिब्रह्मचर्यभंगोनास्तीत्यर्थः ॥ मांसविषयेव्यासे नविशेषोदर्शितः ॥ वर्जयेत्पारणेमांसंव्रताहेप्यौषधंसदेति ॥ औषधा त्मकमपिमांसंव्रताहेवर्जयेदित्यर्थः ॥ इत्युक्तनियमसहितःप्रातःस्ना नानंतरमुपवाससंकल्पंकृत्वोपवासंकुर्वीत ॥ तत्रनित्येमनसैवमंत्रेण संकल्पयेत्॥मंत्रश्च॥एकादश्यांनिराहारःस्थित्वाहमपरेहनि॥भोक्ष्या मिपुंडरीकाक्षशरणंमेभवाच्युतेति ॥काम्येतूपवासेजलपूर्णताम्रपात्रंह स्तेनगृहीत्वोदङ्मुखःसन्पूर्वोक्तमंत्रेणसंकल्पमुच्चरेत्॥तदुक्तंदेवलेन॥ गृहीत्वोदुंबरंपात्रंवारिपूर्णमुदङ्मुखः॥उपवासंतुगृह्णीयाद्यथासंकल्पये द्बुध इति ॥ अत्रयथासंकल्पयेदित्यनेनसंकल्पानांबाहुल्यंद्योत्यते ॥ अतश्चकाम्यादिपदाभावेप्ययंकाम्योपवासविधिरितिज्ञायते॥नित्येसं

कल्पभेदाभावाद्यथासंकल्पयेदित्यसंगतमेवस्यात् ॥ अथोपवास
नियमेनित्यकाम्यभेदेचविशेषांतरमुच्यते ॥ नित्योपवासेकेवलमे
कादश्यांसायंप्रातश्चभोजनंवर्जयेत् ॥ दशमीद्वादश्योर्नैकभक्त
नियमः ॥ तदुक्तंकात्यायनेन ॥ नित्योपवासीयोमर्त्यःसायंप्रा
तर्भुंजिक्रियाम् ॥ संत्यजेन्मतिमान्विप्रःसंप्राप्तेहरिवासरइति ॥ विप्रइ
तिसर्ववर्णोपलक्षणम् ॥ काम्योपवासेतुदशम्यांद्वादश्यांचैकभक्तं
कार्यमेकादश्यांचोपवासःकार्यः ॥ तदुक्तंदेवलेन ॥ सायमाद्यंतयो
रह्नोःसायंप्रातश्चमध्यमे ॥ उपवासफलंप्रेप्सुर्जह्याद्भक्तचतुष्टयमिति ॥
अत्रफलंप्रेप्सुरित्यनेनैवास्यसकामविषयत्वंज्ञायते ॥काम्यएवविशेषां
तरंकात्यायनेनोक्तम् ॥अष्टाक्षरेणमंत्रेणत्रिजप्तेनाभिमंत्रितम्॥उपवा
सफलंप्रेप्सुःपिबेत्पात्रगतंजलमिति ॥ काम्योपवासेदशम्यादिदिनत्रयं
कांस्यादीनिवर्जयेत् ॥ तदुक्तंमत्स्यपुराणे ॥ कांस्यंमांसंसुरांक्षौद्रं
तैलंवितथभाषणम् ॥ व्यायामंचप्रवासंच दिवास्वापंचमैथुनम् ॥
ति[1]लपिष्टंमसूरंचदशम्यादिषुवर्जयेदिति ॥ विष्णुधर्मोत्तरेपि ॥ कां
स्यंमांसंमसूरंचपुनर्भोजनमैथुने ॥ द्यूतंमद्यांबुपानंचफलंप्रेप्सुर्विवर्जये
दिति ॥ अत्रमांसमद्ययोर्येषामेवप्राप्तिस्तेषामेवनिषेधः ॥ अन्येषांनप्रा
प्तिर्नानिषेधः ॥ अम्बुपानमत्रासकृन्निषिद्धम् ॥ स्कंदपुराणेपि ॥
कांस्यंमांसंमसूरंचचणकंकोरदूषकम् ॥ शाकंमधुपरान्नंचहन्युरष्टा
विमेफलमिति ॥ शाकमुपोदकी ॥ व्रतप्रारंभश्चबहिरंतःशोधनं
प्रायश्चित्तंकृत्वाकार्यः ॥अत्रायंमंत्रः ॥ शरीरमंतःकरणोपघातंवाचश्च
विष्णुर्भगवानशेषम् ॥ शमंनयत्वाशुममेहशर्मभूयादनंतेहृदिसंनिवि
ष्टे ॥ अंतःशुद्धिंबहिःशुद्धिं[2]शुद्धोधर्ममयोच्युतः ॥ सकरोतुममैत
स्मिञ्छुचिरेवास्मिसर्वदेति॥ अनेनमंत्रेणशुद्धिंकृत्वोक्तनियमोपेतउप
वासंकुर्यात् ॥इदानीमुपवासानुष्ठानसिद्ध्यर्थंशुद्धाविद्धाविभेदेनएका
दश्याअष्टादशभेदाउच्यंते ॥ ॥ तत्रशुद्धैकादशीसमतान्यूनताधिक्य
योगात्त्रिविधात्रिविधा ॥सापिद्वादशीसाम्यन्यूनताधिक्ययोगात्प्रत्येकं

१ शिलापिष्टम् इ० पा० ॥ २ शुद्धिः इ० पा० ॥ ३ त्वमले इ०पा० ॥

त्रिविधाभवति ॥ एवंशुद्धायानवभेदाः ॥ यथा शुद्धसमाद्वादशीसमा १ शुद्धसमाद्वादशीन्यूना २ शुद्धसमाद्वादश्यधिका ३ शुद्धन्यूनाद्वादशीसमा ४ शुद्धन्यूनाद्वादशीन्यूना ५ शुद्धन्यूनाद्वादश्यधिका ६ शुद्धाधिकाद्वादशीसमा ७ शुद्धाधिकाद्वादशीन्यूना ८ शुद्धाधिकाद्वादश्यधिकाचेति ९ एवंविद्धापिसाम्यन्यूनताधिक्ययोगात्रिविधा ॥ सापिद्वादशीसाम्यन्यूनताधिक्ययोगात्प्रत्येकंत्रिविधा ॥ एवंविद्धायाअपिनवभेदाः ॥ यथा ॥ विद्धसमाद्वादशीसमा १ विद्धसमाद्वादशीन्यूना २ विद्धसमाद्वादश्यधिका ३ विद्धन्यूनाद्वादशीसमा ४ विद्धन्यूनाद्वादशीन्यूना ५ विद्धन्यूनाद्वादश्यधिका ६ विद्धाधिकाद्वादशीसमा ७ विद्धाधिकाद्वादशीन्यूना ॥८॥विद्धाधिकाद्वादश्यधिकाचेति ॥ ९ ॥ एवंमिलित्वाअष्टादशभेदाभवंति ॥ अत्रसर्वेष्वपिभेदेष्वेकादशीद्वादश्योःसमत्वंनामपष्टिघटिकात्मकत्वम् ॥ ततोन्यूनत्वेन्यूनत्वम् ॥ आधिक्येअधिकत्वंचज्ञेयम् ॥ ॥ अत्रशुद्धसमाद्वादशीसमादिपङ्क्तेदेषुसर्वैर्गृहियतिभिःपूर्वैवोपोष्या ॥ तदुक्तंस्कंदपुराणे ॥ शुद्धायदासमाहीनासमाक्षीणाधिकोत्तरा ॥ एकादशीमुपवसेन्नशुद्धांवैष्णवीमिति ॥ शुद्धाएकादशीसमाउत्तराद्वादशीसमाक्षीणाधिकाच ॥ तथाशुद्धायदाहीनाउत्तराच पुनस्तथाएवंत्रिविधेपिशुद्धसमाभेदत्रयेशुद्धन्यूनाभेदत्रयेचैकादशीमुपवसेत् ॥ नशुद्धांवैष्णवींद्वादशीमित्यर्थः ॥ यत्तुब्रह्मपुराणवचनम् ॥ एकालुप्ताचसंयुक्तायदिवृद्धिपरातिथिः ॥ अथवैकादशीनास्तिदशम्यावाप्यसंगता॥द्वादशीतुकलाकाष्ठायादिस्यादपरेहनि ॥ द्वादशद्वादशीर्हितिपूर्वस्यांपारणंकृतमिति॥अस्यार्थः॥ तिथिवृद्धिपरत्वेचएकादशीपरेदिनेलुप्तावास्ति अथवाअपरदिनेवास्तितत्रोभयत्रापित्रयोदश्यांद्वादशीसद्भावाच्छुद्धद्वादश्यामेवोपवसेदिति ॥ इदंतुविद्धासमायाद्वादश्याधिक्ययुक्तायाविषयेसार्थकम् ॥ नतुशुद्धसमाशुद्ध

हीनाविषयम् ॥ अन्यथानशुद्धांवैष्णवीमितिवचनाविरोधःस्यात् ॥ द्वादशीसाम्ययुक्ताशुद्धाधिकाद्वादशीहानियुक्ताशुद्धाधिकाचपूर्वागृहस्थैरुपोष्या॥यतिभिस्तूत्तरेतिव्यवस्थितम्॥ तदुक्तंमार्कंडेयपुराणे॥ संपूर्णैकादशीयत्रप्रभातेपुनरेवसा ॥ पूर्वामुपवसेत्कामीनिष्कामस्तूत्तरांसदेति ॥ अत्रकामिनिष्कामपदाभ्यांगृहियतीउच्येते प्रायेणगृहिणांसकामत्वाद्यतीनांनिष्कामत्वाच्च ॥ तथा ॥ एकादशीप्रवृद्धाचेच्छुक्लेकृष्णेविशेषतः ॥ तत्रोत्तरांयतिःकुर्यात्पूर्वामुपवसेद्गृहीति॥स्कंदपुराणेपि ॥ संपूर्णैकादशीयत्रप्रभातेपुनरेवसा ॥ त्रयोदशीउषःकाले उपोष्यातत्रिकाभवेत्॥उपोष्येद्वेतिथीतत्रविष्णुप्रीणनतत्परैरिति॥अत्रापिद्वेतिथीउपोष्येइतिगृहियतिभेदेनव्यवस्थाविज्ञेया॥ शुद्धाधिकाद्वादश्यधिकातुसर्वैरप्युत्तरैवोपोष्या ॥ तदुक्तंनारदेन ॥ संपूर्णैकादशीयत्रप्रभातेपुनरेवसा ॥ तत्रोपोष्याद्वितीयातुपुत्रपौत्रप्रवार्धिनीति ॥ गरुडपुराणेपि ॥ संपूर्णैकादशीयत्रप्रभातेपुनरेवसा ॥ तत्रोपोष्यापरापुण्यापरतोद्वादशीयदि ॥ स्मृत्यंतरेपि ॥ संपूर्णैकादशीयत्रप्रभातेपुनरेवसा ॥ वैष्णवीचत्रयोदश्यांघटिकैकापिदृश्यते ॥ गृहस्थोपिपराङ्कुर्यात्पूर्वान्नोपवसेत्तदेति ॥ ॥ अथ विद्धाभेदेषूच्यते ॥ तत्रद्वादशीसाम्ययुक्ताविद्धसमा द्वादशीहानियुक्ताविद्धसमा पूर्वागृहस्थैरुपोष्यापरायतिभिरितिव्यवस्था ॥ तदुक्तंपुराणसमुच्चये ॥ दशमीमिश्रितापूर्वाद्वादश्यांचविलुप्यते ॥ एकादश्यांतदाब्रह्मन्नुपवासःकथंभवेदितिप्रश्ने ॥ शुद्धैवद्वादशीराजन्नुपोष्यामोक्षकांक्षिभिः ॥ सकामैर्गृहिभिःपूर्वाविद्धापीतिविनिश्चयइति ॥ विद्धसमायांद्वादश्याधिक्यवत्यांतुद्वादश्यामेकादशीसद्भावात्सर्वेषांपरत्रैवोपवासः ॥ तथाचस्मर्यते ॥ कलार्द्धेनापिविद्धास्याद्दशम्यैकादशीयदि ॥ तदाप्येकादशींत्यक्त्वाद्वादशींसमुपोषयेदिति ॥ विद्धहीनाद्वादशीसमाविद्धहीनाद्वादशीहीनाविद्धहीनाद्वाद

इयधिकाचसर्वैरपिपूर्वैवोपोष्या ॥ शुद्धैकादश्याअलाभेनगत्यन्तराभावात् ॥ तदुक्तंस्मृत्यंतरे ॥ एकादशीनलभ्येतसकलाद्वादशीभवेत् ॥ उपोष्यादशमीविद्धाऋषिरुद्दालकोऽब्रवीदिति ॥ ऋष्यशृङ्गोपि ॥ सर्वत्रैकादशीकार्यादशमीमिश्रितानरैः ॥ प्रातर्भवतुमावाभूद्यस्मान्नित्यमुपोषणमिति ॥ विद्धाधिकाद्वादशीसमाविद्धाधिकाद्वादश्यधिकाचसर्वैरेवोपोष्या ॥ तदुक्तं विष्णुधर्मोत्तरे ॥ एकादश्यष्टमीचैवद्वितीयाचचतुर्दशी ॥ अमावास्यातृतीयाचउपोष्यास्युःपरान्विताइति ॥ अत्रभेदद्वयेद्वितीयदिनेएकादशीसद्भावात्परत्रैवोपवासः ॥ दशमीवेधस्यनिषेधाच्च ॥ तदाहनारदः ॥ नोपोष्यादशमीविद्धासदैवैकादशीतिथिः ॥ तामुपोष्यनरोजह्यात्पुण्यंत्रयंशतोद्भवमिति ॥ तथाच ॥ दशम्यानुगतायत्रतिथिरेकादशीभवेत् ॥ तस्यपुण्यंविनष्टंस्यात्परेत्यनरकंव्रजेदिति ॥ दशमीशेषसंयुक्तागांधार्यासमुपोषिता ॥ तस्याःपुत्रशतंनष्टंतस्मात्तांपरिवर्जयेत् ॥ एवंविद्धहीनात्रयेपिदशमीवेधनिषेधोनाशंकनीयः ॥ तत्रत्रयोदश्यांपारणपर्याप्तद्वादश्यसंभवात् ॥ तदुक्तमृष्यशृंगेण ॥ पारणायनलभ्येतद्वादशीयदिकुत्रचित् ॥ तदानींदशमीविद्धाउपोष्यैकादशीतिथिरिति ॥ हारीतोपि ॥ त्रयोदश्यांयदानस्याद्द्वादशीघटिकाद्वयम् ॥ दशम्यैकादशीमिश्रासैवोपोष्यासदातिथिरिति ॥ अत्रापिघटिकाद्वयमितिपारणपर्याप्तत्वोपलक्षणम् ॥ वायुपुराणेपि ॥ एकादशीयदाविद्धाद्वादशीचक्षयंगता ॥ दशमीमिश्रितातत्रउपोष्यामुनिसत्तमेति ॥ विद्धानिषेधवाक्यानितुसर्वाण्यपिद्वादश्याधिक्यवत्यांविद्धसमायांविद्धाधिकायांचज्ञातव्यानि ॥ नतुद्वादशीसाम्यवत्यांद्वादशीहानिमत्यांचविद्धहीनायां त्रयोदश्यांपारणयोग्यद्वादश्याअभावाद्विद्धायामेवोपवासेउपपद्यते ॥ द्वादश्याधिक्यवत्यांविद्धहीनायांतुत्रयोदश्यांपारणयोग्यद्वादशीसंभवाच्छुद्धद्वादश्यामेवोपवासोस्त्विवतिचेत् ॥ सत्यम् ॥ तस्यविकल्पासहत्वेनोपवासयोग्यत्वान्नस्वीकारः ॥ यथा ॥ किंसूर्योदयादर्वाचीनेद्वादशीभागेउपवासः ॥ किंचोदयादुत्तरस्मिन्द्वादशीभागे ॥ नाद्यः ॥ तस्यैका

दशीप्रत्यासन्नपरत्वेप्युपवासयोगपरत्वात् ॥ नापिद्वितीयः ॥ तस्योपवासयोग्यत्वेप्येकादश्याःप्रत्यासन्नत्वात् ॥ अतश्चविद्धानिषेधवाक्यान्युक्तविद्धायामप्येवेत्यनवद्यम् ॥ विद्धाधिकद्वादशीहीनातुगृहस्थैःपूर्वैवोपोष्यायतिभिरुत्तरेतिव्यवस्था॥तदुक्तम् ॥ एकादशीद्वादशीचरात्रिशेषेत्रयोदशी ॥ त्रितिथिस्पृगहोरात्रंनोपोष्यंतुसुतार्थिभिरिति ॥ तथाच ॥एकादशीद्वादशीचरात्रिशेषेत्रयोदशी ॥ उपवासंनकुर्वीतपुत्रपौत्रसमान्वितः॥ इति गृहिणःपरत्रोपवासनिषेधात् ॥ उपवासस्यचनित्यत्वेनावश्यकत्वात्पूर्वत्रैवोपवासःप्रतीयते ॥ परविद्धाविधायकवाक्यसामर्थ्याद्यतीनांपरत्रैवोपवासोवसीयते॥ यथाभविष्योत्तरे॥द्वादशीसंगतायत्रभवत्येकादशीकला॥ दिनक्षयेपिसापुण्यानदशम्यायुताक्वचिदिति॥तथाच ॥ त्रिस्पृगेकादशीयत्रतत्रसंनिहितोहरिः॥पुण्यंक्रतुशतंप्रोक्तंत्रयोदश्यांतुपारणमिति ॥तथाच ॥ कलाप्येकादशीयत्रद्वादश्यानुगताभवेत् ॥ दिनक्षयेपिसापुण्यायतीनामुत्तरातिथिरिति॥यत्त्वनंतभट्टैरत्रवाक्येयतिपदंगृहस्थस्याप्युपलक्षणंनेतरव्यावृत्त्यर्थम् ॥ तथासतिप्राप्त्यभावेनपुत्रवतोगृहस्थस्योपवासनिषेधानुपपत्तिरित्युक्तम्॥तद्भागवतमतपक्षपातेनैवेतिगम्यते ॥ यतः सर्वेषांशब्दानांसजातीयोपलक्षकत्वादेवयतिपदस्यविजातीयगृहस्थोपलक्षकत्वेप्रसिद्धिविरोधः॥ किंच ॥ नित्यंमद्यंब्राह्मणोवर्जयेदित्यादौवाक्यांतराप्राप्तमपिकामतःप्राप्तमेवमद्यपानादिकंनिषिध्यते ॥ एवमत्रापिपुत्रतोगृहस्थस्यवाक्यांतराप्राप्तोपिकामतःप्राप्तस्त्रिस्पृगुत्तरदिनोपवासोनिषिध्यतइतिनिषेधोप्युपपद्यते॥किंच॥अनन्तेनैवसंपूर्णैकादशीत्यादिविज्ञानेश्वरसंग्रहसंमतिंदर्शयित्वास्वपक्षविरुद्धायद्येषापूर्वविद्धाभवतीतितस्यैवसंमतिर्दर्शिता ॥ तेचसंमतिश्लोकालिख्यंते ॥ शुद्धाविद्धादशम्याक्वचिदपिचततोद्वैधमेकादशीयंप्रत्येकश्चात्रिधासौपुनरपिसमतान्यूनताधिक्ययोगात् ॥ पक्षाःप्रत्येकभिन्नाःपुनरपिषडमी

द्वादशीन्यूनताद्यैःसंबन्धादेवमष्टादशखलुमिलिताःकल्पनाःसंभवन्ति ॥ १ ॥ संपूर्णैकादशीयानभवतिपरतःसासमावासमावान्यूनावाना स्तिवास्यांव्रजतिहरिदिनंद्वादशीसापिचोर्ध्वम् ॥ सर्वेकुर्युःपरस्ता दुपवसनमथद्वादशीनोर्ध्वमेतिप्रव्राडत्रद्वितीयामुपवसतुजनाःपूर्वम न्येतुसर्वे ॥ २ ॥ यद्येषापूर्वविद्धाभवतिचपरतः सासमावा समावासेवंकुर्युर्द्वितीयामथहरिदिवसः पूर्वविद्धोपियायात् ॥ द्वा दश्यांसात्रिसंस्पृग्यदिभवतिपरंमोक्षिणःपूर्वमन्येयद्वाविद्धानचोर्ध्वंप- रमुपरिभवेत्तत्रसर्वेपरस्तात् ॥ ३ ॥ पूर्वविद्धाथवासानभवतिप रतोद्वादशीसापिचोर्ध्वंकुर्यात्तत्रोपरिष्टान्मुनिजननिकरःपूर्वमन्येचस र्वे ॥ विद्धंप्रातर्दशम्याहरिदिनमथवाद्वादशीरात्रिशेषेसर्वःपूर्वंदतानी मुपवसतुजनः प्रीतयेकेशवस्येति ॥ ४॥ अतएवभागवतमतानुसारे णानंतभट्टव्याख्यानमितिप्रतीयते॥ स्मार्त्तमतेतुविज्ञानेश्वरोक्तैवगृहि यत्योर्व्यवस्थाग्राह्येत्यलमतिप्रपंचेन॥अथप्रकृतमनुसंधीयते ॥ नन्वे कादशीयदाविद्धाद्वादशीचक्षयंगता ॥क्षीणासाद्वादशीज्ञेयानक्तंतत्रवि धीयते ॥ तथाच ॥ एकादशीयदाविद्धाद्वादशीचक्षयंगता ॥ त्रिदिनं तत्रविज्ञेयंयत्रपुण्यमनर्थकम् ॥ दानंवाप्येकभक्तंवायथाकुर्यादया चितमितिचद्वादशीक्षयेनक्तादिकंविहितंतत्कथंगृहियतिविषयत्वेन व्यवस्थेतिचेत् ॥ सत्यम् ॥ एकादशीव्रतस्यानित्यत्वाद्व्यवस्थासि द्धिः ॥ तदुक्तम्॥अविद्धाह्यनिषिद्धाचेन्नलभ्येतयदातिथिः॥मुहूर्तैःपंच भिर्विद्धाग्राह्याप्येकादशीभवेदितिपंचमुहूर्तविद्धायाअपिग्रहणात् ॥ नक्तैकभक्तादिविधयस्त्वशक्तविषयनक्तादिविध्यनुवादकाइत्यविरो- धः ॥ ननुयतीनामुत्तरैकादश्यामुपवासइत्युक्तंतदात्रयोदश्यांपारणं स्यात्तच्चनिषिद्धम् ॥ तदुक्तम्॥कलाकाष्ठामुहूर्त्तोवायदिचेन्नपरेहनि ॥ द्वादशद्वादशीर्हंतित्रयोदश्यांतुपारणमिति ॥ तथाच ॥ एकादशी मुपोष्यैवद्वादश्यांपारणंस्मृतम् ॥ त्रयोदश्यांनतत्कुर्याद्द्वादशद्वाद

शीक्षयादित्यादिभिर्मत्स्यकूर्मपुराणादिवाक्यैस्त्रयोदश्यांपारणनिषे-धात्कथमुत्तरत्रोपवासइतिचेत् ॥ सत्यम् ॥ त्रयोदशीपारणविधायकबलादितिब्रूमः ॥ तदुक्तंवायुपुराणे ॥ कलाप्येकादशीयत्रपरतोद्वादशीनचेत् ॥ पुण्यंक्रतुशतस्योक्तंत्रयोदश्यान्तुपारणमिति ॥ स्कंदपुराणेपि ॥ एकादश्यांतुविद्धायांनोपवासार्चनादिकम् ॥ द्वादश्यामेवतत्कुर्यात्रयोदश्यांतुपारणम् ॥ शतयज्ञाधिकंपुण्यंभुक्तिरेवपरंफलमिति ॥ तर्हिविरोधोभविष्यतीतिचेन्न ॥ त्रयोदशीपारणविधिर्निष्कामविषयः द्वादशीपारणविधिस्तुसकामविषयइत्यविरोधः॥तदुक्तंस्कंदपुराणे ॥ पारणंतुत्रयोदश्यांनिष्कामानांविमुक्तिदमिति ॥ गरुडपुराणेपि ॥ पारणंतुत्रयोदश्यांनकर्त्तव्यंफलार्थिभिरिति ॥ नन्वेवंव्यवस्थितास्वेकादशीषुपारणव्यवस्थाप्यस्तु यत्रतुद्वादशीसाम्यवत्यांविद्धाधिकायांगृहियत्योरुत्तरत्रैवोपवासः ॥ तत्रकथमुपपत्तिरितिचेत् ॥सत्यम् ॥ तत्रतूत्तरत्रैकादशीविधायकवाक्यबलादेवत्रयोदश्याम्पारणोपपत्तिरितिनाकिञ्चित्कष्टम्॥यद्वा ॥ त्रयोदशीपारणनिषेधवाक्यानिपारणापर्याप्तद्वादशीसंभवे तामतिक्रम्यत्रयोदश्यांपारणंनकार्यमित्येवंपरत्वेनवर्णनीयामिति ॥ तदतिक्रमेदोषश्रवणात् ॥ यथा ॥ यदिकिंचित्त्रयोदश्यांद्वादशीचोपलभ्यते ॥ द्वादश्यांपारणंतत्रवर्जयित्वात्रयोदशीम् ॥ महाहानिकरीत्येषाद्वादशीलंघितानरैः ॥ करोतिधर्महरणमस्नातेवसरस्वती ॥ननुयदाद्वादशीघटिकामात्राद्विघटिकावाभवतितदाद्वादश्यांप्रातर्माध्याह्निककर्मानुष्ठानासंभ-वात्कथंद्वादश्यांपारणोपपत्तिरितिचेत् ॥ सत्यम्॥माध्याह्निकंकर्मापिप्रातरेवापकृष्यकृत्वापारणंकार्यम्॥ तदुक्तंगरुडपुराणे ॥ यदास्वल्पाद्वादशीस्यादपकर्षोभुजेर्भवेत् ॥ विधेर्माध्याह्निकस्यापितत्रस्यादपकर्षणमिति ॥ स्कंदपुराणेपि ॥ यदाभवेदतीवाल्पाद्वादशीपारणादिने ॥ उषःकालेद्वयंकुर्यात्प्रातर्माध्याह्निकंतदेति ॥यद्वा ॥ अ

ल्पायांद्वादश्यामद्भिःपारणंकृत्वानित्यकर्मानुष्ठानानंतरंभोजनंकुर्य्यात् ॥ तदुक्तंकात्यायनेन ॥ विध्यादिकंभवेन्नित्यंपारणन्तुनिमित्ततः॥ अद्भिस्तुपारयित्वातुनैत्तिकान्तेभुजिर्भवेत्॥ देवलोपि ॥ संकटेविषमे प्राप्तेद्वादश्यांपारयेत्कथम् ॥ अद्भिस्तुपारणंकुर्यात्पुनर्भुक्तेनदोषकृदिति॥पारणंतुमंत्रपूर्वकमुपवासंहरयेनिवेदनंकुर्यात्॥ तदाहकात्यायनः ॥ मंत्राञ्जपित्वाहरयेनिवेद्योपोषणंव्रती ॥ द्वादश्यांपारणंकुर्याद्वर्जयित्वाह्युपोदकीमिति ॥ उपोदकीशाकविशेषः ॥ मंत्रस्तु ॥ अज्ञानतिमिरांधस्यव्रतेनानेनकेशव ॥ प्रसीदसंमुखोभूत्वाज्ञानदृष्टिप्रदोभव ॥ कृष्णकृष्णकृपालोत्वमगतीनांगतिप्रद ॥ संसारार्णवमग्नानांप्रसीदसुमुखोभवेति ॥ द्वादश्याश्चाद्याःपंचदशनाडिका हरिवासरसंज्ञकाः ताअतिक्रम्यपारणंकुर्यात् ॥ तदुक्तंविष्णुधर्मोत्तरे ॥ द्वादश्याःप्रथमःपादोहरिवासरसंज्ञकः ॥ तमतिक्रम्य कुर्वीतपारणंविष्णुतत्परइति ॥ उपवासेत्वशक्तोवृद्धातुरादिरुपवासानुकल्पमेकभक्तादिकंकृत्वाद्वादश्यामेवोपवासव्रतंसमापयेत् ॥ तदाहकात्यायनः ॥ उपवासेत्वशक्तानामशीतेरूर्ध्वजीविनाम् ॥ एकभक्तादिकंकार्यमाहबौधायनोमुनिरिति ॥ कूर्मपुराणेपि ॥ एकभक्तेननक्तेनक्षीणवृद्धातुरःक्षपेत् ॥ नातिक्रमेद्द्वादशींतुउपवासव्रतेन चेदिति ॥ मार्कण्डेयेऽपि ॥ एकभक्तेननक्तेनतथैवायाचितेनच ॥ उपवासेनदानेननानिर्द्वादशिकोभवेदिति ॥ वायुपुराणेपि ॥ अथवाविप्रमुख्येभ्योदानंदत्त्वास्वशक्तितः ॥ उपवासफलंतस्यसमग्रंतु भविष्यतीति ॥ तत्रभोजनदोषोपितत्क्षणादेवनश्यतीति ॥ एकभक्तादिष्वशक्तउपवासादिव्रतेभार्यादीन्विनियोजयेत् ॥ तदुक्तं स्कंदपुराणे ॥ असामर्थ्येशरीरस्यव्रतेचसमुपस्थिते ॥ कारयेद्धर्मपत्नींवापुत्रंवाविनयान्वितम् ॥ भ्रातरंभगिनींशिष्यंब्राह्मणंदक्षिणादिभिः ॥ दक्षिणामंतरेणापिमातृगुर्वाद्यर्थमुपोषणेद्वयोरप्युपवास

फलंतुल्यम् ॥ यदाहकात्यायनः ॥ पितृमातृपतिभ्रातृगुर्वर्थंचविशेषतः ॥ उपवासंप्रकुर्वाणःपुण्यंशतगुणंलभेत् ॥ दक्षिणाचप्रदातव्याशुश्रूषाविहिताहिसेति ॥ तथाच ॥ नारीचपतिमुद्दिश्यएकादश्यामुपोषिता ॥ पुण्यंशतगुणंयायादितिबौधायनोऽब्रवीत् ॥ उपवासफलंतस्याःपतिःप्राप्नोत्यसंशयम् ॥ तथाराजन्क्षत्रियार्थेचैकादश्यामुपोषितः ॥ पुरोधाःक्षत्रिणासार्द्धंफलंप्राप्नोतिनिश्चितम् ॥ उपवासफलंताभ्यांसममेवसमाप्यते ॥ क्षत्रिणेतिच्छांदसःशब्दः ॥ पितामहादीनुद्दिश्यएकादश्यामुपोषणम् ॥ कृतेतुतत्फलंविप्राःसमग्रंसमवाप्नुयुः ॥ कृत्वा[1]शतगुणंपुण्यंफलंप्राप्नोत्यसंशयमिति ॥ इदमेकादशीव्रतंसूतकेदानार्चनादिवर्जितंकुर्यात् ॥ तदुक्तंवाराहपुराणे ॥ सूतकेतुनरःस्नात्वाप्रणम्यमनसाहरिम् ॥ एकादश्यांनभुंजीतव्रतमेवंनलुप्यते ॥ यथा ॥ पूर्वसंकल्पितंयत्तुव्रतंसुनियतव्रतैः ॥ तत्कर्त्तव्यंनरैःशुद्धंदानार्चनविवर्जितम् ॥ मृतकाशौचेत्वेकादश्यामभोजनंकृत्वा द्वादश्यांस्नात्वाभुंजीत ॥ तदुक्तंवाराहपुराणे ॥ मृतकेह्निनभुंजीतएकादश्यांसदानरः ॥ द्वादश्यांतुसमश्नीयात्स्नात्वाविष्णुंप्रणम्यचेति ॥ कूर्मपुराणेपि ॥ काम्योपवासेप्रक्रांतेत्वंतरामृतसूतके ॥ काम्यंनामव्रतंकुर्याद्दानार्चनविवर्जितमिति ॥ सूतकेवर्जितंदानादिकंतदंतेकुर्यात् ॥ तदुक्तंमत्स्यपुराणे ॥ सूतकान्तेनरःस्नात्वापूजयित्वाजनार्दनम् ॥ दानंदत्त्वाविधानेनव्रतस्यफलमश्नुते ॥ स्त्रीणांतुव्रतविषयेविशेषोलिख्यते ॥ नारीभर्तृपितृसुताद्यनुज्ञयैवव्रताधिकारिणीनान्यथा ॥ तदाहकात्यायनः ॥ भार्याभर्तृमतेनैवव्रतादीनाचरेदिति ॥ मनुरपि ॥ नास्तिस्त्रीणांपृथग्यज्ञोनव्रतन्नाप्युपोषणमिति ॥ विष्णुरपि ॥ पत्यौजीवतियानारीउपवासव्रतंचरेत् ॥ आयुष्यंहरतेभर्तुर्नरकंचैवगच्छतीति ॥ मार्कंडेयोपि ॥ नारीयात्वननुज्ञाताभ्रात्रापित्रासुतेनवा ॥ निष्फ

[1] कर्त्तादशगुणंपुण्यामि० वा पा० ।

लंतुभवेत्तस्यायत्करोतिव्रतादिकमिति ॥ स्त्रीणांव्रतेदंतधावनादिकं नदुष्टम् ॥ तथाचमनुःस्त्रीधर्मप्रकरणे ॥ पुष्पालंकारवस्त्राणिग न्धधूपानुलेपनम् ॥ उपवासेनदुष्यंतिदंतधावनमञ्जनम् ॥ रजस्व लातुयानारीभर्तारंपुत्रभागिनी ॥ भ्रातरंवाप्रार्थनया पुत्रंवापिनियोज येत् ॥ दक्षिणांदत्त्वाब्राह्मणंवास्वयंचनभुंजीत ॥ तदाह पैठीनसिः ॥ भार्यापत्युर्व्रतंकुर्याद्भार्यायाश्चपतिर्व्रतम् ॥ असामर्थ्येपरंताभ्यांव्रत भंगोनजायते ॥ स्कंदेपि ॥ पुत्रंवाविनयोपेतंभगिनींभ्रातरंतथा ॥ एषामभावएवान्यंब्राह्मणंवानियोजयेत् ॥ यत्तु ॥ एकादश्यांनभुंजी तनारीदृष्टेरजस्यपि ॥ तथा ॥ संप्रवृत्तेपिरजसि नत्याज्यंद्वादशीव्रतम् ॥ तथा ॥ प्रारब्धदीर्घतपसांनारीणांयद्रजोभवेत् ॥ नतत्रापिव्रत स्यस्यादुपरोधःकदाचनेत्यादिवाक्यैरजस्वलायाअपिव्रतमुक्तम् ॥ त त्तुपत्यादिनाव्रतंकारयितव्यम् ॥ तेनकृतेपितस्याव्रतफलंभवति ॥ अन्यथा शुचिनाकर्मकर्तव्यमितिवचन विरोधःस्यात् ॥ शुचित्वञ्चतस्याःपंचमेऽह्नि ॥ यथा ॥ पंचमेऽहनिशुद्धास्याद्दैवेपि त्र्येचकर्मणीति ॥ अतश्चरजस्वलानारीपत्यादिकंव्रतेनियोजयेत् ॥ एकादश्यांनभुंजीतनारीदृष्टेरजस्यपीतिपुलस्त्यवचनात्स्वयमपिनभुं जीत ॥ रजस्वलापिसूतकन्यायेनपंचमेऽहनिदाना र्चनंकुर्वीतेतिसि द्धम् ॥ एकादश्यांसांवत्सरिकादिश्राद्धेसंप्राप्तेपितृशेषंसमाघ्रायोप वासंकुर्यात् ॥ तेनश्राद्धकर्तुर्विहितंभोजनमेकादश्यांविहितमभो जनञ्चकृतंभवति ॥ तदाहकात्यायनः ॥ उपवासोयदानित्यःश्राद्धंनै मित्तिकंभवेत् ॥ उपवासंतदाकुर्यादाघ्रायपितृसेवितमिति ॥ तथाश्रु तिरपि ॥ अवघ्रेयमेवतन्नैवप्राशितंनैवाप्राशितमिति ॥ एवमेकाद श्याःस्मार्तमतेननिर्णयउक्तः ॥ अत्रविज्ञानेश्वरसंग्रहश्लोकाःपूर्वमेवो क्ताः ॥ इदानींविश्वरूपनिबंधोक्ताःसंग्रहश्लोकाउच्यन्ते ॥ यथा ॥ शुद्धात्रेधातथाविद्धाभेदैर्न्यूनसमाधिकैः ॥ प्रत्येकंचपुनस्त्रेधाद्वाद

श्यूनसमाधिकैः॥ आद्यासुषट्सुपूर्वैवव्यवस्थानंतरद्वये॥ गृहमेधिय तीनाञ्चनवमीचापरेहनि॥ आद्यास्तिस्रस्तुपूर्वाःस्युर्व्यवस्थानंतर द्वये॥ अपरेहनिशेषाःस्युःसप्तमीचव्यवस्थयेति॥ तथाग्रंथांतरे॥ हीनाहीनाधिकाशुद्धाहीनाहीनाधिकापरा॥ एवञ्चैकादशीविद्धाचात्र निर्णयसंग्रहः॥ शुद्धषट्केतथाविद्धेत्रिकेपूर्वाव्यवस्थिता॥ द्वयेद्वयेस समेचशेषेष्वेकादशीपरेति॥ यत्रैकादश्यामुपवासउक्तः सचचतु र्विधः॥ यथोक्तंभविष्योत्तरपुराणे॥ सतांबूलमतांबूलंसभोजनमभो जनम्॥ साहारञ्चनिराहारंचतुर्विधमुपोषणमिति॥ अत्रसतांबूलंस भोजनंसाहारंचेतित्रयोभेदाः॥ चतुर्थस्त्वतांबूलादिपदैःसर्वगतःके वलोपवासः॥ चतुर्णामपिस्वरूपंतत्रैवोक्तम्॥ यथा॥ यावत्कृ ताह्निकोनस्याद्यावन्नार्चयतेहरिम्॥ तावदश्नातितांबूलंसतांबूलंतदु च्यते॥ पूजयित्वाच्युतंपूर्वंपूर्णभुक्त्याभुनक्तियः॥ भद्रामुक्तौपुनर्भु क्तेतत्सभोजनमुच्यते॥ श्राद्धंकृत्वापितॄंस्तर्प्यसंतर्प्यज्ञातिबांधवा न्॥सार्ववर्णिकमाभोज्यसपत्नीब्रह्मभोजने॥ समुपाघ्रायपित्रान्नंगोभ्यो दद्यात्प्रयत्नतः॥ न्यूनोपवासनियमेतत्संहारंप्रकीर्त्तितमिति॥ एतेत्र योभेदादेशविशेषविषयाअधिकारिविशेषविषयाश्चज्ञातव्याः॥ चतुर्थ स्तुसर्वसाधारणः॥ अत्रशुद्धाविद्धाभेदेननिर्णयउक्तः॥ तत्रकी दृशीशुद्धा॥ कीदृशीविद्धेत्यत्रसूर्यसिद्धांतेउक्तम्॥ यथा॥ सर्वा ह्येताश्चतिथयउदयादुदयांस्थिताः॥ शुद्धाइतिविनिश्चेयाषष्टिर्नाड्यो हिवैतिथिरिति॥ नारदीयेप्युक्तम्॥ आदित्योदयवेलायामारभ्यष ष्टिनाडिका॥ यातिथिस्सातुशुद्धास्यात्सार्वतिथ्योह्ययंविधिरिति॥ अतश्चसूर्योदयमारभ्यपुनःसूर्योदयपर्यंतंस्थितातिथिःशुद्धादिवस- स्यादावंतेचान्यातिथियुक्ताविद्धेत्यर्थः॥ नन्वरुणोदयवेलायांदशमी युतैकादशीविद्धेतिकैश्चिदुक्तम्॥ अरुणोदयकालश्चस्कंदपुराणेप्रो क्तः॥ यथा॥ उदयात्प्राक्चतस्रस्तुनाडिकाअरुणोदयः॥ तत्र

स्नानंप्रशस्तंस्यातद्धिपुण्यतमंस्मृतमिति॥ तत्रारुणोदयकालेदशमी विद्धानोपोष्या ॥ यथाभविष्योत्तरे ॥ अरुणोदयकालेतुदशमीय दिदृश्यते ॥ साविद्धैकादशीतत्रपापमूलमुपोषणमिति ॥ सौरधम च ॥ आदित्योदयवेलायांप्राङ्मुहूर्तद्वयान्विता ॥ एकादशीतुसं पूर्णाविद्धान्यापरिकीर्तितेति ॥ इत्यादीन्यरुणोदयवेधनिषेधकान्य न्यान्यपिवचनानिवैष्णवविषयाणिज्ञातव्यानि ॥ तदुक्तंगरुडपुराणे ॥ दशमीशेषसंयुक्तोयदिस्यादरुणोदयः ॥ नैवोपोष्यावैष्णवैस्तुतत्रचै कादशीव्रतमिति ॥ वैष्णवस्वरूपञ्चस्कन्दपुराणेनिरूपितम् ॥ ॥ यथा ॥ परमापदमापन्नेहर्षेवासमुपस्थिते ॥ नैकादशींत्यजेद्य स्तुयस्यदीक्षातुवैष्णवी ॥ समात्मासर्वजीवेषुनिजाचारादविप्लुतः ॥ विष्णवर्पिताखिलाचारःसहिवैष्णवउच्यतइति ॥ अतश्चारुणोदयवेधे पिदीक्षितैःपरमभागवतैर्नोपवासःकार्यः ॥ अन्येषांस्मार्तमतानुसारि णांसर्वेषामप्युक्तनिर्णयानुसारेणैवोपवासइतिसिद्धांतः ॥ अथचैत्रा द्येकादशीषुकृत्यविशेषोलिख्यते ॥ ॥ तत्रचैत्रैकादश्यांस्त्रीभीरु क्मिणीपूज्या ॥ तदुक्तंब्रह्मपुराणे ॥ एकादश्यांततःस्त्रीभिर्देवी पूज्याचरुक्मिणी ॥ पुष्पालंकारधूपान्नवस्त्रब्राह्मणतर्पणैरिति ॥ तत्रैवापराह्णेवास्तुपूजाकार्या ॥ तदुक्तंब्रह्मपुराणे ॥ तत्रापराह्णे वास्तुर्वैवेश्मनांवंशधारकः ॥ अर्घ्यैर्माल्यैश्चवस्त्रैश्चपूज्योरंगैःसुचित्रि तैरिति ॥ तत्रैवरात्रौसलक्ष्मीकोवासुदेवःसोत्सवमांदोलनीयः॥तदुक्तं ब्रह्मपुराणे ॥ चैत्रमासस्यशुक्लायामेकादश्यांतुवैष्णवैः ॥ आंदोलनी योदेवेशःसलक्ष्मीकोमहोत्सवैः ॥ दमनेनार्चयित्वाचरात्रौजागरणंच रेदित्यादि॥ ॥इतिचैत्रैकादशी ॥ ॥अथज्येष्ठशुक्लैकादशीनिर्जलाप्रसि द्धा ॥ तत्रनिर्जलमुपवासंकुर्यात् ॥ तदुक्तंस्कंदपुराणे ॥ ज्येष्ठेमासि नृपश्रेष्ठयाशुक्लैकादशीभवेत् ॥ निर्जलंसमुपोष्याथजलकुंभान्सशर्क रान् ॥ प्रदायविप्रमुख्येभ्यस्तापत्रयविवर्जितः ॥ विष्णुलोकमवाप्ये

ह्मोदतेविष्णुसंनिधाविति ॥ ॥ इतिनिर्जलैकादशी ॥ ॥ अथाषाढशुक्लैकादशीदेवशयनीतत्रस्वशक्त्यावक्ष्यमाणलक्षणांसुवर्णादिनिर्मितांलक्ष्मीनारायणप्रतिमांक्षीराब्धौशेषपर्यंकेसुप्तीकृत्वासंपूज्य रात्रौजागरणाद्युत्सवंकुर्यात् ॥ तदुक्तंब्रह्मपुराणे ॥ एकादश्यांतुशुक्लायामाषाढेभगवान्हरिः ॥ भुजङ्गशयनेशेतेयदाक्षीरार्णवेसदा ॥ तदा तत्प्रतिमाकार्यासर्वलक्षणसंयुता ॥ सुप्ताशेषपर्यंकेशैलमृद्भिःसुवारिभिः॥ताम्रारकूटरजतैस्तथाचित्रपदेषुवा॥ लक्ष्म्याउत्संगहस्तेषुविन्यस्तचरणांबुजा ॥ नानाविधोपकरणैः पूज्याचविधिपूर्वकम्॥उपवासः प्रकर्तव्योरात्रौजागरणंतथा ॥तस्यांरात्र्यांव्यतीतायांद्वादश्यांपूजयेत्तथा॥त्रयोदश्यांततोनृत्यंगीतवाद्येर्निवेदयेदिति ॥ पुराणसमुच्चयेप्युक्तम् ॥आषाढस्यसितेपक्षेएकादश्यामुपोषितः॥स्वापयेत्प्रतिमांविष्णोः शंखचक्रगदाधराम्॥पीताम्बरधरांसौम्यांपर्यंकेस्वास्तृतेशुभे॥ शुक्लवस्त्रसमाच्छन्नेसोपधानेयुधिष्ठिर ॥ इतिहासपुराणज्ञोविष्णुभक्तोथवापुमान् ॥ स्नापयित्वादधिक्षीरघृतक्षौद्रजलैस्तथा ॥ समालभ्यशुभैर्गंधैर्धूपैर्वस्त्रैरलंकृताम् ॥ पूजयित्वासुमैःशुक्लैर्मंत्रेणानेनपांडव ॥ मंत्रश्च ॥ सुप्तेत्वयिजगन्नाथजगत्सुप्तंभवेदिदम्॥ विबुद्धेत्वयिबुद्धेतजगत्सर्वंचराचरमिति ॥ एवंसंपूज्यदेवस्याग्रेउपोषितश्चातुर्मास्यव्रतंकुर्यात् ॥ सनत्कुमारोप्याह ॥ एकादश्यांतुगृह्णीयात्संक्रांतौकर्कटस्यच ॥ आषाढ्यांवैनरोभक्त्याचातुर्मास्योदितव्रतमिति ॥ व्रतारंभेमंत्रश्च सनत्कुमारेणोक्तः ॥ इदंव्रतंमयादेवगृहीतंपुरतस्तव ॥ निर्विघ्नंसिद्धिमायातुप्रसन्नेत्वयिकेशव ॥ गृहीतेस्मिन्व्रतेदेवयद्यपूर्णेम्रियाम्यहम्॥तन्मेभवतुसंपूर्णंत्वत्प्रसादाज्जनार्दनेति ॥अत्रैवविशेषोवृद्धगार्ग्येणोक्तः॥ नशैशवंनमौढ्यंवाशुक्रगुर्वोर्नवातिथेः ॥ खंडंचचिंतयेज्जातुचातुर्मास्यव्रतेनरइति॥इतिशयनीयैकादशी ॥ ॥ अथभाद्रपदशुक्लैकादश्यांशयनैकादश्यामिवपूजोत्सवादिकंकृत्वादेवस्यपार्श्वपरिवर्तनंकुर्यात्

॥ तदुक्तंभविष्योत्तरे ॥ प्राप्तेभाद्रपदेमासिएकादश्यांसितेहनि ॥ कटदानंभवेद्विष्णोर्महापूजांप्रवर्तयेदिति॥कटदानंपार्श्वपरिवर्तनम् ॥ इतिभाद्रपदैकादशी ॥ ॥ अथाश्विनशुक्लैकादश्यामुपवास जागरणादिकंकृत्वाद्वादश्यादिषुविष्णुपूजांकुर्यात् ॥ तदुक्तंभविष्यो[1]त्तरे आश्विनतिथिप्रक्रमे ॥ सोपवासैश्चकर्तव्याएकादश्यांप्रजागरः ॥ द्वादश्यांवासुदेवश्चपूजनीयस्तुसर्वदा ॥ यात्रोत्सवश्चकर्त्तव्यस्त्रयोदश्यांतुवैष्णवैः ॥ उपवासश्चतुर्दश्यांपौर्णमास्यांहरिंयजेदिति ॥ ॥ इत्याश्विनैकादशी ॥ ॥ अथकार्तिकशुक्लैकादश्यांप्रसुप्तं देवंपूजाजागरोत्सवादिभिर्मंत्रेणप्रबोध्यरथयात्रोत्सवंकुर्यात् ॥ तदुक्तं ब्रह्मांडपुराणे ॥ एकादश्यांचशुक्लायांकार्तिकेमासिकेशवम् ॥ प्रसुप्तंबोधयेद्रात्रौश्रद्धाभक्तिसमन्वितः ॥ नृत्यैर्गीतैस्तथावाद्यैर्ऋग्यजुःसाममंगलैः ॥ वीणावेणुप्रशब्दैश्चपुराणश्रवणेनवा ॥ वासुदेवकथाभिश्चस्तोत्रैरन्यैश्चवैष्णवैः ॥ पुष्पैर्धूपैश्चनैवेद्यैर्दीपैर्भक्ष्यैःसुशोभनैः ॥ होमैरम्यैरपूपैश्चफलैःशार्करपायसैः ॥हृद्याभ्यांश्वेतरक्ताभ्यांचन्दनाभ्यांचसर्वदा ॥ कुंकुमालक्तकाभ्यांचरक्तसूत्रैःसकंकणैः ॥ तस्यांरात्र्यांव्यतीतायांद्वादश्यामरुणोदये ॥ आदौघृतेनैक्षवेणमधुनास्नापयेत्ततः ॥ दध्नाक्षीरेणचततः पंचगव्येनशास्त्रवित् ॥ उद्वर्त्तनंमाषचूर्णमसूरामलकानिच॥ सर्षपाश्चप्रियंगुश्चमातुलिंगरसस्तथा ॥ सर्वौषध्यःसर्वगंधाः सर्वबीजानिकांचनम् ॥ मंगलानियथाकामंरत्नानिचकुशोदकम् ॥ एवंसंशोध्यदेवेशंदद्याद्गोरोचनांशुभाम् ॥ ततस्तुकलशादेयायथाप्राप्ताःस्वलंकृताः ॥ जातीपल्लवसंयुक्ताःसकलाश्चसकांचनाः॥पुण्याहवेदशब्देनवीणावेणुरवेणवा॥एवंसंस्नाप्यगोविंदंस्वनुलिप्तंस्वलंकृतम् ॥ सुवाससंपूजयेच्चसुमनोभिःसकुंकुमैः ॥ धूपैर्दीपैर्मनोज्ञैश्चपायसेनच भूरिणा॥पात्रायान्नदानैश्चहोमैःपुष्पैःसदक्षिणैः॥ वासोभिर्भूषणैरन्यैर्गोभिरश्वैर्मनोजवैः ॥ ब्राह्मणाःपूजनीयाश्चविष्णोर्रीज्याश्चमूर्तयः ॥ यत्तु

१ ब्रह्मपुराणे इ० पा० । २ ब्रह्मपुराणेच इ० पा० ।

सामि॥दामवादतवदनाथ ॥ बुध्यस्वदेवशेजगन्निवासमंत्रप्रभावेणसु
खेनदेवेति ॥तथाच॥ इयंचद्वादशीदेवप्रबोधार्थंतुनिर्मिता॥ त्वयैवसर्व
लोकानांहितार्थंशेषशायिना॥उत्तिष्ठोत्तिष्ठगोविंदत्यजनिद्रांजगत्पते॥
त्वयिसुप्तेजगत्सुप्तमुत्थितेह्युत्थितंजगत् ॥ एवमुत्थाप्यमंत्रेणपुष्पाञ्ज
लिंदद्यात्॥मन्त्रस्तु॥चरणंपवित्रमितिवैदिकः ॥ पौराणिकस्तु गतामे
घावियच्चैवनिर्मलंनिर्मलादिशः ॥शारदानिचपुष्पाणिगृहाणममकेशव
इति ॥ समुत्थितेततोविष्णौ क्रियाः सर्वाःप्रवर्त्तयेत् ॥ महातूर्यरवैरा
त्रौभ्रामयेत्स्यंदनेस्थितम् ॥ उत्थितंदेवदेवेशंनागरैःप्रार्थितः स्वयम् ॥
रात्रौजागरणंकुर्यादेकादश्यांसुरालये ॥ प्रभातेविमलेस्नात्वाभोज
यित्वाद्विजोत्तमान् ॥ आचान्तेभ्यस्ततो दद्यात्त्यक्तंयत्किंचिदेवहि ॥
त्यक्तंचातुर्मास्येऽभ्यंजनादिकम् ॥ तदुक्तम् ॥ चातुर्मासेतुयत्त्यक्तंभ
क्ष्यभोज्यादिकंचयत्॥चतुरोवार्षिकान्मासान्नियमंयत्स्वयंकृतम् ॥क
थयित्वाद्विजेभ्यश्चदद्याद्भक्त्यासदक्षिणम् ॥ दत्त्वाविसर्जयेद्विप्रांस्ततो
भुंजीतवैस्वयमिति ॥व्रतसमापनेमंत्रश्चसनत्कुमारेणोक्तः॥इदंव्रतंमया
देवकृतंप्रीत्यैतवप्रभो ॥ न्यूनंसंपूर्णतांयातुत्वत्प्रसादाज्जनार्दनेति
॥ ॥ इति प्रबोधिन्येकादशी ॥ ॥ मार्गशीर्षादिशुक्लैकादशीषुवराह
पुराणोक्तधरणीव्रतान्युच्यंते ॥ यथा ॥ दुर्वासाःसत्यतपसंप्रत्याह ॥
यदामार्गशिरेमासिदशम्यांनियतात्मवान् ॥ कृत्वादेवार्चनंधीमान
ग्निकार्यंयथाविधि ॥ शुचिवासाः प्रसन्नात्माह[3]व्यमन्नंसुसंस्कृतम् ॥
भुक्त्वापंचपदंगत्वापुनःशौचंतुपादयोः ॥ कृत्वाष्टांगुलमात्रंतुक्षीरवृ-
क्षसमुद्भवम् ॥ भक्षयेद्दंतकाष्ठंतुततश्चाचम्ययत्नतः ॥ स्पृष्ट्वाच
खानिसर्वाणिचिरंध्यात्वाजनार्दनम् ॥ शंखचक्रगदापाणिंकिरीटपी-

१ शिष्टामृतंपश्चादिति पा० । २ निश्चितः इ० पा० । ३ वन्यमिति पा० ।

तवाससम् ॥ प्रसन्नवदनंदेवंसर्वलक्षणलक्षितम्॥ध्यात्वापुनर्जलंहस्ते गृह्यभानुंजनार्दनम् ॥ध्यात्वार्घ्यंदापयेत्तस्यकरतोयेनमानवः॥ एवमुच्चारयेद्वाचंतस्मिन्कालेमहामुने॥एकादश्यांनिराहारःस्थित्वाहमपरेहनि ॥ भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत ॥ एवमुक्त्वाततोरात्रौ देवदेवस्यसन्निधौ ॥ जपन्नारायणायेतिस्वपेत्तत्राविधानतः॥ ततः प्रभातेविमलांनदींगत्वासमुद्रगाम् ॥ इतरांवातडागंवागृहेवानियमात्मवान् ॥ आनीयमृत्तिकांशुद्धांमंत्रेणानेनमानवः ॥ धारणंपोषणंत्वत्तोभूतानांदेविसर्वदा ॥ तेनसत्येनमेपापंयावन्मोचयसुव्रते[1] ॥ ब्रह्मांडोदरतीर्थानिकरैःस्पृष्टानितेरवे ॥ तैरिमांमृत्तिकांस्पृष्ट्वामालभामित्वयैधिताम् ॥ त्वयिसर्वेरसानित्याःस्थितावारुणसर्वदा ॥ तैरिमांमृत्तिकांप्लाव्यपूतांकुरुचमाचिरम् ॥ एवंमृदंतथातोयंप्रसाद्यात्मानमालभेत् ॥ त्रिःकृत्वाशेषमृदयाकुंडमालिख्यवैजले ॥ ततस्तस्मिन्नरःसम्यग्यथाविध्युपचारतः ॥ स्नात्वाचावश्यकंकृत्वापुनरेवगृहंव्रजेत्॥तत्राराध्यमहादेवंयोगनारायणंहरिम्॥पूजामन्त्राः ॥ केशवाय नमःपादौकटिंदामोदरायच॥ऊरुयुग्मंनृसिंहायचोरःश्रीवत्सधारिणे ॥ कंठेकौस्तुभनाथायवक्षःश्रीपतयेतथा ॥ त्रैलोक्यविजयायेतिबाहूसर्वात्मनेशिवः॥रथांगधारिणेचक्रंशंकरायेतिवारिजम् ॥ गंभीरायेतिचगदामंभोजंशांतमूर्तये॥ एवमभ्यर्च्यदेवेशंदेवंनारायणंप्रभुम् ॥ पुनस्तस्याग्रतःकुंभांश्चतुरःस्थापयेद्बुधः॥जलपूर्णान्समाल्यांश्चसितचंदनलेपितान् ॥ चूतपल्लवसंयुक्तान्सितवस्त्रावगुंठितान् ॥ संयुक्तांस्ताम्रपात्रैश्चतिलपूर्णैःसकांचनैः॥चत्वारस्तेसमुद्रास्तुकलशाःपरिकीर्तिताः॥ तेषामधःशुभंपीठंस्थापयेद्वस्त्रगर्भितम् ॥ तस्मिन्सौवर्णंरौप्यंवा ताम्रंवादारुजंतथा ॥ अलाभेसर्वपात्राणांपालाशंपात्रमिष्यते ॥ तोयपूर्णंचतत्कृत्वातस्मिन्पात्रेततोन्यसेत् ॥ सौवर्णंमत्स्यरूपेणकृत्वादेवंजनार्दनम् ॥ वेदवेदांगसंयुक्तंश्रुतिस्मृतिविभूषितम् ॥ तत्राने

१ तेनसत्येनमांपृथ्विपापान्मोचयमृत्तिके इ० वा पा० ।

कविधैर्भक्ष्यैःफलैःपुष्पैश्चशोभितम् ॥ गंधपुष्पैश्चवस्त्रैश्चअर्चयित्वा यथाविधि ॥ रसातलगतावेदायथादेवत्वयोद्धृताः ॥ मत्स्यरूपे णतद्वन्मांभवादुद्धरकेशव ॥ एवमुच्चार्यतस्याग्रेजागरंतत्रकारयेत् ॥ यथाविभवसारेणप्रभातेविमलेतथा ॥ चतुर्णांब्राह्मणानाञ्चचतुरो दापयेद्घटान् ॥ पूर्वंचबह्वृचेदद्याच्छंदोगेदक्षिणंतथा ॥ यजुःशा खाच्युतेदद्यात्पश्चिमंघटमुत्तमम् ॥ उत्तरंकामठेदद्यादेषदानविधिः स्मृतः ॥ ऋग्वेदःप्रीयतांपूर्वैःसामवेदस्तुदक्षिणैः ॥ यजुर्वेदःपश्चि मंतस्त्वथर्वाचोत्तरेणतु ॥ अनेनक्रमयोगेनप्रीयतामितिवाचयेत् ॥ मत्स्यरूपंतुसौवर्णमाचार्यायनिवेदयेत् ॥ वस्त्रगन्धादिधूपैश्चसंपू ज्यविधिवत्पुमान् ॥ यस्त्विमंशंखहस्तंचमन्त्रेणैवोपपादयेत् ॥ विधिनातस्यतद्दानंभवेत्कोटिगुणोत्तरम् ॥ प्रतिपद्यगुरुंयस्तुमोहा द्विप्रतिपद्यते ॥ सजन्मकोटिनरकेपच्यतेपुरुषाधमः ॥ विधानस्य प्रदाताव्योगुरुरित्युच्यतेबुधः ॥ एवंदत्त्वाविधानेनद्वादश्यांविष्णुम र्चयेत् ॥ विप्राणांभोजनंदद्याद्यथाशक्त्याचदक्षिणाम् ॥ परमान्नघृ तेनैवततःपश्चात्स्वयंनरः ॥ भुञ्जीतसहितोविप्रैर्वाग्यतःसंयतेन्द्रियः॥ अनेनविधिवायस्तुधरणीव्रतकृन्नरः ॥ तस्यपुण्यफलंचाग्र्यंशृणुतत्त्व विदांवर ॥ यदिवक्त्रसहस्राणांसहस्राणिभवेदिह ॥ आयुश्चब्रह्मणस्तु ल्यंभवेद्यदिमहाव्रतम् ॥ तदानीमस्यसर्वस्यफलंकथयितुंभवेत् ॥ यइमंश्रावयेद्भक्त्याद्वादशीफलमुत्तमम् ॥ शृणोतिवासपापैस्तुसर्वै रेवप्रमुच्यते ॥ ॥ इतिधरणीव्रतेषुमत्स्यद्वादशीव्रतम् ॥ अथ पौषमासस्यैकादश्यांपूर्ववन्नियतः स्नानादिकंकृत्वा कूर्मरूपिणंदेवं संपूज्यद्वादश्यामाचार्यायदद्यात् ॥ कलशपात्रादिविधिस्तुमार्ग शीर्षैकादश्यामुक्तएवकार्यः ॥ तदुक्तंवाराहपुराणे ॥ तथैवपौ षमासेतुअमृतंमथितंसुरैः ॥ तत्रकूर्मोभवेद्देवःस्वयमेवजनार्दनः ॥ तस्येयंतिथिरुद्दिष्टाविष्णोर्वैकूर्मरूपिणः ॥ पौषमासस्यया शुद्धा

द्वादशीशुक्लपक्षतः॥तस्यांप्राग्वत्तुसंकल्पंप्राग्वत्स्नानादिकाःक्रियाः॥ निर्वृत्याराधयेद्रात्र्यामेकादश्यांजनार्दनम् ॥ पृथङ्मंत्रैर्मुनिश्रेष्ठादेव देवंजनार्दनमिति॥ कूर्मायपादंप्रथमंप्रपूज्यनारायणायेतिहरेःकटिंच॥ संकर्षणायेत्युदरंविशोकेत्युरोभवायेतितथैवकंठम् ॥ सुबाहवेचेति भुजौशिरस्तुनमोविशालायरथांगशंखौ॥स्वनाममंत्रेणसुगन्धपुष्पैर्ना नानिवेद्यैर्विविधैःफलैश्च ॥ अभ्यर्च्यदेवंकलशंतदग्रेसंस्थाप्यमाल्यैः सितकंठदाम ॥ तंरत्नगर्भंतुपुरेवकृत्वास्वशक्तितोहेममयंतुदेवम् ॥ समंदरंकूर्मरूपेणकृत्वासंस्थाप्यताम्रेघृतपूर्णपात्रे ॥ पूर्णेघटस्योपरि संनिवेश्यतंब्राह्मणायैवतुसंप्रदद्यादिति ॥ दानब्राह्मणभोजनादिवि धिःपूर्वोक्तएवज्ञाह्यः॥ ॥ इतिकूर्मद्वादशीव्रतम् ॥ ॥ एवंमाघशुक्लै कादश्यां सौवर्णवाराहरूपिणंदेवं सर्वबीजसंपूर्णकलशस्योपरिस्थापि तसौवर्णादिपात्रेस्थापयित्वासंपूज्यद्वादश्यांब्राह्मणायदद्यात् ॥ पूजा विधिस्तुमार्गशीर्षैकादश्युक्तएव ॥ तदुक्तंवाराहपुराणे ॥ एवंमाघ सितेपक्षेद्वादशींधरणीभुज॥वाराहस्यशृणुष्वार्चांमुनेपरमधार्मिकेत्युप क्रम्य ॥ वाराहायेतिपादौतुमाधवायेतिवैकटिम्॥क्षेत्रज्ञायेतिजठरेवि श्वरूपेत्युरोहरेः ॥ सर्वज्ञायेतिकंठंतुप्रजानांपतयेशिरः ॥ प्रद्युम्ना येतिचभुजौदिव्यास्त्रायसुदर्शनम् ॥ अमृतोद्भवायशंखंतुएवमेवार्च नेविधिरिति ॥ प्रतिमास्वरूपंतु ॥ यथाशक्तितुसौवर्णवाराहंका रयेद्बुधः ॥ दंष्ट्रयोद्धिभ्रतंपृथ्वींसपर्वतवनद्रुमाम् ॥ माधवंमधुहंतारं वाराहंरूपमास्थितम् ॥ सर्वबीजभृतेपात्रेरत्नगर्भघटोपरि ॥ स्थापयेत्परमंदेवंजातरूपमयंहरिमिति ॥ दानार्चनविधिःपूर्वोक्तए व ॥ इतिवाराहद्वादशीव्रतम् ॥ अथफाल्गुनशुक्लैकादश्यांपूर्ववदुपो ष्यसौवर्णनृसिंहंसौवर्णादिपात्रेकलशोपरिसंस्थाप्यपूजयित्वाद्वादश्यां ब्राह्मणायनिवेदयेत् ॥ अन्यःसर्वोपिविधिःपूर्वोक्तएव ॥ तदुक्तं

---

१ तुवरेणलिख्वा इ० वा पा०। २ चतुर्भुजायेति इ० वा पा०।

वाराहपुराणे ॥ तद्वत्फाल्गुनमासेतुशुक्लपक्षेतुद्वादशीम् ॥ उपोष्यप्रो
क्तविधिनाहरिमाराधयेत्सुधीः ॥ नरसिंहायपादौतुगोविंदायेत्युरूत
था ॥ कटिंविश्वभुजेपूज्यअनिरुद्धेत्युरस्तथा ॥ कंठंतुशितिकंठाय
हृषीकेशायवैशिरः ॥ असुरध्वंसनायेतिचक्रंतोयात्मनेतथा ॥ शं
खमित्येवसंपूज्यगंधपुष्पफलैस्तथेति ॥ ॥ इतिनृसिंहद्वादशीव्रतम् ॥
इयमेवामर्दकी ॥ तत्रामर्द्दकवृक्षस्थितंविष्णुंसंपूज्यप्रदक्षिणांकुर्यात् ॥
तदुक्तंभविष्योत्तरे ॥ ॥ फाल्गुनेमासिशुक्लायामेकादश्यांजनार्दनः॥
वसत्यामलकीवृक्षेलक्ष्म्यासहजगत्पतिः॥तत्रसंपूज्यदेवेशंशक्त्याकुर्या
त्प्रदक्षिणाम् ॥ उपोष्यविधिवन्मर्त्योविष्णुलोकेमहीयते ॥ इत्यामर्द्द
की ॥ अथचैत्रशुक्लैकादश्यामुपोष्यसौवर्णंवामनंसंपूज्यच्छत्रिकादिसं
युक्तंद्वादश्यांब्राह्मणायदद्यात् ॥ तदुक्तंवाराहपुराणे ॥ एवमेवमुनेमा
सिचैत्रेसंकल्प्यद्वादशीम्॥उपोष्याराधयेत्पश्चाद्देवदेवंजनार्दनमिति ॥
वामनायेतिवैपादौविष्णवेकटिमर्चयेत् ॥ वासुदेवेतिजठरउरःसंकर्ष
णायच ॥ कंठेविश्व[1]हृतेपूज्यशिरोवैव्योमरूपिणे ॥ बाहूविश्वजितेपू
ज्यसुनाम्नाशंखचक्रके ॥ प्रागुक्तपात्रेसंस्थाप्यवामनंकांचनंबुधः ॥
यथाशक्त्याकृतंह्रस्वंसितयज्ञोपवीतिनम् ॥ कुंडिकांस्थाप्यपार्श्वे
तुच्छत्रिकांपादुकेतथा ॥ अक्षमालांचसंस्थाप्यमुद्रिकांचविशेषतः ॥
एतैरुपस्करैर्युक्तंप्रभातेसुद्विजायतम् ॥दापयेत्प्रीयतांविष्णुर्ह्रस्वरूपी
त्युदीरयेत् ॥ मासनाम्नातुसंयुक्तंप्रादुर्भावविधानकम् ॥ प्रीयतामि
तिसर्वत्रविधिरेषप्रकीर्तित इति ॥ मत्स्यरूपीकेशवः प्रीयतां कूर्म
रूपीकेशवःप्रीयतामित्यादिप्रयोगःसर्वत्रद्रष्टव्यः ॥ ॥ इतिवामन
द्वादशीव्रतम् ॥ ॥ अथवैशाखशुक्लैकादश्यामुपोष्यसौवर्णंपरशुरामं
संपूज्यद्वादश्यांब्राह्मणायदद्यात् ॥ तदुक्तं वराहपुराणे ॥ वैशा
खेप्येवमेवंतुसंकल्प्यविधिनानरइत्युपक्रम्य जामदग्न्यायपादौतु

---

१ सृजे इ० वा पा० ।

ह्युदरंसर्वधारिणे ॥ मधुसूदनायेतिकटिमुरःश्रीवत्सधारिणे ॥ शिरःसहस्रशीर्षायशंखचक्रेस्वनामतइति ॥ प्रतिमास्वरूपंतु ॥ जामदग्न्येतिविख्यातंनाम्नाक्के[१]शविनाशनम् ॥ दक्षिणेपरशुंहस्ते तस्यदेवस्यकारयेत् ॥ वैणवेनतुपात्रेणतस्मिन्संस्थापयेद्धरिमिति ॥ इतिजामदग्न्यद्वादशीव्रतम् ॥ ॥ अथज्येष्ठशुक्लैकादश्यां सौवर्णरामलक्ष्मणौसंपूज्यद्वादश्यांब्राह्मणायदद्यात् ॥ विधिस्तुप्रागुक्तएव ॥ मंत्रेषुविशेषः ॥ तदुक्तंवाराहपुराणे ॥ ज्येष्ठमासेप्येवमेवसंकल्प्यविधिनानरः ॥ अर्चयेत्परमंदेवंपुष्पैर्नानाविधैःशुभैः ॥ नमो रामाभिरामायपादौपूर्वंसमर्चयेत् ॥ त्रिविक्रमायेतिकटिंधृतविश्वाय चोदरम्॥उरःसंवत्सरायेतिकंठंसंवर्तकायच ॥सर्वास्त्रधारिणेबाहूस्वनाम्नाचरथांगके ॥ सहस्रशिरसेभ्यर्च्यशिरस्तस्यमहात्मनः॥पीताम्बरयुगच्छन्नौसौवर्णौरामलक्ष्मणौ ॥ अर्चयित्वाविधानेनप्रभातेब्राह्मणाय तौ॥दातव्यौमनसाकाममीहतापुरुषेणतु इति ॥ ॥ इतिरामद्वादशीव्रतम् ॥ आषाढशुक्लैकादश्यामुपोष्यपूर्वोक्तविधिनाचतुर्व्यूहंवासुदेवंसंपूज्यद्वादश्यांब्राह्मणायदद्यात् ॥ मंत्रेषुविशेषः ॥ तदुक्तंवराहपुराणे ॥ वासुदेवायपादौतुकटिंसंकर्षणायच ॥ प्रद्युम्नायेतिजठरं त्वनिरुद्धायवैउरः ॥ चक्रपाणयेतिभुजौकंठंभूपतयेतथा ॥ स्वनाम्नाशंखचक्रेतुपुरुषायेतिवैशिरः ॥ कांचनंवासुदेवंतुचतुर्व्यूहंसनातनम् ॥ तमभ्यर्च्यविधानेनगंधपुष्पादिभिःक्रमात् ॥ प्राग्वत्तंब्राह्मणेदद्याद्देववादिनिसुव्रते ॥ वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाश्चतुर्व्यूहाः॥ इतिवासुदेवद्वादशीव्रतम् ॥ ॥ अथश्रावणशुक्लैकादश्यांदामोदरनामानंदेवमभ्यर्च्यपूर्वोक्तविधानेनद्वादश्यांब्राह्मणायदद्यात् ॥ मंत्रेषुविशेषः ॥ तदुक्तंवाराहपुराणे ॥ दामोदरायपादौतुहृषीकेशायवै कटिम् ॥ सनातनायेतिजठरमुरःश्रीवत्सधारिणे ॥ चक्रपाणेतिभुजौकंठंचहरयेतथा॥ मुंजकेशायचाशिरोभद्रा[३]येतिललाटकम् ॥ स्वना

१ केशि इ० वा पा० । २ समंलक्ष्मणसंयुतम्। रामायपादौ संपूज्य राघवायेति जानुनी इ० पा० । ३ सर्वज्ञाय इ० वा पा० ।

आशंखचक्रेतुपूजयेत्परमेश्वरम् ॥ कांचनंदेवदेवंतुदामोदरसनाम कम्॥ प्राग्वत्तंब्राह्मणेदद्याद्वेदवेदांगपारगे॥ इति दामोदरद्वादशी॥ ॥ अथभाद्रपदशुक्लैकादश्यांसौवर्णकल्किरूपिणंपूर्वविधिनासमभ्यर्च्य द्वादश्यांब्राह्मणायदद्यात् ॥ पूजामंत्रास्तुवराहपुराणे ॥ नमो स्तुकल्किनेपादौहृषीकेशायवैकटिम् ॥म्लेच्छप्रध्वंसनायेतिजगन्मूर्तें तथोदरम् ॥ शितिकंठायकंठंतुखड्गपाणेतिवैभुजौ ॥ चतुर्भुजायेतिह स्तौविश्वमूर्तेतथाशिरः ॥ एवमभ्यर्च्यमेधावीप्राग्वत्तस्याग्रतोवट म् ॥ विन्यसेत्कल्किनंदेवंसौवर्णंतत्रकारयेत् ॥ दद्यात्प्रभातेविप्रा यवेदवेदाङ्गवेदिने ॥ ॥ इतिकल्किद्वादशीव्रतम् ॥ ॥ एवमा श्विनशुक्लैकादश्यां पद्मनाभरूपंदेवंसंपूज्य द्वादश्यांब्राह्मणायदद्यात्॥ विधिस्तुपूर्वएव ॥ मंत्रेषुविशेषोयथा वाराहपुराणे ॥ तद्वदाश्व युजेमासिद्वादशीशुक्लपक्षतः ॥ संकल्प्याभ्यर्चयेद्देवंपद्मनाभंसना तनम् ॥ पद्मनाभायपादौतुकटिंवैपद्मयोनये ॥ उदरंसर्वदेवायपु ष्कराक्षायवैउरः ॥ अव्ययायतथापाणिंप्राग्वदस्त्राणिपूजयेत् ॥ प्र भवायशिरःपूज्यप्राग्वदग्रेघटंन्यसेत् ॥ तस्मिन्सौवर्णकंदेवंपद्मना भंतुविन्यसेत् ॥ एवमेवतुसंपूज्यगंधपुष्पादिभिःक्रमात् ॥ प्रभाता यांतुशर्वर्यांब्राह्मणायनिवेदयेदिति॥ ॥इतिपद्मनाभद्वादशी॥ ॥अथका र्त्तिकशुक्लैकादश्यांसौवर्णयोगीश्वरंयोगनिद्रास्थितंसंपूज्यद्वादश्यां ब्राह्मणायदद्यात् ॥ तदुक्तंवराहपुराणे ॥ शृणुराजन्महाबाहोकार्त्ति केमासिद्वादशीम् ॥ उपोष्यविधिनायेनयच्चास्याःप्राप्यतेफलम् ॥ प्रा ग्विधानेनसंकल्प्यतद्वत्स्नानंतुकारयेत् ॥ विभवेनार्चयेद्देवंनारायण मकल्मषम् ॥ नमःसहस्रशिरसेशिरःसंपूजयेद्धरेः ॥ पुरुषायेतिच भुजौकंठंवैविश्वरूपिणे ॥ज्ञानास्त्रायेतिचास्त्राणिश्रीवत्सायतथाउरः ॥ जगद्ग्रसिष्णवेपूज्यमुदरंदिव्यमूर्तये ॥ कटिंसहस्रपादायपादौदेवस्य

१ नानास्त्राय इ० वा पा० ।

पूजयेत् ॥ आनुलोम्येनदेवेशंपूजयित्वाविचक्षणः ॥ नमोदामोदरा येतिसर्वांगंपूजयेद्धरेः ॥ एवंसंपूज्यविधिनातस्याग्रेचतुरोघटान् ॥ स्थापयेद्रत्नगर्भास्तुसितचंदनचर्चितान् ॥ स्रग्दामबद्धसुग्रीवान्सि तवस्त्रावगुंठितान् ॥ शोभितांस्ताम्रपात्रैस्तुतिलपूर्णैःसकांचनैः ॥ चत्वारःसागराश्चैवकल्पिताराजसत्तम ॥ तन्मध्येप्राग्विधानेनसौवर्णं स्थापयेद्धरिम् ॥ षोडशारेतथाचक्रेस्रग्भिर्बहुभिरूर्जिते॥ योगीश्वरंयो गनिद्राशयानंपीतवाससम् ॥ तमप्येवंतुसंपूज्याजागरंतत्रकारयेत् ॥ कुर्यात्तुवैष्णवंयागंयजेद्योगीश्वरंहरिम् ॥ एवंकृत्वाप्रभातेतुब्राह्मणाय निवेदयेदिति ॥ ॥ इतियोगीश्वरैकादशीव्रतम् ॥ इतिधरणीव्रतानि समाप्तानि॥ अथसिद्धविरुद्धादिकंलिख्यते ॥ ॥ एकादशीशुक्रवारेण सिद्धा ॥ तदुक्तम् ॥ शुक्रेणप्रतिपत्षष्ठीएकादश्येत्यादि ॥ सोमवा रेणविरुद्धा॥ तदुक्तम् ॥ चंद्रेचित्रोत्तराषाढापूर्वाषाढाविशाखिका॥ए कादशीत्रयोदश्योर्नष्टयोगाःप्रकीर्त्तिताइति ॥ एकादश्यांनर्तकादि कर्मकार्यम् ॥ नंदासुनर्तनंक्षत्रेइत्युक्तमेव ॥ एकादश्यांशणपुष्पा णिनखादेत् ॥ तथाचोक्तमेव ॥ नखचर्मतिलानीति ॥ पौषशुक्ले कादशीमन्वादिः ॥ तथाचोक्तम् ॥ एकादशीचपौषइति ॥ सर्वा स्वेकादशीषुतिथिपतित्वेनशिवःपूज्यः ॥ तदुक्तम् ॥ एकादश्यां शिवस्यचेति ॥ धनुस्थेक्रूरग्रहेएकादश्यशुभा॥ उक्तंच ॥ परतस्तथै वेति ॥ एकादश्यामाग्नेय्यांदिशियोगिनीसांमुख्याद्यात्रानकार्या ॥ ॥ इति श्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेएकादशीनिर्णयः ॥ ॥ अथद्वादशीनिर्णीयते ॥ द्वादशीतिथिरुपवासादिषुएकादशीयु तैवग्राह्या ॥ तदुक्तंनिगमे ॥ रुद्रेणद्वादशीयुक्तेतियुग्मवाक्यात् ॥ कूर्मपुराणे त्रयोदशीविद्धानिषिद्धा ॥ यथा ॥ नागविद्धातुयाष ष्ठीरुद्रविद्धोदिवाकरः ॥ कामविद्धाभवेद्विष्णुर्नग्राह्यास्तेतुवासराइ ति ॥ विष्णुर्द्वादशी ॥ कामस्त्रयोदशी ॥ वर्षद्वादशीकृत्यंधरणी

व्रतेष्वेवोक्तम् ॥ विशेषस्तुलिख्यते॥ ॥ भाद्रपदशुक्लद्वादशीश्रवणन
क्षत्रयुक्ताश्रवणद्वादशी ॥ सायद्येकादश्यामेवस्यात्तदाविष्णुशृंखला
ख्ययोगःस्यात् ॥ तत्रैकेनोपवासेनैकादशीव्रतंश्रवणद्वादशीव्रतंचद्वय
मपिकृतंभवति ॥ तदुक्तंमत्स्यपुराणे ॥ द्वादशीश्रवणर्क्षंचस्पृशेदे
कादशींयदि ॥ सएववैष्णवोयोगोविष्णुशृंखलसंज्ञकः ॥ तस्मिन्नुपो
ष्यविधिवन्नरःप्रक्षीणकल्मषः ॥ प्राप्नोत्यनुत्तमांसिद्धिंपुनरा
वृत्तिदुर्लभामिति ॥ यदाद्वादशीश्रवणर्क्षयुतायामेकादश्यामुपोषिता
यांद्वादश्यां श्रवणर्क्षंवर्द्धतेद्वादशीचऋक्षन्यूनाभवतितदातिथ्यन्तोना
पेक्षणीयः ॥ तदुक्तम् ॥ तिथिनक्षत्रसंयोगेउपवासोयदाभवेत्॥तावदे
वनभोक्तव्यंयावदेकस्यसंक्षयः ॥ विशेषेणमहीपालश्रवणंवर्द्धतेयदि॥
तिथिक्षयेनभोक्तव्यंद्वादशींनैवलंघयेदिति ॥ यदाएकादशीपूर्णाद्वा
दशीश्रवणनक्षत्रयुक्ता ॥ तदैकादश्यामुपोष्यश्रवणद्वादश्यांपृथगु
पवासःकार्यः ॥ ननुपारणंचोपवासपरिसमाप्तिस्तदभावेपूर्वव्रतासमा
प्तौव्रतांतरंकर्तुमयुक्तम्॥ यथा ॥ असमाप्तेव्रतेपूर्वेनैवकुर्याद्व्रतान्तरमि
ति॥अतःश्रवणद्वादश्युपवासः कथंस्यादितिचेत् ॥सत्यम् ॥उभयोर्व्र
तयोरेकदैवत्वान्नदोषः ॥ तदुक्तम् ॥ एकादशीमुपोष्यैवद्वादशींसमु
पोषयेत् ॥ नचात्रविधिलोपःस्यादुभयोर्दैवतंहरिरिति ॥ यद्युपवास
द्वयकरणेअसमर्थःस्यात्तदैकादश्यां भुक्त्वाश्रवणद्वादश्यामुपवासंकु
र्यात्॥ तस्याअलभ्ययोगत्वेनप्राशस्त्यात् ॥ एकादश्युपवासफलप्रा
पकत्वाच्च ॥ तदुक्तम् ॥ उपोष्यद्वादशींपुण्यांविष्णुऋक्षेणसंयुताम् ॥
एकादश्युद्भवंपुण्यंनरःप्राप्नोत्यसंशयमिति ॥ यथा ॥ एवमेकादशीं
भुक्त्वाद्वादशीसमुपोषणात् ॥ पूर्वोपवासजंपुण्यंसर्वंप्राप्नोत्यसंशयमि
ति॥ यदातुद्वितीयदिनेश्रवणंवर्द्धतेतदाऋक्षांतोनापेक्षणीयः ॥ ऋक्षां
तेपारणंकुर्याद्विनाश्रवणरोहिणीमितिवचनात् ॥ यदाचएकादश्यामेव
श्रवणनक्षत्रंस्यान्नद्वादश्यां तदैकादश्यामेवश्रवणद्वादशीव्रतंकार्यम्॥

तदुक्तम् ॥ याःकाश्चित्तिथयःप्रोक्ताःपुण्यानक्षत्रयोगतः ॥ तास्वेवतद्व्रतंकुर्याच्छ्रवणद्वादशींविनेति ॥ भविष्योत्तरेपि ॥ एकादशीयदातुस्याच्छ्रवणेनसमन्विता ॥ विजयानामसाप्रोक्ताभक्तानां[1]विजयप्रदेति ॥ एतावांस्तुविशेषः ॥ श्रवणैकादश्यांवामनावतारकृष्णपूजाश्रवणद्वादश्यांजनार्दनपूजेति ॥ विधिस्त्वेकएव ॥ अत्रतीर्थस्नानादिकञ्चानंतफलंभवति ॥ तदुक्तं विष्णुधर्मोत्तरे ॥ नभस्यशुक्लद्वादश्यांनक्षत्रंश्रवणंयदि ॥ तस्यांतीर्थेषुयत्स्नानंतदनंतफलं भवेत् ॥ देवतापूजनंविप्रभोजनंश्राद्धमेवच॥ एकजप्यात्सहस्रस्यजपस्यफलमश्नुते ॥ दानंचमहदल्पंवासहस्रगुणितंभवेदिति ॥ भविष्योत्तरेविशेषोदर्शितः ॥ बुधश्रवणसंयुक्तासैवचेद्द्वादशीभवेत् ॥ अतीवमहतीतस्यांसर्वंकृतमथाक्षयम् ॥ तथा ॥ बुधश्रवणसंयुक्ताद्वादशीसंगमोदकम् ॥ दानंदध्योदनंशतमुपवासःपरोविधिरिति ॥ द्वादशीश्रवणोपेतायदाभवतिभारत॥संगमेसरितांस्नात्वाजाह्नवीस्नानजंफलम् ॥ सोपवासःसमाप्नोतिनात्रकार्याविचारणेति ॥ ॥ इतिश्रवणद्वादशीव्रतम् ॥ ॥ भाद्रपदशुक्लद्वादश्यामेवइंद्रध्वजोत्थापनंकार्यम् ॥ तदुक्तंमत्स्यपुराणे ॥ द्वादश्यांतुसितेपक्षेमासिभाद्रपदेतथा ॥ शक्रमुत्थापयेद्राजातद्ध्वजञ्चसमाहितइति ॥ लिंगपुराणेपि॥कन्यार्केशुक्लद्वादश्यांविश्वादित्यर्क्षसंयुजि॥शक्रमुत्थापयेद्देवंतद्ध्वजंचमहीपतिरिति॥ इतिभाद्रपदद्वादशी ॥ ॥ कार्तिककृष्णद्वादश्यांगोधूलिककालव्यापिन्यांगोवत्सपूजाकार्य्या ॥ तस्यास्तत्कालएवविधानात् ॥ दिनद्वयेपितत्कालव्यापित्वेपूर्वत्रैवकार्यम् ॥तदुक्तम्॥ वत्सपूजावटश्चैवकर्तव्याप्रथमेहनीति ॥ ॥ इतिवत्सपूजाद्वादशी ॥ ॥ माघकृष्णद्वादशीतिलद्वादशी ॥ तस्यांतिलैःस्नात्वातिलैर्विष्णुमभ्यर्च्यतिलतैलेनदीपंतिलनैवेद्यंतिलहोमंतिलदानञ्चकृत्वातिलान्भक्षयेत् ॥ तदुक्तंब्रह्मपुराणे ॥ माघेतुकृष्णद्वादश्यांयमोहिभगवान्पुरा ॥ तिला

---

१ कामिनाम् इ० पा० ।

लानुत्पादयामासतपःकृत्वासुदारुणम् ॥ राजादशरथोभूमौतस्यां तानवतारयत् ॥ तिलानामाधिपत्येतुविष्णुस्तत्रकृतःसुरैः ॥ तस्यामुपोषितःस्नातस्तिलैस्तस्यांयजेद्धरिम् ॥ तिलतैलेनदीपाश्च देयादेवगृहेषुच ॥ निवेदयेत्तिलानेवहोतव्याश्चतथातिलाः ॥ तिलान्दत्त्वाचविप्रेभ्योभक्षयेच्चतथातिलानिति ॥ ॥ इतितिलद्वादशी ॥ अथसिद्धविरुद्धादिकंलिख्यते ॥ द्वादशीबुधवारेणसिद्धा ॥ तथाचोक्तम् ॥ बुधवारेद्वितीयाचद्वादशीति ॥ तस्यांरविवारेणक्रकचाख्यो विरुद्धयोगोभवति ॥ सूर्योविशाखाभरणीद्वादश्यथचतुर्दशी ॥ मघानुराधाज्येष्ठाचवर्जनीयाःप्रयत्नतइति ॥ द्वादश्यांव्रतपौष्टिकादिकर्म कार्यम् ॥ तच्चोक्तमेवव्रतपौष्टिकेद्वितीयाद्वादश्योरिति ॥ तत्रबिल्वफलंनभक्षयेत् ॥ नखचर्मतिलानिचेतिप्रागुक्तमेव ॥ दंतकाष्ठंचवर्जयेत् ॥ तच्चोक्तम् ॥ नवमीद्वादशीषुचेति ॥ क्रूरग्रहेमकरस्थेसतिद्वादशीपूर्णिमाचाशुभाभवति॥परतस्तथैवेत्युक्तमेव॥सूर्येतुलामकरस्थे द्वादशीदग्धाभवति ॥ तच्चोक्तम् ॥ तुलामकरयोश्चदग्धाइति ॥ द्वादश्यांयोगिनीसांमुख्यान्नैर्ऋत्येयात्रानकार्या॥ सर्वद्वादशीषुतिथिपरत्वे नविष्णुःपूज्यः ॥ ॥ इतिश्रीसूर्यसेनमहीमहेन्द्रविरचितेनिर्णयामृते द्वादशीनिर्णयः॥ ॥ अथत्रयोदशीनिर्णयः॥ ॥तत्रशुक्लत्रयोदशीपूर्वविद्धैवोपोष्या ॥ तदुक्तंब्रह्मवैवर्ते॥ त्रयोदशीप्रकर्त्तव्याद्वादश्यासहितामुने॥भूतविद्धानकर्त्तव्यादर्शपूर्णाकदाचनेति ॥ पैठीनसिरप्याह ॥ पंचमीसप्तमीचैवदशमीचत्रयोदशी॥प्रतिपन्नवमीचैवकर्त्तव्यासंमुखीतिथिरिति ॥ अनयोर्वाक्ययोःशुक्लपक्षपदाभावेपिकृष्णपक्षत्रयोदश्याःपरविद्धायाएवविधानात् ॥ पूर्वविद्धाविधानंशुक्लत्रयोदशीविषयमितिपरिशेषप्रमाणेनगम्यते ॥ तथा ॥ षष्ठ्यष्टमीअमावास्याकृष्णपक्षेत्रयोदशी ॥ एताः परयुताःपूज्याःपराःपूर्वेणसंयुताः॥तथाच ॥ एकादश्यष्टमीषष्ठीद्वितीयाचचतुर्दशी ॥ त्रयोदशीअमावास्याउपोष्याःस्युःपरा

न्विताइति ॥ अत्राप्यमावास्यासाहचर्याभिधानात्त्रयोदशीकृष्णैवग्रा
ह्या ॥ ॥इतित्रयोदशीसामान्यनिर्णयः॥ ॥ अथचैत्रशुक्लत्रयोदश्यनं
गत्रयोदशी ॥ साचपूर्वैवोपोष्या॥तदुक्तंसंवर्तेन ॥कृष्णाष्टमीस्कन्दष
ष्ठीसावित्रीवटपैतृकी ॥ अनंगत्रयोदशीरंभाउपोष्याःपूर्वसंयुताइ
ति ॥ अनंगत्रयोदश्यांकामदेवपूजाच भविष्योत्तरपुराणे चैत्र
मासतिथिप्रक्रमेप्रोक्ता ॥ यथा ॥ अस्यांस्नात्वात्रयोदश्यामशो
काख्यंनगंलिखेत्॥सिंदूररजनीरंगैरतिप्रीतिसमन्वितम् ॥ कामदेवंवसं
तंचवाजिवक्त्रंझषध्वजम् ॥ मध्याह्नेपूजयेद्भक्त्याभक्ष्यैर्गन्धैःस्रगंबरैः॥
मंत्रेणानेनकौन्तेयनवभार्यासमन्वितम्॥मन्त्रश्चनमोरामायकामायदेव
देवस्यमूर्तये ॥ब्रह्मविष्णुशिवेंद्राणांनमःक्षेमंकरायवै इति ॥ ततस्त
स्याग्रतोदेयामोदकाघृतपाचिताः॥ नानाप्रकारभक्ष्याश्चकामोमेप्रीय
तामिति ॥ स्वपतिंपूजयेन्नारीवस्त्रमाल्यविभूषणैः॥कामोयमितिसंचिं
त्यप्रहृष्टेनांतरात्मना ॥ रात्रौजागरणंकुर्यात्सुखरात्रिर्यथाभवेत् ॥
पूजयेद्द्विप्रदांपत्यंवस्त्रालंकारभूषणैः ॥ एवंयःकुरुतेपार्थवर्षेवर्षेमहो
त्सवम् ॥ वसंतसमयेप्राप्तेहृष्टपुष्टःसदाभवेत् ॥ कूर्मपुराणेतुविशे
षउक्तः ॥ मधुशुक्लत्रयोदश्यांमदनंचंदनात्मकम् ॥ कृत्वासंपूज्ययत्ने
नप्रीणयेद्व्यजनेनच ॥ ततःसंधुक्षितःकामःपुत्रपौत्रसमृद्धिदइति ॥
इत्यनंगत्रयोदशी ॥ अथवापक्षद्वयगतासुसर्वमासत्रयोदशीषुकामःपू
ज्योविष्णोर्यात्रोत्सवःकार्यः॥ तदुक्तंमत्स्यपुराणे ॥त्रयोदशीषुसर्वासु
कामःपूज्योथवाजनैः॥ यात्रोत्सवश्चविधिवत्कर्तव्यश्चाथवैष्णवैरिति॥
भाद्रपदकृष्णत्रयोदशीयुगादिः॥तदुक्तम्॥नभस्येचत्रयोदशीति॥सैव
रवौहस्तनक्षत्रेस्थितेचंद्रेमघास्थेगजच्छायेत्युच्यते॥तदुक्तम् ॥ यदीं
दुःपितृदैवत्येहंसश्चैवकरेस्थितः ॥ त्रयोदशीगजच्छायाश्राद्धेपुण्यैरवा
प्यते॥अत्रमधुघृतसंयुक्तेनपायसेन श्राद्धंकुर्यात् ॥ तथापितृगाथा ॥
अपिनःस्वकुलेजायाद्योनोदद्यात्त्रयोदशीम्॥ पायसंमधुसर्पिर्भ्यांवर्षासु

१ सर्वकामसमृद्धये इ० पा० ।

चमयासुचेति ॥ कार्तिकेकृष्णत्रयोदश्यां निशामुखेगृहाद्बहिर्यमायदीपंदद्यात् ॥तदुक्तंस्कंदपुराणे ॥ कार्तिकस्यासितेपक्षेत्रयोदश्यांनिशामुखे ॥ यमदीपंबहिर्दद्यादपमृत्युर्विनश्यति ॥ दीपमंत्रः ॥ मृत्युना पाशहस्ताभ्यांकालेनशामयासह॥ त्रयोदश्यांदीपदानात्सूर्यजःप्रीयतामिति ॥ याकाचित्रयोदशीप्रदोषव्यापिनीशनिवारयुक्ताभवति ॥ तत्रप्रदोषेशिवंसंपूज्यनक्तव्रतंकुर्यात् ॥ तथाच स्कंदपुराणे ॥ श्रीदेव्युवाच ॥ देवकेनविधानेनप्रदोषव्रतमुत्तमम् ॥ विधातव्यंनरैःस्त्रीभिःसंतानफलसिद्धये ॥ ईश्वरउवाच ॥ यदा त्रयोदशीशुद्धामंदवारेणसंयुता ॥ आरब्धव्यंव्रतंतत्रसंतानफलसिद्धये ॥ आयुरारोग्यसिद्ध्यर्थंभानुवारेणसंयुतेति॥ ऋणनिर्मोचनार्थंतुभौमवारेणसंयुता ॥ सौभाग्यश्रीसमृद्ध्यर्थंशुक्रवारेणसंयुताइति ॥ अथकालज्ञानंकृत्वापुत्रादिकामइदंव्रतंकरिष्येइतिसंकल्प्येमंमंत्रमुदीरयेत् ॥ एकवत्सरपर्यंतंप्रतिपक्षत्रयोदशीम् ॥ प्रदोषेशिवमभ्यर्च्यनक्तंभोक्ष्यामिशंकरेति ॥ ततस्तुलोहितेभानौस्नात्वासुनियतोव्रती ॥ पूजास्थानंततोगत्वाप्रदोषेशिवमर्चयेत् ॥ पूजांगुरूपदिष्टविधिनाआगममंत्रैर्वैदिकमंत्रैर्वापंचामृतस्नपनादिषोडशोपचारैर्यथाविभवंकुर्यात् ॥ ततश्चभवादिनामभिःपूजयेत् ॥ ॐभवायनमइत्यादिप्रयोगक्रमेणप्रतिनाम्नाशिवायपुष्पाणिसमर्पयेत्॥ नामानिच ॥भवाय भयनाशायमहादेवायधीमते॥रुद्रायनीलकंठायशर्वायशशिमौलिने॥ उग्रायोग्राघनाशायभीमायभयहारिणे ॥ ईशानायनमस्तुभ्यंपशूनांपतयेनमः ॥ इतिपूजयित्वाअनेनमंत्रेणप्रार्थयेत् ॥ यथाभवान्समस्तानांपशूनांपाशमोचकः ॥ तथाव्रतेनसंतुष्टःपुत्रंदेहिसुलक्षणमिति ॥ सांयावकंचनैवेद्यंसाज्यंसफलशर्करम् ॥ दत्त्वाथोमुखवासंचतांबूलंक्रमुकादिकम् ॥ समर्प्याष्टसुदिक्ष्वष्टदीपानाज्यपरिप्लुतान् ॥ भवाद्यैर्नामभिर्दत्त्वातैरेवाष्टप्रदक्षिणाः ॥ नमस्काराष्टकंकृत्वाजप्त्वापू

जांसमर्प्यच ॥ वृषराजंसमभ्यर्च्यवृषमन्त्रेणमंत्रवित् ॥ मंत्रश्च ॥ धर्मस्त्वंवृषरूपेणजगदानन्दकारण ॥ अष्टमूर्तेरधिष्ठानमतःपाहिसनातनेति ॥ वृषायदूर्वांचणकंपानीयंचनिवेद्यच ॥ वृषस्यवृषणंस्पृष्ट्वाशृङ्गयोर्मध्यतःशिवम् ॥ विलोक्यसहितंदेव्यापूजितंप्रार्थयेच्छिवम् ॥ प्रार्थनामंत्रश्च ॥ ऋणरोगादिदारिद्र्यपापक्षुदपमृत्यवः ॥ भयशोकमनस्तापानश्यंतुममसर्वदेति ॥ पृथिव्यांयानितीर्थानिसागरांतानियानिच ॥ अंडमाश्रित्यतिष्ठंतिप्रदोषेगोवृषस्यतु ॥ स्पृष्ट्वातुवृषणौतस्यशृङ्गमध्यंविलोक्यच ॥ पुच्छंचककुदंचैवसर्वपापैःप्रमुच्यते ॥ निवेद्यकर्मजातंतुदद्याद्वित्तानुसारतः ॥ दक्षिणांब्राह्मणेभ्यश्चततोमौनंविसर्जयेत् ॥ एवंसंवत्सरंकुर्यात्त्रयोदश्यामिदंव्रतम् ॥ अथवा मंदवारेणयुक्तामेवत्रयोदशीम् ॥ चतुर्विंशतिकुर्वीतसोभीष्टफलमाप्नुयात् ॥ इतिशनित्रयोदशीव्रतम् ॥ ॥अथसिद्धविरुद्धादिकंलिख्यते॥ त्रयोदशीभौमवारेणसिद्धाउक्ता ॥ भौमेषष्ठीतृतीयास्यादष्टमीचत्रयोदशीति ॥ सोमवारेणविरुद्धा ॥ यथा ॥ चन्द्रेचित्रोत्तराषाढापूर्वाषाढाविशाखिका ॥ एकादशीत्रयोदश्यौनष्टयोगाःप्रकीर्तिता इति ॥ त्रयोदश्यांतृतीयावत्संग्रामबलोपयोगीनिकर्माणिकुर्यात् ॥ तदुक्तम् ॥ जयासुविदधीताजिबलकार्याणिनिर्वृतइति ॥ त्रयोदश्यां क्षत्रियादिवर्णैर्मलापहंस्नानंनकार्यम् ॥ तथाच ॥ स्नातुर्जनस्यदशमीतनयांचत्रयोदशीत्यादिमलापहस्नाननिषेधश्चोक्तएव ॥ त्रयोदश्यां दक्षिणदिशियोगिनीसांमुख्याद्यात्रानकार्या ॥ क्रूरग्रहेकुंभस्थिते त्रयोदशीशुभकार्येषुवर्ज्या ॥ त्रयोदश्यांवृंताकानिनभक्षयेत् ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेत्रयोदशीनिर्णयः ॥

॥ अथचतुर्दशीनिर्णयः ॥ तत्रचतुर्दश्युपवासादिषुपूर्णिमायुक्तैवग्राह्या ॥ तदुक्तंयुग्मवाक्ये ॥ चतुर्दश्याचपूर्णिमेति ॥ बृहस्पतिनाप्युक्तम् ॥ एकादश्यष्टमीषष्ठीपौर्णमासीचतुर्दशी ॥ अमावास्यातृ

तीयाचताउपोष्याःपरान्विताइति ॥ तथा ॥ शुक्लपक्षेष्टमीचैवशु क्लपक्षेचतुर्दशी ॥ पूर्वविद्धानकर्त्तव्याकर्त्तव्यापरसंयुताइति ॥ कृष्ण पक्षेचतुर्दशीतुपूर्वविद्धाग्राह्या ॥ तदुक्तम् ॥ कृष्णपक्षेष्टमीचैवकृष्ण पक्षेचतुर्दशी ॥ पूर्वविद्धातुकर्तव्यापराविद्धानकुत्राचिदिति ॥ चैत्रशुक्ल चतुर्दश्यांकर्पूरकुंकुमागुरुचंदनादिभिर्दमनकेनचशिवपूजाकार्या ॥ तदुक्तंदेवीपुराणे ॥ चतुर्दश्यांतुकर्त्तव्याकर्पूरागुरुचंदनैः॥कुंकुमैर्मोग वस्त्रैश्चपूजातुमहतीशिवे ॥ वितानध्वजछत्रादिदेयंपूज्यास्तुमातरः ॥ महत्पुण्यमवाप्नोतिअश्वमेधशताधिकमिति ॥ तथा ॥ मधुमासे तुसंप्राप्तेशुक्लपक्षेचतुर्दशी ॥ प्रोक्तादमनपूजेतिसिद्धिदातुमहोत्स वेति ॥ अत्रैवलिंगपुराणेविशेषउक्तः ॥ मदनेनत्रयोदश्यांतालवृन्ता निलेनतु ॥ हंसयानसमारूढःकाममंत्रप्रवर्द्धितः ॥ नारीभिर्वर्द्धित श्चैवत्रैलोक्योन्मादमाचरेत् ॥ तन्निर्वापणकामेनचतुर्दश्यांमहामुने ॥ ततोत्यर्थंमयाप्रोक्तानार्यश्चाथनरास्तथा ॥ कुर्वंतिकर्दमेनैवआत्म नस्तनुलेपनम् ॥ निर्वापितानंगपीडाभवत्येवंममाज्ञया ॥ एतदर्थं सदाकार्यंकर्दमेनचक्रीडनम् ॥ प्रातःप्रहरमात्रंतुकर्त्तव्यंक्रीडनंनरैः ॥ प्रक्षाल्यांगंततःकृत्वागंधमाल्यानुलेपनम् ॥ वस्त्रतांबूलगीतादिरथ्या ट्टादिषुचाचरेत् ॥ चर्च्चरीघोषितैश्चैवकृत्वानित्यंशिवाग्रतः ॥ सर्व कामसमृद्धस्तुवसेच्छिवपुरंनरः ॥ स्वयंभूलिंगमेकंतुदृष्ट्वातस्मिन्दि नेनरः ॥ ज्ञानंलब्ध्वाशिवःसम्यग्भवेदेवनसंशयइति ॥ इतिचैत्रच तुर्दशी ॥ ॥ ज्येष्ठशुक्लचतुर्दश्यांसर्वस्मिन्दिनेपंचतपाःसायंशिवप्री तयेहेमधेनुंदद्यात् ॥ तदुक्तंमत्स्यपुराणे ॥ ज्येष्ठेपंचतपाःसायंहेमधे नुप्रदोदिवम् ॥ यातिशुक्लचतुर्दश्यांरुद्रव्रतमिदंस्मृतामिति ॥ इति ज्येष्ठचतुर्दशी ॥ भाद्रपदशुक्लचतुर्दश्यामनंतव्रतंकुर्यात् ॥ साचउदय व्यापिनीग्राह्या ॥ यथाचोक्तम् ॥ चतुर्दश्याचपूर्णिमेति ॥ शुक्लपक्षेच तुर्दशीति ॥ भविष्योत्तरेपि ॥ तथाभाद्रपदस्यांतेचतुर्दश्यांद्विजो

१ अर्चयेद्घोषितश्चैव इ० पा० ।

त्तम ॥ पौर्णमास्यासमायोगेव्रतंचानंतकंचरेदिति ॥ तथाचस्कंद पुराणे ॥ मुहूर्तमपिचेद्भाद्रेपूर्णिमायांचतुर्दशी ॥ सम्पूर्णातांविद्धु स्तस्याम्पूजयेद्विष्णुमव्ययम् ॥ अत्रकेचिदाहुः ॥ मध्याह्नेभोज्य वेलायांसमुत्तीर्यसरित्तटे ॥ ददर्शशीलासास्त्रीणांसमूहंरक्तवास साम् ॥ चतुर्दश्यामर्चयंतंभक्त्यादेवंपृथक्पृथगिति ॥ व्रतकल्पे मध्याह्नेपूजाभिहिता ॥ अतोमध्याह्नव्यापिन्यांचतुर्दश्यामनंतव्रतं कुर्यादिति ॥ नैतद्युक्तिसहम् ॥ यतइदमितिहासमात्रंनविधिः ॥ विधिवाचकानां व्रतंकुर्यात्करोतुकर्तव्यमित्यादिलिङ्लोट्तव्यप्रत्य यानामभावात् ॥ अन्यथा ॥ सापिशीलाव्रतंचक्रेकरेबद्ध्वासुदोर कम् ॥ पाथेयशेषंविप्रायदत्त्वाभुक्त्वातथैवचेतितत्रैवोक्तत्वा च्छीलयामध्याह्नेप्रारब्धमिति ॥ व्रतप्रारम्भोपिमध्याह्नएवप्रसज्येत सचनिषिद्धः ॥ व्रतस्यप्रातरेवारभ्यकार्यत्वात् ॥ तदुक्तम् ॥ प्रातरार भ्यमतिमान्कुर्यान्नक्तव्रतादिकम् ॥ नापराह्णेनमध्याह्नेपितृकालौहितौ स्मृताविति ॥ अन्येत्वाहुः॥ अनंतव्रतस्यैकभक्तरूपत्वान्मध्याह्नव्या पिन्यामेवकार्यमिति॥ तदपिन ॥चतुरस्रमिवप्रतिभाति ॥ अत्रैकभक्तं कुर्यादित्येकभक्तस्याविधानात् ॥ किंतु ॥ पक्त्वाप्रस्थंघृतेनैवगोधूमा न्नंप्रयत्नतः॥ अर्द्धंविप्रायदातव्यमर्धमात्मनिभोजनमितिअनन्तपूजांग त्वेनभोजनमात्रंविहितम् ॥अतश्चात्रानंतपूजनस्यैवप्राधान्यम् ॥तस्य चपूर्वाह्णोवैदेवानामितिदैविकत्वात्पूर्वाह्णएवविधानंसिद्धम् ॥ अतश्च स्वल्पायामप्युदयकालव्यापिन्यांचतुर्दश्यामुपक्रम्यपूर्णिमाभावेपिपू जादिकंकार्यम् ॥ उदयव्यापिन्यास्तिथेर्दैवकृत्येषुसंपूर्णत्वाभिधाना त्॥तदुक्तंकण्वेन ॥ उपवासव्रतादीनांघटिकैकापियाभवेत् ॥ उदयेसा तिथिर्ज्ञेयाविपरीतातुपैतृकइति ॥ आदिशब्दादेकभक्तायाचितनक्ता नामुपसंग्रहः ॥ तथाच उदयन्नेवसवितायांतिथिंप्रतिपद्यते ॥ सातिथिः सकलाज्ञेयादानाध्ययनकर्मस्विति ॥ सुमंतुरपि ॥ उदितेदैविकंभा

नौपित्र्यंचास्तंगतेरवौ ॥ द्विस्त्रिर्मुहूर्तमह्नोयासातिथिर्हव्यकव्ययोरि ति ॥ अस्यार्थः ॥ यातिथिर्भानावुदितेअह्नोद्विमुहूर्तंव्याप्नोतितस्यां दैविकंकार्यम् ॥ उदयानन्तरंद्विमुहूर्तव्यापिन्यांदैविकंकार्यमित्यर्थः॥ यातिथिर्भानावस्तंगतेअह्नोद्विमुहूर्त्तंव्याप्नोतितस्यांपित्र्यंकार्यं अस्त मयात्प्राक्त्रिमुहूर्तव्यापिन्यांपित्र्यंकार्यमित्यर्थः ॥ अतश्चपूर्णिमा युक्तायामुदयकालव्यापिन्यांचतुर्दश्यामनंतव्रतंकार्यमितिसिद्धम्॥ इ त्यनन्तचतुर्दशी ॥ अथकार्त्तिककृष्णचतुर्दशीमहाचतुर्दशीप्रेतचतु र्दशी ॥ तत्रोषस्यभ्यंगंस्नानंचकृत्वायमतर्पणादिकंकृत्वामाषप त्रभोजनं शैवतपोधनपूजनंदीपदानादिकंचकुर्यात् ॥ तदुक्तं भविष्योत्तरे ॥ कार्तिकेकृष्णपक्षेतुचतुर्दश्यांदिनोदये ॥ अवश्यमे वकर्त्तव्यंस्नानंनरकभीरुभिः ॥ तथा ॥ पूर्वविद्धचतुर्दश्यांका र्तिकस्यासितेतरे ॥ पक्षेप्रत्यूषसमयेस्नानंकुर्यात्प्रयत्नतइति ॥ ब्रह्मपुराणे ॥ तैलेलक्ष्मीर्जलेगंगादीपावल्याश्चतुर्दशीम् ॥ प्रातःस्नानं तुयःकुर्याद्यमलोकंनपश्यति॥ अपामार्गमथोतुंबींप्रपुन्नाटमथापरम्॥ भ्रामयेत्स्नानमध्येतुनरकस्यक्षयायवै. इति ॥ तथाच ॥ अपा मार्गस्यपल्लवान्भ्रामयेच्छिरसोपरि ॥ ततश्चतर्पणंकार्यंयमराजस्य नामभिः ॥ अपामार्गभ्रामणमंत्रस्तु ॥ सीतालोष्टसमायुक्तसकण्ट कदलान्वित ॥ हरपापमपामार्गभ्राम्यमाणःपुनःपुनरिति ॥ यमना मानिच ॥ यमायधर्मराजायमृत्यवेचांतकायच ॥ वैवस्वतायकाला यसर्वभूतक्षयायच ॥ औदुंबरायदध्नायनीलायपरमेष्ठिने ॥ वृकोदरा यचित्रायचित्रगुप्तायतेनमइति॥ यमतर्पणंतुसव्येनवापसव्येनकार्यम्॥ यतस्तस्यदेवत्वंपितृव्यत्वंच ॥ तदुक्तंस्कंदपुराणे ॥ दक्षिणाभि मुखोभूत्वातिलैःसव्यंसमाहितः ॥देवतीर्थेनदेवत्वात्तिलैःप्रेताधिपोयत इति ॥ तथाच ॥ यज्ञोपवीतिनाकार्यंप्राचीनावीतिनाथवा ॥ देवत्वं चपितृत्वंचयमस्यास्तिद्विरूपतेति ॥ ततः प्रदोषसमयेदीपान्दद्या

न्मनोरमान् ॥ ब्रह्मविष्णुशिवादीनांभवनेषुमठेषुच ॥ प्राकारो
द्यानवापीषुप्रतोलीनिष्कुटेषुच ॥ मंदुरासुविविक्तासुहस्तिशाला
सुचैवहीति॥ लिंगपुराणेपि ॥ ततःप्रेतचतुर्दश्यांभोजयित्वातपोधना
न् ॥ शैवान्विप्रांस्त्वथपरान्शिवलोकेमहीयते ॥ दानंदत्त्वातुतेभ्य
श्चयमलोकंनगच्छतीति ॥ तथाच ॥ माषपत्रस्यशाकेनभुक्त्वातत्र
दिनेनरः ॥ प्रेतचतुर्दशीकालेसर्वपापैःप्रमुच्यतइति ॥ तथा ॥ नक्तंप्रे
तचतुर्दश्यांयःकुर्याच्छिवतुष्टये॥ नतत्क्रतुशतेनापिप्राप्यतेपुण्यमीदृ
शम् ॥ कुमार्योबटुकाःपूज्यास्तथाशैवास्तपोधनाः॥ राजसूयफलंते
नप्राप्यतेनात्रसंशयइति ॥ इयंभौमवारयुक्ताचित्राख्या ॥ तदुक्तं
पुष्करपुराणे ॥ कार्तिकेभौमवारेणचित्राकृष्णचतुर्दशी ॥ तस्यांभूते
शमभ्यर्च्यगच्छेच्छिवपुरंनरइति ॥ कार्तिकेशुक्लचतुर्दशीपाषाणचतु
र्दशी ॥ तदुक्तंदेवीपुरणे ॥ कार्तिकेशुक्लपक्षेचयापाषाणचतुर्दशी ॥
तस्यामाराधयेद्गौरींनक्तंपाषाणभक्षकः ॥ ऐश्वर्यसौख्यसौभाग्यरूपा
णिप्राप्नुयान्नरइति ॥ इतिकार्तिकचतुर्दशी ॥ ॥ माघशुक्लचतुर्दशी
आरटंत्याख्या ॥ तत्रानर्कोदयेनद्यादौस्नात्वायमंसंपूज्यतस्मैसप्तभि
र्नामभिःसप्तसप्ततिलोदकांजलीन्दत्त्वा तिलहोमादिकंकृत्वा पितॄणां
श्राद्धंकृत्वाब्राह्मणेभ्यः कृसरादिभोजनंदत्त्वास्वयमपिकृसरंभुक्त्वास
र्वपापैःप्रमुच्यते ॥ तदुक्तंब्रह्मपुराणे ॥ माघशुक्लचतुर्दश्यांविष्णो
र्देहान्मरीचयः ॥ निश्चेरुस्तिलकाकाराःशतशोथसहस्रशः ॥ अन
र्काभ्युदितेकालेसत्सुतारांशुकेष्वपि ॥ राजाचतत्रसंपूज्योयमःप्रलय
भास्करः ॥ सर्वाङ्गसंधिसंभूतानद्योविष्णोश्चतत्रवै ॥ अरुणोदयवे
लायामारटंत्योपिनित्यशः ॥ नियुक्ताविष्णुनासर्वाःकस्यपापंपु
नीमहे ॥ निमित्तंपंचतारेयंतत्रप्रोक्तंयतोभुवि ॥ तदासापिनिशाज्ञे
यातारारात्रिःसुदारुणा ॥ तत्रोपोष्यत्रयोदश्यांसंप्राप्तेतुनिशाक्षये ॥
स्नात्वापूज्योजगद्भर्ताहरिःपूज्याश्चतारकाः ॥ यमोनद्यश्चतीर्थानिदे

१ अविद्वुषः इ० पा० ।

वताःपितरस्तथा नैवेद्यैर्विविधाकारैःकृसरेणतुभूरिणा वह्निःपूज्य
श्चभगवान्घृताक्तैस्तिलतंडुलैः ॥ नमःप्रणवसंयुक्तान्सतिलांश्चजलां
जलीन् ॥ यमायसप्तवितरेद्धर्मराजायसप्तच ॥ मृत्यवेसप्तवितरेत्तथा
सप्तांतकायच ॥ वैवस्वतायसप्तैवसप्तकालायचैवहि ॥ सप्तदेयाश्चवि
धिवत्सर्वप्राणहरायच ॥ कृसरंभोजनीयाश्चब्राह्मणास्तदनंतरम् ॥
श्राद्धंदत्त्वापितृभ्यश्चविमुक्तःसर्वपातकैः ॥ ततोविभज्य
बंधुभ्यः कृसरंभक्षयेत्स्वयमिति ॥ इत्यारटंतीचतुर्दशी ॥ ॥
अथशिवरात्रिर्निर्णीयते ॥ ॥ शिवरात्रिचतुर्दशीप्रदोषव्यापिन्येव
प्रायेणोपोष्या ॥ तदुक्तम् ॥ प्रदोषव्यापिनीग्राह्याशिवरात्रिःशिवप्रि
यः॥रात्रौजागरणंयस्मात्तस्मात्तस्यामुपोषणमिति ॥अत्रप्रदोषश्चतुर्ना
ड्यात्मकएवग्राह्यः॥ साचद्विविधा ॥ शुद्धाविद्धाच ॥ शुद्धात्वेकवि
धैवसूर्योदयमारभ्यपुनःसूर्योदयपर्याप्तव्यापित्वात् ॥ विद्धातुषड्वि
धा॥ यापूर्वदिनएवप्रदोषव्यापिनीनद्वितीयदिवसेसाप्रथमा॥द्वितीयदि
नएवप्रदोषव्यापिनीनप्रथमदिनेसाद्वितीया ॥ याप्रथमदिनेप्रदोषमधि
कंव्याप्नोति ॥ द्वितीयदिनेप्रदोषंस्वल्पंस्पृशतिसातृतीया॥ याद्विती
यदिनेप्रदोषमधिकंव्याप्नोतिपूर्वदिनेस्वल्पंस्पृशति साचतुर्थी ॥
योभयत्रसंपूर्णप्रदोषंव्याप्नोतिसापंचमी ॥ यानोभयत्रप्रदोदंव्याप्नोति
साषष्ठी ॥ एवंसप्तविधा ॥ तत्रशुद्धायामविवादः ॥ विद्धाभेदेषुतु
पूर्वदिनेएवप्रदोषव्यापिनीप्रथमा ॥ द्वितीयदिनएवप्रदोषव्यापिनीद्वि
तीयाच प्रदोषव्यापिन्येवोपोष्या ॥ तदुक्तंशिवपुराणे ॥ प्रदोषव्या
पिनीग्राह्याशिवरात्रिःशिवप्रियैः ॥ रात्रौजागरणंयस्मात्तस्मात्तस्या
मुपोषणमिति॥पूर्वदिनेअधिकप्रदोषव्यापिनीतृतीयासातुपूर्वैवोष्या॥
अधिकप्रदोषव्यापित्वात् ॥ तदुक्तम् ॥ माघफाल्गुनयोर्मध्येयास्या
च्छिवचतुर्दशी ॥ ॥ अनंगेनसमायुक्ताकर्तव्यासासदातिथिरिति ॥
॥ तथाच ॥ त्रयोदश्यस्तगेसूर्येचतसृष्वेवनाडिषु ॥ भूतविद्धातुया

तत्रशिवरात्रिव्रतंचरेदिति ॥ नन्वेवंसति ॥ भवेद्यत्रत्रयोदश्यांभूतव्या
प्तामहानिशा ॥ शिवरात्रिव्रतंतत्रकुर्याज्जागरणंतथेत्यादिवचनविरो
धःस्यादितिचेत् ॥ महानिशावेधोपिग्राह्यः॥ किमुत॥ चतुर्नाड्यात्म
कवेधइत्येवंपरत्वादित्यादिवाक्यानांनकश्चिद्विरोधः॥ तथाच ॥ श्राव
णीदुर्गानवमींतथादूर्वाष्टमीचया ॥ पूर्वविद्धातुकर्तव्याशिवरात्रिर्बलेर्दि
नमिति ॥ नन्वस्यांचतुर्दश्यामुपोषितायांपरदिनेचतुर्दश्याःकिंचित्प्र
दोषस्पर्शित्वाद्रात्रौतिथ्यंतोभवति ॥ अतोरात्रौतिथ्यंतेपारणंप्रसज्ये
त ॥ तच्चनिषिद्धम् ॥ तदुक्तंकालादर्शे ॥ सर्वेष्वेवोपवासेषुदिवापार
रणमिष्यते॥ अन्यथापुण्यहानिःस्याद्दतेधारणपारणमिति॥ तथाच॥
अन्यातिथ्यागमोरात्रौतामसस्तैजसोदिवा ॥ तामसेपारणंकुर्वंस्ताम
सींगतिमाप्नुयादित्यादि ॥ अमावास्यायांचरात्रौभोजनंनिषिद्धम् ॥
यथा ॥ भूताष्टम्योर्दिवाभुक्त्वारात्रौभुक्त्वाचपर्वणि ॥ एकादश्यांदि
वारात्रौभुक्त्वाचांद्रायणंचरेदिति ॥ अतश्चपरदिनेतिथ्यन्ताभावेनपा
रणासंभवेकथंपूर्वत्रोपवासइतिचेत्॥सत्यम् ॥अत्रतिथ्यंताभावेपिदिवै
वपारणंकुर्यात् ॥ तदुक्तम् सात्वस्तमयपर्यंतंव्यापिनीचेत्परेहनि ॥
दिवैवपारणंकुर्यात्पारणेनैवदोषभागिति ॥ नन्वेवमप्यत्रदिवापारणं
नसंभवति ॥ चतुर्दश्यास्तमयादूर्ध्वमपिप्रदोषस्पर्शित्वादस्तमयपर्यं
तव्यापित्वादितिचेत्सत्यम् ॥ अत्रसात्वस्तमयपर्यंतेतिवचनंदिवाति
थ्यंताभावप्रतिपादनपरम् ॥ नत्वस्तमयादूर्ध्वंतिथिसद्भावनिषेधप
रम् ॥ एकस्यवचनस्यार्थद्वयाभिधानानुपपत्तेरित्यलमतिप्रपञ्चेन ॥
यामत्रयोर्ध्वगामिन्यांप्रातरेवहिपारणमित्यादिवाक्यान्यप्यस्मिन्नेववि
षयेयोज्यानि ॥द्वितीयदिनेधिकप्रदोषव्यापिनीचतुर्थीतुपरैवोपोष्या॥
तदुक्तंस्मृतिसंग्रहे ॥ शिवःपरोनिशायाश्चेदमाचाह्निभुजिक्षयइति ॥
उभयत्रप्रदोषव्यापिनीपञ्चमीतुपरैवोपोष्या ॥ तदुक्तम् ॥ माघासिते
भूतदिनंहिराजन्नुपैतियोगंयदिपंचदश्याः ॥ जयाप्रयुक्तांनतुजातुकु

१ दूर्वाचैवहुताशनी इ० पा० ।

यांच्छिवस्यरात्रिप्रियकृच्छिवस्येति ॥ तथा ॥ शिवरात्रिव्रतेभूतां कामविद्धांविवर्जयेदिति ॥ ननुपूर्वदिनेचतुर्दश्याःसकलसरात्रिव्याप्तित्वात्तत्रैवकुतोनोपवासउक्तइतिचेत् ॥ सत्यम् ॥ पूर्वदिनेउपोषितेपरदिने तिथ्यंताभावेनपारणासंभवात् ॥ अत्रापि सात्वस्तमयपर्यंतव्यापिनी चेत्परेहनि ॥ दिवैवपारणंकुर्यादितिन्यायोस्त्वितिचेत् ॥ न ॥ अत्रपरदिनेपिसंपूर्णप्रदोषव्याप्तित्वेनोपवासस्यविधानात् ॥ नोभयत्रप्रदोषव्यापिनीषष्ठीतुपूर्वैवोपोष्या ॥ तदुक्तंब्रह्मवैवर्ते ॥ सूर्यास्तेनवनाडीषुभूतविद्धात्रयोदशी ॥ शिवरात्रिव्रतंतत्रकुर्याज्जागरणंतथेति ॥ तथा च ॥ त्रयोदशीयदापूर्वदिनेभुक्तिप्रमाणतः ॥ जागरेशिवरात्रिःस्यान्निशिपूर्वाचतुर्दशी ॥ अस्यार्थः ॥ यस्यांत्रयोदश्यामुपोषितायां द्वितीयदिनेदिवापारणपर्याप्तातिथ्यंतोलभ्यतेसैवोपोष्या ॥ तथाच ॥ कृष्णाष्टमीस्कंदषष्ठीशिवरात्रिश्चतुर्दशी ॥ एताःपूर्वयुताःकार्यास्तिथ्यंतेपारणंभवेत् ॥ तथा ॥ जन्माष्टमीरोहिणीचशिवरात्रिस्तथैवच ॥ पूर्वविद्धैवकर्तव्यातिथिभांतेचपारणामिति ॥ तत्रापिदिवातिथ्यंतपारणसंभवेतिथ्यंतेपारणंकार्यम् ॥ असंभवेतुतिथ्यंताभावेपिदिवैव पारणंकार्यम् ॥ अतश्चात्रयान्यपिपूर्वविद्धाप्रतिपादकानिवाक्यानितानिपरदिनेअस्तमयोर्ध्वभाविचतुर्नाड्यव्याप्तिविषयाणिदिवापारणपर्याप्ततिथ्यंतसद्भावपराणिच ॥ यानिपुनःपरविद्धाप्रतिपादकानि तानिपरदिनेस्तमयोर्ध्वभाविचतुर्नाडीव्याप्तिविषयाणिदिवातिथ्यंताभावविषयाणिचवेदितव्यानीतिसिद्धांतः ॥ इतिशिवरात्रिनिर्णयः ॥ अथसिद्धविरुद्धादिकंलिख्यते ॥ चतुर्दशीशनिवारेणसिद्धा ॥ शनौ चतुर्थीनवमीचतुर्दश्यथरोहिणीत्याद्युक्तमेव ॥ रविवारेणविरुद्धा ॥ सूर्येविशाखाभरणीद्वादश्यथचतुर्दशीत्युक्तम् ॥ चतुर्दश्यांशत्रुवधादिकंकार्यम् ॥ तदुक्तम् ॥ चतुर्दश्यांचतुर्थ्यांतुनवम्यांचारिमर्दनमिति ॥ अत्रक्षौरक्रियांविवर्जयेत् ॥ सर्वत्रयात्रांचवर्जयेत् ॥ विशेषतोयो

गिनीसांमुख्याद्रायव्यांयात्रानकार्या ॥ मीनस्थेक्रूरग्रहेचतुर्दशीपूर्णि
माचाशुभास्यात् ॥ दंतधावनंचवर्ज्यम् पर्वत्वात् ॥ सर्वत्रचतु
र्दशीषुतिथिपत्वाच्छिवःपूज्यः ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविर
चितेनिर्णयामृतेचतुर्दशीनिर्णयः ॥ ॥ अथपूर्णिमानिर्णीयते ॥ सा
वटसावित्रीव्यतिरिक्तव्रतादिषुपरान्वितैवोपोष्या ॥ तदुक्तम् ॥ एका
दश्यष्टमीषष्ठीपौर्णमासीचतुर्दशी ॥ अमावास्यातृतीयाचताउपो
ष्याःपरान्विताइति ॥ ब्रह्मवैवर्तेपि ॥ भूतविद्धानकर्त्तव्योदर्शःपू
र्णाकदाचन ॥ वर्जयित्वामुनिश्रेष्ठसावित्रीव्रतमुत्तममिति ॥ एतेन
सावित्रीव्रतेपूर्णिमापूर्वविद्धैवग्राह्याइतिगम्यते ॥ तदुक्तंब्रह्मवैवर्ते ॥
प्रतिपत्पञ्चमीभूतासावित्रीवटपूर्णिमा ॥ नवमीदशमीचैवनोपोष्याः
परसंयुताइति ॥ युग्मवाक्येपि ॥ चतुर्दश्याचपूर्णिमेति ॥ यत्तु
ब्रह्मपुराणे ॥ षष्ठ्येकादश्यमावास्यापूर्वविद्धातथाष्टमी ॥ पूर्णिमा
परविद्धाचनोपोष्यंतिथिपञ्चकमिति ॥ इदमपिसावित्रीव्रतविषयम् ॥
सावित्रीव्रतंचभाद्रपदपूर्णिमायांवक्ष्यते ॥ अथचैत्रपूर्णिमायामिंद्रपूजा
कार्या ॥ तदुक्तंदेवीपुराणे चैत्रातिथिप्रक्रमे ॥ पूर्णिमायांतथाका
र्यासर्वकामसमृद्धये ॥ अर्चेंद्रायससाध्यायकामिकंलभतेफलमिति ॥
चित्रानक्षत्रयुक्तायामस्यांचित्रवस्त्रंदद्यात् ॥ तदुक्तंविष्णुस्मृतौ ॥
चैत्रीचित्रायुताचेत्स्यात्तस्यांचित्रवस्त्रप्रदानेनसौभाग्यमाप्नोति ॥ इय
मेवशनिरविगुरुवारेषुमहापुण्या ॥ तदुक्तंब्रह्मपुराणे ॥ मंदेवार्केगु
रौवापिवारेष्वेतेषुचैत्रिकी ॥ तत्राश्वमेधिकंपुण्यंस्नानेनलभतेनरः ॥
दानमक्षय्यतांयातिपितॄणांतर्पणंतथेति ॥ अस्यांसर्वान्देवान्दमन
केनाभ्यर्च्यसंवत्सरकृतपूजायाःफलंप्राप्नोति ॥ तदुक्तंलिङ्गपुराणे ॥
चैत्रेमासिसितेपक्षेपञ्चदश्यांयथाविधि ॥ दमनेनार्चयेद्देवानष्टमीभूत
योर्ऽकतेइति ॥ वायुपुराणेपि ॥ संवत्सरकृतार्चायाःसाफल्यायाखि
लान्सुरान् ॥ दमनेनार्चयेच्चैत्र्यांविशेषेणसदाशिवमिति ॥ ॥ इति

चैत्रपूर्णिमा ॥ वैशाखपूर्णिमायांकृष्णमृगाजिनदानंकार्यम् ॥ यथा यमगाथासु ॥ यस्तुकृष्णाजिनंदद्यात्सखुरंशृंगसंयुतम् ॥ तिलैःप्रच्छाद्यवासोभिःसर्ववस्त्रैरलंकृतम् ॥ वैशाख्यांपौर्णमास्यांतुविशाखासुविशेषतः ॥ ससमुद्रगुहातेनसशैलवनकानना ॥ सप्तद्वीपान्विता दत्तापृथिवीनात्रसंशयः ॥ तथाचविष्णुः॥कृष्णाजिनेतिलान्कृत्वा हिरण्यंमधुसर्पिषी ॥ ददातियस्तुविप्रायसर्वंतरतिदुष्कृतमिति ॥ इतिवैशाखपूर्णिमा ॥ ज्येष्ठमासिपूर्णिमायांतिलदानंछत्रोपानहादिदानंचकुर्यात् ॥ तदुक्तमादित्यपुराणे ॥ ज्येष्ठेमासितिलान्दद्यात्पौर्णमास्यांविशेषतः ॥ अश्वमेधस्ययत्पुण्यंतत्प्राप्नोतिनसंशयइति ॥ विष्णुरपि॥ज्यैष्ठीज्येष्ठायुताचेस्यात्तस्यांछत्रोपानत्प्रदानेननरो नराधिपत्वमाप्नोति॥ इतिज्येष्ठपूर्णिमा॥ आषाढपूर्णिमायांचतुर्दश्यामुपोष्यहरिपूजाकार्या ॥ तदुक्तंब्रह्मपुराणे॥ चतुर्दश्यामुपोष्याथपौर्णमास्यांयजेद्धरिमिति॥अस्यामेवपूर्वाषाढानक्षत्रयुक्तायामन्नपानादिकं दानंदद्यात्॥तथाचविष्णुः॥आषाढ्यामाषाढयुक्तायामन्नपानादिदानेनतदेवाक्षय्यमाप्नोति॥ ॥इत्याषाढपूर्णिमा ॥ श्रावणपूर्णिमायांश्रवणनक्षत्रयुक्तायांस्नानंजलक्रीडादिकंसामवेदश्रवणंचकुर्यात् ॥ तदुक्तं ब्रह्मपुराणे॥ श्रावण्यांश्रवणेचैवपूर्वंहयशिराहरिः ॥ जगादसामवेदंतु सर्वकिल्बिषनाशनम् ॥ सिंधुर्नदीवितस्तायांप्रविष्टातत्रचैवाहि ॥ अतोर्थंश्रवणेतत्रस्नानंसर्वार्थसिद्धिदम् ॥ कृत्वासंपूजयेद्विष्णुंशंखचक्रगदाधरम्॥ श्रोतव्यान्यथसामानिपूज्याविप्राश्चसर्वदा ॥ क्रीडितव्यंचभोक्तव्यंतत्रैवस्वजनैःसह ॥ जलक्रीडातुकर्त्तव्यानारीभिर्भर्तृलब्धया इति ॥ ॥अथोपाकर्मनिर्णीयते॥ ॥तत्रयजुःशाखाध्यायिनःश्रावणपौर्णमास्यामुदयकालव्यापिन्यां ग्रहसंक्रांतिदोषरहितायां व्रीह्याद्यौषधिप्रादुर्भावेसातिउपाकर्मकुर्युः ॥ बह्वृचाःश्रावणमासस्यश्रवणनक्षत्रे धनिष्ठानक्षत्रयुक्तेकुर्युः ॥ सामवेदिनःश्रावणमासस्यहस्तनक्षत्रयु

क्तपंचम्यांकुर्युः ॥ ग्रहणादिदोषराहित्यमोषधिप्रादुर्भवश्चसर्वेषांतु ल्यम् ॥ तदुक्तंयाज्ञवल्क्येन ॥ अध्यायानामुपाकर्मश्रावण्यांश्रवणेऽपिवा ॥ हस्तेनौषधिभावेवापंचम्यांश्रावणस्यात्विति ॥ अत्राध्यायानामिति शाखाभिप्रायेणबहुवचनम् ॥ निगमेपि ॥ श्रावण्यांश्रावणीकर्मयथाविधिसमाचरेत् ॥ उपाकर्मतुकर्तव्यंकर्कटस्थेदिवाकरे ॥ हस्तेनशुक्लपंचम्यांश्रावण्यांश्रवणेनचेति ॥ तथाचगोभिलः ॥ पर्वण्यौदयिकेकुर्युःश्रावणंतैत्तिरीयकाः ॥ बह्वृचाःश्रवणर्क्षेतुहस्तर्क्षेसामवेदिनः ॥ केवलहस्तनक्षत्रेवाचित्रानक्षत्रयुक्तेवा ॥ तथाचगार्ग्यः ॥ पर्वण्यौदयिकेकुर्युःश्रावणंतैत्तिरीयकाः ॥ बह्वृचाःश्रवणेकुर्युर्ग्रहसंक्रांतिवर्जितइति ॥ चतुर्दशीयुक्तस्यपर्वणोनिषेधः ॥ तदुक्तंकालिकापुराणे ॥ चतुर्दश्यांसमुत्पन्नावसुरौमधुकैटभौ ॥ वेदान्स्वीकुरुतःपद्मयोनेस्तौजह्नतुःश्रुतीः ॥ हत्वातावसुरौदेवःपातालतलवासिनौ ॥ आहृत्यताःश्रुतीस्तस्मैददौलोकगुरुःस्वयम् ॥ संप्राप्तवाञ्छ्रुतीर्ब्रह्मा पर्वण्यौदयिकेपुनः ॥ अतोभूतयुतेतस्मिन्नोपाकरणमिष्यते ॥ आसुरंवर्जयेत्कालंवेदाहरणशंकयेति ॥ यत्तुवचनं॥श्रावणीदुर्गनवमीदूर्वाचैवहुताशनी ॥ पूर्वविद्धातुकर्तव्याशिवरात्रिर्बलेर्दिनामिति॥तत् श्रावण्यांविधीयमानंहिरण्यगर्भपवित्रारोपणविषयम् ॥ उपाकर्मांगभूताभ्युदयिकश्राद्धविषयंवा ॥ अत्रतैत्तिरीयकपदमन्येषामपियजुःशाखिनामुपलक्षकम्॥तेषांकालांतरानभिधानात् ॥व्यासोपि॥ ॥श्रवणेनतु यत्कर्मउत्तराषाढसंयुतम् ॥संवत्सरकृतोध्यायस्तत्क्षणादेवनश्यति ॥ धनिष्ठासंयुतंकुर्याच्छ्रावणंकर्मयद्भवेत् ॥तत्कर्मसफलंविद्यादुपाकरण संज्ञकमिति॥ परिशिष्टेपि ॥ धनिष्ठाप्रतिपद्युक्तंत्वाष्ट्रऋक्षसमन्वितम्॥ श्रावणंकर्मकुर्वीरन्नृग्यजुःसामपाठकाइति ॥ तथाचस्मृत्यंतरे ॥ उपाकर्मप्रकुर्वन्तिक्रमात्सामर्ग्यजुर्विदः ॥ ग्रहसंक्रांत्ययुक्तेषुहस्तश्रवणपर्वस्विति ॥ संक्रांतौग्रहणेचैवसूतकेमृतकेतथा ॥ गणस्नानं

नकुर्वन्तिनारदस्यवचोयथा ॥ अथचेद्दोषसंयुक्तेपर्वणिस्यादुपाक्रिया ॥ दुःखशोकामयग्रस्ताराष्ट्रेतस्मिन्द्विजातयइति ॥ संक्रांतिग्रहणदोषस्तुअर्द्धरात्रादर्वाङ्कतुपरतः ॥ तथाहगार्ग्यः ॥ अर्द्धरात्रादधस्ताच्चेत्संक्रांतिर्ग्रहणन्तथा॥ उपाकर्मनकुर्वीतपरतश्चेन्नदोषकृत्॥ तथा ॥ यद्यर्धरात्रादर्वाक्तुग्रहःसंक्रमएववा ॥ नोपाकर्मतदाकुर्याच्छ्रावण्यांश्रवणेपिवेति ॥ ग्रहसंक्रांत्यादिदोषेतुभाद्रपदपौर्णमास्यांयजुःशाखिनोवाजसनेयिव्यतिरिक्ताःकुर्युः॥वाजसनेयिनस्तुश्रावणशुक्लपंचम्यामिति ॥यदुक्तंस्मृतिमहार्णवे॥संक्रांतिर्ग्रहणंवापिपौर्णमास्यांयदाभवेत्॥उपाकृतिस्तुपंचम्यांकार्यावाजसनेयिभिरिति ॥तथाच॥ यदिस्याच्छ्रावणंपर्वग्रहसंक्रांतिदूषितम् ॥ स्यादुपाकरणंशुक्लपंचम्यांश्रावणस्यतु ॥ संक्रांतिर्ग्रहणंवापियदिपर्वणिजायते ॥ तन्मासेहस्तयुक्तायांपंचम्यांवातदिष्यते ॥ एतच्चवाजसनेयाभिप्रायमितिकेचिदाहुःश्रावणशुक्लपंचम्यामेवेति ॥ तदयुक्तम् ॥ तथासतिमन्वादिवाक्यानांनिरर्थकतास्यात् ॥ बह्वृचास्तन्मासश्रवणर्क्षेछंदोगास्तन्मासहस्तर्क्षेकुर्युः ॥ तथाहमनुः ॥ श्रावण्यांप्रौष्ठपद्यांवाप्युपाकृत्ययथाविधि ॥ युक्तःछंदांस्यधीयीतमासान्विप्रोर्द्धपंचमानिति ॥ अर्द्धःपंचमोमासोयेषांतेअर्द्धपंचमाः ॥ उपाकर्मप्रभृतिसार्द्धचतुरोमासान्स्वाध्यायदिनेष्वधीयेतेत्यर्थः ॥ अपिशब्दाद्भाद्रपदसंबंधिश्रावणहस्तपंचमीनामुपसंग्रहः ॥ तथाच ॥ बह्वृचगृह्यपरिशिष्टकारिका ॥ यदाचौषधयस्तस्मिन्मासेतुनभवंतिचेत् ॥ तदाभाद्रपदेमासिश्रवणेनतदिष्यतइति ॥ अत्रौषध्यभावःसंक्रांत्यादिदोषाणामुपलक्षकः ॥ गोभिलोपि ॥ प्रौष्ठपदींहस्तेनोपाकरणमिति ॥ प्रौष्ठपदींप्राप्येत्यर्थः ॥ यत्तुबौधायनवचनम् ॥ श्रावण्यांपौर्णमास्यामाषाढ्यांवोपाकृत्यच्छंदांस्यधीयीतेति॥तत्तुप्रौष्ठपद्यामपिसदोषायामाषाढ्यांकुर्वीतेत्येतत्परम्॥यत्तुकैश्चिदुक्तम् ॥ आषाढ्याविधानंयजुःशाखिनामे

वतन्न ॥ सर्वशाखाधिकरणन्यायेनकर्मणएकत्वाद्बौधायनोक्तत्वेन यन्नाम्नातंस्वशाखायांपारक्यमविरोधियत् ॥ विद्वद्भिस्तदनुष्ठेयमाग्निहोत्रादिकर्मवदितिवचनाच्चसर्वेषामपि नातोयजुःशाखिनामेवाषाढ्यामुपाकर्मवेदितव्यम् ॥ बह्वृचांसामगानांचकस्मिंश्चिच्छाखाविशेषेआषाढमास्युपाकर्मणिविध्यदर्शनादिति ॥ तन्नयुक्तिसहम् ॥ तेषामपिकस्मिंश्चिच्छाखाविशेषेशृंगग्राहितयानिषेधाभावात्पारक्यमविरोधियादिति न्यायेनैवाषाढ्यांतन्मासिश्रवणर्क्षेहस्तेवाउपाकर्मप्राप्तम् ॥ अन्यथातेषांविहिताकरणेनप्रत्यवायःप्रसज्येत ॥ तदुक्तंस्मृत्यर्थसारे ॥ कस्मिंश्चिद्दिनेग्रहणसंक्रांतिवर्जितेकार्यम् ॥ कर्मणोनलोपोनोत्कर्षइति॥ अथात्रकर्तव्यमुच्यते ॥ ॥ तत्रकार्ष्णाजिनिः ॥ उपाकर्मणिचोत्सर्गेयथाकालंसमेत्यच॥ ऋषीन्दर्भमयान्कृत्वापूजयेत्तर्पयेत्ततइति ॥ बृहत्प्रचेताश्च ॥ भवेदुपाकृतिः पौर्णमास्यांपूर्वाह्णएवतु ॥ ब्राह्मणान्भोजयेत्तत्रपितॄनुद्दिश्यदेवताइति ॥ बौधायनोपि ॥ गौतमादीनृषीन्सप्तकृत्वादर्भमयान्पुनः ॥ पूजयित्वायथाशक्तिवन्दयेदृचमुच्चरेदिति ॥ तत्रगौतमादीनितिस्वस्वशाखोक्तऋषीणामुपलक्षणम् ॥ ऋचमित्यपिवेदान्तराणाम् ॥ भविष्योत्तरेपि ॥ संप्राप्तेश्रावणस्यांतेपौर्णमास्यांदिनोदये ॥ स्नानंकुर्वीतमतिमाञ्छ्रुतिस्मृतिविधानतः ॥ ततोदेवान्पितॄंश्चैवतर्पयेत्परमांभसा ॥ उपाकर्मादिवेवोक्तमृषीणांचैव तर्पणम् ॥ कुर्वीतब्राह्मणैःसार्धंवेदानुद्दिश्यशक्तितः ॥ कालवृद्धौतु उपाकर्मणोप्युत्कर्षोभवति ॥ तदुक्तंकात्यायनेन ॥ उत्कर्षःकालवृद्धौस्यादुपाकर्मादिकर्मणि ॥ अभिषेकादिवृद्धीनांनतूत्कर्षोयुगादिष्विति ॥ ननु दशहरासुनोत्कर्षश्चतुर्ष्वपियुगादिषु ॥ उपाकर्मणिचोत्सर्गेह्येतदिष्टंवृषादितिऋष्यशृंगवचनेपूर्वोक्तकात्यायनवचनेनचनविरोध इतिचेत् न ॥ ऋष्यशृंगवचनस्यछंदोगाविषयत्वात् ॥ यतस्तेषां

१ ब्राह्मणः श्राद्धं देवान् इ०पा० ।

कालवृद्धावपिसिंहार्कएवोपाकर्म ॥ यथाहगार्ग्यः॥ सिंहेरवौतुपुष्यर्क्षे पूर्वाह्णेविचरेद्बहिः॥ छंदोगामिलिताःकुर्युरुत्सर्गंस्वस्वछंदसाम्॥ शुक्लपक्षेतुहस्तेनउपाकर्मापराह्णिकमिति ॥ सिंहेरवौहस्तेनापराह्णिकमुपाकर्मपुष्यर्क्षेपूर्वाह्णेउत्सर्जनमित्यन्वयः॥ ननुपर्वणिग्रहणेसतित्रयोदश्यांचतुर्दश्यांवाश्रवणर्क्षेग्रहणवेधदूषितत्वाबह्वृचैस्तूपाकर्मनकार्यम्। वेधश्चस्मृत्तावुक्तः॥यथा॥ त्रयोदश्यादितोवर्ज्यंदिनानांनवकंध्रुवम्॥ मांगल्येषुसमस्तेषुग्रहणेशशिसूर्ययोः ॥ तथा ॥ द्वादश्यादितृतीयांतोवेधइन्दुग्रहेस्मृतः ॥ एकादश्यादितःसौरेश्चतुर्थ्यंतःप्रकीर्तितः ॥ खंडग्रहेतयोःप्रोक्तमुभयत्रदिनद्वयमिति ॥ दिनद्वयग्रहणात्पूर्वमुत्तरं च ॥ अतश्चतुर्दश्यामपिश्रवणर्क्षेवेधदूषितत्वादुपाकर्मनकार्यमितिचेन्न॥उपाकर्मणिवेधदोषाभावात् ॥ तथा ॥ नित्येनैमित्तिकेजप्येहोमयज्ञक्रियासुच ॥ उपाकर्मणिचोत्सर्गेग्रहवेधोनविद्यतइति ॥ ॥ इत्युपाकर्म ॥ ॥ अथोत्सर्जनमुच्यते ॥ ॥ तदुक्तंयाज्ञवल्क्येन ॥ पौषमासस्यरोहिण्यामष्टकायामथापिवा ॥जलांतेछंदसांकुर्युरुत्सर्गंविधिवद्बहिरिति॥ मनुरपि ॥ पुष्येतुछंदसांकुर्याद्बहिरुत्सर्जनंद्विजः ॥ माघशुक्लस्यवाप्राप्तेपूर्वाह्णेप्रथमेहनीति ॥ अत्रमाघशुक्लस्येति भाद्रपदपौर्णमास्यामुपाकर्मविषयम् ॥ तदामाघशुक्लप्रतिपदएवसार्द्धचतुर्मासत्वसंभवात्॥ हारीतोपि ॥ सार्धपंचमान्मासानधीत्योर्ध्वमुत्सृजेदिति ॥ पंचार्द्धषष्ठान्वेति अत्रसार्द्धपंचमासानित्ययंपक्षआषाढ्यांकृतोपाकर्मविषयम् ॥ तदा ॥ पौषमासशुक्लपक्षस्यसार्धपंचमासत्वसंभवात् ॥ तथाचगोभिलः ॥ छंदोगानिहिताःकुर्युःप्रातरौत्सर्गिकांक्रियाम्॥ अपराह्णेह्युपाकर्मपुष्यहस्तर्क्षयोर्द्विजाइति ॥ अत्रहस्तर्क्षेअपराह्णेउपाकर्म ॥ पुष्येप्रातरुत्सर्जनंकुर्यादित्यर्थः ॥ इत्युत्सर्जनम् ॥ ॥अत्रैवोपाकर्मानंतरमपराह्णेभद्राराहित्येसतिरक्षाविधिंकुर्यात् ॥ भद्रायांतस्यनिषेधात् ॥ तदुक्तंस्मृतिसंग्रहे ॥ ॥ भद्रा

यांदिनेकर्तव्येश्रावणीफाल्गुनीतथा ॥ श्रावणीनृपतिंहंतिग्रामंदह
तिफाल्गुनीति ॥ अत्रश्रावणीतिश्रावण्यांक्रियमाणंरक्षाबंधनादि
कर्मगृह्यते ॥ नतूपाकर्म तस्यपृथगुपादानात् ॥ यथानिगमे ॥
श्रावण्यांश्रावणीकर्मयथाविधिसमाचरेत् ॥ उपाकर्मतुकर्तव्यंकर्कट
स्थेदिवाकरेइति ॥ उपाकर्मतुसतिसंभवेभद्रांतएवकार्यम् ॥ असंभवे
तुभद्रायामपिदिनेएवकार्यंनतुरात्रौतस्यासर्वकार्येषुनिषिद्धत्वात् ॥
रक्षाविधिंतुसतिसंभवेभद्रान्तेकुर्यात् दिवाभद्रायांसत्यांतदंतेरात्रौवा
कुर्यात् ॥ नतथोपाकर्म तस्यपूर्वाह्णएवविधानात् ॥ तदुक्तंभविष्यो
त्तरपुराणे ॥ उपाकर्मदिनेप्रोक्तमृषीणांचैवतर्पणम् ॥ ततोपराह्ण
समयेरक्षापोटलिकांशुभाम् ॥ कारयेदक्षतैःशस्तैःसिद्धार्थैर्हेमभूषि
ताम् ॥ वस्त्रैर्विचित्रैःकार्पासैःक्षौमैर्वामलवर्जितैः ॥ विचित्रपक्ष्मग्र
थितांस्थापयेद्भाजनोपरि ॥ उपलिप्तेगृहमध्येदत्तचतुष्केन्यसेच्छुभं
पीठम् ॥ तत्रोपविशेद्राजासामात्यःसपुरोहितःससुहृत् ॥ तदनु
पुरोधानृपतेरक्षांबध्नीतमंत्रेण ॥ मंत्रश्च ॥ येनबद्धोबलीराजादानवेंद्रो
महाबलः ॥ तेनत्वामनुबध्नामिरक्षेमाचलमाचलेति ॥ ब्राह्मणैःक्ष
त्रियैर्वैश्यैःशूद्रैरन्यैश्चमानवैः ॥ कर्त्तव्योरक्षिकाचारोद्विजान्संपूज्यय
त्नतः ॥ अनेनविधिनायस्तुरक्षाबंधंसमाचरेत् ॥ ससर्वदोषरहितःसुखं
संवत्सरंवसेदिति ॥ आषाढ्यांश्रावण्यांप्रौष्ठपद्यांवासर्वदेवानांपवित्रा
रोपणंकार्यम् ॥ तदुक्तंमत्स्यपुराणे ॥ आषाढ्यामथवाष्टम्यांचतु
र्दश्यामुमापतिम् ॥ पवित्रैरर्चयेद्भक्त्याश्रावण्यांचेतरान्सुरानिति ॥
इतिश्रावणीनिर्णयः ॥ ॥ अथभाद्रपदपौर्णमास्यांसावित्रीव्रतम् ॥
सुवासिनीनारीभर्तुरायुर्वृद्धयेसावित्रीव्रतंकुर्यात् ॥ तथाभविष्यो
त्तरे ॥ श्रूयतांपांडवश्रेष्ठसावित्रीव्रतमादरात् ॥ कथयामियथाची
र्णंतयासत्यायुधिष्ठिर ॥ त्रयोदश्यांभाद्रपदेदंतधावनपूर्वकम् ॥ त्रिरा
त्रनियमंकुर्यादुपवासस्यभारत ॥ अशक्तातुत्रयोदश्यांनक्तंकुर्या

ञ्जितेंद्रिया ॥ अयाचितंचतुर्दश्यामुपवासेनपूर्णिमामित्यादिविधि स्तुप्रसिद्धएव वटसावित्र्यमावास्यायांवक्ष्यते ॥ अत्रैवलोकपालपूजांकुर्यात् ॥ तदुक्तंब्रह्मपुराणे ॥ पूर्वभाद्रपदायोगेपौर्णमास्यां पितामहम् ॥ शक्राग्नियमयात्वंभोवायुवित्तेशशंकरान् ॥ लोकपालांस्तुरक्षार्थंत्रैलोक्यस्याभिपूजयेत् ॥ पृथिव्याधारणार्थायतथानंतंचभोगिनम् ॥ तस्मात्तत्रलिखेत्पद्ममष्टपत्रंसकर्णिकम् ॥ कर्णिकायांलिखेत्तत्रसानंतंकमलोद्भवम् ॥ प्राच्यादिषुचपत्रेषुवासवाद्यांश्चसायुधान् ॥ ततःक्रमेणतेनैवसंस्थाप्यकलशाञ्छुभान् ॥ पश्चात्संपूजनीयास्तुभक्त्याब्रह्मादयःसुराइति॥ ॥ इति भाद्रपदपूर्णिमा ॥ अथाश्विनपूर्णिमाकृत्यम् ॥ तदुक्तंब्रह्मपुराणे ॥ आश्वयुज्यांपौर्णमास्यांनिकुंभोवालुकार्णवान् ॥ आयातिसेनयासार्द्धं कृत्वायुद्धंसुदारुणम् तस्मात्तत्रनरैर्मार्गाःस्वगेहस्यसमीपगाः॥ शोधितव्याः[2]प्रयत्नेनभूषितव्याश्चमंडनैः ॥वेश्मानिभूषितव्यानिनानारंगैर्विशेषवत्॥सुस्नातैरनुलिप्तैश्चनरैर्भाव्यंसबालकैः ॥ दिवातत्रनभोक्तव्यंमानुषैश्चविवेकिभिः॥स्त्रीवृद्धमूर्खबालैश्चभोक्तव्यंपूजितैःसुरैः ॥ पूज्याश्च सफलैःपत्रैस्तथाद्वारोर्द्धभित्तयः ॥ द्वारोपांतेप्रदीप्तस्तुसंपूज्योहव्यवाहनः ॥ यवाक्षतघृतोपेतैस्तंडुलैश्चसुतर्पिताः ॥ सुपूजनीयःपूर्णेंदुः पयसापायसेनच॥रुद्रःसभार्यःस्कंदश्चतथानंदीश्वरोमुनिः ॥ गोमद्भिः सुरभीपूज्याछागवद्भिर्हुताशनः॥उरभ्रवद्भिर्वरुणोगजवद्भिर्विनायकः ॥ पूज्यःसाश्वैश्चरैमद्भिर्यथाविभवविस्तरैः ॥ ततःपूज्योनिकुंभश्चसमांसैस्तिलतंडुलैः ॥ सुगंधिभिर्घृतोपेतैःकासराक्षैश्चभूरिभिः ॥ कासराक्षो महिषाक्षगुग्गुलः ॥ ब्राह्मणान्भोजयित्वातुभोक्तव्यंमांसवर्जितमिति॥ अस्यामेवाश्विनीनक्षत्रयुक्तायांघृतपूर्णंसुवर्णपात्रंदद्यात् ॥ यदाह विष्णुः ॥ आश्वयुज्यामश्विनीगतेनचंद्रमसाघृतपूर्णंताम्रभाजनंसुवर्णयुतंविप्रायदत्त्वादीप्ताग्निर्भवतीति ॥ इयमेवकौमुदीप्रोक्ता ॥

१ भव इ० पा० । २ निषेक्तव्यामण्डितव्या इ० पा० ।

अस्यामिंद्रंलक्ष्मींचपूजयेत् ॥ तदुक्तंमहाभारते ॥ पूर्णि
माश्वयुजेमासिकौमुदीपरिकीर्त्तिता ॥ कौमुद्यांपूजयेल्लक्ष्मीमिंद्रंचै
रावतस्थितम् ॥ निशिजागरणंकृत्वापरेद्युरुत्सवमाचरेदिति
॥ ॥ इत्याश्विनपूर्णिमानिर्णयः ॥ अथकार्तिकपूर्णिमा ॥ ॥
तत्रक्षीरसागरदानम् ॥ तदुक्तंब्रह्मपुराणे ॥ पौर्णमास्यांतुसंपूज्योभ
क्त्यादामोदरःसदा ॥ ततश्चंद्रोदयेपूज्याःक्षीराब्धेःकृतिकास्तुषट् ॥
कार्तिकेयस्तथाखड्गोवरुणश्चहुताशनः ॥ धान्यैःसशूकैर्द्वारोर्द्ध्वेभूषि
तव्यंनिशागमे ॥ माल्यैर्धूपैस्तथागंधैर्भक्ष्यैरुच्चावचैस्तथा ॥ परमा
न्नैःफलैःशाकैर्वह्निब्राह्मणतर्पणैः ॥ एवंदेवांस्तुसंपूज्यदीपोदेयोगृहाद्ब
हिः ॥ दीपोपांतेतथागर्तश्चतुरस्रोमनोहरः ॥ चतुर्विंशांगुलःकार्यःसि
क्तश्चंदनवारिणा ॥ गवांक्षीरेणसंपूर्णःसमंतात्परिरक्षितः॥ तत्रहेममयो
मत्स्योमुक्तानेत्रोमनोहरः ॥ प्रक्षेप्तव्योविधानेननमोस्तुहरयेपठेत् ॥
ब्राह्मणायाथयोग्यायदद्यात्तंक्षीरसागरमिति ॥ अत्रैवकाम्यवृषोत्सर्गः
कार्यः ॥ तदुक्तंभविष्योत्तरे ॥ कार्तिक्यांतुवृषोत्सर्गोविवाहःपुण्यल
क्षणैः ॥ कार्यःकुरुकुलश्रेष्ठहरेर्नीराजनंतथा ॥ गजाश्वघृतदानञ्च
घृतधेन्वादयस्तथा ॥ प्रदेयाःपुण्यकृद्भिस्तुतास्ताःसंकल्प्यदेवता
इति ॥ मत्स्यपुराणेपि ॥ कार्त्तिक्यांतुवृषोत्सर्गंकृत्वानक्तंसमाचरे
त्॥शैवंपदमवाप्नोतिशिवव्रतमिदंस्मृतमिति॥ अत्रैवनीलवृषभदानमु
क्तंब्रह्मपुराणे॥यथा ॥नीलंतुवृषभंदद्याच्चतुर्वत्सतरीयुतम् ॥ सर्वसस्य
चरंरम्यंसर्वगंधसमन्वितम् ॥ सुवाससंब्राह्मणायमहाकांतारतारकम्॥
यावंतितस्यरोमाणिशरीरेसंतिसंख्यया॥तावद्युगसहस्राणिस्वर्गेवसति
तत्प्रदः ॥ पूजयित्वाततोविष्णुंरक्तमाल्यानुलेपनैः ॥ भोक्तव्यंगोरस
प्रायंस्वप्तव्यंस्थंडिलेततइति ॥ स्कंदपुराणेतुविशेषउक्तः ॥ नंदि
केश्वरउवाच ॥ स्वामिन्नहंपराधीनःशंभोःसेवापरायणः ॥ नावकाशो
स्तिमेकर्तुंव्रतानिनियमांस्तथा॥ तन्ममैकंसमाचक्ष्वव्रतंव्रतविदांवर॥

१ रंगैर्विचित्रैः इ० पा० ।

येनचीर्णेनभगवन्प्राप्यतेसुमहत्फलम् ॥ स्कंदउवाच॥ अस्तिकोजाग
रंनामव्रतानामुत्तमंव्रतम्॥यत्कृत्वासमवाप्नोतिजंतुर्लोकाननुत्तमान्॥
नित्यमाश्वयुजेमासिपूज्यमानोगणेश्वर॥ ऐरावणसमारूढःशक्रोलोका
नुकंपया॥परिभ्रमतिलोकांस्त्रीन्पश्यन्नक्षान्वरप्रदः॥ कोजागरविधानेन
समाराधयतीत्युत ॥ तेनकोजागरंनामव्रतंलोकेषुविश्रुतम्॥ विधानंत
स्यवक्ष्यामिशृणुष्वैकाग्रमानसः ॥ पूर्णिमाश्वयुजेमासिकौमुदीपरिकी
र्त्तिता॥तत्राराध्यमहालक्ष्मीमिंद्रंचैरावणस्थितम्॥ उपवासंप्रकुर्वीतदी
पान्दद्याच्चभक्तितः॥लक्षंतदर्धमयुतंसहस्रंशतमेववा ॥ घृतेनदीपयेद्दी
पांस्तिलतैलेनवाव्रती॥ रात्रौजागरणंकुर्यान्नृत्यगीतपुरःसरम्॥यथावि
भवतोदेयाःपुरवीथीषुदीपकाः॥ चैत्येषुदेवायतनेष्वारामेषुगृहेषु च ॥
ततःप्रभातेसुस्नातःसंपूज्यचशतक्रतुम्॥ ब्राह्मणान्भोजयेत्क्षीरघृतश
र्करपायसैः ॥ वासोभिर्दक्षिणाभिश्चततस्तान्पूजयेद्द्विजान् ॥ यथाश
क्तिचदातव्यादीपाःस्वर्णविनिर्मिताः॥एवंनिर्वर्त्यविधिवत्ततः पारणमा
चरेत् ॥ व्रतस्यास्यविधानेनकल्पान्वैदीपसंख्यकान् ॥ अप्सरोभिः
परिवृतःसूर्यलोकेमहीयते ॥ इहचायुष्यमारोग्यंपुत्रपौत्रादिसंपदः॥भ
वंतिव्रतमाहात्म्यात्कुलश्रैष्ठ्यंचगणेश्वर ॥ इतिश्रीस्कंदपुराणेकोजाग
गरव्रतंसंपूर्णम्॥ कृत्तिकादिनक्षत्रयोगेब्रह्मपुराणेअस्यामहत्त्वमुक्तम् ॥
यथा ॥ आग्नेयंतुयदाऋक्षंकार्त्तिक्यांभवतिक्वचित्॥महतीसातिथिर्ज्ञे
यास्नानदानेषुचोत्तमा ॥ यदायाम्यंतुभवतिऋक्षंतस्यांतिथौक्वचि
त् ॥ तिथिःसापिमहापुण्यामुनिभिःपरिकीर्त्तिता॥प्राजापत्यंयदाऋक्षं
तिथौतस्यांनराधिप॥ सामहाकार्त्तिकीप्रोक्तादेवानामपिदुर्लभेति ॥ इ
यमेवकृत्तिकागतबृहस्पतिचंद्रमोभ्यांसनाथामहाकार्त्तिकी ॥तथा॥ पु
ण्यामहाकार्त्तिकीस्याज्जीवेंद्वोःकृत्तिकास्थयोरिति ॥ अस्यामेवविशा
खास्थितेसूर्येकृत्तिकास्थितेचंद्रेचपद्मकयोगउत्पद्यते ॥ सचपुष्करेषु
दुर्लभः ॥ ॥ यथा ॥ विशाखासुयदाभानुःकृत्तिकासुचचंद्रमाः ॥

सयोगः पद्मकोनाम पुष्करेष्वतिदुर्लभः ॥ इयंमन्वादिरपि ॥ तदुक्तम् ॥ आषाढीकार्त्तिकीचतद्वदिति ॥ ॥ इतिकार्त्तिकीपौर्णमासीनिर्णयः ॥ अथमार्गशीर्षपौर्णमास्यांचंद्रपूजा ॥ तदुक्तंब्रह्मपुराणे मार्गशीर्षतिथिप्रक्रमे ॥ वामनेत्रंहियद्विष्णोस्तदेवभुवनत्रयम् ॥ अनसूयात्मजश्चंद्रस्त्वमृतेनाभ्यषेचयत् ॥ पौर्णमास्यांतुतस्मात्तंपूजयेत्तत्रसर्वदा ॥ शुक्लैः पुष्पैश्चपयसाश्रद्धयापरयामुदा ॥ धूपैर्दीपैश्चबलिभिर्होमैर्ब्राह्मणतर्पणैः ॥ गोभ्यश्चलवणंदेयंतस्मिन्नहनिसर्वदा[1] ॥ यस्मात्तुलवणंचन्द्राद्दक्षशापाद्विनिःसृतम् ॥ मातास्वसाचदुहितासंपूज्याश्चकुलांगनाः ॥ कांतंरूपंभवेत्स्त्रीणांपूर्णेन्दोःपूजनादिति ॥ अस्यामेवमृगशिरोनक्षत्रयुतायांससुवर्णचूर्णितलवणदानंविष्णुनोक्तम् ॥ यथा ॥ मार्गशीर्षशुक्लपंचदश्यांमृगशिरोनक्षत्रयुक्तायां चूर्णितलवणस्यसुवर्णनाभंप्रस्थमेकंचन्द्रोदयेब्राह्मणायप्रतिपादयेत् ॥ अनेनकर्मणारूपसौभाग्यलाभोजायतइति ॥ ॥ इतिमार्गशीर्षपूर्णिमानिर्णयः ॥ ॥ अथपौषीनिर्णयः ॥ तस्यांपुष्यनक्षत्रयुक्तायामलक्ष्मीनाशनंस्नानादिकंकार्यम् ॥ तदुक्तंब्रह्मपुराणे ॥ इदंजगत्पुरालक्ष्म्यात्यक्तमासीत्ततोहरिः ॥ पुरंदरश्चसोमश्चतथापुष्यबृहस्पती ॥ पंचैतेपुष्ययोगेनपौर्णमास्यांतपोबलात् ॥ अलंकृतंपुनश्चक्रुःसौभाग्योत्सवलक्ष्मिभिः ॥ तस्मान्नरैःपुष्ययोगेतत्रसौभाग्यवृद्धये ॥ गौरसर्षपकल्केनसमालभ्यस्वकांतनुम् ॥ कृतस्नानैस्ततःकार्यमलक्ष्मीनाशनंपरम् ॥ उद्वर्त्यदेवंचतथासर्वौषधियुतैर्जलैः ॥ स्नापयित्वानवंवस्त्रंगृहीत्वाच्छादनंततः ॥ द्रष्टव्यंमंगलशतंधूपस्रग्माल्यशोभितम् ॥ ततोनारायणःशक्रश्चंद्रःपुष्यबृहस्पती ॥ संपूज्याःपुष्पधूपैश्चनैवेद्यैश्चपृथक्पृथक् ॥ प्रशस्तैर्वैदिकैर्मंत्रैःकृत्वाग्निहवनंशुभम् ॥ धनैर्विप्रांश्चसंतर्प्यनवैर्वस्त्रैश्चशोभितान् ॥ ततःपुष्टिकरंहृद्यंभोक्तव्यंघृतपायसम् ॥ पुष्ययोगेनकर्तव्यंराज्ञास्नानंतुसर्वदेति ॥ इतिपौषीपौर्णमासीनिर्णयः ॥ ॥ अथमाघपौर्णमासी ॥ ॥ अस्यांम

१ भाग्यंदेयंचलवणम् इतिपाठान्तरम् ।

घायुक्तायांतिलैः श्राद्धंतिलपात्रदानंकुर्यात् ॥ ॥ तत्रविष्णुः ॥माघी मघायुताचेत्स्यात्तस्यांतिलैःश्राद्धंकृत्वापूतोभवेदिति ॥ भविष्योत्तरे पि॥माघ्यांमघासुतिलैःसंतर्प्यपितृदेवताः॥तिलपात्राणिदेयानितिलां श्चापितिलौदनम् ॥ कार्पासदानमत्रैवतिलदानंतुशस्यते ॥ कंबला जिनरत्नानिमोचकौपानकञ्चुकौ ॥ उपानद्दानमत्रैवकथितंसर्वकाम दम् ॥ यत्रवातत्रवास्नानंदानंवित्तानुरूपतइति ॥ भविष्योत्तरे ऽपि ॥ पौर्णमास्यांतुयोमाघेपूजयेद्विधिवच्छिवम् ॥सोऽश्वमेधमवाप्ये हविष्णुलोकेमहीयतइति ॥ ॥ इतिमाघीपौर्णमासीनिर्णयः ॥ अथ फाल्गुनपूर्णिमानिर्णयेहोलिकानिर्णीयते ॥ सासायाह्नव्यापिनीपूर्व विद्धाग्राह्या ॥ तदुक्तम् ॥ सायाह्नेहोलिकांकुर्यात्पूर्वाह्णेक्रीडनंगवाम्॥ दीपंदद्यात्प्रदोषेतुएषधर्मःसनातनइति ॥ तथा ॥ श्रावणीदुर्गनव मीदूर्वाचैवहुताशनी॥पूर्वविद्धैवकर्तव्याशिवरात्रिर्बलेर्दिनामिति ॥ तत्र भद्रायांहोलिकांनदीपयेत् ॥ तदुक्तम् ॥ भद्रायांदीपिताहोलीराष्ट्रभं गंकरोतिवै॥नगरस्यचनैवेष्टातस्मात्तांपरिवर्जयेदिति ॥ तथाचस्मृत्य न्तरे॥भद्रायांद्वेनकर्त्तव्येश्रावणीफाल्गुनीतथा॥श्रावणीनृपतिंहन्तिग्रा मंदहतिफाल्गुनी॥दिनार्द्धात्परतोपिस्यात्फाल्गुनीपूर्णिमायदि॥रात्रौ भद्रावसानेचहोलिकांतत्रदीपयेत् ॥ इति ॥ परदिनेदिनार्द्धात्परतोपि पूर्णिमायांविद्यमानायांपूर्वविद्धायामेवरात्रौभद्रावसानेहोलिकादीपित व्येत्यर्थः ॥ यदासूर्यास्तमयादारभ्यसूर्योदयपर्यंतंभद्रावसानाभा वेसर्वथानिर्णयंकर्त्तुमशक्येकालेभद्रायामपिहोलिकादीपनस्यप्रतिप्र सवमाह ॥ रत्नकोशे ॥ विवादेशत्रुसंहारेभयार्त्तौराजदर्शने ॥ रोगा र्त्तौवैद्यगमनेभद्राज्ञेयाशुभावहा ॥ रक्षाबंधेऋतुस्नानेकार्त्तिक्यांचरजो त्सवे ॥ देवीपूजासुसर्वासुविष्टेर्दोषोनविद्यते ॥ उत्सर्गेद्विमुखीदाने जातकर्मणिमंगले ॥ प्रसादेषुनरेंद्रस्यविष्टेर्दोषोनविद्यते ॥ राज मार्त्तंडे ॥ सूतिकामंगलस्थानेरोगमुक्तिषुमज्जने ॥ श्रवणेषुपुराणानां

विष्टेर्दोषोनविद्यते ॥ हरिप्रियार्चनेऽष्टम्यांहुताशन्यांतथैवच ॥ आश्विन्यांचचतुर्दश्यांविष्टेर्दोषोनविद्यते ॥दानेवाशयनेचैववातपातादिकर्मणि ॥ पराश्वप्रसवेभव्याविष्टिदोषोनविद्यते ॥ ज्योतिःसारसमुच्चये ॥ दीक्षायांहोमयज्ञेषुदेवताराधनेषुच ॥ विषारिघातनेनित्यंसिद्धिदाविष्टिरेवहि ॥ दिनभद्रायदारात्रौरात्रिभद्रायदादिने ॥ नत्याज्याशुभकार्येषुप्राहुरेवंपुरातनाः ॥ रात्रिभद्रायदाऽह्निस्याद्दिवाभद्रायदानिशि॥नतत्रभद्रादोषःस्यात्सर्वकार्येषुसिद्धिदा ॥ तथाप्युत्सवकार्येषुपराधीनेचसंकटे ॥भद्रायांविपरीतायांनदोषःकार्यसाधनइत्ययंज्योतिर्निबंधः ॥ तथाचज्योतिःपराशरः ॥ रात्रिभद्रायदाह्निस्याद्दिवाभद्रायदानिशि॥नत्याज्याशुभकार्येषुइतिगर्गोब्रवीन्मुनिरिति ॥तस्माद्भद्रायांहोलिकादोषोनसंभावनीयः ॥ यदापुनःपरदिनेपूर्णिमासार्द्धयामत्रयव्यापिनीप्रतिपच्चवृद्धिगामिनीतदातत्रैवहोलिकाकार्या ॥ तदुक्तंभविष्योत्तरे ॥ सार्द्धयामत्रयंवास्याद्द्वितीयदिवसेयदा ॥ प्रतिपद्वर्धमानातुतदासाहोलिकास्मृतेति ॥ यत्तुवचनम् ॥ वह्नौवह्निंपरित्यजेदिति ॥ वह्नौहोलिकायांवह्निंप्रतिपदंवर्जयेदित्यर्थः ॥ तत्तुसायंकालेभद्रारहितपूर्णिमासंभवेतामतिक्रम्य प्रतिपदिनकर्त्तव्येत्येतत्परम् ॥ अन्यथाभविष्योत्तरवाक्यस्यनिरर्थकतास्यात् ॥ अथात्रकर्त्तव्यमुच्यते ॥ भविष्योत्तरेयथोत्सवेषुतैलाभ्यंगेनिर्दोषतांदर्शयति ॥ श्रावण्यांबलिराज्येचवसंतेविजयोत्सवे ॥ तैलाभ्यंगेनदोषःस्यात्संक्रांतिग्रहणेष्वपि ॥ राजानंप्रतिपौरवाक्यम् ॥ अस्माकंहिगृहेकापिढुंढानामेहराक्षसी ॥ दिवारात्रौसमागम्यबालान्पीडयतेबलात्॥ रक्षयादंडकेनापिभेषजैर्वानराधिप ॥ मंत्रज्ञैःपरमाचार्यैःसानियंतुंनशक्यते ॥ एतत्सर्वंसमाख्यातंढुंढायाश्चरितंनृप ॥ इतिपौरवचःश्रुत्वाराज्ञापृष्टोथनारदः ॥ नारदउवाच ॥ सांप्रतंकथयिष्यामियेनोपायेनहन्यते ॥ अद्यपंचदशीशुक्लाफाल्गुनस्यनराधिप ॥

शीतकालोविनिष्क्रांतःप्रातर्ग्रीष्मोभविष्यति ॥ अभयप्रदानंलोकानां दीयतांपुरुषोत्तम ॥ यथानिःशंकितालोकारमंतिचहसंतिच ॥ दारुजानिचखड्गानिगृहीत्वासमरोत्सुकाः ॥ योधाइवविनिर्यांतुशिशवः संप्रहर्षिताः ॥ संचयंशुष्ककाष्ठानामुपलानांचकारयेत् ॥ तत्राग्निंविधिवद्धुत्वारक्षोघ्नैर्मंत्रविस्तरैः ॥ततःकिलकिलाशब्दैःस्तालशब्दैर्मनोहरैः ॥ तमग्निंत्रिष्परिक्रम्यगायंतिचहसंतिच ॥ जल्पंतःस्वेच्छयालोकानिःशंकंलज्जयोज्झिताः ॥ तेनशब्देनसापापामोहेने[1]चानिराकृता ॥ अदृष्टघातैर्डिंभानांराक्षसीक्षयमेष्यति ॥ ततःप्रभृतिलोकेऽस्मिन्होलिकाख्यातिमागता ॥ सर्वदुष्टापहोहोमःसर्वरोगोपशांतिदः ॥ क्रियतेऽस्यांद्विजैःपार्थतेनसाहोलिकास्मृता ॥ सर्वसारातिथिश्चेयंपौर्णमासीयुधिष्ठिर ॥ सारत्वात्फल्गुरित्येषापरमानंददायिनी ॥ अस्यांनिशागमेपार्थसंरक्ष्याःशिशवोगृहे ॥ गोमयेनोपलिप्तेचसचतुष्केगृहांगणे ॥ आकारयेच्छिशुप्रायान्खड्गव्यग्रकरान्नरान् ॥ तेकाष्ठखड्गैःसंस्पृश्यशब्दैर्हास्यकरैः शिशून् ॥ रक्षंतितेषांदातव्यंगुडंपक्वान्नमेवच ॥ एवंढुंढेतियातस्याःसदोषःप्रशमंव्रजेत् ॥ बालानांरक्षणंकार्यंतस्मात्तस्मिन्निशागमेइति ॥ ॥ इतिहोलिकानिर्णयः ॥ ॥फाल्गुनीमन्वादिरपि ॥ ॥ अथचैत्रादिमासपूर्णिमासुचित्राद्यृक्षेषुचंद्रगुरूयदिस्याताम् ॥ तदामहाचैत्र्यादयःप्रोक्ताः ॥ तदाहगार्ग्यः ॥ माससंज्ञेयदाऋक्षेचंद्रःसंपूर्णमंडलः ॥ गुरुणायातिसंयोगंसातिथिर्महतीस्मृतेति ॥ संपूर्णमंडलइत्यनेनपूर्णिमायोगोभिधीयते॥शंकरगीतास्वपि ॥एकराशिगतौस्यातांयदागुरुनिशाकरौ ॥ सापौर्णमासीमहतीसर्वपापहरास्मृतेति ॥ ज्येष्ठपूर्णिमायांगार्ग्येणविशेषउक्तः ॥ ऐन्द्रेगुरुःशशीचैवप्राजापत्येरविस्तथा॥पूर्णिमाज्येष्ठमासस्यमहाज्यैष्ठीप्रकीर्त्तितेति॥तथाच ॥वृषेवामिथुनेभानौजीवचंद्रौतथेंद्रभे ॥ पौर्णमासीगुरोर्वारेमहाज्यैष्ठीप्रकीर्त्तिता ॥ माघपूर्णिमायांतेनै

---

१ होमेन इ० पा०

वविशेषउक्तः॥ मेषराशौयदासौरिः सिंहेचंद्रबृहस्पती ॥ भास्करःश्रवणर्क्षेचमहामाघीचसास्मृतेति ॥ एतामहाचैत्रमासादयःशालग्रामादितीर्थेषुस्नानदानादिषुपुण्यतमाः ॥ यदाहगार्ग्यः ॥ महामाघीप्रयागेतुनैमिषेफाल्गुनीतथा ॥ शालग्रामेमहाचैत्रीकृताःस्युःपुण्यहेतवः॥ गंगाद्वारेतुवैशाखीज्यैष्ठीचपुरुषोत्तमे॥ आषाढीवैकनखलेकेदारेश्रावणीतथा॥बदर्यांचप्रौष्ठपदीगंथायामाश्विनीतथा ॥ पुष्करेकार्त्तिकीपुण्याकुब्जेमार्गशिरीतथा ॥ अयोध्यायांमहापौषीकृताःस्युस्तामहाफलाइति ॥शालग्रामादिरिक्तस्थानेष्वपिमहाचैत्र्यादिषुकृतंस्नानदानादिकमनंतफलंभवति ॥ तदाहगार्ग्यः ॥ आशुयत्क्रियतेश्राद्धंयच्चदानादिकंपुनः॥ उपवासादिकंयच्चतदनंतफलंस्मृतम्॥ अथसिद्धविरुद्धादिकंलिख्यते॥ पूर्णिमागुरुवारेणसिद्धा॥गुरौदशमिपंचम्योःपौर्णमासीति ॥ अत्रपंचमीवद्विवाहयात्रोत्सवादिकंकार्यम् ॥ अत्रैवतिथिपत्वाच्चन्द्रःपूज्यः॥ तदुक्तम्॥पर्वणींदोरिति ॥ क्रूरग्रहेधनुरादिराशिचतुष्कस्थेपूर्णिमाशुभाभवति ॥ योगिनीसांमुख्यादत्रैशान्यांयात्रानकार्या ॥ इतिपूर्णिमानिर्णयः॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेपूर्णिमानिर्णयः॥ ॥श्रीसूर्यसेनभूभृद्विमलयशःक्षीरसागरादुदिते ॥ इतिनिर्णयामृतेऽस्मिन्पूर्णिमायानिर्णयोपूरि॥श्रीमत्पंडितसिद्धलक्ष्मणसुतःश्रीसिद्धलक्ष्मीपदद्वंद्वाराधनसुप्रसिद्धममहिमायःसिद्धसारस्वतः ॥ आदेशादकृतैषसूर्यमहसःश्रीसूर्यसेनप्रभोर्वैधेकर्मणिकालनिर्णयमसावल्लाटनाथःसुधीः ॥ ॥ अथप्रतिपदादिष्वमावास्यानिर्णीयते ॥ तत्रोपवासादिषुअमावास्याप्रतिपद्युक्तैवग्राह्या ॥ तदुक्तंयुग्मवाक्ये ॥ प्रतिपद्यप्यमावास्येति॥ तदुक्तम्॥अमावास्यातृतीयाचताउपोष्यापरान्विताइति ॥ निगमेपि॥षष्ठ्यष्टमीअमावास्येति॥चतुर्दशीविद्धायांनिषेधश्चनिगमे॥भूतविद्धाह्यमावास्यानिष्फलंस्यात्रयंत्विदमिति॥स्कंदपुराणेपि॥भूतविद्धाप्यमावास्यानग्राह्यामुनिपुंगववर्जयित्वा तु सावित्रीव्रतंतु

१ कुब्जादौतुमहाश्विनी इ०पा०।

शिखिवाहन ॥ शुक्लात्रयोदशीरंभानोपोष्याःपरसंयुताइति॥अतश्चवट
सावित्रीव्यतिरिक्तव्रतेष्वमावास्यापरयुतैवग्राह्येतिसिद्धांतः ॥ज्येष्ठमा
सामावास्यायांपूर्वविद्धायांवटसावित्रीव्रतंकुर्यात् ॥तत्रायंविधिः ॥ज्ये
ष्ठकृष्णत्रयोदशीमारभ्यत्रिरात्रोपोषितानारी अशक्तात्रयोदश्यांनक्तं
चतुर्दश्यामयाचितममावास्यायामुपवासंकृत्वा कस्मिंश्चित्पात्रेप्रस्थ
मात्रांवालुकांयवादिधान्यंचादायतस्योपरिवस्त्रयुग्मवेष्टितेवंशपात्रेस्व
शक्त्यानिर्म्मितांसौवर्णींमृन्मयींवासावित्रीप्रतिमांसंस्थाप्यवटमूलेपूज
यित्वाब्राह्मणायदद्यात् ॥ तदुक्तंभविष्योत्तरे ॥ अमायांतुतथा
ज्येष्ठेवटमूलेमहासतीम् ॥ त्रिरात्रोपोषितानारीविधिनानेनपूजयेत् ॥
अशक्तातुत्रयोदश्यांनक्तंकुर्याज्जितेंद्रिया ॥ अयाचितंचतुर्द
श्याममायांसमुपोषणम् ॥ गृहीत्वावालुकांपात्रेप्रस्थमात्रांयु
धिष्ठिर ॥ ततोवंशमयेपात्रेवस्त्रयुग्मेनवेष्टिते ॥ सावित्रीप्रतिमां
कुर्यात्सर्वावयवशोभिनीम् ॥ सौवर्णींमृन्मयींवापिस्वस्यशक्त्यावि
निर्मिताम् ॥ सार्द्धंसत्यवतासाध्वींफलनैवेद्यदीपकैः ॥ वटावलंबि
तंकृत्वाकाष्ठभारंयुधिष्ठिर ॥ विरूढैःसप्तधान्यैश्चबहुधासंप्रकल्पि
तैः ॥ रजन्याकंठसूत्रैश्चशुभैःकुंकुमकेसरैः ॥ सावित्र्याख्यानकंवा
पिवाचयीतद्विजोत्तमम् ॥ रात्रौजागरणंकृत्वानृत्यगीतपुरःसरम् ॥
ततःप्रभातेविधिनापूर्वोक्तेननरोत्तम ॥ तामपिब्राह्मणेदद्यात्प्रणि
पत्यक्षमापयेत् ॥ दानमंत्रश्च ॥ सावित्रीयंमयादत्तासहिर
ण्यामहासती ॥ ब्रह्मणःप्रीणनार्थायब्राह्मणप्रतिगृह्यतामिति ॥ एवं
दत्त्वाद्विजेंद्रायसावित्रींतांयुधिष्ठिर ॥नैवेद्यादिचतत्सर्वंब्राह्मणस्यगृहंन
येत्॥ स्वयंदशपदंगच्छेत्स्ववेश्मपुनराविशेत्॥ तत्रभुक्त्वाहविष्यान्नं
ब्राह्मणैर्बांधवैःसह ॥ विसर्जयेत्ततोविप्रान्सावित्रीप्रीयतामिति ॥
व्रतेनानेनराजेंद्रवैधव्यंनाप्नुयात्क्वचित् ॥ ॥ इतिवटसावित्रीव्रतम् ॥
॥ अथकार्तिक्यमावास्यासुखरात्रिरुच्यते ॥ तस्यांलक्ष्मीपूजनादि

कंनववस्त्रधारणादिकंकुर्यात्॥ ॥ तदुक्तंब्रह्मपुराणे॥ ॥अमावास्यायांदेवास्तुकार्तिकेमासिकेशवात् ॥ अभयंप्राप्यसुप्तास्तुसुखंक्षीरोदसानुषु॥लक्ष्मीर्दैत्यभयान्मुक्तासुखंसुप्ताम्बुजोदरे॥ अतोर्थंविधिवत्कार्यामनुष्यैःसुखसुप्तिका ॥ दिवातत्रनभोक्तव्यमृतेबालातुराक्षमान् ॥ प्रदोषसमयेलक्ष्मींपूजयित्वायथाक्रमम् ॥ दीपवृक्षास्तथाकार्याःशक्त्यादेवगृहेषुच ॥ दीपमालापरिक्षिप्तेप्रदोषेतदनंतरम् ॥ ब्राह्मणान्भोजयित्वादौविभोज्यचबुभुक्षितान् ॥ अलंकृतेनभोक्तव्यंनववस्त्रोपशोभिना ॥ स्निग्धैर्मुग्धैर्विदग्धैश्चबांधवैर्निर्वृतैःसहेति ॥ अत्रैवराजाकौमुदीमहोत्सवंकुर्यात्॥तदुक्तम्॥ ततोऽपराह्णसमयेघोषयेन्नगरेनृपः ॥ सर्वराज्यंबलंलोकान्यथेष्टंचेष्टतामिति॥लोकैश्चापिपुरेहृद्येसुधाधवालिताजिरे ॥ वृक्षचंदनमालाद्यैश्चर्चितेचगृहेगृहे ॥ द्यूतपानरतोद्युक्तनरनारीमनोहरे ॥ नृत्यवादित्रसंघुष्टेसंप्रज्वालितदीपके ॥ दीपमालाकुलेरम्येविध्वस्तध्वांतसंचये ॥ प्रदोषेदोषरहितेशस्तेदोषागमेशुभे ॥ वेश्याविलासिनीसार्थस्वस्तिमंगलकारिणि॥ ॥ गृहाद्गृहंव्रजन्तीचपादाभ्यंगप्रदायिनि॥ ततोर्द्धरात्रसमयेस्वयंराजापुरंव्रजेत्॥ अवलोकयितुरम्यंपद्भ्यामेवशनैःशनैः॥ततःप्रत्यूषसमयेनारीभिर्गृहादलक्ष्मीर्निष्कास्यते॥तदुक्तम्॥ एवंगतेनिशीथेतुजनेनिद्रार्द्धलोचने॥ तावन्नगरनारीभिःशूर्पडिंडिमवादनैः॥ निष्कास्यतेप्रहृष्टाभिरलक्ष्मीःस्वगृहांगणादिति॥ ॥ इतिकौमुदीमहोत्सवः॥ माघामावास्यायांसावित्रीसहितंब्रह्माणंपूजयित्वानवनीतधेनुंब्राह्मणायदद्यात्॥तदुक्तंब्रह्मपुराणे॥अमायांमाघमासस्यपूजयित्वापितामहम् ॥ गायत्र्यासहितंदेवंवेदवेदांगभूषितम्॥नवनीतमयींधेनुंफलैर्नानाविधैर्युताम्॥ सहिरण्यांसवस्त्रांचब्राह्मणायनिवेदयेदिति ॥ माघामावास्यायांशतभिषानक्षत्रयुतायांश्राद्धादिकंमहातृप्तिप्रदंपितॄणांभवति ॥ तदुक्तंविष्णुपुराणे ॥ माघासितेपंचदशीकदाचिदुपैतियोगंयदिवारुणेन ॥ ऋक्षेणकालसः

परःपितॄणांनह्यल्पपुण्यैर्नृपलभ्यतेसाविति ॥ अस्यामेवपूर्वभाद्रपदा
युक्तायांश्राद्धादिनासहस्रयुगपर्यंतंतृप्तिर्भवति ॥ तत्रैवचेद्भाद्रपदास्तु
पूर्वाकालेयदातत्क्रियतेपितृभ्यः ॥ श्राद्धंपरांतृप्तिमवाप्नुवंतियुगान्स
हस्रंपितरश्चतेनेति ॥ इयमेवधनिष्ठायुक्तावर्षायुतंपितॄणांतृप्तिदाभव
ति ॥ तदुक्तंमहाभारतेमाघामावास्याप्रक्रमे ॥ कालेधनिष्ठायदि
नामतस्मिन्भवंतिभूपालतदापितृभ्यः ॥ दत्तंजलान्नंप्रददातितृप्तिंवर्षा
युतंतत्कुलजैर्मनुष्यैः॥इति ॥माघपौषयोरमावास्यारविवारश्रवणनक्ष
त्रव्यतीपातयोगयुक्ताचेदसावर्द्धोदयाख्यःकोटिग्रहणसंनिभोयोगः॥त
दुक्तंमहाभारते ॥अमार्कपातश्रवणैर्युक्ताचेत्पौषमाघयोः॥ अर्द्धोदयः
सविज्ञेयःकोटिसूर्यग्रहैःसमः ॥ दिवैवयोगःशस्तोयंनचरात्रौकदाचने
ति ॥स्कंदपुराणेपि ॥ अर्द्धोदयेतुसंप्राप्तेसर्वंगंगासमंजलम् ॥ शु
द्धात्मानोद्विजाःसर्वेभवेयुर्ब्रह्मसंनिभाः॥यत्किंचिद्दीयतेदानंतद्दानंमेरु
संनिभमिति ॥तथातत्रैवदानादौविशेषउक्तः ॥ चतुःषष्टिपलंमुख्य
ममत्रंतत्रकारयेत् ॥ चत्वारिंशत्पलंवाथपंचविंशतिमेववा ॥
निधायपायसंतत्रपद्ममष्टदलंलिखेत् ॥ पद्मस्यकर्णिकायांतुकर्षमा
त्रंसुवर्णकम् ॥ तदभावेतदर्द्धंवातदर्द्धंवापिकारयेत् ॥ कृत्वातुतं
डुलैःशुद्धैःपद्ममष्टदलंशुभम् ॥ अमत्रंस्थापयेत्तत्रब्रह्मविष्णुशिवा
त्मकम् ॥ तेषांप्रीतिकरार्थायश्वेतमाल्यैःसुशोभनैः ॥ वस्त्रादि
भिरलंकृत्यब्राह्मणायनिवेदयेत् ॥ दानमंत्रश्च ॥ सुवर्णपायसामत्रं
यस्मादेतत्रयीमयम् ॥ आवयोस्तारकंयस्मात्तद्गृहाणद्विजोत्तमे
ति ॥ समुद्रमेखलांपृथ्वींसम्यग्दत्तस्ययत्फलम् ॥ तत्फलंल
भतेमर्त्यःकृत्वादानममत्रकमिति ॥ इत्यर्द्धोदयविधिः ॥ याकाचि
दमावास्यानुराधाविशाखास्वातियुक्ताश्राद्धेनपितॄणामष्टवार्षिकींतृप्तिं
करोति ॥ तदुक्तम् ॥ विष्णुपुराणे ॥ अमावास्यायदामैत्रविशा
खास्वातियोगिनी ॥ श्राद्धेपितृगणस्तृप्तिंतदाप्नोत्यष्टवार्षिकीमिति ॥

आर्द्रापुनर्वसुपुष्यर्क्षयुक्ताद्वादशाब्दिकीं तृप्तिं करोति॥तदुक्तंविष्णुपुरा
णे ॥ अमावास्यायदापुष्येरौद्रर्क्षेचपुनर्वसौ ॥ द्वादशाब्दींतदातृप्तिं
प्रयांतिपितरोर्चिताइति ॥ सोमवारयुताअमावास्यासूर्यग्रहणसमा ॥
तत्रश्राद्धादिकंकृतमक्षयफलंभवति ॥ तदुक्तंशंखेन ॥ अमावा
स्यातुसोमेनसप्तमीभानुनासह ॥ चतुर्थीभूमिपुत्रेणसोमपुत्रेणचाष्ट
मी ॥ चतस्रस्तिथयस्त्वेतासूर्यग्रहणसंनिभाः ॥ स्नानंदानंतथाश्रा
द्धंसर्वंतत्राक्षयंभवेदिति ॥ फाल्गुनामावास्यायांतुलिंगपुराणेफाल्गुन
तिथिप्रक्रमेविशेषउक्तः॥अमावास्यायांपूज्यश्चरुद्रोग्निर्ब्राह्मणस्तथा ॥
माषोदनैःपोलिकाभिःपूज्यश्चात्मासबांधवइति ॥ याकाचिदमा
वास्याश्रवणाश्विनीधनिष्ठार्द्राश्लेषामृगशीर्षनक्षत्रेष्वन्यतमेनरविवारे
णचयुक्ताचेद्भवतितदाव्यतीपाताख्योलभ्ययोगोभवति ॥ तदुक्तंभ
विष्योत्तरे ॥ श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः॥ अमाचेद्रविवारे
णव्यतीपातःसउच्यते ॥ तत्रदत्तंहुतंजप्तंसर्वंकोटिगुणंभवेत् ॥ इति
श्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेअमावास्यानिर्णयः ॥ श्रीसू
र्यसेनभूभृद्विमलयशःक्षीरसागरादुदिते ॥ इतिनिर्णयामृतेस्मिन्नमाया
श्चनिर्णयोजातः ॥ श्रीमत्पंडितसिद्धलक्ष्मणसुतःश्रीसिद्धलक्ष्मीपदद्वं
द्वाराधनसुप्रसिद्धमहिमायःसिद्धसारस्वतः ॥ आदेशादकृतैपसूर्य
महसःश्रीसूर्यसेनप्रभोर्वैधेकर्मणिकालनिर्णयमसावल्लाटनाथःसुधीः ॥
अथयागानुष्ठानसिध्यर्थंपूर्णिमामावास्ययोर्निर्णयःप्रारभ्यते ॥ ॥
तस्यचपर्वप्रतिपत्संधिनिबंधनत्वात्संधेश्चमध्याह्नमध्याह्नापूर्वंपरतःसं
गवमध्याह्नयोरंतरेत्यादिवक्ष्यमाणत्वान्मध्याह्नादिस्वरूपपरिज्ञाना
र्थमह्नःपंचधाविभागउच्यते ॥तत्रपंचधाविभागोव्यासेनोक्तः॥ यथा॥
मुहूर्तत्रितयंप्रातस्तावानेवतुसंगवः ॥ मध्याह्नस्त्रिमुहूर्तःस्यादपरा
ह्णस्तुतादृशः ॥ सायाह्नस्त्रिमुहूर्तश्चसर्वकर्मसुगर्हितइति ॥ अस्या
र्थः ॥ उदयान्मुहूर्तत्रयंप्रातःकालः॥ तदनंतरंमुहूर्तत्रयंसंगवः ॥ ततः

परंमुहूर्तत्रयंमध्याह्नः ॥ ततःपरंमुहूर्तत्रयमपराह्णः ॥ तदनंतरंमुहूर्तत्रयंसायाह्नइति॥त्रिंशद्घटिकात्मकस्याह्नःषड्भिर्घटिकाभिरेकैकस्मिन्कालेसतिपंचधाविभागोभवति ॥ पराशरोप्याह ॥ उदयाद्यदिवैयावत्रिमुहूर्तगतोरविः ॥ प्रातःकालःसविज्ञेयोदिनभागःसपंचमः ॥ तस्मात्प्रातःस्तनात्कालात्रिमुहूर्तस्तुसंगवः॥ त्रिमुहूर्तस्तुमध्याह्नस्तस्मात्संगवकालतः॥तस्मान्माध्याह्निकात्कालादपराह्णस्तथाविधः ॥ अपराह्णात्रिमुहूर्तःकालःसायाह्नउच्यतेइति ॥ ननुविषुवेऽह्नःपंचदशमुहूर्तात्मकत्वात्पंचधाविभागेसत्यैकैकस्यकालस्य त्रिमुहूर्तात्मकत्वमुपपद्यते ॥ यदापुनरयनवशादह्नोवृद्धिह्रासौभवतः तदाकथंप्रातरादिकालस्यत्रिमुहूर्तात्मकत्वंसंभवतीतिचेत् ॥ सत्यम्॥ अत्रत्रिमुहूर्तमित्यह्नःपंचधाभागस्योपलक्षणम् ॥ अतश्चाह्नोवृद्धौवृद्धिनाडीनामपिपंचधाविभागेप्रातरादिकालस्यापित्रिमुहूर्ताधिकत्वंकल्पनीयम् ॥ ह्रासेपुनस्त्रिमुहूर्तान्न्यूनत्वमितिसुस्थम् ॥ केचित्तुपंचदशधाह्नोविभागमाहुः ॥ तदुक्तंव्यासेन ॥ रौद्रश्चैत्रश्चमैत्रश्चतथाचारभटःस्मृतः ॥ सावित्रश्चजयंतश्चगांधर्वःकुतुपस्तथा ॥ रौहिणश्चविरिंचिश्चविजयोनैर्ऋतस्तथा ॥ माहेंद्रोवरुणश्चैवभागाःपंचदशस्मृताइति ॥ अत्रापिदिनमानस्यपंचदशांशोमुहूर्तोज्ञेयस्तदुक्तंरत्नमालायाम् ॥ दिनस्ययःपंचदशोविभागोरात्रेस्तथातद्धिमुहूर्तमानमिति॥ कैश्चित्रिधाविभागउक्तः॥तदाहशातातपः॥ पूर्वाह्णोमध्याह्नोऽपराह्णः॥ पूर्वाह्णोदेवानांमध्याह्नोमनुष्याणामपराह्णःपितॄणामिति ॥ स्कंदपुराणेतुद्विधाभागउक्तः ॥ आवर्तनात्तुपूर्वाह्णोह्यपराह्णस्ततःपरमिति ॥ इतिप्रसंगतःकालविभागमुक्त्वाप्रकृतमुच्यते ॥ तत्रपर्वप्रतिपत्संधिर्यदामध्याह्नएवमध्याह्नात्पूर्वंवास्यात्तदासंधिदिनात्पूर्वदिनेऽन्वाधानंसंधिदिनेयागोभवति ॥ तदुक्तंगोभिलेन ॥ आवर्तनेयदासंधिःपर्वप्रतिपदोर्भवेत् ॥ तदहर्यागइष्येतपरतश्चेत्परेऽहनीति ॥ यथा ॥ पर्वप्रतिपदोःसं

धिरर्वागावर्तनाद्यदि ॥ तस्मिन्नहनियष्टव्यंपूर्वेद्युःस्यादुपक्रमइति ॥ आवर्त्तनंमध्याह्नः ॥ लौगाक्षिरपि ॥ पूर्वाह्णेचाथमध्याह्नेयदिपर्वस माप्यते ॥ उपोष्यतत्रपूर्वेद्युस्तदहर्यागइष्यतइति ॥ मध्याह्नात्परतः पर्वप्रतिपत्संधौतुसंधिदिनात्परदिनेयागः॥संधिदिनेऽन्वाधानंकार्यम् ॥ तदाहलौगाक्षिः॥अपराह्णेथवासायंयदिपर्वसमाप्यते ॥उपोष्यतस्मिन्न हनिश्वोभूतेयागइष्यतइति ॥ गोभिलोपि ॥ आवर्तनात्परःसंधिर्यदित स्मिन्नुपक्रमः ॥ परेद्युरिष्टिरित्येषपर्वद्वयविनिर्णयइति ॥ अत्रपर्वद्वय निर्णयइत्युक्तत्वादयंपूर्णिमामावास्ययोःसाधारणोनिर्णयः ॥ ॥ विशे षस्तूच्यते ॥ ॥ अत्रपूर्णिमाप्रतिपत्संधिःसंगवादूर्ध्वंमध्याह्नात्पूर्वं यदाभवति ॥ तदातत्रैवान्वाधानंयागंचकुर्यात् ॥ तदाहकात्यायनः॥ संधिश्चेत्संगवादूर्ध्वमर्वागावर्तनाद्भवेत् ॥ सापौर्णमासीविज्ञेयासद्यः कालविधौतिथिः ॥ नन्वेवंसतिपूर्वेद्युरन्वाधानंपरेद्युर्यष्टव्यमिति विधिविरोधःस्यादितिचेन्न ॥ सद्यःकालविधेरपिदर्शनात् ॥ तथाचापस्तंबः ॥ पौर्णमास्यांत्वन्वाधानंपरिस्तरणोपवासः सद्यो वासद्यःकालायांसर्वंक्रियतइति ॥ ननु तथापि पर्वप्रतिपदोःसंधि रर्वागावर्तनाद्यदि ॥ तस्मिन्नहनियष्टव्यंपूर्वेद्युःस्यादुपक्रमइ तिगोभिलवचनेनविरोधोभविष्यतीतिचेन्न ॥ संगवात्पूर्वमपिसंधे रावर्तनादर्वाचीनत्वात्तद्विषयत्वंगोभिलवाक्यस्य ॥ कात्यायनवा क्यस्यतु संगवोर्ध्वभाविमध्याह्नादर्वाचीनसंधिर्विषयः ॥ यद्वा ॥ गोभिलवचनंपर्वद्वयसामान्यविषयंनपूर्णिमामात्रविषयम् ॥ पूर्णि मामात्रविषयंकात्यायनवचनमितिविशेषवचनेनसामान्यबाधइत्यवि रोधः ॥ ॥ अमायांतुविशेषउक्तः ॥ ॥ यदाप्रतिपदिद्वितीयात्रि मुहूर्तात्मकमपराह्णंव्याप्नोति ॥तत्रचंद्रदर्शनस्यसंभाव्यमानत्वाच्चतुर्द श्यामन्वाधायामावास्यायांयागःकार्यः ॥ तदुक्तंशातातपेन ॥ द्विती यात्रिमुहूर्ताचेत्प्रतिपद्यपराह्णिकी ॥ अन्वाधानंचतुर्दश्यांपरतःसो

मदर्शनादिति॥सोमदर्शनेयागानिषेधोवृद्धवासिष्ठेनोक्तः ॥ आदौनिरुप्ते हविषिपरस्तादुदितेविधौ ॥ यद्वैगुण्यंहुतेतस्मिन्पश्चादपिहितद्भवेदिति॥ननुपर्वप्रतिपदोःसाम्येसंधिषुबोधोभवति॥प्रतिपदिवृद्धिगामिन्यां क्षीणायांवाकथंसंधिज्ञानमितिचेत्॥सत्यम् ॥ प्रतिपद्वृद्धिनाडिकाद्विधाविभज्यपर्वणिसंयोज्यसंधिःकल्पनीयः ॥तथैवप्रतिपत्क्षयनाडिकाश्चद्विधाविभज्यार्द्धम्पर्वणिवियोज्यसंधिःकल्पनीयः तदाहलौगाक्षिः ॥ तिथेःपरस्याघटिकाश्चयाःस्युर्न्यूनास्तथैवाभ्यधिकाश्चतासाम्॥ अर्द्धं वियोज्यंचतथाप्रयोज्यंह्रासेचवृद्धौप्रथमेदिनेस्यादिति ॥ कात्यायनोऽपि ॥ परेह्नि घटिकान्यूनास्तथैवाभ्यधिकाश्चयाः ॥ क्षिप्त्वातदर्द्धंपूर्वस्मिन्ह्रासवृद्धीप्रकल्पयेत् ॥ ॥ अथयागकालउच्यते ॥ तत्रपर्वणश्चतुर्थोभागः प्रतिपदआद्यास्त्रयोभागायागकालः ॥ तदाहयाज्ञवल्क्यः ॥ पंचदश्याः परोभागःपक्षादेःप्रथमास्त्रयः ॥ कालःपार्वणयागेस्यादन्यथातुनविद्यते ॥ वृद्धशातातपोपि ॥ पर्वणोयश्चतुर्थांश आद्याःप्रतिपदस्त्रयः ॥ यागकालःसविज्ञेयःप्रातरुक्तोमनीषिभिरिति ॥ पर्वप्रतिपत्सन्धावपराह्णेसतिपरदिनेचतुर्थेपिप्रतिपद्भागेयागः कार्यः ॥ तदाहशातातपः ॥ संधिर्यदापराह्णेस्याद्यागःप्रातःपरेहनि ॥ कुर्वाणःप्रतिपद्भागेचतुर्थेपिनदुष्यतीति ॥ यत्तुवचनम्॥नयष्टव्यश्चतुर्थांशेयागेःप्रतिपदःक्वचित्॥रक्षांसितद्विलुंपंतिश्रुतिरेपासनातनीति ॥ इदमाद्यांशत्रयेयागकालेसंभवत्यालस्यादिनातमतिक्रम्यचतुर्थेंशेन यष्टव्यमित्येवंपरम् ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेपर्वद्वयनिर्णयः ॥ ॥ अथानध्यायतिथयउच्यंते ॥ ॥ तदाहयाज्ञवल्क्यः ॥ पंचदश्यांचतुर्दश्यामष्टम्यांराहुसूतके ॥ ऋतुसंधिषुभुक्त्वावाश्राधिकंप्रतिगृह्यचेति ॥ गौतमोऽपि ॥ पक्षद्वयेचतुर्दश्योरष्टमीद्वितयेतथा ॥ पक्षादावपिपक्षांतेब्रह्मनाधीयते नरैरिति ॥ ब्रह्मवेदः ॥ मनुरपि ॥ अमायांचचतुर्दश्यांपौर्णमा

स्यष्टकासुच ॥ अमावास्यागुरुंहंतिशिष्यंहंतिचपूर्णिमा ॥ ब्रह्महं त्यष्टमीभूतातस्मात्तांपरिवर्जयेत् ॥ बौधायनोपि ॥ महानि शातुविज्ञेयामध्येमध्यमयामयोः ॥ तस्यांस्नानंनकुर्वीतस्वा ध्यायंपितृतर्पणमिति॥ मध्यमयामयोर्मध्यमितिद्वितीययामस्यांत्यघ टिकाद्वयं ॥ तृतीययामस्याद्यघटिकाद्वयमितिचतस्रोनाडिकामहा निशा ॥ तदुक्तंतेनैव ॥ प्रातःसंध्यात्रिनाडीस्यात्सायंसंध्याच तादृशी ॥ महानिशाचविज्ञेयाचतस्रोघटिकास्तुयाइति ॥ ॥ वृद्ध मनुरपि ॥ ॥ त्रयोदश्यांचसप्तम्यांचतुर्दश्यार्धरात्रतः ॥ अर्वाङ् नाध्ययनंकुर्याद्यदीच्छेत्तस्यधारणमिति ॥ तत्रैवविशेषोगार्ग्येणोक्तः ॥ रात्रौयामद्वयादर्वाक्सप्तमीचत्रयोदशी ॥प्रदोषःसतुविज्ञेयःसर्वविद्यावि गर्हितः ॥ भीष्मः ॥ चातुर्मास्यद्वितीयासुमन्वादिषुयुगादिषु ॥ विषुवायनयोर्द्वंद्वेशयनेबोधनेश्रुतौ ॥ पक्षाधिकत्रयोदश्यांतस्याएवो त्तरातिथिः ॥ दर्शस्पृक्चेद्दिवैवस्यादनध्यायःश्रुतावपीति ॥ अस्या र्थः ॥ पक्षेतिथिवृद्ध्यायाधिकात्रयोदशीसाऽनध्यायदिनम् ॥ पक्षेद्वितीयादित्रयोदश्यंतानामेकादशस्वाध्यायानामेवविधानात् ॥ किंच ॥ यस्यास्त्रयोदश्याउत्तरातिथिश्चतुर्दशीदिवैवदर्शस्पृशति साचानध्यायदिनमित्यर्थः ॥ श्रुतिःश्रवणद्वादशी ॥ चातुर्मास्यद्विती याश्चगार्ग्येणोक्ताः ॥ शुचाऊर्जेतपस्येचद्वितीयाचविधुक्षये ॥ चातुर्मास्यद्वितीयास्ताः प्रवदंतिमहर्षयइति ॥ तथाच ॥ पूर्वे चोर्ध्वमनध्यायमहःसंक्रमणेनिशि ॥ दिवापूर्वोत्तराराात्रिरितिवेदविदो विदुः ॥ मनुरपि ॥ जननादशरात्रंचशावेचसमुपस्थिते ॥ नाधी यीतद्विजोनित्यंनचैवाकालिकेषुच ॥ महागुरौद्वादशाहंवेदस्याध्ययनं त्यजेदिति ॥ ॥ याज्ञवल्क्योपि ॥ ॥ त्र्यहंप्रेतेष्वनध्यायःशि ष्यर्त्विग्गुरुबंधुषु ॥ उपाकर्मणिचोत्सर्गेस्वशाखाश्रोत्रियेमृते ॥ संध्यागर्जितनिर्घातभूकंपोल्कानिपातने ॥ समाप्यवेदंद्युनिशमा

रण्यकमधीत्यचेति ॥ तथाच ॥ पशुमंडूकनकुलश्वाहिमार्जा रमूषकैः ॥ कृतेंतरेत्वहोरात्रंशक्रपातेतथोच्छ्रयइति ॥ शक्रपातइति शक्रध्वजोद्वासनदिनेउच्छ्रयदिनेच ॥ अन्यश्चविशेषः शिष्टाचार तोवगन्तव्यः ॥ अनध्यायदिनेष्वध्ययनेप्रत्यवायस्तुस्मृतिचंद्रिकाया मुक्तः ॥ अनध्यायेष्वध्ययनेप्रज्ञामायुःप्रजांश्रियम् ॥ ब्रह्मवीर्यंश्रियंते जोनिकृन्ततियमःस्वयमिति ॥ अन्यश्चविशेषःस्मृत्यर्थसारेप्रोक्तः ॥ चतुर्दश्यष्टमीपर्वप्रतिपत्सुचसर्वदा ॥ दुर्मेधानामनध्यायस्त्वंतरागमने षुच ॥ तथाविस्मृतिशीलानांबहुवेदप्रपाठिनामिति ॥ अन्यश्चवि शेषोपरार्केप्रोक्तः ॥ चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितेषुच ॥ वेदांगन्याय मीमांसाधर्मशास्त्राणिचाभ्यसेदिति ॥ तथाचस्मृतिचंद्रिकायाम् ॥ उदयेस्तमयेवापिमुहूर्तत्रयगामियत् ॥ तद्दिनंतदहोरात्रंनानध्याय विधौविधिरिति ॥ यत्तुवचनम् ॥ तावदेवत्वनध्यायोनतन्मिश्रादि नांतरे ॥ उपवासव्रतादीनांतिथिमाहुस्तथैवतइति ॥ इदंचदेशाचार तोव्यवस्थापनीयम् ॥ क्वचिद्देशेयावदेवानध्यायतिथिनाडिकास्ताव देवानध्यायंकुर्वंति ॥ वृद्धिसाम्येक्षयेषूक्तास्त्रिचतुःपंचभिःक्रमात् ॥ षड्तुस्तिसृभिःसायमनध्यायस्यनिर्णयइति ॥ ॥ इत्यनध्यायनि र्णयः ॥ ॥ इतिश्रीसूर्यसेनमहीमहेन्द्रसूनुविरचितेनिर्णयामृते सर्व तिथिनिर्णयः समाप्तः ॥ ॥ अथमासकृत्यानि ॥ ॥ तत्रादौचैत्रमा सकृत्यम् ॥ ॥ तदुक्तंमत्स्यपुराणे ॥ ॥ वर्जयित्वामधौयस्तुदधि क्षीरघृतैक्षवम् ॥ दद्याद्वस्त्राणिसूक्ष्माणिरसवस्तुयुतानिच ॥ संपूज्य विप्रमिथुनंगौरीमेप्रीयतामिति ॥ एतद्गौरीव्रतंनामभवानीलोकदा यकमिति ॥ ॥ भविष्योत्तरेपि ॥ ॥ चैत्रेत्रिरात्रंनक्ताशीनद्यांस्नात्वाद दातियः ॥ अजाःपंचपयस्विन्योदरिद्रायकुटुंबिने ॥ नजायतेपुनर सौजीवलोकेकदाचनेति ॥ ॥ वामनपुराणेतु ॥ ॥ चैत्रेमासिविचि त्राणिशयनान्यासनानिच ॥ विष्णोःप्रीत्यर्थमेतानिदेयानिब्राह्मणेष्व

१ मासिमधुदधिघृतैक्षवम् इ० पा०।

थेति॥ ॥इतिचैत्रकृत्यम्॥ ॥अथवैशाखकृत्यम्॥ ॥तदुक्तंमहाभारते॥ निस्तरेदेकभक्तेनवैशाखंयोजितेंद्रियः ॥ प्रातःस्नायीनरःस्त्रीवाज्ञा तीनांश्रेष्ठतांव्रजेदिति ॥ वामनपुराणेपि ॥ गंधान्माल्यानिचतथावै शाखेसुरभीणिच ॥ देयानिद्विजमुख्येभ्योमधुसूदनतुष्टयइति ॥ ॥ ॥इतिवैशाखकृत्यम् ॥ ॥अथज्येष्ठकृत्यम् ॥ ॥ तदुक्तं भविष्योत्तरे ॥ पिष्टेनकंजजंकृत्वाज्येष्ठेमासिसवेदिकम् ॥ पुष्पैःसं पूज्यगंधाद्यैर्नानावस्त्रविभूषणैः ॥ वर्षकोटिशतंसाग्रंसूर्यलोकेमहीय तइति ॥ कंजजोब्रह्मा ॥ वामनपुराणेपि ॥ उदकुंभांबुधेनुंचता लवृंतंसचंदनम् ॥ त्रिविक्रमस्यप्रीत्यर्थंदातव्यंज्येष्ठमासिवेति ॥ ॥ ॥ इतिज्येष्ठमासकृत्यम् ॥ ॥ अथाषाढकृत्यम् ॥ तदु क्तंमहाभारते ॥ आषाढमेकभक्तेनस्थित्वामासमतंद्रितः ॥ बहु धान्योबहुधनोबहुपुत्रश्चजायते ॥ वामनपुराणेऽपि ॥ उपानद्यु गुलंछत्रंलवणामलकानिच ॥ आषाढेवामनप्रीत्यैदातव्यानितुभक्तित इति ॥ इत्याषाढकृत्यम् ॥ अथश्रावणकृत्यम् ॥ तदुक्तंमहा भारते ॥ श्रावणंनियतोमासमेकभक्तेनयःक्षिपेत् ॥ यत्रतत्राभिषे केणपूज्यतेज्ञातिवर्द्धनइति ॥ वामनपुराणेऽपि ॥ घृतंचक्षीरकुंभां श्चघृतधेनुंफलानिच ॥ श्रावणेश्रीधरप्रीत्यैदातव्यानिविपश्चितेति ॥ ॥ ॥इतिश्रावणकृत्यम् ॥ ॥अथभाद्रपदकृत्यम् ॥ ॥ तदु क्तंमहाभारते ॥प्रौष्ठपद्यंतुयोमासमेकाहारोभवेन्नरः॥ धनाढ्यःस्फी तमतुलमैश्वर्यंप्रतिपद्यतइति ॥ वामनपुराणेपि ॥ ॥मासिभाद्रप देदद्यात्पायसंमधुसर्पिषी ॥हृषीकेशप्रीणनार्थंलवणंसगुडौदनमिति ॥ ॥ ॥इतिभाद्रपदकृत्यम् ॥ ॥अथाश्विनकृत्यम् ॥ ॥ तदा हयमः ॥ घृतमाश्वयुजेमासिनित्यंदद्याद्द्विजातये ॥ प्रीणयित्वाश्वि नौदेवौरूपभागभिजायतइति ॥ वामनपुराणेपि ॥ तिलांस्तुरंगं वृषभंदधिताम्रवस्त्रादिकम् ॥ प्रीत्यर्थंपद्मनाभस्यदेयमाश्वयुजेनरै

रिति ॥ वशाधेनुः ॥ इत्याश्विनकृत्यम् ॥ अथकार्तिककृत्यम् ॥ तदाहविष्णुः ॥ कार्तिकेमासिसकलेसायङ्कालेतिलतैलेनआकाशदीपं दद्यात् ॥ तदुक्तंपुष्करपुराणे॥ कार्त्तिकेतिलतैलेनसायंकालेसमागते॥ आकाशदीपंयोदद्यान्मासमेकंहरिंप्रति ॥महतींश्रियमाप्नोतिरूपसौभाग्यसंपदइति ॥ तदाहविष्णुः॥ कार्तिकंसकलंमासंप्रातःस्नायीजितेंद्रियः ॥ जपन्हविष्यभुग्दांतःसर्वपापैःप्रमुच्यते॥ वामनपुराणेपि॥ रजतं कनकंदीपान्मणिमुक्ताफलादिकम् ॥ दामोदरस्यप्रीत्यर्थंप्रदद्यात्कार्तिकेनरइति ॥ ॥ इतिकार्त्तिककृत्यम् ॥ ॥ अथमार्गशीर्षकृत्यम् ॥ ॥ तदुक्तंमहाभारते ॥ मार्गशीर्षंतुयोमासमेकभक्तेन संक्षिपेत् ॥ भोजयेत्तुद्विजाञ्छक्त्यामुच्यतेव्याधिकिल्बिषात् ॥कृषिभागीबहुधनोबहुधान्यश्चजायते इति ॥ वामनपुराणेपि ॥ खरोष्ट्राश्वतरीगावःशकटानिह्यजाविकम् ॥ दातव्यंकेशवप्रीत्यैमासिमार्गशिरे नरैः ॥ ॥ इतिमार्गशीर्षकृत्यम् ॥ ॥ अथपौषकृत्यम् ॥ ॥ तदुक्तंमहाभारते ॥ पौषंमासंतुकौन्तेयएकभक्तेनयःक्षिपेत् ॥ सुभगोदर्शनीयश्चयशोभागीचजायतइति ॥ वामनपुराणेपि ॥ प्रासाद नगरादीनिगृहप्रावरणानिच ॥ नारायणस्यतुष्ट्यर्थंपौषेदेयानियत्नतः ॥ ॥इतिपौषकृत्यम् ॥ ॥अथमाघकृत्यम् ॥ ॥ तदाहविष्णुः ॥ माघेमास्यग्निप्रत्यहंतिलैर्हुत्वासघृतकृसरंब्राह्मणान्भोजयित्वादीप्ताग्निर्भवतीति ॥ भविष्योत्तरेपि ॥ पौणमास्याममायां चप्रारभ्यस्नानमाचरेत् ॥ त्रिंशद्दिनानिपुण्यानिमकरस्थेदिवाकरइति ॥तथाच॥ अप्रावृतशरीरस्तुयःकष्टंस्नानमाचरेत् ॥ पदेपदेऽश्वमेधस्यफलंप्राप्नोतिमानवः ॥ एवंस्नानस्यावसानेभोज्यंदेयमवादिकम् ॥ भोजयेद्द्विजदांपत्यंभूषयेद्वस्त्रभूषणैरिति॥वामनपुराणेपि॥ माघेमासितिलाःशस्तास्तिलधेनोश्चदानतः ॥ इध्मेन्धनादयश्चान्येमाधवप्रीणनायत्विति ॥ ॥ इतिमाघमासकृत्यम् ॥ ॥

१ तुलायां इ० पा० ।

अथफाल्गुनकृत्यम् ॥ ॥ तदुक्तंस्कंदपुराणे ॥ एकभक्तंतुकुर्वाणः फाल्गुनेमासिनित्यशः ॥ स्त्रीषुसौभाग्यमाप्नोतिस्त्रियाश्चपरमप्रियः ॥ ॥ वामनपुराणेपि ॥ फाल्गुनेव्रीहयोगावोवस्त्रंकृष्णाजिनान्वितम् ॥ गोविंदप्रीणनार्थायदातव्यंपुरुषर्षभेति॥ ॥ इतिफाल्गुनकृत्यम् ॥ ॥ अथागस्त्यार्घविधिः ॥ तदुक्तंमत्स्यपुराणे ॥ प्रत्यूषसमयेविद्वान्कुर्यात्तस्योदयेनिशि ॥ स्नानंशुक्लतिलैस्तद्वच्छुक्लमाल्याम्बरोगृही ॥ स्थापयेदव्रणंकुंभंमाल्यवस्त्रविभूषितम् ॥ पंचरत्नसमोपेतंघृतपात्रेण संयुतम् ॥ नानाभक्ष्यफलैर्युक्तंताम्रपात्रसमन्वितम् ॥ अंगुष्ठमात्रंपुरुषंतथैवसौवर्णमत्यायतबाहुदंडम् ॥ चतुर्भुजंकुंभमुखेनिधायधान्यानि सस्यांकुरसंयुतानि ॥ सकाशपत्राक्षरयुक्तियुक्तंमंत्रेणदद्याद्विजपुंगवाय ॥ उत्क्षिप्तलंबोदरदीर्घबाहुमनन्यचेतायमदिङ्मुखस्थः ॥ श्वेताञ्चदद्याद्यदिशक्तिरस्तिरौप्यैःखुरैर्हैमविषाणयुक्ताम्[1] ॥ धेनुंबहुक्षीरवतींप्रणम्यसवस्त्रघंटाभरणांद्विजाय॥आसन्नमात्रादुदयेर्घ्यमस्यदातव्यमेतत्सकलंनरेण ॥ यावत्समास्सप्तदशाथवास्युरथोर्ध्वमप्येववदंतिकेचित् ॥ अर्घ्यमंत्रश्च ॥ काशपुष्पप्रतीकाशवह्निमारुतसंभव ॥ मित्रावरुणयोः पुत्रकुंभयोनेनमोस्तुते ॥ विंध्यवृद्धिक्षयकरमेघतोयविषापह ॥ रत्नवल्लभदेवेशलंकावासनमोस्तुते ॥ वातापिर्भक्षितोयेनसमुद्रःशोषितःपुरा ॥ लोपामुद्रापतिःश्रीमान्योसौतस्मैनमोनमः ॥ अनेनविधिना यस्तुपुमानर्घ्यंनिवेदयेत् ॥ इंद्रलोकमवाप्नोति भवेदारोग्यसंयुतः ॥ सप्तैवलोकानाप्नोतिसप्ताघ्यान्यःप्रयच्छति॥ ॥ इत्यगस्त्यार्घ्यविधिः॥ ॥अथचातुर्मास्यव्रतानि ॥ ॥ तदुक्तंभविष्योत्तरे ॥ श्रीकृष्णउवाच॥ चतुरोवार्षिकान्मासान्देवस्योत्थापनावधि ॥ स्त्रीवानरोवामद्भक्तो धर्मार्थंसुदृढव्रतः॥ गृह्णीयान्नियमानेतान्दंतधावनपूर्वकम् ॥तेषांफलानिवक्ष्यामितत्कर्तॄणांपृथक्पृथक् ॥ मधुरस्वरोभवेद्राजन्पुरुषोगुडवर्जनात् ॥ तैलस्यवर्जनात्पार्थसुंदरांगःप्रजायते ॥ मधूकतैलस्यागे

१ हेममुखीं सवत्साम् ॥ सकांस्यदोहाश्च पयस्विनींच इ० पा० ।

नसौभाग्यमतुलंलभेत् ॥ कटुतैलपरित्यागाच्छोकनाशमवाप्नुयात् ॥ पुष्पा[1]दिभोगत्यागेनस्वर्गेविद्याधरोभवेत्॥योगाभ्यासीभवेद्यस्तुसब्रह्म पदमाप्नुयात् ॥कट्वम्लतिक्तमधुरक्षारकाषायजान्रसान् ॥ योवर्जयेतवै रूप्यंवैगंध्यंतस्यनक्वचित् ॥ तांबूलवर्जनाद्भोगीरक्तकंठश्चजायते ॥ घृतत्यागात्सलावण्यःसर्वस्निग्धवपुर्भवेत् ॥ फलत्यागेनमतिमान्ब हुपुत्रश्चजायते॥शाकपत्राशनाद्रोगीअपक्वादोऽमलोभवेत् ॥ पादाभ्यं गपरित्यागेशिरोभ्यंगाच्चपार्थिव ॥ दीप्तिमान्दीप्तकिरणोराजाद्रव्यपति र्भवेत् ॥ दधिदुग्धादिनियमात्स्वर्गलोकंलभेन्नरः ॥ भूमौप्रस्तरशायी चिवष्णोरनुचरोभवेत् ॥ सदामुनिःसदायोगीमधुमांसस्यवर्जनात् ॥ निर्व्याधिर्नीरुगोजस्वीसुरामिषविवर्जनात् ॥ एकांतरोपवासेनब्रह्मलो केमहीयते ॥ धारणान्मुखरोम्णान्तुगंगास्नानंदिनेदिने ॥ मौ नव्रतीभवेद्यस्तुतस्याज्ञाऽस्खलिताभवेत् ॥ भूमौभुंक्तेसदायस्तुसपृ थिव्याःपतिर्भवेत् ॥ नमोनारायणायेतिजप्त्वाऽनशनजंफलम् ॥ पादा भिवंदनाद्विष्णोर्लभेद्गोदानजंफलम् ॥ विष्णुपादांबुजस्पर्शात्कृत कृत्योभवेन्नरः ॥ विष्णुदेवकुलेकुर्यादुपलेपनमार्जने ॥ कल्पस्थायी भवेद्राजन्सनरोनात्रसंशयः ॥ प्रदक्षिणाशतंयस्तुकरोतिस्तुतिपाठ कः ॥ हंसयुक्तविमानेनसचाविष्णुपदंव्रजेत् ॥ कृत्वाप्रेक्षणकंदिव्यंस्था नमाप्सरसंलभेत् ॥ तीर्थजांबुहरेःस्नानान्निर्मलंदेहमाप्नुयात् ॥ पञ्चग व्याशनात्पार्थचांद्रायणफलंलभेत्॥ नक्तभोजीसमग्रंतुतीर्थयात्राफलं लभेत् ॥ अयाचितेनचाप्नोतिवापीकूपक्रियाफलम् ॥ षष्ठांशकाल भोज्येनस्वर्गस्थायीनरोभवेत् ॥ नित्यस्नायीनरोयस्तुनरकंनचप श्यति ॥ भाजनंवर्जयेद्यस्तुसस्नानंपौष्करंलभेत् ॥ पर्णेषुयोनरोभुं क्तेकुरुक्षेत्रफलंलभेत् ॥ शिलायांभोजनान्नित्यंस्नानंप्रयागजंलभेत्॥ यामद्वयंजलत्यागान्नरोगैःपरिभूयते ॥ एवमादिव्रतैःपार्थतुष्टिमायाति केशवइति ॥ मत्स्यपुराणेतुविशेषउक्तः ॥ ॥ आषाढादिचतुर्मास

१ गन्धपुष्पादित्यागेन इ० पा० ।

मभ्यंगंवर्जयेन्नरः॥भोजनोपस्करंदद्यात्सयातिभवनंहरेः॥ जनप्रीतिकरंनृणांप्रीतिव्रतमिहोच्यते ॥ आषाढादिषुवैयस्तुवर्जयेन्नखकृंतनम् ॥ वार्ताकंचचतुर्मासंमधुसर्पिर्घटान्वितम् ॥ कार्त्तिकान्तेपुनर्हैमंब्राह्मणायनिवेदयेत् ॥ सवैष्णवंपदंयातिविष्णुव्रतमिदंस्मृतम् ॥ महाफलानियस्त्यक्त्वाचातुर्मास्यंद्विजातये ॥ हैमानिकार्त्तिकेदद्याद्गोप्रदानसमंफलम् ॥ एतत्फलव्रतंनामसूर्यलोकफलप्रदम् ॥ उक्तंच ॥ चातुर्मास्यव्रतारंभःशुक्रगुरुमौढ्यादिष्वपिकार्यः॥तदाहवृद्धगार्ग्यः॥नशैशवंनमौढ्यंचशुक्रगुर्वोर्नवातिथेः॥ खंडंचचिंतयेज्जातुचातुर्मास्यविधौनरइति ॥ अकरणेप्रत्यवायश्चमहाभारतेप्रोक्तः ॥ वार्षिकांश्चतुरोमासान्वाहयेत्केनचिन्नरः ॥ व्रतेननोचेदाप्नोतिकल्मषंवत्सरोद्भवमिति ॥ उपक्रमकालश्चसनत्कुमारेणोक्तः ॥ एकादश्यांतुगृह्णीयात्संक्रांतौकर्कटस्यवा ॥ आषाढ्यांवानरोभक्त्याचातुर्मास्यव्रतोचितमिति ॥ महाभारतेपि ॥ वार्षिकांश्चतुरोमासान्व्रतंकिंचित्समाचरेत् ॥ असंभवेतुलोकेपिकर्त्तव्यंतत्प्रयत्नतः॥ एतद्व्रतोपक्रमेसमाप्तौचमंत्राःसनत्कुमारेणोक्ताः॥ इदंव्रतंमयादेवगृहीतंपुरतस्तव ॥ निर्विघ्नंसिद्धिमायातुप्रसन्नेत्वयिकेशव ॥ गृहीतेस्मिन्व्रतेदेवयद्यपूर्णेम्रियाम्यहम् ॥ तन्मेभवतुसंपूर्णंत्वत्प्रसादाज्जनार्दनेति ॥ इत्युपक्रममन्त्रः॥ समाप्तिमंत्रस्तु ॥ इदंव्रतंमयादेवकृतंप्रीत्यैतवप्रभो ॥ न्यूनंसंपूर्णतांयातुत्वत्प्रसादाज्जनार्दनेति ॥ समाप्तिकालश्चमहाभारतेप्रोक्तः ॥ चतुर्द्वागृह्यतेचीर्णंचातुर्मास्यव्रतंनरः ॥ कार्त्तिकेशुक्लपक्षेतुद्वादश्यांतत्समापयेत् ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रसूनुविरचितेनिर्णयामृतेचातुर्मास्यव्रतनिर्णयः ॥ ॥ अथयेषुमासतिथिवारादिषुव्रतबंधोविधीयतेतेउच्यंते ॥ ज्योतिर्निबंधात् ॥ चैत्रमासेमेषसंस्थेचसूर्येफाल्गुन्यांवैमीनराशिस्थितेच ॥ मौंजीबंधंनैवकुर्य्याद्द्विजानांनोद्वाहः स्यान्नैवमांगल्यकंच ॥ गर्गः ॥ नष्टेशुक्रेत

थाजीवेसिंहस्थेनीचगेऽरिगे ॥ तदोपनयनंकार्य्यंचैत्रेमीनगतेरवौ ॥ विषमोपगतेजीवेसिंहराशिगतेतथा ॥ तदोपनयनंकार्यंचैत्रेमीनगते रवौ ॥ अतीवदुष्टेसुरराजपूज्येसिंहस्थितेवाद्विजपुंगवानाम् ॥ व्रतप्र बंधंरविचैत्रयोगेकृतंधनारोग्यसुखप्रदंस्यात् ॥ शुक्रेनष्टेतथाजीवेत्वब लेचंद्रभास्करे ॥ तदोपनयनंकार्यंचैत्रेमीनगतेरवौ ॥ अथतिथिवा रादिरुच्यते ॥ रत्नकोशे ॥ तृतीयापंचमीषष्ठीदशम्यादिदिनत्रयम् ॥ वारैश्चंद्रार्कजीवज्ञशुक्रैरिष्टाव्रतक्रिया ॥ तथाच ॥ सुरेज्यशुक्रेंदुजचंद्र सूर्यावाराःसमस्तोपनयेप्रशस्ताः ॥ धनुर्द्धरस्त्रीमिथुनोक्षमीनेतुलेविल ग्नेतुशुभाप्रवृत्तिः॥तथा॥एकस्मिन्वत्सरेजीवेकर्कसिंहांगनागते॥ विवा हंमेखलाबंधंनकुर्याद्गालवोऽब्रवीत्॥चमत्कारचिंतामणौ ॥अधिमासेच शुक्रास्तेतथासिंहगतेगुरौ ॥ प्रारब्धंतुप्रकर्त्तव्यंनारभेन्नूतनंव्रतम् ॥ स्मृत्यर्णवे ॥ धनुःशफरयोर्यातेरवौसिंहगतेगुरौ ॥ जीवभार्गवयोर स्तेतद्वन्मासेमलिम्लुचे ॥ आरब्धोत्सर्जनंकार्यंनूत्नारंभंविवर्जयेत् ॥ रूढिःक्वापिप्रदृश्येतानिगमोनैवदृश्यते ॥ रूढिःप्रमाणंविज्ञेयासंछिन्न श्रुतिमूलिका ॥ अथसीमंतोन्नयनम् ॥ तत्रयाज्ञवल्क्यः ॥ षष्ठे ऽष्टमेवासीमंतइति ॥ शंखः ॥ गर्भस्यंदनेसीमंतोन्ननयम् ॥ यावद्वा प्रसवति ॥ सांख्यायनगृह्ये ॥ सप्तमेमासिप्रथमेगर्भेसीमंतोन्नयन मिति ॥ आपस्तंबः ॥ सीमंतोन्नयनंप्रथमेगर्भेचतुर्थेमासीति ॥ बैजवापः॥ सीमंतोन्नयनंमासिचतुर्थेषष्ठेपंचमेवेति ॥ लौगाक्षिः ॥ तृती येगर्भमासिसीमंतंकारयेदिति ॥ अत्रविशेषमाहशौनकः ॥ आपूर्यमाणपक्षेयदापुंसांनक्षत्रेणचंद्रमायुक्तःस्यादिति ॥ पुंसवनसीमं तोन्नयनेस्त्रीसंस्कारौ ॥ अतएवसकृत्कर्त्तव्याइतिकेचित्॥पारस्करः॥ पुंसवनसीमंतोन्नयनंप्रथमेगर्भेइति ॥ तथाचदेवलोपि ॥ सकृच्चसं स्कृतानारीसर्वगर्भेषुसंस्कृतेति ॥ हारीतः ॥ सकृत्संस्कृतसंस्का राःसीमंतेनाद्विजास्त्रियः ॥ यंयंगर्भंप्रसूतेसासर्वःसंस्कृतोभवेदिति॥

विष्णुस्तु ॥ सीमंतोन्नयनंकर्मनस्त्रीसंस्कारउच्यते ॥ केचिद्गर्भस्यसंस्कारान्गर्भेगर्भेप्रयुंजतइति ॥ अत्रापिस्वस्वगृह्यानुसारेणव्यवस्था ॥ अकृतसीमंतायाःप्रसवेसत्यत्रत्तोक्तोविशेषः ॥ स्त्रीयदाऽकृतसीमंताप्रसवेत्तुकथंचन ॥ गृहीतपुत्राविधिवत्पुनःसंस्कारमर्हतीति ॥ इतिसीमंतोन्नयनम्॥ अष्टचत्वारिंशत्संस्काराः॥ गर्भाधानम् १ पुंसवनम् २ सीमंतोन्नयनम् ३ जातकर्म ४ नामकरणम् ५ निष्क्रमणम् ६ अन्नप्राशनम् ७ चूडाकरणम् ८ उपनयनम् ९ इतिस्मार्त्ताः ॥ चत्वारिवेदव्रतानि । ४ । १३ । सावित्रवेदमंत्रस्नानम् । १ । १४ । सहधर्मचारियोगः । १ । १५ । पंचमहायज्ञानामनुष्ठानम् । ५ । २० ॥ उक्तंच ॥ अध्ययनंब्रह्मयज्ञःपितृयज्ञस्तुतर्पणम् ॥ होमोदैवोबलिर्भौतोनृयज्ञोतिथिपूजनमिति ॥ सप्तहविःसंस्थाः । ७ । २७ । अग्न्याधेयः ॥ अग्निहोत्रम् ॥ दर्शपौर्णमासम् ॥ आग्रयणम् ॥ चातुर्मास्यानि ॥ निरूढपशुबंधः ॥ सौत्रामणी ॥ सप्तपाकसंस्थाः । ७ । ३४ । अष्टका ॥ पार्वणपक्षादि ॥ दर्शश्राद्धम् ॥ श्रावणी ॥ आश्वयुजी ॥ आग्रहायणी ॥ चैत्री ॥ सप्तसोमसंस्थाः । ७ । ४१ । अग्निष्टोमः ॥ अत्यग्निष्टोमः ॥ उक्थः ॥ षोडशी ॥ वाजपेयः ॥ अतिरात्रः ॥ आप्तोर्यामः ॥ यदा । ४२ । अनसूया ४३ अनायासः ४४ मंगलम् ४५ अकार्पण्यम् ४६ अस्पृहा ४७ सत्यम् ४८ ॥ ॥ अथनामकरणादयःसंस्काराः ॥ तत्र मनुः ॥ नामधेयंदशम्यांतुद्वादश्यांवास्यकारयेत् ॥ पुण्येतिथौमुहूर्तेवानक्षत्रेवागुणान्वितइति ॥ याज्ञवल्क्यः ॥ अहन्येकादशेनामेति ॥ भविष्यत्पुराणे ॥ नामधेयंदशम्यांतुकेचिदिच्छंति पार्थिव ॥ द्वादश्यामपरेरात्र्यांमासेपूर्णेतथाऽपरे ॥ अष्टादशेहनि तथावदंत्यन्येमनीषिणः ॥ गृह्यपरिशिष्टे ॥ जननाद्दशरात्रेसंवत्सरेवेति ॥ शंखः ॥ आशौचेतुव्यतिक्रांतेनामकर्मविधीयतइति ॥ नचार्य

नियमः ॥ तथासतिनामधेयंदशम्यामित्यादिवचनविरोधात् ॥ तथा॥ अहन्येकादशेनामेत्यादीनांविवक्षितार्थत्वमेव ॥ तेनाशौचमध्येपिकार्यम् ॥ स्वगृह्यानुसारेणचैतेपक्षाव्यवस्थिताविज्ञेयाः ॥ शंखलिखितौ ॥ दशम्यामुत्थाप्यपिंडवर्द्धनंपितॄणांतत्रसांनिध्यमितिश्रुतिब्रह्मणेत्याहुतिः पूर्वंपितॄननुमान्यतदहरेवनामकरणंकुर्याद्देवतानक्षत्राभिसंबद्धं पिताकुर्यादन्योवाकुलवृद्धश्चतुरक्षरंवाघोषवदाद्यंतरंतस्थंपुंसामकारांतमाकारांतंस्त्रीणामेवंकृतेनाम्निशुचितत्कुलंभवतीति ॥ अस्यार्थः ॥ दशमेऽहनिसूतिकांपूर्वंशय्यातउत्थाप्य॥पिंडवर्द्धनमितितन्नामकर्मतत्कुर्यात् ॥ तत्रचायंक्रमः ॥ ब्रह्मणेपूर्वमाहुतिंहुत्वापितॄननुमान्याभ्युदयश्राद्धेनपूजयित्वा पितातदभावेपिंडसान्निध्यादिनाऽन्योवा नामकुर्यात् ॥ तत्रनियमः ॥ चतुरक्षरमित्यादिवर्गतृतीयचतुर्थानियान्यक्षराणिककारश्चतान्यादौयरलवाअंतस्थास्तान्मध्येकुर्यादिति॥बैजवापः॥ पितानामकरोत्येकाक्षरंद्व्यक्षरंचतुरक्षरमपरमितिचेति ॥ अत्रसमाक्षरंपुंसांविषमाक्षरंस्त्रीणामितिज्ञेयम् ॥ तथाचशंखः ॥ अयुग्माक्षरमाकारांतंस्त्रियाएतद्विहितमिति ॥ उक्तंच॥ आकारांतंस्त्रीणांस्वकुलसंबंधंवानामकुर्यात् ॥ तथाचशंखः ॥ कुलदेवतासंबद्धंपितानामकुर्यादिति ॥ कुलसंबद्धंदेवतासंबद्धंवेत्यर्थः ॥ मनुः ॥ मंगल्यंब्राह्मणस्य स्यात् क्षत्रियस्यबलान्वितम् ॥ वैश्यस्यधनसंयुक्तंशूद्रस्यतुजुगुप्सितमिति ॥ मंगलबलधननिंदाप्रतिपादकानिक्रमेणवर्णानांनामानि भवंतीत्यर्थः ॥ ॥ यथाभद्रशर्मा ॥ शक्तिपालः ॥ धनपुष्टः ॥ हीनदासइति॥ यमस्तूत्तरपदनियममाह ॥ शर्मादेवश्चविप्रस्यवर्मात्राताच भूभुजः ॥ भूतिर्दत्तिश्चवैश्यस्यदासःशूद्रस्यकारयेदिति ॥ त्रातेतिरक्षणवाचिशब्दप्रदर्शनार्थः ॥ अतःशक्तिपालइत्यादिशब्दाभवंति ॥ इतिनामकरणम् ॥ ॥ अथनिष्क्रमणम् ॥ ॥ तत्रभविष्यत्पुराणे उत्तरार्द्धे मनुरपि ॥ द्वादशेहनिराजेंद्रशिशोर्निष्क्रमणंभवेत् ॥ चतुर्थे

मासिकर्त्तव्यंशिशोश्चंद्रस्यदर्शनम् ॥ लौगाक्षिः ॥ तृतीयेर्द्धमासआदित्यस्यदर्शनमिति ॥ अत्रापिपूर्ववदेवव्यवस्था ॥ सुरेश्वरः ॥ जीवभार्गवसौम्यानांशिशुनिष्क्रमणक्रिया ॥ दिवासाशस्यतेनित्यमायुर्वृद्धिधनप्रदा ॥ रेवतीचाश्विनीहस्तोधनिष्ठारोहिणीतथा ॥ श्रवणंपुष्यसंयुक्तंमृगेणोत्तरफाल्गुनी॥अनुराधोत्तराषाढातथाचैवपुनर्वसू॥इमानिचातिशस्तानिशिशुनिष्क्रमणेबुधैरिति॥इतिनिष्क्रमणम् ॥अथकर्णवेधः ॥ ज्योतिःशास्त्रे ॥ कार्त्तिकेपौषमासेवाचैत्रेवाफाल्गुनेपिवा ॥ कर्णवेधंप्रशंसंतिशुक्लपक्षेशुभेदिने॥ शुभनक्षत्रेशुभेचंद्रेलग्नेशीर्षोदयेशुभे ॥ दिनेच्छिद्रव्यतीपातविष्टिवैधृतिवर्जिते ॥ शिशोरजातदंतस्यमातुरुत्संगसर्प्पिणः ॥ सौचिकोवेधयेत्कर्णौसूच्याद्विगुणसूत्रया ॥ हस्ताश्विनीस्वातिपुनर्वसूचधनेंदुचित्राहरिरेवतीषु ॥ चंद्रेनुकूलेगुरुशुक्रवारेकर्णौतुवेध्यावमरेज्यलग्ने ॥ अयंचकर्णवेधःकुलक्रमागतकालेकर्त्तव्यः ॥ इतिकर्णवेधः ॥ ॥अथान्नप्राशनम् ॥ ॥ तत्रमनुः॥षष्ठेन्नप्राशनंमासियथेष्टंमंगलंकुलइति ॥ लौगाक्षिः॥ षष्ठेमासेन्नप्राशनंजातेषुदंतेषुचेति॥ यमः॥ततोन्नप्राशनंमासेषष्ठेकार्यंयथाविधि ॥ अष्टमेवाथकर्त्तव्यमिति ॥ शंखः ॥ संवत्सरेन्नप्राशनमिति ॥ व्यवस्थापूर्ववत् ॥ अत्रविशेषोमार्कंडेयपुराणे॥देवतापुरतस्तस्यधात्र्युत्संगगतस्यच॥अलंकृतस्यदातव्यमन्नंपात्रेथकांचने ॥ मध्वाज्यकनकोपेतंप्राशयेत्पायसंतुतम् ॥ तदनंतरंशिशोर्जीविकापरीक्षाप्रकारमाहसएव ॥ देवाग्रतोथविन्यस्यशिल्पभांडानिसर्वशः ॥ शास्त्राणिवाथशस्त्राणिततःपश्येत्तुलक्षणम्॥प्रथमंयत्स्पृशेद्बालस्ततोबालःस्वयंतदा ॥जीविकातस्यबालस्यतेनैवतुभविष्यति ॥ इत्यन्नप्राशनम्॥ ॥अथचूडाकर्म॥ ॥ तत्र मनुः॥चूडाकर्मद्विजातीनांसर्वेषामेवधर्मतः ॥प्रथमेब्देतृतीयेवाकर्त्तव्यंश्रुतिचोदनादिति ॥ शंखलिखितौ ॥ तृतीयेवर्षेचूडाकर्मपंचमेवा ॥ लौगाक्षिः ॥ तृतीयस्यवर्षस्यभूयिष्ठगतेचूडाःकारयंतेदक्षिणतःकाण

भुजांवामतोवसिष्ठानामुभयेत्रिकश्यपानामेकमुंडाभृगवः पंचचूडाअं
गिरसोवाजिमेकेमंगलार्थेशिखिनोन्ये यथाकुलमिति ॥ मुंडाचूडा वा
जिश्चकेशपंक्तिः ॥ मंगलार्थमिति ॥ अन्येतुमंगलार्थेशिखामात्रंयत्र
क्वचनकुर्वंति ॥ अत्रापिस्वगृह्यव्यवस्था ॥ व्यासः ॥ अश्विनीश्रवण
स्वातिचित्राःपुष्यपुनर्वसू ॥ धनिष्ठारेवतीज्येष्ठामृगहस्तेषुकारयेत्॥
क्षौरमितिशेषः ॥ तथा ॥ नक्षत्रेतुनकुर्वीतयस्मिञ्जातोभवेन्नरः ॥
नप्रौष्ठपदयोःकार्यंनैवाग्नेयेचभारत॥ दारुणेषुचसर्वेषुदुष्टतारांचवर्जये
दिति ॥ अन्येतिथिवारादिविशेषाउपनयनकर्मोक्ताद्रष्टव्याः ॥ इति
चूडाकर्म ॥ ॥ अथस्त्रीसंस्काराः ॥ तत्रमनुः ॥ अमंत्रकातुकार्ये
यंस्त्रीणामावृद्विशेषतः ॥ संस्कारार्थंशरीरस्ययथाकालंयथाक्रमम् ॥
आवृज्जातकर्मादिक्रिया यथाक्रममित्यभिधानात्क्रमातिक्रमोनकर्त्त
व्यइत्युक्तंभवति ॥ अतएवकालातिक्रमेकात्यायनेनप्रायश्चित्तमभि
हितम् ॥ देवतानांविपर्यासेजुहोतिषुकथंभवेत् ॥ सर्वप्रायश्चित्तंहुत्वा
क्रमशोजुहुयात्पुनः॥ संस्काराअतियुज्येरन्स्वकालाच्चेत्कथंचन ॥ हु
त्वैतदेवकर्त्तव्यायेतूपनयनादधः ॥ सर्वप्रायश्चित्तमपिसएवाह ॥ सर्व
प्रायश्चित्तंपंचभिःत्वंनोअग्नइति ॥ द्वाभ्यामयाश्चाग्नेश्चेति॥ येतेशतमु
द्युत्तममितिचेति॥उपनयनकालातिपत्तौतुव्रात्यस्तोमाद्यैश्च ॥ एते
ष्वेकैकलोपेपादकृच्छ्रः॥चौललोपेत्वर्द्धकृच्छ्रः ॥ स्त्रीसंस्कारेगोभिलो
विशेषमाह॥ तूष्णीमेताःक्रियाःस्त्रीणाममंत्रेणतुहोमतइति॥ ॥ अथ
विद्यारंभः॥ तत्रमार्कंडेयः॥ प्राप्तेथपंचमेवर्षेअप्रसुप्तेजनार्दने ॥ षष्ठीं
प्रतिपदंचैववर्जयित्वातथाष्टमीम् ॥ रिक्तांपंचदशींचैवसौरभौमदिनं
तथा॥ एवंसुनिश्चितेकालेविद्यारंभंतुकारयेत्॥पूजजयित्वाहरिंलक्ष्मीं
देवींचैवसरस्वतीम् ॥ स्वविद्यासूत्रकारांश्चस्वविद्यांचविशेषतः ॥
एतेषामेवदेवानांनाम्नातुजुहुयाद्घृतम् ॥ दक्षिणाभिर्द्विजेंद्राणांकर्त्त
व्यंचात्रपूजनम्॥प्राङ्मुखोगुरुरासीनोवारुणाभिमुखंशिशुम् ॥ अध्या

पयेच्चप्रथमंद्विजाशीर्भिःसुपूजितम् ॥ ततःप्रभृत्यनध्यायान्वर्जनी
यान्विवर्जयेत् ॥ इति ॥ अस्यचशिशोःकामचारवादभक्षता ॥ यथा
हगौतमः ॥ प्रागुपनयनात्कामचारवादःकामचारभक्षइति ॥ काम
चारोप्यपतनीयकर्मस्वेव ॥ तत्रपादोबालेषुदातव्यइत्यादिप्रायश्चित्त
स्मरणात् ॥ पुनरुपनयनविषयेकिंचिदुच्यते ॥ तदुक्तंसुरेश्वरेण ॥
माघेमासिमहाधनोधनपतिःप्राज्ञोधनीफाल्गुनेमेधावीभवतिव्रतोपनय
नेचैत्रेचवेदान्वितः ॥ वैशाखेसुभगःसुखीपटुमतिर्ज्येष्ठेबलिष्ठोबुधोप्या
षाढेपिमहाविपक्षविजयीख्यातोमहापंडितइति ॥ तथाचापस्तंबेन
वर्णविशेषेविशेषउक्तः ॥ यथा ॥ वसंतेब्राह्मणमुपनयीत ॥ ग्रीष्मेराज
न्यम् ॥ शरदिवैश्यमिति ॥ अतश्चब्राह्मणादीनांवसंतादिऋतुत्रयेएव
उपनयनंश्रेष्ठम् ॥ तदसंभवेमाघाद्याषाढांतमासेषुनिषिद्धकालवर्जिते
षुकार्यम् ॥ तेचमाघादिमासाःसर्ववर्णसाधारणाइति ॥ गार्ग्यआ
ह ॥ माघशुक्लादिकपंचमासाःसाधारणावासकलद्विजानामिति ॥
॥ ॥ वृद्धवसिष्ठेनतुविशेषउक्तः ॥ विप्रस्यक्षत्रियस्यापिमौंजीस्या
दुत्तरायणे ॥ दक्षिणेतुविशांकुर्यान्नानध्यायेनसंक्रमेइति ॥ यत्तुवृद्ध
गार्ग्यवचनम् ॥ अनध्यायेप्रकुर्वीतयस्तुनैमित्तिकोभवेत् ॥ सप्तमीमा
घशुक्लेतुतृतीयाचाक्षयातथा ॥ बुधत्रयेंदुवाराश्चशस्ताश्चव्रतबंधनइ
ति ॥ तत्प्रायश्चित्तार्थोपनयनविषयम् ॥ यतःसएवाह ॥ स्वाध्याय
वियुजोयस्राःकृष्णप्रतिपदादयः ॥ प्रायश्चित्तनिमित्तेतुमेखलाबंधने
मताइति ॥ अथतिथयः ॥ तृतीयैकादशीग्राह्यापंचमीद्वादशीतथा ॥
द्वितीयायांचमेधावीभवेदर्थबलान्वितः ॥ रिक्तायामर्थहानिःस्यात्पौर्ण
मास्यांतथैवच ॥ प्रतिपद्यपिचाष्टम्यांकुलवृद्धिविनाशकृदिति ॥
॥ तथाच ॥ सप्तम्यांप्रतिपदिरिक्तात्रयोदश्याम् ॥ आयुर्विद्यानाशोव्र
तबंधेपंचदश्यांचेति ॥ तथाच ॥ नचषष्ठ्यांतथाष्टम्यांपंचदश्यांन
पर्वणि ॥ रिक्तासुचनकर्तव्यंत्र्यहस्पृग्दिवसेतथेति॥ अथनक्षत्रवारौ॥

हस्तत्रयेदैत्यरिपुत्रयेचशक्रेंदुपुष्याश्विनिरेवतीषु ॥ वारेषुशुक्रार्कबृहस्पतीनांहितानुबंधीद्विजमौंजिबंधइति ॥ ॥ इतिव्रतबंधनिर्णयः ॥ ॥ अथविवाहोपयुक्तामासादयउच्यन्ते ॥ ॥ तदुक्तंज्योतिःसागरे ॥ ॥ माघफाल्गुनवैशाखज्येष्ठाषाढमृगाह्वयाः ॥ षडेते पूजितामासाश्चातुर्वर्ण्यस्यनित्यशः ॥मार्गेमासितथाज्येष्ठेक्षौरंपरिणयंव्रतम् ॥ ज्येष्ठपुत्रदुहित्रोस्तुयत्नेनपरिवर्जयेत्इति ॥ तथा ॥ श्रेष्ठंपक्षमुशंतिशुक्लमसितस्याद्यंत्रिभागंतथारिक्तांप्रोज्झ्यतिथिंतथर्त्वयनयोः संधिंचशेषाःशुभाइति ॥ वृद्धगार्ग्येणतुचैत्रादिषुनिषेधउक्तः ॥ मीनेधनुषिसिंहेचस्थितेसततुरङ्गमे ॥क्षौरकर्मनकुर्वीतविवाहंगृह्यकर्मचेति ॥ ॥ गांगेयोपि ॥सर्वर्त्तवोविवाहस्यशैशिरौमासौपरिहार्यौत्तमंचनैदाघमिति॥शैशिरौशिशिरर्त्तुसंबंधिनौ ॥अतश्चशिशिरर्त्तुनादौसंबद्धंपौषमन्तेसंबद्धंचैत्रंच॥उत्तमंनैदाघमाषाढमासंचवर्जयित्वेत्यर्थः ॥ रत्नमालायांतु॥नाषाढप्रभृतिचतुष्टयेविवाहोनोपौषेनचमधुसंज्ञकेविधेयइति॥नन्वेषुवाक्येषुविरोधोदृश्यते ॥ ज्योतिःसागरवाक्ये आषाढमृगाह्वया इत्याषाढस्वीकारात् ॥ गांगेयेनपौषचैत्राषाढव्यतिरिक्तानांसर्वमासानांवैवाहिकत्वाभिधानात् ॥ रत्नमालायामाषाढप्रभृतिचतुष्टयवर्जनाच्चेति ॥ सत्यम् ॥ देशाचारभेदेनविरोधःपरिहरणीयः ॥ तथाहि ॥ काश्मीरेभाद्रपदेविवाहादृश्यंते ॥ पुष्करेषुकार्तिके ॥ एवमन्यत्रापिदेशाचारोद्रष्टव्यः ॥ अथविवाहेतिथिषुविशेषउच्यते ॥ तथा ॥ प्रतिपद्दुःखजननीद्वितीयाप्रीतिवर्द्धनी ॥ सौभाग्यदातृतीयास्याच्चतुर्थीचार्थनाशिनी ॥ पंचम्यांसुखवित्तानिषष्ठीविघ्नप्रदामता ॥ विद्याशीलसुखाप्तिःस्यात्सप्तम्यामफलाष्टमी ॥ नवमीशोकभयदा आनंदोदशमीदिने सुखदैकादशीज्ञेयाद्वादशीसफला[1]स्मृता ॥ मानेपुत्रौ[2]त्रयोदश्यांचतुर्दश्यौतुदोषदे ॥ फलंबहुविधंनित्यंपंचदश्यांवि

१ फलदा० इ० पा० । २ धनपुत्रौ इ०पा० ।

शेषतः ॥ नचेहशुक्लप्रतिपदुदयंतीनिषिध्यते ॥ अत्रापिकृष्णपक्षस्यदशमीमविवाहिकाम् ॥ वदंत्यन्येतुदशमीमुभयोरविवाहिकाम् ॥ अथवारः ॥ गुरुशुक्रेंदुपुत्राणांदिनेषुपरिणीयते ॥ याकन्यासाभवेन्नित्यंभर्तुश्चित्तानुवर्तिनी ॥ अर्कार्किभौमवाराणांदिनेषुकलहप्रिया ॥ सापत्न्यंसमवाप्नोतितुपारकरवासरइति ॥ अत्रदिनेइतिविशेषोपादानाद्रात्रौविवाहेनदोषइतिगम्यते ॥ तथैवग्रंथांतरेपि ॥ नवारदोषाः प्रभवंतिरात्रौइति ॥ अत्रवर्जितेष्वपितिथिवारेषुसिद्धयोगेसतिविवाहः कार्यः ॥ तदुक्तम् ॥ शनैश्वरदिनेप्राप्तेयदारिक्तातिथिर्भवेत् ॥ तस्मिन्विवाहिताकन्यापतिसंततिवर्द्धनी॥गुरौसिंहमकरस्थितेउक्तेष्वपिमासेषुविवाहोनकार्यः ॥ तदुक्तंज्योतिःसागरे ॥ सिंहस्थंमकरस्थंच गुरुंयत्नेनवर्जयेत्॥सिंहस्थेपिमघासंस्थमित्याहभगवान्भृगुः॥अन्यत्र सिंहभागेतुविवाहादिविधीयतइति॥विवाहे वर्षनिर्णयः॥चतुर्भिःषड्भिरष्टाभिर्दशद्वादशभिस्तथा ॥ वर्षैर्विवाहिताकन्यावैधव्यमुपगच्छति ॥ गौतमोपि॥ द्वादशेदशमेवाब्देचतुर्थेवाचतुर्दशे ॥ षष्ठेष्टमेद्वितीयेवाकन्यकांचेत्प्रयच्छति ॥ करोतिवैधव्यमपत्यशोकंदौर्भाग्यमात्यंतिकमर्थनाशम्॥युग्मेचवर्षेविहितेविवाहेनकन्यकावृद्धिमुपैतिकापि ॥ इत्यादिवचनैःस्मृतिषुयुग्मवर्षेविवाहोनिषिद्धः ॥ ज्योतिःशास्त्रेपुनरयुग्मवर्षेनिषिद्धः ॥ तस्मात् मासत्रयादूर्ध्वमयुग्मवर्षेयुग्मेतुमासत्रयमेव यावत्॥विवाहशुद्धिःखलुकन्यकायाज्योतिःस्मृतीनामपिनोविरोधः॥ अयुग्मेविधवानारीयुग्मेचाविधवाभवेत् ॥ तस्माद्गर्भयुतेयुग्मेकन्यकास्यात्पतिव्रतेति ॥ शतपथभाष्ये संवत्सरांतादीनिनिरूप्यंते ॥ पौर्णमास्यांतुफाल्गुन्यांवत्सरान्तोनिशात्यये ॥ प्रतिपद्युदितेसूर्येवत्सरादिःश्रुतौस्मृतइति ॥ ज्योतिःसागरे ॥ अतिचारगतोजीवः स्वराशिंनैतिचेद्यदि ॥ लुप्तसंवत्सरोज्ञेयःसर्वकर्मसुगर्हितइति ॥ भृगोस्तुकच्छेशुभदोविवाहोवलक्षपक्षेनभसोदशम्याम् ॥ पद्मेयथाका

र्त्तिकपौर्णमास्यांदेशेष्वितिस्याच्छुभदोविवाहः॥मंडपेवर्णकेवेद्यांकौसुंभेचयवांकुरे ॥ तृतीयंनवमंषष्ठंनोद्वाहात्प्राग्दिनंशुभम् ॥ इतिविवाहेमंडपादिकालः ॥ नशुक्रदोषोनसुरेज्यदोषस्ताराबलंचंद्रबलंचयोज्यम् ॥ नवानवोढागमनप्रयाणेदीपोत्सवेकार्त्तिकपौर्णमास्याम् ॥ इतिसामान्यतःसर्वविवाहनिर्णयः ॥ सिंहस्थेमकरस्थेचगुरौविवाहोनिंदितः ॥ केचित्तुसिंहस्थेपिमेषसूर्येकुर्वंति ॥ अत्रापिविशेषोलल्लेनोक्तः ॥ नर्मदापूर्वभागेतुशोणस्योत्तरदक्षिणे ॥ गंडक्याःपश्चिमेभागेमकरस्थेनदोषकृदिति॥यत्तुमिहिरवचनम्॥ सार्वकालिकमिच्छंतिविवाहंगौतमादयइति ॥ तदसुराद्यधर्मविवाहविषयम् ॥ तदुक्तंगृह्यपरिशिष्टे ॥ धर्म्येष्वेवविवाहेषुकालपरीक्षणंनाधर्म्येष्विति ॥ अत्रप्रासंगिकिंचिल्लिख्यते ॥ विवाहेवितते[1]तंत्रेहोमकालउपस्थिते ॥ कन्यामृतुमतींदृष्ट्वाकथंकुर्वंतियाज्ञिकाः॥ स्नापयित्वातुतांकन्यामर्चयित्वायथाविधि ॥ युंजानमाहुतिंहुत्वाततःकर्मप्रवर्तयेत् ॥ स्मृतिचंद्रिकायाम् ॥ विवाहहोमेप्रक्रांतेयदिकन्यारजस्वला ॥ त्रिरात्रंदंपतीस्यातांपृथक्शय्यासनाशनौ ॥ चतुर्थेहनिसंस्नातौतास्मिन्नग्नौयथाविधि ॥ विवाहहोमंकुर्यातामित्यादिस्मृतिसंग्रहइति ॥ ॥ स्मृत्यर्थसारेविशेषउक्तः ॥ विवाहेदंपतीस्यातांत्रिरात्रंब्रह्मचारिणौ ॥ अलंकृतावधश्चैवसहशय्यासनाशनाविति ॥ ॥ अथैकोदरप्रसूतानांविवाहविषयेमिहिरेणविशेषउक्तः॥ एकोदरप्रसूतानामेकस्मिन्नेववत्सरे ॥ विवाहोनैवकर्त्तव्योगर्गस्यवचनंयथेति ॥ ॥ अत्रैकोदरप्रसूतानांपुंसामेव ॥ कन्याविषयेतेनैवविशेषाभिधानात् ॥ ॥ यथा ॥ उद्वाह्यपुत्रींनापिताविदध्यात्पुत्र्यंतरस्योद्वहनंकदाचित् ॥ यावच्चे[2]तुर्थीदिनमंगलस्यसमापनंतावदसौविदध्या[3]दिति ॥ अन्योपिविशेषस्तेनैवोक्तः ॥ नपुंविवाहोर्ध्वमृतुत्रयेपिविवाहकार्यंदुहितुःप्रकल्प्यम्॥नमंडनाच्चापिहिन्नमुंडनंस्यान्मुंडनान्मुंडनमन्वगेवेति॥

१ सम्प्राप्ते इ० पा० । २ चतुर्थादिह इ० पा० । ३ तुमासात् इ० पा० ।

मंडनंविवाहादि ॥ मुंडनमुपनयनादि॥विवाहादूर्ध्वंमृतुत्रयाभ्यंतरेऽप नयनादिकंनकार्यमित्यर्थः॥तथाचज्योतिर्निबंधे ॥ एकोदरभ्रातृयुग्मे स्वसृभ्रातृयुगेतथा॥नतदामंगलंकुर्यादेकस्मिन्वत्सरेक्वचित् ॥ नारदीये॥पुत्रोद्वाहानंतरंपुत्रीविवाहंनतुकारयेत्॥नतयोर्व्रतमांगल्यंमंगलेजातुमंगलम्॥मुंडनादुपरिमंडनंभवेदायुषोद्रविणवृद्धिकारकम्॥ नैवशोभनमृतुत्रयादधोमंडनात्परतरंहिमुंडनम् ॥ ऊर्द्ध्वंविवाहःशुभदोनरस्यनारीविवाहान्नऋतुत्रयेण ॥ नारीविवाहोपितथैवचोर्ध्वंनरस्यपाणिग्रहणान्नशस्तः॥नभवेल्लघुवृद्धिस्तुबृहद्वृद्धेरनंतरम् ॥विवाहान्नविवाहस्तुषण्मासावधिसोदरे ॥ होरापटले ॥ पुंविवाहःप्रवेशोविनिर्दिश्यतेस्त्रीविवाहःकुलेनिर्गमःकथ्यते ॥ निर्गमादादितोनप्रवेशःशुभस्तत्र संवत्सरांतोविधिःकीर्त्तितइति ॥ नैकसंवत्सरेकुर्याद्भ्रात्रोर्यमलजातयोः॥विवाहव्रतचौलंचतथाव्रतविसर्जनम्॥ नज्येष्ठेज्येष्ठयोःकार्य्यंनृनार्योःपाणिपीडनम्॥ तयोरन्यतरेज्येष्ठेज्येष्ठोपिनविरुध्यतीति ॥ कन्याज्येष्ठावरोज्येष्ठोज्येष्ठोमासस्तथैवच ॥ एतज्ज्येष्ठत्रयंनेष्टंविवाहेशौनकोऽब्रवीत् ॥ अथकार्त्तिकीविवाहः ॥ भार्गवस्यचगुरोरदर्शनेहृष्टदोषपरिपीडितोदिने॥ कार्त्तिकीसकलदोषनाशनीकन्यकोद्वहनलग्नकंशुभम् ॥ अग्रतःपृष्ठतोवापिकार्त्तिक्यादिनपंचके ॥ कन्यकोद्वाहनंकार्यंनदोषोदक्षिणायने ॥ शौनकादिमुनयस्त्रिपुष्करेकार्त्तिकीकृतकरग्रहाःसदा ॥ तत्रपाणितलपीडनेकृतेपुत्रवित्तसुखभाग्भवेदथ ॥ कार्तिक्यांपुष्करेब्रह्मासावित्रींपरिणीतवान् ॥ शुद्धिंविनापिजायेतयत्रतत्रकरग्रहः ॥ भैष्म्यःपंचनिशाःशुभानिगदिताःपूर्वापरापूर्णिमाकार्त्तिक्यामथपुष्करेऽथपुलिनेनद्याःशुभेसंगमे ॥ देवाग्रेवरवाटिकासुसुदृशांवैवाह्यधिष्ण्यैर्विनाशुक्रार्केज्यशशांकशुद्धिरहितःपाणिग्रहःशोभनः ॥ इक्षोःसान्निध्यआरामेप्रसिद्धेदेवतालये ॥ नदीह्रदतडागेचविवाहःपुष्करेस्मृतः॥शुक्रेनष्टेतथाजीवेग्रहणे

चंद्रसूर्ययोः ॥ केशवोत्थापनाहाद्वाविवाहःपुष्करेस्मृतः ॥ कार्त्ति
क्यांघटिकालग्नंकरोत्यज्ञानतोपियः ॥ कर्त्ताकारयिताचोभौनिंदि
तौसकलैर्बुधैः ॥ कुर्याद्वोधूलिकंलग्नंकार्त्तिक्यांपंडितोजनः ॥ क
र्त्ताकारयिताचोभौपुत्रपौत्रसमन्वितौ ॥ इतिकार्त्तिकीविवाहनिर्णयः॥
अत्रप्रासंगिकंकिंचिल्लिख्यते ॥ विवाहानंतरंवर्षपर्यंतंव्रतबंधनोत्तरं
षण्मासपर्यंतंचौलानंतरंत्रिमासपर्यंतंतिलतर्पणंपिंडसहितंश्राद्धंचनकु
र्यात् ॥ तदुक्तंस्मृत्यर्थसारे ॥ विवाहेचोपनयनेचौलेसतियथाक्रमम्॥
वर्षमर्द्धंतदर्धंचनेत्येकेतिलतर्पणम् ॥ वृद्धौसत्यांचतन्मासिनेत्येके
तिलतर्पणम्॥तीर्थेतिथिविशेषेचकार्यंप्रेतेचसर्वदा ॥ पिंडान्सपिंडानो
दद्युःप्रेतपिंडंविनात्रतु॥पितृयज्ञेचयज्ञेचगयायांदद्युरेवते ॥ गयासाम्यं
मृताहस्यकेचिदाहुःपुरातनाः॥ ॥इतिविवाहनिर्णयः॥ ॥अथद्विरागम
नकालउच्यते ॥ तदाहसुरेश्वरः ॥ माघफाल्गुनवैशाखेशुक्लपक्षेशुभे
दिने ॥ गुर्वादित्यविशुद्धौस्यान्नित्यंपत्नीद्विरागमइति ॥ बादराय
णोपि ॥ भर्तुःशोभनगोचरेहिमकरेनास्तंगतेभार्गवेसूर्येकीटवटाजगे
शुभदिनेपक्षेतुकृष्णोत्तरे ॥ हित्वादिक्पतिशीतगूबुधसितौलालाटि
केदिक्पतावानीतागुणशालिनीनववधूर्नित्योत्सवैर्नंदते ॥ पूर्वतोभ्यु
दितेशुक्रेप्रयायाद्दक्षिणापरे ॥ पश्चादभ्युदितेचैवयायात्पूर्वोत्तरेदि
शि ॥ स्वभवनपुरप्रवेशेदेशानांविप्लवेतथोद्वाहे ॥ नववद्धागृहगमने
प्रतिशुक्रविचारणानास्ति ॥ ॥ तथाच ॥ ॥ नीहारांशुधनोत्तरादि
तिगुरुत्वाष्ट्रानुराधाश्विनीशाक्रैर्भास्करवायुविष्णुवरुणब्राह्मैश्चशस्ते
तिथौ ॥ कुंभाजलिगतेरवौशुभकरेप्रातोदयेभार्गवेजीवज्ञास्फुजितांदि
नेनववधूसद्मप्रवेशः शुभः ॥ ॥इतिद्विरागमननिर्णयः॥ ॥ इतिश्रीसू
र्यसेन॰निर्णयामृतेप्रथमंतिथिमासप्रकरणंसमाप्तम् ॥ १ ॥
॥ श्रीसूर्यसेनभूभृद्विमलयशःक्षीरसागरादुदिते॥इतिनिर्णयामृतेऽस्मि
न्पूर्णस्तिथिमासनिर्णयःप्रथमः ॥ श्रीमत्पंडितासिद्धलक्ष्मणसुतःश्री

सिद्धलक्ष्मीपदद्वंद्वाराधनसुप्रसिद्धमहिमायःसिद्धसारस्वतः॥ आदेशा
दक्तैषसूर्यमहसःश्रीसूर्यसेनप्रभोर्वैधेकर्मणिकालनिर्णयमसावल्लाटना
थःसुधीः ॥ ॥अथद्वितीयंश्राद्धप्रकरणमारभ्यते॥ ॥ तत्रश्राद्धस्वरूपं
मरीचिनाप्रोक्तम् ॥ प्रेतान्पितॄनप्युद्दिश्यभोज्यंयत्प्रियमात्मनः ॥
श्रद्धयादीयतेयत्तुतच्छ्राद्धंपरिकीर्तितमिति॥तच्चद्विविधमेकोद्दिष्टंपार्व
णंचेति॥तत्रैकमुद्दिश्ययद्दीयतेतदेकोद्दिष्टम् ॥ त्रिपुरुषोद्देशेनदीयमा
नंपार्वणमिति ॥ तदाहकण्वः ॥ एकमुद्दिश्ययच्छ्राद्धमेकोद्दिष्टमुदी
रितम् ॥ त्रीनुद्दिश्यतुयत्तद्धिपार्वणंमुनयोविदुरिति ॥ तत्पुनर्नित्यनै
मित्तिककाम्यभेदेनत्रिविधम्॥तत्रनित्यंप्रत्याब्दिकादि ॥ नैमित्तिकंप्रे
तश्राद्धसपिंडीकरणादि॥काम्यश्राद्धमलभ्ययोगादिषुक्रियमाणम् ॥
तदाहकात्यायनः ॥ मृताहेऽहरहर्दर्शश्राद्धंयच्चमहालये ॥ तंनित्य
मुदितंसद्भिर्नित्यवद्धिविधानतइति ॥ तथानैमित्तिकश्राद्धंगाल
वेनोक्तम् ॥ प्रेतश्राद्धंसपिंडांतंसंक्रांतिग्रहणेषुच ॥ तथाभ्युदयिकं
श्राद्धंवृद्धिश्राद्धंनिमित्ततइति ॥ काम्यंचतेनैवोक्तम् ॥ तिथ्यादिषुच
यच्छ्राद्धंमन्वादिषुयुगादिषु ॥ अलभ्येषुचयोगेषुतत्काम्यंसमुदाहृत
मिति ॥ अत्रतिथ्यादिष्वित्यादिशब्दान्नक्षत्रवारयोगकरणेषुकैश्चित्
नित्यंनैमित्तिकंकाम्यंवृद्धिश्राद्धमतःपरम् ॥ पार्वणंचेतिविज्ञेयंश्राद्धंपं
चविधंबुधैरितिपंचविधत्वमुक्तम् ॥ कैश्चिद्द्वादशविधत्वमुक्तम् ॥
तत्रविचार्यमाणेसर्वेषांभेदानामुक्तेषुत्रिष्वेवांतर्भावइतित्रिविधत्वमेव
युक्तम् ॥ ॥ अथश्राद्धकालउच्यते ॥ ॥ तदाहयाज्ञवल्क्यः ॥
अमावास्याष्टकावृद्धिकृष्णपक्षोयनद्वयम् ॥ द्रव्यंब्राह्मणसंपत्तिर्विषुव
त्सूर्यसंक्रमः॥ व्यतीपातोगजच्छायाग्रहणंचंद्रसूर्ययोः ॥ श्राद्धंप्रतिरु
चिश्चैवश्राद्धकालाःप्रकीर्त्तिता इति॥ ॥तत्रमार्गशिरपौषमाघफाल्गु
नभाद्रपदेषुकृष्णपक्षाष्टम्योष्टकाऽस्तत्पूर्वसप्तम्याःपूर्वेद्युस्ततपरानव
म्योन्वष्टकाः ॥ तदुक्तंकालादर्शे ॥ मार्गशीर्षेचपौषेचमाघेप्रौष्ठेचफा

१ संवत्सरोदकुंभश्च० इ० पा० ।

ल्गुने ॥ कृष्णपक्षेषुपूर्वेद्युरन्वष्टक्यंतथाष्टकमिति ॥ विष्णुस्मृताव
पि ॥ अमावास्यास्तिस्रोष्टकास्तिस्रोन्वष्टकास्तिस्रःपूर्वेद्युः ॥ प्रौष्ठप
देहेमंतशिशिरयोरपरपक्षेषुत्रयोदशीव्रीहिभिर्यवैर्वायागइति ॥ अस्य
र्थः ॥ प्रौष्ठपदेकृष्णाष्टमीएकाष्टका॥मार्गशीर्षपौषयोःकृष्णाष्टम्यौहेमं
ततोरेकत्वादेकैवगम्यते ॥ माघफाल्गुनयोरपिकृष्णाष्टम्यौशि
शिरर्त्तोरेकत्वादेकैवेतितिस्रोष्टकाः ॥ एवमन्वष्टकास्तिस्रःपूर्वेद्युश्चेति
वेदितव्याः ॥ अत्रमासप्रयुक्तासुपंचस्वष्टमीषुऋतुप्रयुक्त्याद्वयोरे
कत्वमभिधायत्रित्वसंख्ययाभिधानेकिंकारणमितिचेत्॥ ॥ सत्यम्॥
देवताविशेषद्रव्यविशेषचात्रित्वदर्शनात्रित्वसंख्याभिधानमुपपद्यते ॥
॥ तदुक्तंवायुपुराणे ॥ ॥ पित्र्यदानायमूलंस्युरष्टकास्तिस्रएवच ॥
कृष्णपक्षेवरिष्ठाहिपूर्वाचैंद्रीतिभाष्यते ॥ प्राजापत्याद्वितीयास्यात्तृती
यावैश्वदेविकी ॥ आद्यापूपैःसदाकार्यामांसैरन्याभवेत्तथा ॥ शाकैः
कार्यातृतीयास्यादेषोद्रव्यगतोविधिरिति ॥ अत्रापिहेमंताष्टम्योरिं
द्रोदेवताअपूपोद्रव्यम् ॥ शिशिराष्टम्योःप्रजापतिर्देवतामांसंद्र
व्यम् ॥ भाद्रपदाष्टम्यांविश्वेदेवादेवताशाकोद्रव्यमितित्रित्वसंख्यो
पपत्तिः ॥ आश्वलायनस्तु ॥ हेमंतशिशिरयोश्चतुर्षुमासेषुचतस्रोऽ
ष्टकाइत्याह ॥ यथा ॥ हेमंतशिशिरयोश्चतुर्णामपरपक्षाणामष्टमी
ष्वष्टकाइति॥गजच्छायातु ॥ यदेंदुःपितृदैवत्येहंसश्चैवकरेस्थितः॥
त्रयोदशीगजच्छायाश्राद्धेपुण्यैरवाप्यतइति ॥ अन्यत्सुगमम् ॥
इतिप्रसंगादष्टकादिस्वरूपंनिरूप्यप्रकृतमनुसंधीयते ॥ तदुक्तम् ॥
नित्यश्राद्धंमृताहोहरहरित्यादि ॥ तत्रमृताहस्यपूर्वोद्दिष्टत्वेनतन्नि
र्णयस्यापिपूर्वत्वमेवोचितम् ॥ तथापितस्यप्रत्याब्दिकेप्येवमेवेत्य
मावास्यातुल्यत्वादमावास्यानंतरमेवतन्निर्णयोवक्ष्यते ॥ अहरहः
श्राद्धस्वरूपंतुभविष्योत्तरेप्रोक्तम् ॥ यथा ॥ अहन्यहनिय
च्छ्राद्धंतन्नित्यमितिकीर्त्तितम् ॥ वैश्वदेवविहीनंतदशक्तावुदके

नत्विति ॥ अमावास्याश्राद्धंचनित्यम् ॥ अकरणेप्रत्यवायस्मरणात् ॥ तदाहव्याघ्रः ॥ ननिर्वपतियच्छ्राद्धंप्रमीतपितृकोद्विजः ॥ इंदुक्षयेमासिमासिप्रायश्चितीयतेनरइति ॥ साचामावास्याशुद्धाविद्धाचेतिद्विविधा ॥ तत्रशुद्धात्वसंदिग्धा ॥ विद्धापुनस्त्रिविधा ॥ भूतविद्धावाप्रतिपद्विद्धावाउभयविद्धाचेति ॥ तत्रोभयविद्धातुपुनश्चतुर्विधा ॥ पूर्वदिनएवापराह्णव्यापिनीपरदिनएवापराह्णव्यापिनीउभयत्रापराह्णव्यापिनीनोभयत्रापराह्णव्यापिनीचेति ॥ अत्रोभयत्रापराह्णव्यापिनीपुनस्त्रिधा ॥ तिथिक्षयोपेतातिथिवृद्ध्युपेतातिथिसाम्योपेताचेति ॥ एवंविद्धामावास्याष्टविधा ॥ तत्रभूतविद्धामावास्याचंद्रदर्शनसंभवात्सिनीवालीत्युच्यते ॥ प्रतिपद्विद्धातुचन्द्रदर्शनाभावात्कुहूरित्युच्यते॥तदुक्तम्॥ दृष्टचंद्रासिनीवालीनष्टचंद्राकुहूस्मृतेति ॥ एषुभेदेषुभूतविद्धाप्रतिपद्विद्धावापराह्णव्यापिनीपितृकर्मणिग्राह्या ॥ तथाचश्रुतिः ॥ पूर्वाह्णोवैदेवानांमध्यंदिनोमनुष्याणामपराह्णःपितॄणामिति ॥ स्मृतिरपि ॥ पूर्वाह्णेदैविकंकर्मअपराह्णेतुपैतृकम् ॥ एकोद्दिष्टंतुमध्याह्नेप्रातर्वृद्धिनिमित्तकमिति ॥ हारीतोपि ॥ अपराह्णःपितॄणांतुयापराह्णानुयायिनी ॥ साग्राह्यापितृकृत्येतुनपूर्वाह्णानुयायिनीति ॥ अपराह्णस्यगजच्छायात्मकत्वादपिपितृकर्मणिप्राशस्त्यंभरद्वाजेनोक्तम् ॥ वनस्पतिगतेसोमेयाछायापूर्वतोमुखी ॥ गजच्छायाहिसातत्रपितॄणांदत्तमक्षयमिति ॥ चंद्रस्त्वमावास्यायामपराह्णात्मकेचतुर्थेत्रिमुहूर्तंवनस्पतिगतोभवति ॥तथाचश्रुतिः॥ त्रिमुहूर्त्तंवसेदर्केत्रिमुहूर्तंजलेवसेत् ॥ त्रिमुहूर्तंवसेद्गोषुत्रिमुहूर्तंवनस्पतौ ॥ स्मृत्यंतरेपि ॥ द्विगुणाह्यात्मनश्छायादर्शेस्यादपराह्णिकी॥गजच्छायेतिसाप्रोक्तापितॄणांतृप्तिकारिणीति ॥अतश्चपितृकर्मण्यपराह्णस्यप्राशस्त्याद्भूतविद्धाप्रतिपद्विद्धाउभयविद्धावापराह्णव्यापिन्येवग्राह्या ॥ननु भूतविद्धाममावास्यांमोहादज्ञानतोपिवा ॥ श्राद्धकर्मणियेकुर्युस्तेषामायुः

प्रहीयतइति काष्र्णाजिनवचनेनभूतविद्धायानिषेधात्कथंतत्रश्राद्धमि
तिचेत् ॥ सत्यम् ॥ इदंवचनंप्रतिपदिवामावास्यामपराह्णव्यापि
न्यां सत्यां ॥ भूतविद्धायांश्राद्धनिषेधपरमित्यविरोधः ॥ प्र
तिपन्मिश्रितायाश्चापराह्णव्यापित्वाभावेभूतविद्धायाविधानाच्च ॥ त
दुक्तंजाबालिना ॥ प्रतिपद्यप्यमावास्यानापराह्णगताभवेत् ॥ भूत
विद्धैवसाग्राह्यापित्र्येकर्मणिसर्वदेति ॥ तथाच ॥ पूर्वाह्णेचेदमावा
स्यानापराह्णेभवेद्यदि ॥ भूतविद्धैवसाग्राह्यापित्र्येकर्मणिसर्वदेति ॥
प्रतिपद्यप्यमावास्यापूर्वाह्णेभवेन्नापराह्णेभवेदित्यर्थः ॥ तथाच ॥
प्रतिपद्यप्यमावास्यापूर्वाह्णव्यापिनीयदि ॥ भूतविद्धैवसाकार्यापि
त्र्येकर्मणिसर्वदेति ॥ पूर्वाह्णव्यापिन्येवनापराह्णव्यापिनीत्यर्थः ॥
एष्वपिवचनेषुभूतविद्धायाअपराह्णव्यापित्वमभिप्रेतम् ॥ उभयत्रा
पराह्णव्यापित्वाभावेत्वपरैवकुतपकालिकीतिवक्ष्यते ॥ यत्तु ॥ मध्या
ह्नात्परतोयत्रचतुर्दश्यनुवर्तते ॥ सिनीवालीतुसाज्ञेयापितृकार्येतुनिः
ष्फलेतिबौधायनवचनम् ॥ तत्त्रेधाविभक्तस्याह्नोमध्यभागोमध्याह्न
स्ततःपरतःसायंकालइत्यर्थः ॥ उभयत्रापराह्णव्यापिनीतुतिथिक्षये
आहिताग्निभिःपूर्वासिनीवालीग्राह्या ॥ अनाहिताग्निभिःस्त्रीशूद्रै
श्चपराकुहूरेवग्राह्या ॥ तिथिवृद्धौसाम्येचसर्वैरपिकुहूरेवकार्या ॥ तदु
क्तंजाबालिना ॥ अपराह्णद्वयव्यापीयदिदर्शोस्तितिथिक्षये ॥ आहिताग्नेः
सिनीवालीनिरग्न्यादेःकुहूर्मतेति॥आदिशब्दात्स्त्रीशूद्राणामुपसंग्रहः॥
काष्र्णाजिनिरपि ॥ सिनीवालीद्विजैर्ग्राह्यासाग्निकैःपितृकर्मणि ॥ स्त्री
शूद्रैश्चकुहूर्ग्राह्यातथाचानग्निकैर्द्विजैरिति ॥ प्रचेतसाप्युक्तम् ॥
सिनीवालीकुहूश्चैवश्रुत्युक्तेपितृकर्मणि ॥ स्यातांतेयदिमध्याह्नाच्छ्रा
द्धंतत्रकथंभवेत् ॥ तिथिक्षयेसिनीवालीतिथिवृद्धौकुहूर्मता ॥ साम्ये
ऽपिचकुहूर्ज्ञेयावेदवेदांगवेदिभिरिति ॥ अत्रमध्याह्नादितिमध्याह्ना
दूर्ध्वमपराह्णेस्यातामित्यर्थः ॥ अस्मिन्नपिवाक्येतिथिक्षयेसिनी

वालीतिपूर्वोक्तेवसाग्निकानाग्निकादिव्यवस्थाकल्पनीया ॥ अन्यथा जावालिकार्ष्णाजिन्यादिवाक्यविरोधःस्यात् ॥ नोभयत्रापराह्ण व्यापिनीतिपरैवकुतुपकालव्यापिनीग्राह्या ॥ तदुक्तंहारीतेन ॥ भूतविद्धाप्यमावास्याप्रतिपन्मिश्रितापिवा ॥ पित्र्येकर्मणिविद्वद्भिर्ग्राह्याकुतपकालिकीति॥तत्रकुतपशब्देननाष्टममुहूर्तमात्रमुच्यते ॥ किंतु ॥ कुतपरौहिणविरिञ्चास्त्रयोमुहूर्त्ताउच्यन्ते ॥ तदुक्तमापस्तंबेन ॥ कुतपाद्यान्मुहूर्तांस्त्रीन्यदाचरतिभास्करः॥सकालःकुतपस्तत्रपितॄणांदत्तमक्षयमिति ॥अत्रपरामावास्यायामपराह्णस्पर्शाभावान्मुहूर्त्तत्रयरूपकुतपकालव्यापित्वाभावेप्यष्टममुहूर्त्तेकुतपे उपक्रांतस्यश्राद्धस्यप्रतिपद्भागेपिसमाप्तौनदोषः ॥ तदुक्तंजावालिना॥पूर्वाह्णेचेदमावास्यानापराह्णेभवेद्यदि ॥ प्रतिपद्यपिकर्त्तव्यंश्राद्धंश्राद्धविदोविदुरिति॥ तथागौतमोपि ॥पूर्वाह्णेचेत्प्रतिपदोभूतेसायममायदि ॥ प्रारभ्यकुतपेश्राद्धंकुर्यादारौहिणंबुधः ॥ विधिज्ञोविधिमास्थायरौहिणंतुनलंघयेदिति ॥ यत्तुकन्यामकरमीनेषुतुलायांमिथुनेतथा ॥ भूतविद्धैवसर्वेषांपूज्याभवतियत्नतइतिहारीतवचनंतद्व्रतविषयम् ॥ तदाहजावालिः ॥ तुलायांमकरेमीनेकन्यायांमिथुनेप्यमा ॥ भूतविद्धाव्रतेग्राह्याशेषेषुप्रतिपद्युतेति ॥ आहिताग्निरदृष्टचंद्रायामपराह्णव्यापिन्याममावास्यायांपिंडपितृयज्ञंकुर्यात् ॥ तदाहापस्तंबः ॥ अमावास्यायांयदहश्चंद्रमसंनपश्यंतितदाहःपिंडपितृयज्ञंकुर्युरिति ॥ कात्यायनोपि ॥ अमावास्यायामपराह्णेपिंडपितृयज्ञश्चंद्रादर्शनइति ॥ यदापिंडपितृयज्ञोदर्शश्राद्धंचकर्त्तव्यंस्यात्तदाद्वयमपिक्रमेणकुर्यात् ॥ तदुक्तंमनुना ॥ पितृयज्ञंतुनिर्वर्त्यविप्रश्चंद्रक्षयेग्निमान् ॥ पिंडान्वाहार्यकंश्राद्धंकुर्यान्मासानुमासिकमिति ॥ अत्रान्वाहार्यकशब्देनापिंडाअनुब्राह्मणभोजनानंतरमाह्रियंतेऽस्मिन्नितिव्युत्पत्त्यापार्वणश्राद्धमुच्यते ॥ अतश्चयान्यन्यान्यपिस्मृतिपुराणवाक्यानिभूतविद्धामा

वास्याश्राद्धनिषेधकानितानिचतुर्दश्यामावास्यायाआपराह्णिकत्वा भावेप्रतिपदिचापराह्णिकत्वेतिथिवृद्धिसाम्ययोरुभयत्रापराह्णव्यापि त्वेचप्रतिपन्मिश्रितायाममावास्यायांश्राद्धविधिपराणिवेदितव्यानि॥ यानिपुनर्भूतविद्धायांश्राद्धविधायकानितानिभूतएवापराह्णव्यापित्वे भूतविद्धदर्शेश्राद्धविधिपराणि उभयत्रापराह्णव्यापित्वेचतिथिक्षयेसा ग्निकविषयेचतुर्दशीमिश्रामावास्याश्राद्धपराणिचवेदितव्यानि ॥ या नितुकुतपकालव्यापिन्यांश्राद्धविधायकानि तान्युभयत्रापराह्णव्या पित्वाभावविषयाणिवेदितव्यानि ॥ कैश्चिदपराह्णानादरेणैवकुतपका लप्राधान्येनैवामावास्यानिर्णीतातेषामप्ययमेवाभिप्रायः ॥ अपरा ह्णव्यापिन्यांकुतुपकालमारभ्यश्राद्धंकर्त्तव्यमिति ॥ अन्यथा ॥ अप राह्णः पितॄणांतुयापराह्णानुयायिनीत्यादिबहुश्रुतिस्मृतिपुराणवाक्य विरोधोदुष्परिहारःस्यात् ॥ अतश्चोक्तएवनिर्णयःसाधीयानिति ॥ पौ र्णमास्यपिश्राद्धविधावमावास्यावदेवनिर्णेया ॥ पौर्णमास्यांतुश्रा द्धपरंवचनम् ॥ अमावास्यायथापुण्यापितृपिंडस्यकर्मणि ॥ पौर्ण मासीतथापुण्याविशेषोस्तिनकश्चनेति ॥ ॥ इतिश्रीसूर्यसेनमहीमहें द्रविरचितेनिर्णयामृतेद्वितीयेश्राद्धप्रकरणेऽमावास्याश्राद्धनिर्णयः ॥

॥ अथमृताहनिर्णयःप्रस्तूयते ॥ ॥ तत्रमृताहस्वरूपंस्मृतावुक्तम् ॥ मासपक्षतिथिस्पृष्टेयस्मिन्योम्रियतेऽहनि ॥ प्रत्यब्दंतुतथाभूतंक्षयाहं तस्यतंविदुरिति ॥ क्षयाहतिथिरप्यमावास्यावदपराह्णव्यापिनीग्रा ह्या॥दिनद्वयेमृततिथेरपराह्णव्यापित्वेत्वधिकापराह्णव्यापिनीग्राह्या॥ उभयत्रापराह्णस्पर्शाभावेतुपूर्वैवसायंकालव्यापिनीग्राह्या ॥ तत्र वाक्यानि ॥अपराह्णःपितॄणांतुयापराह्णानुयायिनी ॥ साग्राह्यापितृकृ त्येतुनपूर्वाह्णानुयायिनीति ॥ मरीचिरपि॥ द्व्यपराह्णव्यापिनीचेत्स्या दाब्दिकस्ययदातिथिः ॥ महतीयत्रतद्विद्धांप्रशंसंतिमहर्षयइति ॥ द्वावपराह्णौव्याप्नोतीत्यर्थः ॥ गर्गः ॥ नद्यहव्यापिनीचेत्स्यान्मृताह

स्यचयातिथिः ॥ पूर्वविद्धैवकर्त्तव्यात्रिमुहूर्ताभवेद्यदि ॥ नारदोपि ॥ दर्शंचपौर्णमासंचापितुःसांवत्सरंदिनम् ॥पूर्वविद्धमकुर्वाणोनरकंप्रतिपद्यतइति ॥पूर्वेद्युःसायमितिवाक्यशेषः ॥ ननु ॥ अह्नचस्तमयवेलायां कलामात्रायदातिथिः ॥ सैवप्रत्याब्दिकेज्ञेयानापरापुत्रहानिदेति कार्ष्णाजिनवचनेनास्तमयेकलामात्रातिथेःस्वीकारात् त्रिमुहूर्त्ता भवेद्यदीतिविरोधइतिचेन्न ॥ कैमुतिकन्यायेनकलामात्रापिग्राह्या किमुतत्रिमुहूर्त्तेत्येवंपरत्वादस्य वाक्यस्यपूर्वेसायंत्रिमुहूर्त्तव्यापित्वाभावेपरैवकुतपकालव्यापिनीग्राह्या ॥ ॥ तदाहगोभिलः ॥ ॥त्रिमुहूर्तानचेद्ग्राह्यापरैवकुतपेहिसेति ॥ ननु सायंकालव्यापिन्याःपूर्वविद्धायाग्रहणेकुतपादिमुहूर्त्तत्रयस्पर्शाभावात् प्रारभ्यकुतपेश्राद्धंकुर्यादारौहिणंबुधइति श्राद्धस्यकुतपारंभरौहिणपरिसमाप्तिविधानात्कथंतत्रश्राद्धमितिचेत् ॥ सत्यम् ॥ सातिथिस्तदहोरात्रंयस्यामस्तमियाद्रविः ॥ तथा ॥ यत्रास्तंसवितायातिपितरस्तामुपासतइत्यादिवाक्यैरस्तमयतिथेःश्राद्धकर्मणिसंपूर्णत्वविधानात् कुतुपएवारभ्यश्राद्धंकार्यमिति ॥ ॥ अथप्रासंगिकाःश्राद्धप्रदेशाउच्यंते ॥ तदुक्तंविष्णुधर्मोत्तरे ॥ दक्षिणाप्रवणेदेशेतीर्थादौवागृहेपिवा ॥ भूसंस्कारादिसंयुक्तेश्राद्धंकुर्यात्प्रयत्नतइति ॥ यमस्तुविशेषमाह ॥ परकीयप्रदेशेषुपितॄणांनिर्वपेत्तुयः ॥ तद्भूमिस्वामिपितृभिःश्राद्धकर्म विहन्यतइति ॥ अत्रपरकीयप्रदेशाःपरस्वीकृतगृहाः ॥ तीर्थाद्यभावेगृहस्वामिनेकिंचिन्निष्क्रयरूपंदत्त्वापरकीयप्रदेशेवाकार्यम् ॥ तीर्थादीनांसर्वसाधारण्यमेव॥तदुक्तंपुराणसमुच्चये॥अटवीपर्वताःपुण्यानदीतीराणियानिच ॥ सर्वाण्यस्वामिकान्याहुर्नहितेषुपरिग्रहइति ॥ ॥ तथा ॥ वनानिगिरयोनद्यस्तीर्थान्यायतनानिच ॥ देवखाताश्चगर्त्ताश्चनस्वामीतेषुविद्यतइति ॥आयतनानिदेवायतनानि ॥ इतिश्राद्धप्रदेशाः ॥ ॥ अथश्राद्धकर्तुर्नियमाउच्यंते ॥ ॥ तत्रमरीचिः ॥

श्राद्धीयेह्नि दशम्यांचद्वादश्यांव्रतवासरे ॥एकादश्यांव्यतीपातेतैलंमां संविवर्जयेत् ॥ गोभिलोपि ॥ श्वःकर्त्तास्मीतिनिश्चित्यदाताविप्रान्नि मंत्रयेत् ॥ निरामिषंसकृद्भुक्त्वाससभुक्तजनेगृहइति ॥ स्मृत्यर्थसारेऽपि ॥ दंतधावनतांबूलस्निग्धास्नानमभोजनमिति॥रत्यौषधंपरान्नंचश्राद्धकृत्सप्तवर्जयेतादिति ॥ इतिश्राद्धकर्तृनियमाः॥तच्चक्षयाहश्राद्धंपित्रोरेकोद्दिष्टंपार्वणंवायथास्वकुलाचारंकुर्यात् ॥ उभयविधायकवाक्यबलात् ॥ वाक्यानिच यथाहयमः ॥ सपिंडीकरणादूर्ध्वंप्रतिसंवत्सरं नरैः ॥ मातापित्रोःपृथक्कार्यमेकोद्दिष्टंमृतेहनीति ॥ शातातपोपि ॥ सपिंडीकरणंकृत्वाकुर्यात्पार्वणवत्सदा ॥ प्रतिसंवत्सरंश्राद्धंछागलेयोदितोविधिरिति ॥ अतएवविज्ञानेश्वरयोगिनापित्रीहियववद्विकल्प इत्युक्तम् ॥ अमावास्यायामपरपक्षेचमृतानांपावर्णमेवनैकोद्दिष्टम् ॥ तदुक्तंशंखेन ॥ अमायांवाक्षयोयस्यप्रेतपक्षेथवायदि ॥ पार्वणंतस्यकर्त्तव्यंनैकोद्दिष्टंकदाचनेति ॥ संन्यासिनांतुपार्वणमेव ॥ तदुक्तं प्रचेतसा ॥ दंडग्रहणमात्रेणनैवप्रेतोभवेद्यतिः ॥ अतस्सुतेनकर्तव्यं पार्वणंतस्यसर्वदेति ॥ अनाद्यगर्भज्येष्ठभ्रातृगुर्वादीनामेकोद्दिष्टमेव कार्यम् ॥ तदाहशातातपः ॥ अनाद्यगर्भज्येष्ठस्यभ्रातुःसद्भिर्निगद्यते ॥ऋतेसपिंडनात्तस्यनैवपार्वणमाचरेत् ॥ अत्रानाद्यगर्भत्यभिधानादाद्यगर्भज्येष्ठभ्रातुःपितृवदेवपार्णमेकोद्दिष्टंवायथास्वाचारंकुर्यादितिगम्यते॥सुमंतुः॥यश्चमंत्रस्यदातास्याद्यश्चविद्यांप्रयच्छति॥गुरूतावपिकुर्वीततयोर्नैवतुपार्वणमिति ॥ वृद्धगार्ग्योपि ॥ मातुःसहोदरोयश्च पितुःसहोदरस्तथा ॥ तयोश्चनैवकुर्वीतपार्वणंपिंडनादृतइति ॥ पिंडनात्सपिंडीकरणादृतेपार्वणंनकुर्वीतेत्यर्थः॥वृद्धवासिष्ठोपि ॥ सपिंडीकरणादूर्द्ध्वंयत्रतत्रप्रदीयते॥भ्रात्रेभगिन्यैपुत्रायस्वामिनेमातुलायच ॥ मित्रायगुरवेश्राद्धमेकोद्दिष्टंनपार्वणमिति ॥ पुत्रादीनामभावेपत्नीस्वयमेवभर्तुःसपिंडीकरणंकृत्वाप्रत्यब्दंपार्वणमेवकुर्यात् ॥ तदुक्तंलौगा

क्षिणा॥ सर्वाभावेस्वपत्न्यस्तुस्वभर्तॄणाममंत्रकम् ॥ सपिंडीकरणंकुर्यु
स्ततःपार्वणमेवचेति॥सुमंतुरपि॥अपुत्रेसंस्थितेकर्तानभवेच्छ्राद्धकर्म
णि॥तत्रपत्न्यापिकुर्वीतसापिंड्यंपार्वणंतथेति ॥अपुत्राणांपत्नीव्यतिरि
क्तकर्तृत्वेत्वेकोद्दिष्टमेव॥ तदुक्तम् ॥ अपुत्रायेमृताकेचित्पुरुषावास्त्रि
योपिच॥ तेषांसपिंडनाभावादेकोद्दिष्टंनपार्वणमिति॥ स्त्रीणांतुक्षयाहा
दिव्यतिरिक्तश्राद्धेषुपत्यासहैवश्राद्धंकार्यम्॥क्षयाहादिषुपृथक्कार्यम् ॥
तदाहजातूकर्ण्यः ॥ क्षयाहंवर्जयित्वैकंस्त्रीणांनास्तिपृथक्क्रिया ॥ के
चिदिच्छंतिनारीणामन्यत्रापिमहर्षयइति॥ अन्यत्रान्वष्टकादिष्वपि ॥
तदुक्तम् ॥ आन्वष्टक्यंतथावृद्धिमातृश्राद्धंमृतेहनि ॥ एकोद्दिष्टंत
थामुक्त्वास्त्रीणांनान्यत्पृथग्भवेदिति ॥ शातातपोपि ॥ नांदीमुखाष्ट
काश्राद्धेगयायांचमृतेहनि ॥ पितामह्यादिभिःसार्द्धंमातुःश्राद्धंपृथ
ग्भवेदिति॥काष्र्णाजिनिरपि॥ अष्टकादिषुवृद्धौचगयाश्राद्धंमृतेहनि॥
मातुःश्राद्धंपृथक्कुर्यादन्यत्रपतिनासहेति ॥ मातुरितिस्त्रीणामुपलक्ष
णम्॥अन्वारोहेणमृतासुस्त्रीषुविशेषोविधीयते ॥ तत्रभर्तृमृतदिनेएवै
कचित्यारोहणेनस्त्रियामरणेसतिप्रत्यब्दमृताहश्राद्धेकालैक्यंकत्रैक्यं
पाकैक्यंभवति ॥ पिंडोपिद्विपितृकश्राद्धवद्द्वयोरुद्देशेनैकएवदेयः ॥
नवश्राद्धंतुपृथग्भवति ॥ तदाहलौगाक्षिः ॥ मृतेहनिसमासेनपिंडनि
र्वपणंपृथक् ॥ नवश्राद्धंतुदंपत्योरन्वारोहणएवतु ॥ समासेनपिंड
निर्वपणंनवश्राद्धंपृथगित्यन्वयः ॥ अत्रमृतेहनीतिविशेषोपादानात्
तिथिभेदेतुपृथगेवश्राद्धंकुर्यात् नसमासेनेतिगम्यते ॥ किंच ॥
मृतेहनिसमासेनकुर्यादितिविशेषाभिधानादेवसांवत्सरिकव्यतिरिक्त
नवश्राद्धषोडशश्राद्धसपिंडीकरणगयान्वष्टकादिश्राद्धेषुवचनांतरैश्च
पृथग्विहितेषुपृथक्कर्तव्यतायांनवश्राद्धंपृथगितिपरिसंख्ययानवश्राद्ध
स्यैवपृथग्विधानात् ॥ नवश्राद्धव्यतिरिक्तेषुषोडशश्राद्धादिषुसां
वत्सरिकवदेवपिंडोदेयः ॥ यत्तुस्मृत्यंतरवचनम् ॥ एकचि

त्यांसमारूढौदंपतीनिधनंगतौ ॥ पृथक्श्राद्धंतयोःकुर्यादोदनञ्चपृथक्पृथक् ॥ तन्नवश्राद्धविषयम् ॥ नवश्राद्धंकैश्चित्तंत्रेणक्रियतेइत्यंगिरसोवाक्येनगम्यते ॥ तद्विषयमोदनञ्चपृथक्पृथगिति वाक्यञ्च ॥ नवश्राद्धेषुयच्छिष्टंगृहेपर्युषितंचयत् ॥ दंपत्योर्भुक्तशिष्टंचतन्नभुंजीतकर्हिचिदिति ॥ यदात्वेकस्यामेवतिथौवृद्ध्यादिनद्वयव्यापिन्यांपूर्वदिनव्यापिभागेभर्तृमरणंपरदिनव्यापिभागेपत्न्या एकचित्यारोहणेनमरणंतदापिसमासेनैवपिंडादिविधायकवाक्यबलान्मृततिथेरेकत्वाद्भर्तुश्चप्राधान्यात्तदर्द्धशरीरभूतायाःपत्न्याश्चापितदेवमरणसंकल्पेनमृतप्रायत्वाद्भिन्नदिनमरणरूपैकनिमित्तापेक्षयाबहूनामनुग्रहोन्याय्यइति तिथ्यैकत्वादिनिमित्तानामेवन्याय्यत्वाद्भर्तुर्मरणदिनप्रभृत्येवादिनपरिगणनंकृत्वातिलोदकपिंडदानाशौचादिकंकर्त्तव्यम् ॥ यानिपुनर्भर्तृमरणानंतरंचिरकालव्यवधानेप्यनुगमनेनमृतायाअपिपत्न्याभर्तृमरणसमकालमेवमरणप्रतिपादकानिवाक्यानितान्यर्थवादरूपाणिप्रोत्सहकानितान्यपितिथ्याभेदैकचित्यारोहणविषयेयोज्यानि ॥ यत्तुभृगुवचनम् ॥ यासमारोहणंकुर्याद्भर्तुश्चित्यांपतिव्रता ॥ तांमृताहनिसंप्राप्तेपृथक्पिंडेनयोजयेत् ॥प्रत्यब्दंतुनवश्राद्धंयुगपत्तुसमाचरेदिति ॥ तद्भर्तृमृततिथिव्यतिरिक्तान्यतिथावेकचित्यान्वारोहणविषम् ॥अथस्त्रीविषयेविशेषमुक्त्वासंघातमृतानांश्राद्धविषयेविशेषोभिधीयते ॥ यदादैववशादेकस्मिन्दिनेमृतानांपितृमातृभ्रात्रादीनांयुगपदाब्दिकसंनिपातः ॥ तदाप्रधानानुक्रमेणपृथक्पाकेनकुर्यात् ॥श्राद्धानांबहुत्वात्कुतपाद्युक्तकालेकर्तुमशक्यत्वादेकपाकेनैव पूर्वंपितृब्राह्मणनिमन्त्रणं ततोमातृब्राह्मणनिमंत्रणं ततोन्येषांयथाप्रधानंकृत्वा एवंपादप्रक्षालनादिकंकृत्वायुगपत्सर्वश्राद्धानिसमापयेत् ॥ तदुक्तंभृगुणा ॥ एककालेगतासूनांबहूनामथवाद्वयोः ॥ तंत्रेणश्रपणंकुर्याच्छ्राद्धंचैवपृथक्पृथगिति ॥ ऋष्यशृंगोपि ॥ भवेद्यदिसपिंडानांयुगपन्म

रणंतदा ॥ संबंधासत्तिमालोक्यतत्क्रमाच्छ्राद्धमाचरेदिति ॥ तत्क्र
मादिति संबंधक्रमात् ॥ यत्तुवचनम् ॥ कृत्वापूर्वंमृतस्यादौद्वि
तीयस्यततःपुनः ॥ तृतीयस्यपुनःकुर्यात्संनिपातेत्वयंक्रमइति ॥
इदंतुमातापितृव्यतिरिक्तानांतुल्यसंबंधानामेकस्मिन्दिनेक्रमेणमृता
नांमरणक्रमेणश्राद्धंकर्त्तव्यमित्येवंपरम् ॥ भृगुऋष्यशृंगवाक्येष्वग्न्या
द्युपद्रवेणतुल्यकालमृतविषयेमातापितृविषयेविशेषमाह ॥ कार्ष्णा
जिनिः ॥ पित्रोःश्राद्धेसमंप्राप्तेनचपर्युषितेपिवा ॥ पितृपूर्वंसुतःकुर्या
दन्यत्रासत्तियोगतः ॥ ननु नैकःश्राद्धद्वयंकुर्यात्समानेहनिकुत्रचित्॥
इतिप्रचेतसाएकस्मिन्दिनेश्राद्धद्वयकरणंनिषिद्धंतत्कथमुच्यतेसंबंध
क्रमेणैकोबहूनिश्राद्धानिकुर्यादिति ॥ सत्यम् ॥ देवताभेदेनिमि
त्तभेदेचैकस्यानेकश्राद्धकरणविधानम् ॥ तदुक्तंजाबालिना ॥
श्राद्धंकृत्वातुतस्यैवपुनःश्राद्धंनतद्दिने ॥ नैमित्तिकंतुकर्तव्यंनिमि
तानुक्रमोदयमिति ॥ यथा ॥ श्राद्धंकृत्वापुनःश्राद्धंनकुर्यादेक
वासरे ॥ यदिनैमित्तिकंनस्यादेकोद्दिष्टंभवेदिति ॥ कात्यायनोपि ॥
द्विबहूनिनिमित्तानिजायेरन्नेकवासरे ॥ नैमित्तिकानिकार्याणिनिमित्तो
त्पत्त्यनुक्रमादिति ॥ नियतानियतनिमित्तयोःश्राद्धयोःसंनिपातेऽ
नियतनिमित्तस्यानुष्ठानादेवनियतनिमित्तमपिसिद्ध्यतीत्यनियतनि
मित्तमेवकुर्यात् ॥ यथा ॥ नित्यश्राद्धदर्शश्राद्धयोःसंनिपातेदर्श
श्राद्धेनैवनित्यश्राद्धसिद्धिः ॥ उदकुंभमासिकयोर्मासिकेनैवो
दकुंभसिद्धिः॥ एवंमाघामावास्यायांयुगादिश्राद्धेनैवदार्शिकसिद्धिः ॥
॥ तथा दर्शग्रहणाद्यर्द्धोदयाद्यलभ्ययोगश्राद्धेनैवदार्शिकसिद्धिः ॥
एवंफाल्गुनामावास्यायांमन्वादिनिमित्तश्राद्धेनैवदार्शिकश्राद्धसिद्धि
रिति ॥ तदुक्तंकालादर्शे ॥ नित्यदार्शिकयोश्चोदकुंभमासिकयोरपि॥
दार्शिकस्ययुगादेश्चदार्शिकालभ्ययोगयोः ॥ दार्शिकस्यचमन्वादेः
संपातेश्राद्धकर्मणाम् ॥ प्रसंगादितरस्यापिसिद्धेरुत्तरमाचरेदिति ॥

नियतानियतनिमित्तत्वेपिदेवताभेदेनश्राद्धद्वयंकार्यम् ॥ तदुक्तंका
लादर्शएव ॥ नित्यस्यचोदकुंभस्यदार्शमासिकयोरपि ॥ नित्य
स्यचाब्दिकस्यापिदार्शिकाब्दिकयोरपि ॥ युगाद्याब्दिकयोश्चापि
मन्वाद्याब्दिकयोरपि ॥ प्रत्याब्दिकेषुचालभ्ययोगेषुविहितस्यच ॥
संपातदेवताभेदाच्छ्राद्धयुग्मंसमाचरेत् ॥ तत्रानित्यदार्शिकयोःष
ड्दैवत्वंमासिकोदकुंभयोरेकोद्दिष्टत्वाद्देवताभेदः ॥ तथा नित्यदार्शि
कयुगादिमन्वाद्यालभ्ययोगनिमित्तश्राद्धानांषड्दैववत्वात् प्रत्या
ब्दिकस्यत्रिदैवत्वादेकोद्दिष्टत्वाद्वादेवताभेदइति ॥ अत्राप्यनियतनि
मित्तस्यैवप्राबल्यात्पूर्वमुदकुंभमासिकाब्दिकाद्यनियतनिमित्तंकृत्वा
पश्चान्नियतनिमित्तंनित्यदार्शिकादिश्राद्धंकुर्यात् ॥ तथाचोक्तंकालाद
र्शे॥निमित्तानियतिश्चात्रपूर्वानुष्ठानकारणमिति ॥ पार्वणैकोद्दिष्टयोरे
कत्रकार्यत्वेपार्वणंकृत्वैकोद्दिष्टंकुर्यात् ॥ यदाहजाबालिः ॥ [1]यदैकत्र
भवेद्युग्ममेकोद्दिष्टंचपार्वणम् ॥ पार्वणंत्वभिनिर्वर्त्यएकोद्दिष्टंसमा
चरेदिति ॥ व्याध्यादिनिमित्तेनश्राद्धविघ्नेसमुत्पन्नेसतिकृष्णैकाद
श्यामभावास्यायांवाश्राद्धंकुर्यात् ॥ तदुक्तंमरीचिना ॥ श्राद्धवि
घ्नेसमुत्पन्नेप्यविज्ञातेमृतेहनि ॥ कुर्यादन्नेनकृष्णायामेकादश्यां
विधुक्षयइति ॥ अत्रमृताहनि श्राद्धविघ्नेसमुत्पन्नेअविज्ञातेपीत्य
न्वयः ॥ अतश्चमृताहश्राद्धस्यैवमासिकस्यसांवत्सरिकस्यचकृष्णै
कादश्याममावास्यायांविधानात् ॥ नान्यस्यश्राद्धस्य ॥ सूतकेना
ब्दिकश्राद्धेंतरितेसूतकानंतरितेदिनेतत्कुर्यात् ॥ तदाहऋष्यशृंगः ॥
आब्दिकेचैवसंप्राप्तेआशौचंजायतेयदि ॥ आशौचेतुव्यतिक्रांतेतत्र
श्राद्धंविधीयतइति ॥ आशौचानंतरदिनेपिकरणासंभवेअमावास्या
यांकुर्यात्॥तदाहगोभिलः॥दैवात्प्रत्याब्दिकेश्राद्धअंतरामृतसूतके ॥

---

१ यद्येकत्रभवेताश्चेदेकोद्दिष्टश्चपार्वणम् इ० पा० ।

आशौचानंतरंकुर्यात्तन्मासेंदुक्षयेपिचेति ॥ केचित्त्वाशौचानंतरंपु
नःक्षयाहतिथावेवकार्यमित्याहुः ॥ तथा ॥ तदहश्चेत्प्रमुच्येतके
नचित्सूतकादिना ॥ सूतकानंतरंकुर्यात्पुनस्तदहरेवचेति ॥ अत्रसूत
कानंतरमितिसूतकपदंविघ्ननिमित्तोपलक्षकम् ॥ यदातुपत्न्यैवभर्तुः
श्राद्धकर्त्रीश्राद्धदिनेरजस्वलाभवतितदापंचमेहनिश्राद्धंकुर्यात् ॥ तदा
हगौतमः ॥ अपुत्रातुयदाभार्यासंप्राप्तेभर्तुराब्दिके ॥ रजस्वला
भवेत्सातुकुर्यात्तत्पंचमेहनीति ॥ तथाच ॥ आब्दिकेसमनुप्राप्तेयस्य
भार्यारजस्वला ॥ पंचमेहनितच्छ्राद्धंनकुर्यात्तन्मृतेहनीति ॥यस्यभा
र्य्यारजस्वलातस्यश्राद्धंभार्याकर्त्रीमृताहेरजोयुक्तानकुर्याद्रजोदोषांते
पंचमेहनिकुर्यादित्यर्थः ॥ यत्तु आपद्यनग्नौतीर्थेचप्रवासेपुत्रजन्म
नि ॥ आमश्राद्धंप्रकुर्वीतयस्यभार्यारजस्वलेति ॥ तथा ॥ आर्तवेदे
शकालानांविप्लवेसमुपस्थिते॥ आमश्राद्धंद्विजैः कार्यंशूद्रःकुर्यात्सदैव
हीतिकात्यायनव्याघ्रपादवचनाभ्यांपुत्रादिःकर्तास्वभार्यायांरजस्व
लायामामश्राद्धंकुर्यादित्युक्तम् ॥तन्मृताहव्यतिरिक्तश्राद्धविषयम् ॥
तदाहलौगाक्षिः ॥ पुष्पवत्स्वपिदारेषुविदेशस्थोप्यनाग्निकः ॥ अन्ने
नैवाब्दिकंकुर्याद्धेम्नाचामेननक्वचिदिति ॥ अन्नेनपक्वान्नेन ॥ मरी
चिरपि ॥ अनग्निकःप्रवासीचयस्यभार्यारजस्वला ॥ आमश्राद्धं
प्रकुर्वीतनतत्कुर्यान्मृतेहनीति॥कार्ष्णाजिनिरपि ॥आपन्नोप्याब्दिकंनै
वकुर्यादामेनकुत्रचित् ॥ अन्नेनतदमायांतुकृष्णेवाहरिवासरइत्यादिवा
क्यैराब्दिकेआमश्राद्धनिषेधात्पत्न्यारजस्वलात्वेपिस्वयमन्यैर्वाशि
ष्टैःपक्वेनान्नेनप्रत्याब्दिकश्राद्धंकुर्यात् ॥ रजस्वलाकर्त्रीचेत्सापंचमेहनि
कुर्य्यादितिसिद्धम् ॥ यस्यपरदेशादिमृतस्यमृतमासोज्ञायते नपुन
र्दिनम् ॥ तस्यतन्मासामावास्यायांकृष्णैकादश्यांवाऽऽब्दिकंकुर्या
त् ॥ तदाहबृहस्पतिः ॥ नज्ञायतेमृताहश्चेत्प्रोषितेसंस्थितेसति ॥
मासश्चेत्प्रतिविज्ञातस्तदर्शःस्यादथाब्दिकामिति ॥ मरीचिरपि ॥

श्राद्धविघ्नेसमुत्पन्नेवाविज्ञातेमृतेहनि ॥ एकादश्यांतुकर्त्तव्यंकृष्णप
क्षेमृतेहनिति ॥ दिनज्ञानेमासाज्ञानेत्वाषाढेमाघेवातद्दिनेकार्यम् ॥
तदुक्तंबृहस्पतिना ॥ यदामासोनविज्ञातोविज्ञातंदिनमेवतु ॥ तदा
चाषाढकेमासिमाघेवातद्दिनेभवेदिति ॥ मरीचिरपि ॥ विज्ञातंदिन
मेवस्यान्नमासोज्ञायतेयदा ॥ तदाचाषाढकेमासिमाघेवातद्दिनेभवेदि
ति॥यदोभयमपिनज्ञायतेतदाप्रवासमासदिवसौग्राह्यौ ॥ तदाहबृहस्प
तिः॥दिनमासाववविज्ञातौमरणस्ययदापुनः॥प्रस्थानमासदिवसौग्राह्यौ
पूर्वोक्तयादिशेति ॥अस्यायमर्थः ॥यदाप्रस्थानमासदिवसौज्ञातौतदा
तावेवग्राह्यौ यदामासोज्ञातोदिनंनज्ञातंतदातन्मासामावास्यैकादश्यौ
तद्दिनम्॥यदादिनंज्ञातंमासोनज्ञातस्तदाषाढमाघयोस्तद्दिने ॥ यदा
मरणप्रस्थानमासदिनाज्ञानंतदामृतवार्ताश्रवणदिने ॥तत्राप्यसंभवेवा
र्ताश्रवणमासमाघामावास्यायांवाकुर्यात्॥ तदुक्तंप्रचेतसा ॥अपरिज्ञा
तेमावास्यायांश्रवणदिनेवेति॥ प्रत्याब्दिकश्राद्धदिनेवेति॥ प्रत्याब्दि
कश्राद्धदिनेद्रव्याद्यभावाच्छ्राद्धकरणासंभवेपिंडप्रदानमात्रंकुर्यात् ॥
तदसंभवेतूपवासंवाकुर्यात् ॥ तदुक्तम्॥पिंडमात्रंप्रदातव्यमभावेश्राद्ध
विप्रयोः॥श्राद्धेहनितुसंप्राप्तेभवेन्निरशनोपिवेति ॥ पात्राभावेतुविशेषः
स्मृत्यंतरेप्रोक्तः ॥ पात्राभावेपरंकृत्वापितृयज्ञविधिंनरः ॥ निर्दिश्या
प्यन्नमुद्धृत्ययत्रपात्रंततोनयेदिति ॥ पितृयज्ञविधिंश्राद्धविधिम्॥अन्य
त्रापि ॥ सर्वाभावेक्षिपेदग्नौगवेदद्यात्तथाप्सुवा ॥ नतुप्राप्तस्यलोपो
ऽस्तिपैतृकस्यविशेषतइति ॥ सर्वस्योक्तस्यानिषिद्धस्यचपात्रस्यचा
भावेइत्यर्थः ॥ अतिदरिद्रस्यतर्पणमात्रपर्याप्ततिलाद्यभावेवृद्धवासि
ष्ठेनविशेषउक्तः ॥ अग्निनावादहेत्कक्षंश्राद्धकालेसमागते ॥ तस्मि
न्नोपवसेदह्निजपेद्वाश्राद्धसंहितामिति ॥ कक्षंतृणसमूहंनापुरुषः ॥
विष्णुपुराणेतु ॥ सर्वाभावेवनंगत्वाकक्षामूलप्रदर्शकः ॥ सूर्यादिलोक
पालानामिदमुच्चैःपठिष्यति॥नमेस्तिवित्तंनधनंनचान्यच्छ्राद्धोपयोगि

स्वपितॄन्नतोऽस्मि ॥ तृप्यंतु भक्त्यापितरौमयैतौभुजौकृतौवर्त्मनिमारु तस्य ॥ इत्यंतैःपितृभिर्गीतंभाव्यंभावप्रयोजकम् ॥ यःकरोतिकृतं तेनश्राद्धंभवतिपार्थिवेति ॥ क्षयाहतिथौग्रहणेसतिभोक्तभावाद्विजो ऽप्यामेनहेम्नावाप्रत्याब्दिकंकुर्यात्॥ भोक्तृसंभवेतुपक्वान्नेनैवकुर्यात् ॥ तदाहगोभिलः ॥ दर्शेरविग्रहेपित्रोःप्रत्याब्दिकमुपस्थितम् ॥ अन्ने नासंभवेहेम्नाकुर्यादामेनवासुतइति ॥ अत्रदर्शादिशब्दःपूर्णिमाचंद्र ग्रहणादीनामुपलक्षकः ॥ अतश्चपुत्रव्यतिरिक्तेनाप्यधिकारिणाव श्यकसपिंडश्राद्धंचंद्रसूर्यग्रहणेप्यामेनहेम्नावाकार्यं न्यायस्यतुल्य त्वात् ॥ एवंमासिकेपिविज्ञेयम् ॥ मासिकसांवत्सरिकव्यतिरिक्तंतु श्राद्धंविघ्नेसतिद्विजोप्यामेनैवकुर्यात् ॥ तदुक्तम् ॥ श्राद्धविघ्नेद्वि जातीनामामश्राद्धंप्रकीर्त्तितम् ॥ अमावास्यादिनियतंमाससंवत्स राहते ॥ अत्रमाससंवत्सराहतइतिग्रहणव्यतिरिक्तविषयम् ॥ ग्रहण विषयेमासिकसांवत्सरिकयोरपिगोभिलवाक्येनामश्राद्धविधानात् ॥ अथप्रसंगादन्योप्यामश्राद्धकालउच्यते॥ तदाहकात्यायनः ॥ आप द्यनग्नौतीर्थेचप्रवासेपुत्रजन्मनि ॥ आमश्राद्धंप्रकुर्वीतभार्यारजसिसंक्र मइति॥ बौधायनोपि॥ संक्रमेन्नद्विजाभावेप्रवासेपुत्रजन्मनि ॥ हेमश्रा द्धंसंग्रहेचद्विजःशूद्रःसदाचरेदिति ॥ द्विजानांब्राह्मणक्षत्रियावि शांसंक्रमादिष्वामहेमश्राद्धाधिकारः ॥ शूद्रस्यतुसदैव ॥ तथाचसुमं तुः ॥ पाकाभावेधिकारःस्याद्विप्रादीनांनराधिप ॥ अपत्नीनांमहाबा होविदेशगमनादिभिः ॥ सदाचैवतुशूद्राणामामश्राद्धंविदुर्बुधाइति ॥ जमदग्निरपि ॥ यावत्स्यादग्निसंयुक्तउत्सन्नाग्निरथापिवा ॥ आमश्रा द्धंतथाकुर्याद्धस्तेग्नौकरणंभवेदिति॥ प्रचेताश्च ॥ स्त्रीशूद्रःस्वपचश्चैव जातकर्मणिचाप्यथ ॥ आमश्राद्धंतदाकुर्याद्विधिनापार्वणेनतुइति ॥ स्वपचःस्वयंपचतीत्यपत्नीकइत्यर्थः ॥ आमश्राद्धेपक्वान्नस्थाने ॥ आमान्नमात्रंविशेषःविधिः सर्वोपिसएव ॥ तदुक्तंव्यासेन ॥ सिद्धा

न्नेतुविधिर्यः स्यादामश्राद्धेप्ययंविधिः ॥ आवाहनादिसर्वस्यात्पिडदा
नंचभारत ॥ दद्याच्चैवद्विजातीनांशृतंवाऽशृतमेवच ॥ तेनाग्नौकरणंकु
र्यात्पिडांस्तेनैवनिर्वपेदिति ॥ षट्त्रिंशन्मतेतु पिंडदानेविशेषउक्तः ॥
आमश्राद्धंयदाकुर्यात्पिडदानंकथंभवेत् ॥ गृहपाकात्समुद्धृत्यसक्तु
भिःपायसेनवेति ॥ अत्रआमहेम्नोर्यथालाभंस्वीकारः ॥ आ
मान्नेतुव्यासेनैवविशेषउक्तः ॥ आमंददात्तुकौन्तेयदद्यादामंचतुर्गु
णमिति ॥ चतुर्गुणंतुपुरुषाहारापेक्षयाद्विगुणान्नदानाविधयस्त्वश
क्तविषयावेदितव्याः ॥ केषुचिन्मंत्रेषूहमपिमरीचिराह ॥ आवा
हनेस्वधाकारेमंत्राऊह्याविसर्जने ॥ अन्यकर्मण्यनूह्याःस्युराम
श्राद्धविधिःस्मृतइति ॥ आमश्राद्धकालस्तुगालवेनोक्तः ॥
आमश्राद्धंतुपूर्वाह्णेसिद्धान्नेनतुमध्यतः ॥ पार्वणंचापराह्णेतुवृद्धिश्राद्धं
तथाग्निकमिति॥अत्रसिद्धान्नेनतुमध्यतइत्येकोद्दिष्टविषयंप्रतीयते ॥
पार्वणस्यापराह्णेविधानात् ॥ एकोद्दिष्टंचमध्याह्नइतिवचनबलाच्च ॥
आग्निकमित्यग्न्याधाननिमित्तम्॥ एतच्चामश्राद्धंशूद्रस्यब्राह्मणभोजन
निषेधान्नित्यम्॥निषेधस्तुसुमंतुनोक्तः॥ नपक्कंभोजयेद्विप्रान्सच्छूद्रो
ऽपिकदाचन॥ भोजयन्प्रत्यवायीस्यान्नचतस्यफलंलभेदिति ॥अतश्च
नित्यंशूद्रकर्तृकामश्राद्धमपराह्णेकार्यम् ॥ तदुक्तम् ॥ मध्याह्ना
त्परतोयस्तुकुतपःसमुदाहृतः ॥ आममात्रेणतत्रैवपितॄणांदत्तमक्षय
मिति॥आमश्राद्धंपूर्वाह्णइत्येतत्तुद्विजकर्तृकनित्यमामश्राद्धविषयम् ॥
अतश्चानयोर्वाक्ययोर्नविरोधः ॥ ॥ इत्यामश्राद्धनिर्णयः ॥

॥ अथजीवत्पितृकस्यश्राद्धकालउच्यते ॥ तत्र ॥ सपितुःपितृकृत्ये
षुअधिकारोनविद्यते ॥ नजीवंतमतिक्रम्यकिंचिद्दद्यादितिश्रुतिरि
ति ॥कात्यायनेनजीवत्पितृकस्यश्राद्धाधिकारेनिषिद्धेपिगृह्यपरिशिष्टे
तदपवादउक्तः ॥ यथा ॥ उद्वाहेपुत्रजननेपित्र्येष्ट्यांसौमिकेम
खे ॥ तीर्थेब्राह्मणआयातेषडेतेजीवतःपितुरिति ॥ जीवत्पितृकस्य

षडेतेश्राद्धकालाइत्यर्थः ॥ पित्र्येष्टिश्चातुर्मास्येषुविहितापिंडापितृ यज्ञेवा ॥ पितरिपातित्यादिदोषयुक्तेसंन्यस्तेवाउक्तकालातिरिक्तका लेष्वपिकुर्यात् ॥ ॥ तदुक्तम् ॥ ब्राह्मणादिहतेतातेपतिते संगव र्जिते ॥ येभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतइति ॥ ॥ सुमं तुरपि ॥ ॥ नजीवत्पितृकःकुर्याच्छ्राद्धमग्निमृतेद्विजः ॥ येभ्यएवपि ताकुर्यात्तेभ्यःकुर्वीतसाग्निकइति ॥ साग्निकस्त्वाहिताग्निरनाहिताग्नि रपि ॥ यत्तुहारीतवचनम् ॥ अनग्निकोपिकुर्वीतजन्मादौवृद्धिकर्म णि ॥ येभ्यएवपितादद्यात्तानेवोद्दिश्यपार्वणमिति ॥ अत्रानग्निकइत्य नाहिताग्निरभिप्रेतः॥ अन्यथासुमंतुवचनेनविरोधःस्यात् ॥ सुमंतुना तुविशेषउक्तः ॥ ध्रियमाणेतुपितरिपूर्वेषामेवनिर्वपेत् ॥ विप्रवद्वापि तंश्राद्धेस्वकंपितरमाशयेदिति ॥ पितामहेजीवतिपितृप्रपितामहयो र्मृतयोःसएवाह ॥ पितायस्यतुवृत्तःस्याज्जीवेच्चापिपितामहः ॥ पितुः सनामसंकीर्त्यकीर्तयेत्प्रपितामहमिति॥पितामहोवातंश्राद्धंभुंजीतेत्य ब्रवीन्मनुः ॥ पितुःसनामेति ॥ अस्मत्पितुःपितामहमिति स्वप्र पितामहंकीर्तयेदित्यर्थः ॥ पितरिपितामहेचजीवतिप्रपितामहादीनां त्रयाणांश्राद्धंकुर्यात् ॥ ॥ तदुक्तंविष्णुना ॥ ॥ पितरिजीवतियेषां पिताकुर्यात्तेषांकुर्यात् ॥ पितरिपितामहेचजीवतियेषांपितामहःकु र्यात्तेषांकुर्यात् ॥ पितरिपितामहेप्रपितामहेचजीवतिनैवकुर्यात् ॥ यस्यपिताप्रेतःसपित्रेपिंडंनिधायप्रपितामहात्परंद्वाभ्यांदद्यात् ॥ य स्यपिताप्रपितामहश्चप्रेतौसपित्रेपिंडंनिधायपितामहात्परंद्वाभ्यांदद्या दिति ॥ यस्यपितामहःप्रेतःसतस्मैपिंडंनिधायप्रपितामहात्परंद्वाभ्यां दद्यात् ॥ यस्यपितापितामहश्चप्रेतौसताभ्यांपिंडौदत्वाप्रपिताम हात्परंएकस्मैदद्यादिति ॥ निगमेपि ॥ योजीवत्पितृणांतेभ्यो यजेत्स्वपितृस्थानकइत्येके ॥ जीवतामजीवतांवादेयमितिहिरण्य केतुरपि ॥ अथजीवत्पितृकस्ययत्रश्राद्धनिषेधस्तदुच्यते ॥ यथाहलौगाक्षिः ॥ आमश्राद्धंगयाश्राद्धंश्राद्धंचापरपक्षिकम् ॥ नजी

वतिपतृकःकुर्यात्तिलैःकृष्णैश्चतर्पणमिति ॥ ॥ क्रतुरपि ॥ ॥ अष्ट
कासुचसंक्रांतौमन्वादिषुयुगादिषु ॥ चन्द्रसूर्यग्रहेपातेस्वेच्छयापूज्य
योगतः ॥ जीवत्पितानैवकुर्याच्छ्राद्धंकाम्यंतथाखिलमिति ॥ अत्रा
ष्टकाआन्वष्टक्यव्यतिरिक्ताएवआन्वष्टक्यश्राद्धविधानात्॥ ॥ तदुक्तं
मैत्रायणीयेगृह्यपरिशिष्टे ॥ आन्वष्टक्येगयाप्राप्तौसत्यांयच्चमृतेहनि ॥
मातुःश्राद्धंसुतःकुर्यात्पितर्यपिचजीवति॥अत्रगयाप्राप्तौसत्यामिति दै
वात्प्रसंगिकप्राप्तौगयायांश्राद्धविधायकम् ॥ आमश्राद्धंगयाश्राद्ध
मितितुश्राद्धोद्देशेनैवगयांगत्वातत्रश्राद्धंनप्रकर्तव्यमित्येतत्परम् ॥
अतश्चनविरोधः ॥ ॥ इतिश्रीसूर्यसेन॰निर्णयामृतेश्राद्धप्रकरणेद्वि
तीयेमृताहनिर्णयः॥ ॥अथमहालयापरपक्षश्राद्धनिर्णयःप्रस्तूयते ॥
॥ आश्विनमासकृष्णपक्षोपरपक्षः ॥ सएवमहालयोप्युच्यते ॥ तत्रषो
डशदिनानिश्राद्धादिषुपुण्यतमानि ॥ तदुक्तंब्रह्मांडपुराणे ॥
कन्यागतेसवितरियान्यहानितुषोडश ॥ क्रतुभिस्तानितुल्यानितेषु
दत्तमथाक्षयमिति ॥ शुक्लप्रतिपदासहषोडशसंख्यापूरणम् ॥ तस्याऽ
पिचंद्रक्षयाविशेषाद्दर्शात्मकत्वात् ॥ तदुक्तंदेवलेन ॥ अहः
षोडशकंयत्तुशुक्लप्रतिपदासह ॥ चंद्रक्षयाविशेषेणसापिदर्शात्मिका
स्मृतेति ॥ मनुरपि ॥ नभस्यस्यापरःपक्षोयत्रकन्यांव्रजेद्र
विः ॥ समहालयसंज्ञःस्याद्गजच्छायाह्वयस्तथेति ॥ अत्रनभस्यस्ये
तिशुक्लप्रतिप्रदादिचांद्रमासाभिप्रायेण ॥ यमोऽपि ॥ आषाढीमव
धिंकृत्वायःपक्षःपंचमोभवेत् ॥ तत्रश्राद्धंप्रकुर्वीतकन्यास्थोर्कोभवेन्नचे
ति ॥ सांख्यायनिरपि ॥ पुण्यःकन्यागतेसूर्यःपुण्यःपक्षश्चपं
चमः॥ कन्यास्थार्कान्वितःपक्षःसोत्यंतंपुण्यउच्यतइति ॥ अत्रपंच
मपक्षोमलमाससंबंधीचेत्तदातमतिक्रम्यशुद्धपक्षएवश्राद्धादिकंकार्यम्
॥ तदाहभृगुः ॥ एकराशिस्थितेसूर्येयदादर्शद्वयंभवेत् ॥ हव्य
कव्यक्रियाहंतातदाज्ञेयोधिमासकः ॥ वृद्धिश्राद्धंतथासोममग्न्या
धेयंमहालयम् ॥ राजाभिषेकंकाम्यंचनकुर्याद्भानुलंघितइति ॥ यत्तू

क्तं॥कन्यास्थोर्कोभवेन्नचेति ॥ तदादौमध्येऽवसानेवाकन्यागतेपिसूर्ये प्रतिपदमारभ्यपक्षश्राद्धेकर्तव्येसंपूर्णपक्षस्यकन्यागतत्वसूचनार्थम् ॥ ॥ तदाहकार्ष्णाजिनिः ॥ ॥ आदौमध्येवसानेवायत्रकन्यांव्रजे द्रविः ॥ सपक्षःसकलःपूज्यःश्राद्धषोडशकंप्रतीति ॥ ॥ जाबालिरपि ॥ अगतेपिरवौकन्यांश्राद्धंकुर्वीतसर्वदा ॥ आषाढ्याःपंचमः पक्षःप्रशस्तःपितृकर्मस्विति ॥ अतश्चापरपक्षेश्राद्धमावश्यकम् ॥ तच्चपार्वणविधिनाषड्दैवतंकार्यम् ॥ ॥ तदाहगौतमः ॥ ॥ पितरो यत्रपूज्यंतेतत्रमातामहाअपि ॥ अविशेषेणकर्त्तव्यंविशेषान्नरकंव्रजे दिति ॥ ॥ कौत्सोपि ॥ ॥ उत्तराहस्तचित्रासुकन्यायांभास्वति स्थिते ॥ कृष्णपक्षोगजच्छायासमानःपितृकर्मसु ॥ पार्वणस्यावृताकु र्यादक्रोधःश्राद्धमत्रत्विति ॥ आवृताप्रकारेण॥जाबालिरपि ॥ पुत्रा नायुस्तथारोग्यमैश्वर्यमतुलंतथा ॥ प्राप्नोतिपञ्चमेकृत्वाश्राद्धंकामां स्तथानरइति ॥ नन्वपरपक्षश्राद्धंनित्यमित्युक्तम् ॥ अत्रफलश्रव णात्काम्यंप्रतीयतेतत्कथंविरोधपरिहारइतिचेत् ॥ सत्यम् ॥ नित्या निनैमित्तिकानिचावश्यकानिफलसंप्रयोगात्काम्यानिभवंतीत्युभय रूपाणि ॥अतश्चनविरोधः ॥ अस्यचाद्यंतदैवत्वेनदार्शिकादिभ्योभे दः ॥ ॥ तदाहदेवलः ॥ ॥ दैवाद्यंनैवकुर्वीतदैवांतंनैवकुत्राचि त ॥ दैवाद्यंतंहिकुर्वीतश्राद्धंरक्षणहेतुनेति ॥ आदौ देवताविश्वेदेवाः॥ अंत्येदेवताविष्णुरिति ॥ एवंसर्वस्मिन्नपिपक्षेश्राद्धंकुर्यात्तदशक्तौपञ्च म्यादितदशक्तावष्टम्यादितदशक्तौदशम्यादिदर्शपर्यन्तम् ॥ तदश क्तावनिषिद्धेएकस्मिन्वादिनेकुर्यात् ॥ ॥ तदाहगौतमः ॥ तथा परपक्षेश्राद्धंपितृभ्योदद्यात्पंचम्यादिदर्शांतमष्टम्यादिदशम्यादिसर्व स्मिन्वेति ॥ ॥ तदुक्तंब्रह्मांडपुराणे ॥ ॥ आश्वयुक्कृष्णपक्षेतुश्राद्धं कुर्याद्दिनेदिने ॥ त्रिभागहीनेपक्षेवात्रिभागंचार्धमेवचेति ॥ अत्राश्व युगितिकृष्णप्रतिपदादिमासाभिप्रायेण ॥ त्रिभागहीनंपंचम्यादिद

र्शितम्॥तत्रचतुर्थ्यंताश्चतस्रश्चतुर्दशीचेतिपंचतिथयोन्यूनाइतित्रिभागहीनत्वम्॥ त्रिभागमिति दशम्यादिदर्शांतम्॥ तत्रापिचतुर्दश्यासहदशतिथयोहीनाभवंति॥ अर्द्धमित्यष्टम्यादिदर्शांतंपंचम्यादिपक्षेषुचतुर्दशींवर्जयित्वाश्राद्धविधानात्॥ यथाहमनुः॥ कृष्णपक्षेदशम्यादौवर्जयित्वाचतुर्दशीम्॥ श्राद्धेप्रशस्तास्तिथयोयथैतानतथेतराइति॥ अत्रदशम्यादावित्यादिशब्देनपंचम्याद्यष्टम्यादिपक्षयोरुपसंग्रहः॥ प्रतिपदादिपक्षेतुचतुर्दश्यादिकंनवर्ज्यम्॥ तदाहकार्ष्णाजिनिः॥ नभस्यस्यापरेपक्षेश्राद्धंकुर्याद्दिनेदिने॥ नैवनंदादिवर्ज्यंस्यान्नैववर्ज्याचतुर्दशीति॥ यत्तुयाज्ञवल्क्यवचनम्॥ प्रतिपत्प्रभृतिष्वेकांवर्जयित्वाचतुर्दशीमिति॥ तदप्यूर्ध्वंचतुर्थ्यायदहःसंपद्यते॥ सप्तम्याऊर्ध्वंयदहःसंपद्यते॥ऊर्ध्वंनवम्यायदहःसंपद्यते॥ऋतेचतुर्दशींशाकेनाप्यपरपक्षंनातिक्रामेदित्यादिविशेषवचनबलादाद्यपक्षव्यतिरिक्तपक्षेष्वेवावतिष्ठते॥यदात्वेकस्मिन्नेवदिने श्राद्धंकुर्यात्तदाशुक्रवारादिवर्जयेत्॥ तदाहगार्ग्यः॥ नंदायांभार्गवदिनेत्रयोदश्यांत्रिजन्मसु॥ एषुश्राद्धंनकुर्वीतगृहीपुत्रधनक्षयादिति॥ कार्ष्णाजिनिरपि॥ ऋतेनैमित्तिकंकाम्यंश्राद्धंयस्तुमघोडुनि॥दद्यात्तज्ज्येष्ठपुत्रस्यनाशःस्यादितिनिश्चितमिति॥ तथा॥ मघायांपिंडदानेनज्येष्ठपुत्रोविनश्यति॥ अत्रापिपिंडदानस्यश्राद्धपूर्वकत्वाच्छ्राद्धनिषेधएवपर्यवसानम्॥ वृद्धगार्ग्योपि॥ प्राजापत्येचपौष्णेचपित्र्यर्क्षेभार्गवेतथा॥ यस्तुश्राद्धंप्रकुर्वीततस्यपुत्रोविनश्यति॥ प्राजापत्यंरोहिणी॥ पौष्णंरेवती॥ पित्र्यर्क्षंमघा॥ भार्गवःशुक्रवारः॥ तथा॥ भार्गेभौमेत्रयोदश्यांनंदाभृगुमघासुच॥ पिंडदानंमृदास्नानंनकुर्यात्तिलतर्पणमिति॥ एतानिवर्जयित्वाशुभेकस्मिंश्चिद्दिनेश्राद्धंकुर्यात्॥ तच्चश्राद्धंमातॄणांपतिभिःसहपृथग्वाकुर्यात्॥ तदुक्तमपरार्के॥ गयामहालयादौतुपृथक्सहवास्वभर्तृभिरिति॥ स्मृत्यर्थसारेपि॥ तत्रमातृश्राद्धं

पृथक्कार्य्यंमातामहानांसपत्नीकमेवेति ॥ चतुर्विंशतिमतेपि ॥ केचिदिच्छंति नारीणांपृथक्श्राद्धंमहर्षयइति ॥ तत्रैकस्मिन्नेवकाले एकपाकेनैकएवकर्ताचार्यइतिभ्रात्रादिकाण्यनामेकोद्दिष्टविधानेनश्राद्धानिकुर्यात् ॥ आचार्यगुरुशिष्येभ्यःसखिज्ञातिभ्यएवच ॥ तत्पत्नीभ्यश्चसर्वाभ्यस्तथैवचजलांजलीन् ॥ पिंडांस्तेभ्यस्तदा दद्यात्कन्याभाद्रपदेनरः ॥ तीर्थेषुचैवसर्वेषुमाघमासेमघासुच ॥ एकस्मिन्ब्राह्मणेसर्वानाचार्यादीन्प्रपूजयेत् ॥ दशद्वादशवापिंडान् दद्यादकरणंनतु ॥ नैयोगिकोविधिर्नूनंपक्षेवैपंचमेस्मृतः ॥ तस्मिन्दत्तंहविर्नूनंपितॄणामक्षयंभवेत् ॥ एकस्मिन्ब्राह्मणइत्यशक्तविषयम् ॥ ब्राह्मणासंभवविषयंच ॥ तथाभृगुरपि ॥ एककालेगतासूनाम्बहूनामथवाद्वयोः ॥ तंत्रेणश्रपणंकृत्वाकुर्याच्छ्राद्धंपृथक्पृथगित्युक्त्वासएवाह॥ संनिपातेष्वयंक्रमइति ॥ स्मृत्यर्थसारेपि ॥ गुर्वाचार्यपितृव्यमातुलश्वशुरोपाध्यायभ्रातृसखिप्रियपोषकद्रव्यदत्तपुत्र-शिष्यर्त्विगादीनांतत्स्त्रीणांचश्राद्धंकार्यम् ॥ अपुत्राणांविशेषेणकार्यम् ॥ तत्रैकःपाकः ॥ वैश्वदेवंतंत्रं पिंडोबर्हिश्चैकमिति ॥ एतेषामेकोद्दिष्टविधानंसुमंतुराह ॥ सपिंडीकरणादूर्ध्वंयत्रयत्रप्रदीयते ॥ भ्रात्रेभगिन्यैपुत्रायस्वामिनेमातुलायच ॥ मित्रायगुरवेश्राद्धंमेकोद्दिष्टंनपार्वणमिति ॥ पुराणसमुच्चयेविशेषउक्तः ॥ एकादश्यांप्रकुर्वीतएकोद्दिष्टानिसर्वशः॥ यस्याधिदेवताविष्णुःपितृवर्गस्यकृत्स्नशइति ॥ अत्रापिसंबंधानतिक्रमेणश्राद्धंकुर्यात् ॥ अत्राष्टम्यांश्राद्धंगयाश्राद्धसमम् ॥ तदुक्तंब्रह्मपुराणे ॥ आषाढ्याःपंचमेपक्षेगयामध्याष्टमीस्मृता ॥ त्रयोदशीगजच्छायागयातुल्यातुपित्रियाइति ॥ त्रयोदशीच मघानक्षत्रयोगाद्गजछायेत्युच्यते ॥ तदुक्तंयमस्मृतौ ॥ यदेंदुःपितृदैवत्येहंसश्चैवकरेस्थितः ॥ याम्यातिथिर्भवेत्साहिगजच्छायाप्रकीर्तितेति ॥ पितृदैवत्यंमघा ॥ करोहस्तनक्षत्रम् ॥ हंससूर्यः ॥

१ त्रयोदशीगजच्छायाश्राद्धेपुण्यैरवाप्यते० इ० पा० ।

तिचेत् ॥ सत्यम् ॥ त्रयोदश्यांमातामहवर्गान्परित्यज्यापितृवर्गस्यैव चश्राद्धंनकर्तव्यमित्येवंपरत्वान्निषेधवाक्यस्येत्यविरोधः ॥ एकवर्ग श्राद्धनिषेधश्चकार्ष्णाजिनिनोक्तः ॥ श्राद्धैनैकस्यवर्गस्यत्रयोदश्या मुपक्रमेत् ॥ अतृप्तास्तत्रयेवास्युःप्रजांहिंसंतितेप्रजामिति ॥ मघा युक्तत्रयोदश्यांश्राद्धप्रशंसादर्शनाच्च ॥ तदाहयमः ॥ पितापितामह श्चैवतथैवप्रपितामहः ॥ जातंपुत्रंप्रशंसंतिपिप्पलंशकुनाइव ॥ मधुमांसेनखड्गेनपयसापायसेनवा ॥ एषदास्यतिनस्तृप्तिंवर्षासुचमघासु चेति ॥ अस्यांमघायुक्तायांज्येष्ठपुत्रवतापिंडरहितंश्राद्धंकार्यम् ॥ त दुक्तंदेवीपुराणेअपरपक्षप्रक्रमे॥तत्रापिमहतीपूजाकर्तव्यापितृदैवते ॥ ऋक्षेपिंडप्रदानंतुज्येष्ठपुत्रीविवर्जयेदिति ॥ ॥ ननु केवलत्रयोदश्या मपिश्राद्धंकात्यायनेननिषिद्धम् ॥ त्रयोदश्यांयुवानस्तस्यम्रियंत इति ॥ तत्काम्यश्राद्धविषयम् ॥ अपरपक्षत्रयोदशीयुगादिः ॥ अत श्चयुगादिनिमित्तंश्राद्धद्वयमपिपिंडरहितमेवकुर्यात् ॥ तत्रपिंडनिषेध श्चयुगादिनिर्णयेवक्ष्यते ॥ अत्रपक्षेभरणीमहतीप्रोक्ता ॥ तदुक्तंमत्स्य पुराणे ॥ भरणीप्रेतपक्षेतुमहतीपरिकीर्तिता॥ अस्यांश्राद्धंकृतंयेनस गयाश्राद्धकृद्भवेदिति ॥ अत्रनवम्यामन्वष्टकत्वान्नवदैवतंश्राद्धंकुर्यात् ॥ तदुक्तम् ॥ अन्वष्टकासुनवभिःपिंडैःश्राद्धंसमाचरेत् ॥ पित्रादिमातृमध्यंचतथामातामहांतकमिति ॥ अत्राप्यनेकमातृकत्वेद्वित्रि पितृकश्राद्धवद्वित्राद्युद्देशेनमातृपिंडएवदेयः॥ न्यायस्यतुल्यत्वात्॥ ततःपितामहीप्रपितामहीपिंडौमातॄणांप्रत्येकपिंडदानेतुनवसंख्याधि कपिंडत्वेनान्वष्टकाभंगःप्रसज्येत ॥ यतेरेकदंडिनस्त्रिदंडिनोवा तत्पक्षद्वादश्यामेवपार्वणंकुर्यात् ॥ तदुक्तंवायुपुराणे ॥ संन्यासिनो





ऽप्याब्दिकादिपुत्रः कुर्याद्यथातिथि ॥ महालयेतुयच्छ्राद्धंद्वादश्यां पार्वणेनत्विति ॥ अत्रपुत्रपदमधिकार्युपलक्षणम् ॥ तत्पक्षचतुर्द्दश्यांशस्त्रहतस्यैकोद्दिष्टंकार्यम् ॥ तदुक्तंमरीचिना ॥ समत्वमागतस्यापिपितुःशस्त्रहतस्यवै ॥ एकोद्दिष्टंतुकर्तव्यंचतुर्दश्यांमहालयइति ॥ समत्वमागतस्यसपिंडीकृतस्य ॥ यस्यापित्रादयस्त्रयोपिशस्त्रहतास्तेनचतुर्द्दश्यांपार्वणमेवकार्यम् ॥ तदाहपराशरः ॥ चतुर्दश्यांतुयच्छ्राद्धंसपिंडिकिरणेकृते ॥ एकोद्दिष्टविधानेननकुर्याच्छस्त्रघातिनाम् ॥ पित्रादयस्त्रयोयस्यशस्त्रघातास्त्वनुक्रमात् ॥ संभूतेपार्वणंकुर्यादाब्दिकानिपृथक्पृथक् ॥ अत्रशस्त्रहतपदंप्रायोनाशकादिशास्त्रोक्तमार्गेणमृतानांविषश्वापदादिहतानांचोपलक्षणम् ॥ तदुक्तंब्रह्मपुराणे ॥ प्रायोनाशकशस्त्राग्निविषोद्बंधनघातिनाम् ॥ चतुर्दश्यांतुकर्त्तव्यं तृप्त्यर्थमिहनिश्चयइति ॥ ॥ मरीचिरपि ॥ विषशस्त्र[1]श्वापदादितिर्यग्ब्राह्मणघातिनाम् ॥ चतुर्द्दश्यांक्रियाकार्याअन्येषांतुविगर्हितेति ॥ घातिनामितिहतानामित्यर्थेछांदसःप्रयोगः ॥ यत्तुकेचिदूचुः ॥ शस्त्रहतस्यचतुर्द्दश्येवचतुर्दशीशस्त्रहतस्यैवेतिवसंतेब्राह्मणोग्नीनादधीतेतिवदुभयत्रनियमइति ॥ तेषांवचनंतुयस्यापिताशस्त्रहतः पितामहोजीवतितद्विषयत्वेनयोजनीयम् ॥ अन्यथाशस्त्रहतपितृकस्यापितामहप्रपितामहयोरपरपक्षेश्राद्धमेवनसंभवेत् ॥ तच्चविहितम् ॥ यथा ॥ कांक्षंतिपुत्रपौत्रेभ्यःपायसंमधुसंयुतम् ॥ तस्मात्तांस्तत्रविधिनातर्पयेत्पायसेनत्विति ॥ तत्रेत्यपरपक्षप्रकरणोक्तत्वादपरपक्षे ॥ किंचोभयनियमेउच्यमाने देवीपुराणवचनाविरोधःस्यात् ॥ तथा ॥ आहवेषुविपन्नानांजलाग्निभृगुपातिनाम् ॥ चतुर्दश्यांभवेत्पूजाह्यमावास्यातुकामिकीति ॥ अत्रकामिकीत्यमावास्याविहितफलकामस्यामावास्यायामिवातिथ्यंतरविहितफलकाम्यस्यातिथ्यंतरेपिश्राद्धंप्राप्तम् ॥ सर्वासुप्रतिपदादितिथिषुश्राद्धविधानमनु

१ विषशस्त्राग्निचौरादिपशुब्राह्मणघातिनाम् इ०पा० ।

राह ॥ कुर्वन्प्रतिपदिश्राद्धंसुरूपाँल्लभतेसुतान् ॥ कन्यकांतुद्वितीयायांतृतीयायांतुवेदिनः ॥ पशून्क्षुद्रांश्चतुर्थ्यांतुपंचम्यांशोभनान्सुतान् ॥ षष्ठ्यांद्यूतंकृषिंवापिसप्तम्यांलभतेनरः ॥ अष्टम्यामपिवाणिज्यंलभतेश्राद्धदःसदा ॥ स्यान्नवम्यामेकखुरंदशम्यांद्विखुरंबहु ॥ एकादश्यांतथारूप्यंब्रह्मवर्चस्विनःसुतान् ॥ द्वादश्यांजातरूपंचरजतंकुप्यमेवच ॥ ज्ञातिश्रैष्ठ्यंत्रयोदश्यांचतुर्दश्यांतुकुप्रजाः ॥ प्रीयंतेपितरश्चास्यांयेशस्त्रेणहतारणे॥पक्षत्यादिविनिर्दिष्टान्विपुलान्मनसःप्रियान् ॥ श्राद्धदःपंचदश्यांतुसर्वान्कामान्समश्नुतइति याज्ञवल्क्यवचनेनविशेषउक्तः ॥ कन्यांकन्यावेदिनश्चपशून्द्रव्यंसुतानपि ॥ द्यूतंकृषिंचवाणिज्यंद्विशफैकशफांस्तथा ॥ ब्रह्मवर्चस्विनःपुत्रान्स्वर्णरौप्येसकुप्यके ॥ ज्ञातिश्रैष्ठ्यंसर्वकामानाप्नोतिश्राद्धदःसदा ॥ प्रतिपत्प्रभृतिष्वेकांवर्जयित्वाचतुर्दशीमिति॥कन्यावेदिनोजामातरः ॥ कुप्यंत्रपुसीसकादि॥द्यूतंद्यूतविजयम् ॥कृषिवाणिज्यंतज्जनितलाभम् ॥ अत्रामावास्यायांसर्वकामप्राप्तिरित्युक्तासापिक्रमेणकामसंख्याकामावास्याश्राद्धानुष्ठानेनसिध्यति नत्वेकस्यामेवामास्यायांसर्वकामप्राप्तिः ॥ इदमेवसर्वेभ्यःकामेभ्योयदर्शपौर्णमासावित्येतद्वाक्यविचारेमीमांसायांप्रतिपादितम् ॥ अतएवामावास्यातुकामिकीतिवदतोदेवीपुराणस्यामावास्यायांसर्वकामप्राप्तिर्भवतीत्यमावास्यायामितिसर्वतिथ्युपलक्षणमित्यभिप्रायइत्यलमतिप्रसंगेन ॥ अपरपक्षेयदिकेनापिहेतुनाश्राद्धंनकृतंस्यात्तदादीपोत्सवामावास्यायांकुर्यात् ॥ तदाह सुमंतुः ॥ येयंदीपान्वितारजन्ख्यातापंचदशीभुवि ॥ तस्यांदद्यान्नचेद्दत्तंपितृणांवैमहालयइति ॥ ॥ इत्यपरपक्षनिर्णयः ॥ ॥ अथप्रसंगान्नक्षत्रकादिकाम्यमप्युच्यते ॥ ॥ तदाहयाज्ञवल्क्यः ॥ स्वर्गंह्यपत्यमोजश्चशौर्यंक्षेत्रंबलंतथा ॥ पुत्रंश्रैष्ठ्यंससौभाग्यंसमृद्धिंमुख्यतांशुभम्॥ प्रवृत्तचक्रतांचैववाणिज्यप्रभृतीनपि ॥ अरोगित्वंयशो

१ शूद्रान् इ०पा०।

वीतशोकतांपरमांगतिम् ॥ धनंवेदान्भिषक्सिद्धिंकुप्यंगाअप्यजाविकम् ॥ अश्वानायुश्चविधिवद्योवाश्राद्धंप्रयच्छति ॥ कृत्तिकादिभरण्यंतंसकामानाप्नुयादिमानिति ॥ एवंविष्कुंभादिषुयोगेष्वपिश्राद्धकरणेकृत्तिकादिनक्षत्रविहितफलमेवक्रमेणभवति ॥ तदाहमरीचिः ॥ कृत्तिकादिषुऋक्षेषुश्राद्धेयत्फलमीरितम् ॥ विष्कुंभादिषुयोगेषुतदेवफलमश्नुतइति ॥ रव्यादिवारेषुबवादिकरणेषुचश्राद्धफलंबृहस्पतिनोक्तम् ॥यथा॥आरोग्यंचैवसौभाग्यंशत्रूणांचपराजयम्॥सर्वान्कामान्श्रियांविद्यांधनमायुर्यथाक्रमम्॥सूर्यादिवारेष्वप्येतच्छ्राद्धकृल्लभतेफलम्॥बवादिकरणष्वेतच्छ्राद्धकृल्लभतेफलमिति ॥ किंच ॥ मन्वादियुगाद्यलभ्ययोगेषुचकाम्यश्राद्धंकुर्यात् ॥ तत्रमन्वादिषुयुगादिषुकाम्यंसक्रांतिषुनैमित्तिकंपिंडरहितमेवकार्यम्॥तदाहपुलस्त्यः ॥ अयनद्वितयेश्राद्धंविषुवद्वितयेतथा ॥ युगादिषुचकुर्वीतपिंडनिर्वपणादृतइति ॥ अत्रयुगादिष्वितिसाहचर्यान्मन्वाद्यादीनामप्युपलक्षणम् ॥ तदुक्तं ॥ कालादर्शे ॥ विषुवायनसंक्रांतिमन्वादिषुयुगादिषु ॥ विहायपिंडनिर्वापंश्राद्धंसर्वंसमाचरेत् ॥ मन्वादियुगाद्यलभ्ययोगास्तुतिथिनिर्णयएवोक्ताः ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृतेमहालयनिर्णयः ॥ ॥ अथनित्यश्राद्धनिर्णयः ॥ विश्वरूपनिबंधे ॥ जातमात्रोपिदौहित्रोविद्यमानेपिमातुले ॥ कुर्यान्मातामहश्राद्धंप्रतिपद्याश्विनेसिते ॥ आद्यप्रतिपदिश्राद्धंनांदीश्राद्धवदाचरेत् ॥ नात्यंतपाकशुद्धिःस्यादामध्याह्नाद्विशिष्यतइति ॥ इतिनित्यश्राद्धनिर्णयः ॥ श्रीसूर्यसेनभू० नित्यश्राद्धस्यनिर्णयोजातः ॥ एवंनित्यश्राद्धंनिर्णीयप्रसंगतःकाम्यश्राद्धंचनिर्णीयक्रमात्प्राप्तंनैमित्तिकश्राद्धंप्रस्तूयते ॥ तच्चनवश्राद्धप्रभृतिसपिंडीकरणांतंप्रेतश्राद्धम् ॥ ग्रहणेषुसंक्रांतिषुचश्राद्धंवृद्धिश्राद्धंचसंवत्सरोदकुंभश्राद्धंचनैमित्तिकमित्युक्तम् ॥ तत्रनवश्राद्धंनामसूतकप्रथमतृतीयादिदिनेषुक्रियमाणंनवीनंश्राद्धमुच्यते ॥

तदुक्तमंगिरसा॥प्रथमेह्नितृतीयेह्निपंचमेसप्तमेतथा॥नवमैकादशेचैव नवश्राद्धंप्रकीर्त्तितमिति॥वृद्धवसिष्ठोपि॥सप्तमेह्नितृतीयेह्निप्रथमेनव मेतथा॥ एकादशेपंचमेस्युर्नवश्राद्धानिषट्सदेति॥बौधायनस्तुपंचैव नवश्राद्धानिनवममंतरितमेकादशेह्निकार्यमित्याह॥यथामरणाद्विषम दिनेष्वेकैकंश्राद्धंकुर्यादानवमाद्यच्चनवमंविघ्नतेएकादशेह्नितत्कुर्यादि ति॥ विश्वस्वामिनात्वाश्वलायनानांपंचापस्तंबानांषडन्येषांविभा षेतिव्यवस्थाकृता॥ नवश्राद्धानिपंचाहुराश्वलायनशाखिनः॥ आ पस्तंबा॥षडित्याहुर्विभाषात्वैतरेयिणामितिभविष्यपुराणे चतुर्वर्ण विषयेव्यवस्थोक्ता॥ यथा॥नवसप्तविशांराज्ञांनवश्राद्धान्यनुक्रमात्॥ आद्यंतयोर्वर्णयोस्तुषडित्याहुर्महर्षयइति॥ विशांनव॥ राज्ञांसप्त॥ विप्रशूद्रयोःषडित्यर्थः॥ दैवादंतरितंनवश्राद्धंत्वंत्येनसहकुर्यात्॥ तदाहकण्वः॥ नवश्राद्धंमासिकंचयद्यदंतरितंभवेत्॥ तत्तदुत्तर स्वातंत्र्यादनुष्ठेयंप्रचक्षतइति॥ ॥इतिनवश्राद्धनिर्णयः॥ ॥अथमा सिकश्राद्धनिर्णयः॥ तानिचमासिकानिद्वादशमासेषुषोडशभवंति॥ यथा॥ मरणमासादारभ्यसंवत्सरसमाप्तिपर्यंतंप्रतिमासंविधीयमाना निद्वादशमासिकानि॥ ऊनमासिकंत्रैपाक्षिकमूनषाण्मासिकमूना ब्दिकंचेति॥ तदाहजातूकर्ण्यः॥ द्वादशप्रतिमास्यानिआद्यषण्मा सिकेतथा॥ त्रैपक्षिकाब्दिकेचेतिश्राद्धान्येतानिषोडशेति॥ तत्रद्वा दशप्रतिमास्यानीत्यभिधानादाद्यषाण्मासिकाब्दिकशब्दाऊनमासि कोनषाण्मासिकोनाब्दिकपराः॥ एतानिषोडशश्राद्धानिसपिंडीकर णात्पूर्वमेकोद्दिष्टविधिनाकुर्यात्॥ सपिंडीकरणादूर्ध्वंतुप्रत्याब्दिकव त्पार्वणमेकोद्दिष्टंवायथास्वाचारंकुर्यात्॥ तदाहपैठीनसिः॥ सपिं डीकरणादर्वाक्कुर्य्याच्छ्राद्धानिषोडश॥ एकोद्दिष्टविधानेनकुर्यात्सर्वा णितानितु॥ सपिंडीकरणादूर्ध्वंयदाकुर्यात्तदापुनः॥ प्रत्यब्दंयोय थाकुर्यात्तथाकुर्यात्सतान्यपीति॥ अत्राद्यमासिकमेकादशेऽह्नचेवकु

१ प्रेतश्राद्धानि षोडश इ०पा०।

र्यात् ॥ तदाहयाज्ञवल्क्यः ॥ मृतेहनितुकर्तव्यंप्रतिमासंतुवत्सरम् ॥ प्रतिसंवत्सरंचैवमाद्यमेकादशेऽहनीति ॥ अत्रप्रतिमासंप्रतिसंवत्सरंचेत्यभिधायाद्यमेकादशेहनीत्युक्तत्वादाद्यमासिकमाद्याब्दिकंचैकादशेऽह्निकुर्यात् ॥ अनेनैवाभिप्रायेणगोभिलोप्याद्यस्यद्विरावृत्तिमाह ॥ ब्राह्मणान्भोजयेदादौहोतव्यमनलेथवा॥ पुनश्चभोजयेद्विप्रान्द्विरावृत्तिर्भवेदिति ॥ अतश्चैकादशेह्निविधीयमानमाद्याब्दिकम् ॥ प्रथमेब्देऽतीतेद्वितीयाब्दप्रारम्भेमृताहेविधीयमानंद्वितीयाब्दिकम् ॥ एवंतृतीयाब्दप्रारंभेमृताहेविधीयमानंतृतीयाब्दिकम् ॥ चतुर्थाब्दारंभेविधीयमानंशुद्धम् ॥ अतश्चमरणदिनमारभ्यत्रिष्वब्देषुव्यतीतेषुविधीयमानंश्राद्धंशुद्धमित्यर्थः॥ आद्यश्राद्धंक्षत्रियादिरप्येकादशेह्न्येवकुर्यात् ॥तदाहवृद्धवसिष्ठः॥ एकादशेह्नियच्छ्राद्धंतत्सामान्यमुदाहृतम् ॥ चतुर्णामपिवर्णानांसूतकंतुपृथक्पृथगिति॥ ननु शुचिनाकर्मकर्त्तव्यमितिविधानात्क्षत्रियादेरेकादशेह्निसूतकानपगमात्कथंश्राद्धंकरणमितिचेत् ॥ सत्यम् ॥लौगाक्षिणाकर्तुस्तात्कालिकीशुद्धेरभिधानात्॥यथा॥आद्यंश्राद्धमशुद्धोपिकुर्यादेकादशेहनि ॥कर्त्तुस्तात्कालिकीशुद्धिरशुद्धःपुनरेवसइति ॥ नन्वेवंसतिब्राह्मणोपिमुख्येमृताहएवाद्यश्राद्धंकुरुताम् ॥तस्यापितात्कालिकीशुद्धेर्वक्तुंशक्यत्वादितिचेन्न॥ तत्रविधानाभावात् ॥ आद्यमेकादशेहनीत्येकादशेह्न्येवविधानाच्च ॥ अतश्चैकादशेह्निविहितमाद्यश्राद्धंक्षत्रियादिरशुद्धोपिकुर्यात् ॥ नत्वाशौचांतइत्यलमतिविस्तरेण ॥ यत्तुविष्णुवचनम् ॥ अथाशौचापगमइति॥ तद्ब्राह्मणविषयमप्युपपद्यतइत्यविरोधः ॥प्रायोनशनादिविहितमार्गेणमृतानांसद्यःशौचेप्याद्यमेकादशेएवाह्निकुर्यात् ॥ तदाहशंखः ॥सद्यःशौचेपिदातव्यंमृतस्यैकादशेहनि ॥ सएवदिवसस्तस्यश्राद्धेह्नशानादिष्विति ॥ ऊनमासिकंतुद्वादशाहेऊनमासिवाकार्यम् ॥ तदाहगोभिलः ॥ मरणाद्द्वादशाहेस्यान्मास्यूनेचोनमासिकमिति ॥

ऊनषाण्मासिकंतुऊनषष्ठेमासिऊनाब्दिकंऊनेद्वादशेमासित्रैपक्षिकंतृ
तीयेपक्षेकार्यम् ॥ तदाहगालवः ॥ ऊनषाण्मासिकंषष्ठमास्यूनेप्यून
मासिकम् ॥ त्रैपक्षिकंतृतीयेस्यादूनाब्दंद्वादशेहनीति ॥ अत्रोनमासि
कादीन्यूनमासिकादिषुकार्याणीत्युक्तम् ॥ तत्रकियद्भिर्दिनैरूनेषुका
र्याणीत्यत्रोच्यते ॥ ॥ तदाहगालवः ॥ त्रिभिर्वादिवसैन्यूनेत्वेकेन
द्वितयेनवा ॥ आद्यादिषुचमासेषुकुर्यादूनाब्दिकादिकमिति ॥
कार्ष्णाजिनिरपि ॥ ऊनान्यूनेषुमासेषुविषमाहेसमेपिवा ॥ त्रैपक्षिकं
त्रिपक्षेस्यान्मृताहेत्वितराणित्विति ॥ ननु भविष्यपुराणेतुत्रैपक्षिकं
भवेद्वृत्तेत्रिपक्षेतदनंतरमित्युक्तम् ॥ कार्ष्णाजिनिनातु त्रिपक्षइत्युक्त
मितिविरोधइतिचेन्न ॥ तत्रापिवृत्तइतिनानिवृत्ते किन्तुप्रवृत्त
इत्यर्थः ॥ साग्नेस्तुमरणदिनादन्यस्मिन्दिनेदाहेसतिदहनदिनमार
भ्यनवश्राद्धैकादशाहादिकंत्रैपक्षिकांतंकुर्यात् ॥ तदनंतरश्राद्धानि
मरणदिनएव ॥ तदाहजातूकर्ण्यः ॥ ऊर्ध्वंत्रिपक्षाद्यच्छ्राद्धंमृताहन्ये
वतद्भवेत् ॥ आद्यस्तुकारयेद्दाहादाहिताग्नेर्द्विजन्मनइति ॥ दैवादं
तरितंमासिकंत्वन्यस्मिन्मासेमृताहएवकुर्यात् ॥ तदाहऋष्यशृंगः ॥
एकोद्दिष्टेतुसंप्राप्तेयदिविघ्नंप्रजायते ॥ मासेन्यस्मिंस्तिथौतस्यां
कुर्यादंतरितंचयदिति ॥ अत्रचकारेणतन्मासिकसमुच्चयः ॥ अंत
रितंतन्मासिकंचकुर्यादित्यर्थः ॥एतानिषोडशश्राद्धानिद्वादशाहादौसं
वत्सरादर्वागुक्तकालेसपिंडीकरणेकर्तव्येसतिपूर्वमेतानिवकृत्वासपिं
डीकरणंकुर्यात् ॥ तदाहलौगाक्षिः ॥ श्राद्धानिषोडशापाद्यविदधीत
सपिंडनमिति ॥ गोभिलोपि॥ श्राद्धानिषोडशादत्त्वानैवकुर्यात्सपिंड
नमिति ॥ सपिंडनानंतरमपिपुनःस्वस्वकालेकार्याण्येव ॥ तदाहांगि
राः ॥ यस्यसंवत्सरादर्वाक्सपिंडीकरणंकृतम् ॥ मासिकंचोदकुंभं
चदेयंतस्यापिवत्सरमिति ॥ सपिंडीकरणार्थमपकृष्यकृतान्यप्येता
निविवाहादिवृद्धावुपस्थितायांपुनरप्यपकृष्यमृताहएवकुर्यादिति ॥

तदाहकार्ष्णाजिनिः ॥ सपिंडीकरणादर्वागपकृष्यकृतान्यपि ॥ पुन
स्तान्यपकृष्येतवृद्ध्युत्तरनिषेधनादिति॥ शाठ्यायनोपि॥प्रेतश्राद्धा
निशिष्टानिसपिंडीकरणंतथा ॥ अपकृष्यापिकुर्वीतकर्तुंनांदीमुखं
द्विजः ॥ वृद्ध्यनंतरनिषेधश्चकात्यायनेनोक्तः ॥ निर्वर्त्यवृद्धितंत्रं
तुमासिकानिनतंत्रयेत् ॥ अयातयाममरणंप्रभवेत्पुनरस्यत्विति ॥
अयातयामंनवम् ॥ तथा ॥ अनंतरेणयोवृद्धिंप्रेतश्राद्धानिकर्षति ॥
सश्राद्धीनरकेघोरेपितृभिः सहमज्जतीति ॥ अत्रऊनमासिकोनषा
ण्मासिकोनाब्दिकानिनंदादिषुनकार्याणि ॥ तदुक्तम् ॥ नंदायां
भार्गवदिनेचतुर्दश्यांत्रिपुष्करे ॥ ऊनश्राद्धंनकुर्वीतगृहीपुत्रधनक्षया
दिति ॥ मरीचिरपि ॥ द्विपुष्करेचनंदासुसिनीवाल्यांभृगोर्दिने ॥
चतुर्दश्यांचनोनेष्टिंकृत्तिकासुत्रिपुष्करइति ॥ त्रिपान्नक्षत्रस्यभद्रा
तिथिगुरुभौमरविवाराणामन्यतमस्यचमेलनेत्रिपुष्करंभवति ॥ द्व
योर्मेलनेद्विपुष्करम् ॥ तदुक्तंरत्नकालायम् ॥ विषमचरणंधिष्ण्यं
भद्रातिथिर्यदिजायते ॥ सुरगुरुरविक्ष्मापुत्राणांकथंचनवासरे ॥ मुनि
भिरुदितःसोयंयोगस्त्रिपुष्करसंज्ञकइति ॥ ॥ इतिमासिकनिर्णयः ॥
॥ ॥ अथसपिंडीकरणम् ॥ ॥ तस्याष्टौकालाभवंति ॥ तदुक्तंका
लादर्शे ॥ एकादशेद्वादशेह्नित्रिपक्षेवात्रिमासिके ॥ षष्ठेचैकादशेवा
ब्देसंपूर्णेवाशुभागमइति ॥ शुभागमइति यदैवविवाहाद्याभ्युदयिकं
प्राप्तंततःपूर्वमेतत्सपिंडीकरणंकुर्यादित्यर्थः ॥ एषुचैकादशाहरूपः
कालःकर्तरिपुत्रेसाग्नौएकादशाहएवदर्शेसतिस्यात् ॥ तदाहकार्ष्णा
जिनिः ॥ सपिंडीकरणंकुर्यात्पूर्ववच्चाग्निमान्सुतः ॥ परतोदशरात्राच्चे
त्कुहूरब्दोपरीतरइति ॥ दशरात्रात्परतःएकादशेह्नीत्यर्थः ॥ इत
रोनाग्निः ॥ अत्रापिमृताहादूर्ध्वंहरीतोपि ॥ यातुपूर्वममावास्यामृता
हाद्दशमीभवेत् ॥ सपिंडीकरणंतस्यांकुर्यादेवसुतोग्निमानिति॥ अत्रा
पिमृताहादूर्ध्वंद्वितीयदिनात्परिगणनेएकादशीभवति ॥ तस्याममा

१ नकुर्यादूनिकंशुक्रेचतुर्दश्यांचपुष्करे द्विपुष्करंत्रिपुष्करश्च इ० पा० ।

वास्यायदिभवेदित्यर्थः ॥ वृद्धवसिष्ठोपि ॥ प्रथमास्यादमावास्या मृताहाद्दशमेहनि॥ सपिंडीकरणंतत्रकुर्यादेवसुतोग्निमानिति॥अत्रापि पंचमीमर्यादायाम् ॥ मृताहादूर्ध्वदिनमारभ्येत्यर्थः॥ साग्नेरेकादशेह्नि दर्शपातेपिंडपितृयज्ञार्थंपूर्वंसपिंडीकरणविधानम् ॥ तदाहगालवः ॥ सपिंडीकरणात्प्रेतेपैतृकंपदमास्थिते ॥ आहिताग्नेःसिनीवाल्यांपि तृयज्ञंप्रवर्ततइति ॥ प्रेतेऽनग्नौकर्तरिपुत्रेग्निमतिद्वादशाहोपिकालः ॥ तदुक्तंभविष्योत्तरे ॥ यजमानोग्निमान्राजन्प्रेतश्चानग्निमान्भवेत् ॥ द्वादशाहेतदाकार्यंसपिंडीकरणंसुतैरिति ॥ यजमानःकर्ता यदा एकादशेह्निसपिंडीकरणंकुर्यात्तदातत्रैवपूर्वमाद्यादिषोडशश्राद्धानिकृ त्वापृथक्पाकेनसपिंडीकरणंकुर्यात् ॥ यत्तुकात्यायनवचनम् ॥ एकादशाहंनिर्वर्त्यप्राग्दशाहाद्यथाविधि ॥ प्रकुर्वीताग्निमान्विप्रो मातापित्रोःसपिंडतामिति ॥ अस्यायमर्थः ॥ दशाहादूर्ध्वमे कादशेह्निएकादशाहमाद्यश्राद्धंनिवर्त्यपश्चात्सपिंडतांकुर्वीतेत्यर्थः ॥ अन्यथासर्वेषामेववर्णानामाद्यमेकादशेहनीतिवाक्यविरोधःस्यात् ॥ एकादशाहमितिषोडशश्राद्धोपलक्षणम् ॥ श्राद्धानिषोडशादत्त्वानैव कुर्यात्सपिंडतामिति षोडशश्राद्धाकरणेधिकाराभावात् ॥ कर्तर्य नग्नौप्रेतेचाहिताग्नौतृतीयपक्षःकालः॥ तदाहसुमंतुः॥ प्रेतश्चेदाहिता ग्निःस्यात्कर्त्तानग्निर्यदाभवेत् ॥ सपिंडीकरणंतस्यकुर्यात्पक्षेतृतीय केइति ॥ अनग्नीनांतुद्वादशाहाद्याःसप्तकालाभवंति॥ नन्वब्दोपरीतर इत्यनग्नेःसंवत्सरादूर्ध्वंकार्ष्णाजिनिवचनात्सपिंडीकरणविधानात्कथं सप्तकालाइतिचेत् ॥ सत्यम् ॥ सएवमुख्यःकालः ॥ तत्रदेशकालश रीरादिस्वास्थ्यनिश्चयाद्द्वादशाहएवकार्यम् ॥ तदाहव्याघ्रः ॥ आनं त्यात्कुलधर्माणांपुंसांचैवायुषःक्षयात् ॥ अस्थिरत्वाच्छरीरस्यद्वा दशाहःप्रशस्यतइति ॥ अत्रासंभवेत्रिपक्षादिःकालत्वेनोक्तः॥ तदु क्तंभविष्योत्तरे ॥ सपिंडीकरणंकुर्याद्यजमानस्त्वनग्निमान् ॥ अना

हिताग्नेः प्रेतस्यपूर्णेब्देभरतर्षभ ॥ द्वादशेहनिषष्ठेवात्रिपक्षेवात्रिमासि वा ॥ एकादशेपिवामासिमांगल्यंस्यादुपस्थितम् ॥ षष्ठेमासीत्यन्वयः ॥ ननुसाग्निकस्यकर्तुरेकादशाहद्वादशाहरूपकालनियमउक्तः ॥ साग्नेः प्रेतस्यत्रिपक्षनियमः ॥ यदाप्रमादात्तत्रनकृतंभवेत् ॥ तदासपिंडीकरणलोपएवस्यादितिचेन्न ॥ गोभिलेनकालान्तरविधानात् ॥ यथा ॥ द्वादशाहादिकालेषुप्रमादादननुष्ठितम् ॥ सपिंडीकरणंकुर्यात्कालेषूत्तरभाविष्विति ॥ तदुत्तरभाविषुत्रिपक्षादिषु ॥ ॥ इतिसपिंडीकरणकालमुक्त्वातत्सपिंडीकरणंकेनसहेत्याशंकायामुच्यते॥ तत्रविष्णुः॥ संवत्सरांतेप्रेतायतत्पित्रेतत्पितामहायतत्प्रपितामहायचब्राह्मणान्पूर्वंभोजयेदिति ॥ प्रेतपिंडंपाद्यपात्रोदकवत्पिंडत्रयेनिदध्यादितिच ॥ पितामहेजीवतितुब्रह्मपुराणेविशेषउक्तः ॥ मृते पितरियस्याथविद्यतेचपितामहः ॥ तेनदेयास्त्रयःपिंडाःप्रपितामहपूर्वकाः॥ तेभ्यश्चपैतृकःपिंडोनियोक्तव्यश्चपूर्ववदिति॥ यदापितामहप्रपितामहौजीवतःतदाप्रेतप्रपितामहपूर्वकास्त्रयःपिंडादेयाः ॥ ननुप्रेतस्यपितृपितामहप्रपितामहैःसपिंडीकरणमुक्तंपितृपितामहयोर्जीवतोः केवलंप्रपितामहमात्रेणसपिण्डनात्कथंपितृत्वमितिचेत् सत्यम्॥त्रयाणांमध्येएकेनापिसपिंडनेपितृत्वाभिधानात्॥तदाहसुमंतुः॥त्रयाणामपिपिंडानामेकेनापिसापिंडने ॥ पितृत्वमश्नुतेप्रेतइतिधर्मोव्यवस्थितइति ॥त्रयाणांपिंडानांप्रेतसंबंधिपितृपितामहप्रपितामहपिंडानाम् ॥ ननुव्युत्क्रममृतानांसपिंडीकरणंनिषिद्धम् ॥ यथा ॥ व्युत्क्रमाच्च प्रमीतानांनैवकार्यासपिंडतेति ॥ अतश्चपितामहेजीवतिप्रपितामहादिभिरित्यादिकंकथमुपपद्यतइतिचेत् ॥ उच्यते ॥ निषेधवाक्यं मातापितृभर्तृव्यतिरिक्तविषयम् ॥ तदुक्तंस्कंदपुराणे ॥ व्युत्क्रमेण मृतानांनसपिंडीकृतिरिष्यते ॥ यदिमातायदिपिताभर्तानैषविधिः स्मृतइति॥पितामहेपुत्रान्तरैरसंस्कृतेप्रपितामहेऽसंस्कृतेपिपितृमरणे

सतिअसंस्कृताभ्यामपिताभ्यांपितुःसपिंडीकरणंकुर्यात् ॥ ननु ॥ सत्यधिकार्थंतरेपिपितृपितामहौसंस्कुर्यात् ॥ तदाहकात्यायनः ॥ असंस्कृतौनसंस्कार्यौपूर्वौपौत्रप्रपौत्रकैः ॥ पितरंतत्रसंस्कुर्यादिति कात्यायनोब्रवीत् ॥ असंस्कृतौदाहादिसंस्कारैः ॥ ननुपितामह प्रपितामहयोरसंस्कृतयोःपितुःसपिंडीकरणंकथंभवतीतिचेत् ॥ सत्यम् ॥ असंस्कृताभ्यामपिताभ्यामेवसपिंडीकरणंकार्यम् ॥ तदाह कात्यायनः ॥ पापिष्ठमपिशुद्धेनशुद्धंपापकृतापिवा ॥ पितामहेनापि तरंसंस्कुर्यादितिनिश्चयइति ॥ अत्रपापिष्ठत्वमितिसंस्काररहित्यादि नानपातित्यादिना पतितेनसपिंडीकरणनिषेधात् ॥ यथाहगौतमः ॥ पापकर्मणोनसंसृजेरन्स्त्रियश्चव्यभिचारिणीरिति ॥ असतिपुत्रांतरेपौत्रेणैवपितामहस्यसंस्कारःकार्यः ॥ तदाहकात्यायनः ॥ पितामहःपितुःपश्चात्पंचत्वंयदिगच्छति ॥पौत्रेणैकादशाहादिकर्त्तव्यं श्राद्धषोडश ॥ नैतत्पौत्रेणकर्तव्यंपुत्रवांश्चेत्पितामहः ॥ पितुःसपिंडनं कृत्वाकुर्यान्मासानुमासिकामिति ॥ यद्यन्यःकर्तासन्निहितोनस्यात्तदा पितुःप्राधान्येनसन्निहितत्वात्पूर्वंसापिंडनंकृत्वापितामहप्रपितामहयोः पश्चात्सपिण्डनंकुर्यात् ॥ असतितुकुर्यादेवेत्यपरार्कस्मरणात् ॥ पितामहदशाहमध्येएवपितृमरणेसति ॥ प्रथमेहनियोदद्यात्सदशाहंसमापयेदित्युपक्रांतपितामहसंस्कारेणतेनैवदशाहकृत्येसमापनीयेपितृसंस्कारेणांतरितेसतिपितृसंस्कारानंतरंपुनः स्वकालेपितामहस्यसंस्कारंकृत्वासर्वमावर्तयेत् ॥ अशक्तादिनापित्रानुज्ञातेनपौत्रेणपितामहश्राद्धेउपक्रांतेपितृमरणेसतिपित्राशौचंवहन्नेवस्वकालेपितामहोपक्रान्तंश्राद्धंकुर्यादुपक्रांतत्वात्कर्तुस्तात्कालिकीशुद्धिरितिवचनात् ॥ अपुत्रस्यतुपत्नीसपिंडनंकुर्यात् ॥ तदाहलौगाक्षिः ॥ सर्वाभावेस्वयंपत्न्यःस्वभर्तॄणाममंत्रकम् ॥ सपिंडीकरणंकुर्युस्ततःपार्वणमेवच ॥ सुमंतुरपि ॥ अपुत्रेसंस्थितेकर्तानभवेच्छ्राद्धकर्मणि ॥ तत्रपत्न्यपिकुर्वीतसापिंड्यंपार्वणंतथेति ॥

मातुःसपिंडीकरणेतुविशेषउच्यते ॥ तदाहशंखः ॥ मातुः सपिंडीकरणंकथंकार्यंभवेत्सुतैः ॥ पितामह्यादिभिःसार्द्धंसपिंडीकरणंस्मृतेति ॥ पितामह्यादिभिरिति यदामातामृतापितामहीच जीवतितदाप्रपितामह्यादिभिःसपिण्डनंकुर्यात् ॥ तदुक्तंब्रह्मपुराणे ॥ मातर्यग्रेमृतायांचविद्यतेचपितामही ॥ प्रपितामह्यादिभिःपूर्वंकार्यस्तत्राप्ययंविधिरिति ॥ प्रपितामह्यामपिजीवत्यांत्रयाणामपिपिंडनमितिवचनात्पितुःप्रपितामह्यादिभिःकुर्यात् ॥ अपुत्रायाःपतिरेवश्वश्वादिभिःसपिंडनंकुर्यात् ॥ तदाहपैठीनसिः ॥ अपुत्रायांमृतायांतुपतिःकुर्यात्सपिण्डताम् ॥ श्वश्र्वादिभिःसहैवास्याःसपिंडीकरणंभवेदिति ॥ ॥ अन्वारोहणेतुपुत्रःपत्यासपिंडनंकुर्यात् ॥ एकस्मिन्नेवदिनेमरणेतुपत्युरेवसपिंडीकरणंकुर्यात् ॥ तेनैवतस्याअपिकृतंस्यात् ॥ तदुक्तंस्मृत्यर्थसारे ॥ अन्वारोहणेनैकदिनमरणेस्त्रियाः पृथक्सपिंडीकरणंनकार्यम् ॥ भर्तुश्चकृतेस्त्रियाश्चकृतंभवतीति ॥ दिनांतरेमृतेपुत्रश्चपितृपितामहपिंडमध्येकुशानन्तर्धायपित्रैकेनमातुःसापिंड्यंकुर्यात्॥ सर्वत्रभर्त्रापत्न्याःसापिण्ड्यमेकेनैव॥श्वशुरेणनिषिद्धमिति ॥ यमोपि ॥ पत्याचैकेनकर्तव्यंसपिंडीकरणंस्त्रियाः ॥ सा मृतापिहितेनैक्यंगतामंत्राहुतिव्रतैरिति ॥ शातातपोपि ॥ मृताप्यनुगतायाथसातेनसहपिंडताम् ॥ अर्हतिस्वर्गवासेपियावदाभूतसंप्लवमिति ॥ अत्रकैश्चिदुक्तम् ॥ पत्याचैकेनकर्त्तव्यंसापिण्डीकरणंस्त्रियाःइतियमेनोक्तम् ॥ तत्रपत्याचैकेनेतिपतिपदंपितृवर्गोपलक्षणम् ॥ अतश्चपितृपितामहप्रतितामहैःसपिंडीकरणंकार्यम् ॥ अन्यथासपिंडीकरणस्वभावविरोधःस्यात्॥ एकेनेत्येकत्वविधानंत्वासुरादिविवाहोढायाःमातामह्यादिभिःसहसापिण्ड्येप्राप्तेपिअन्वारोहणेत्वेकेनपतिवर्गेणैवसपिंडीकरणंकर्त्तव्यमित्येवंपरमिति ॥ एवंसतिदेशाचारभेदेनव्यवस्थाकल्पनीया ॥ आसुरगांधर्वराक्षसपै

शाचविवाहोढायाःपुत्रोमातामह्यादिभिःसपिंडनंकुर्यात् ॥ तदाहशा
तातपः॥तन्मात्रातात्पितामह्यातच्छ्वश्र्वावासपिंडनम्॥आसुरादिविवा
हेषुविनातांयोषितांस्मृतम् ॥ तन्मात्रातात्पितामह्येत्यत्रतस्यामातुर्मा
त्रापितामह्याचेत्यर्थः ॥ तच्छ्वश्र्वावेतिमातुःपितामह्याश्वश्र्वामातुःप्र
पितामह्येत्यर्थः ॥ मातामहेनवाकुर्यात्॥ तदाहसुमंतुः॥पितापितामहे
योऽप्यःपूर्णेसंवत्सरेसुतैः॥मातामातामहेतद्वदित्याहभगवाञ्छिवइति॥
अत्रापिसुतैरित्यासुरादिविवाहोढासुतैः ॥ अत्रासुरादिविवाहेत्यभि
धानादासुरादिव्यतिरिक्तब्राह्मदैवार्षप्राजापत्यविवाहचतुष्टयोढायाःपि
तामह्यादिभिर्भर्त्राचसपिंडीकरणंप्रतीयते ॥ तथाचमार्कंडेयः॥
ब्राह्मादिषुविवाहेषुयाह्यूढाकन्यकाभवेत् ॥ भर्तृगोत्रेणकर्तव्यातस्याः
पिंडोदकक्रिया ॥ आसुरादिविवाहेषुपितृगोत्रेणधर्मविदिति ॥
अत्रभर्तुःपितरौमातृसंबंधिनौ ॥ पुत्रिकापुत्रस्तुमातामहादिभिर्मातुः
सपिंडीकरणंकुर्यात्॥तदाहकात्यायनः॥मातुःसपिंडीकरणंपितामह्या
सहोदितम्॥ यथोक्तेनैवकालेनपुत्रिकायानचेत्सुतइति ॥पुत्रिकासुत
श्चेन्मातामहादिभिःकुर्यादित्यर्थः॥ बौधायनोपि॥ आदिशेत्प्रथमेपिंडे
मातरंपुत्रिकासुतः॥द्वितीयेपितरंतस्यतृतीयेचपितामहमिति॥एवंयेन
केनाप्युपायेनमातुःसापिंडचेवृद्धचन्वष्टकादिश्राद्धेषुपितामह्यादिभिः
पार्वणंकर्तव्यम् ॥ इदंसपिंडीकरणंचिरादपिपुत्रएवकुर्यात्॥ तदुक्तंवा
युपुराणे ॥ श्राद्धानिषोडशादत्त्वाकुर्यान्नतुसपिंडताम् ॥ प्रोषितावसि
तेपुत्रःकालादपिचिरादपि ॥ एतद्व्याख्यातमपरार्के ॥ प्रोषितावसितेप्र
वासावसानेपुत्रश्चिरादपिकालात्सपिंडनंकुर्यात् ॥ तत्षोडशश्राद्धान्य
दत्त्वानकुर्यात् ॥ यदितानिकनिष्ठभ्रात्रादिनादत्तानितदासपिंडत्वमेव
र्यादिति ॥ संन्यासिनांतुषोडशश्राद्धसपिंडीकरणानिनसन्ति ॥ तदा
होशना ॥ एकोद्दिष्टंनकुर्वीतयतीनांचैवसर्वदा ॥ अहन्येकादशेचैषां
पार्वणंतुविधीयते ॥ सपिंडीकरणंतेषांनकर्तव्यंसुतादिभिः ॥ त्रिदं

डग्रहणादेवप्रेतत्वंनैवजायतइति॥ त्रिदंडेत्येकदंडस्याप्युपलक्षणम् ॥ तदुक्तंचतुर्विंशतिमते ॥ चतुर्थमाश्रमंगत्वाब्रह्मविद्यापरायणः ॥ एकदंडीत्रिदंडीवासर्वसंगविवर्जितइति ॥ शातातपोऽपि ॥ एकोद्दिष्टंजलंपिंडमाशौचंप्रेतसत्क्रियाम्॥नकुर्यात्पार्वणादन्यद्ब्रह्मीभूतायभिक्षवे ॥ ब्रह्मचर्यादिविषयेस्मृत्यर्थसारेविशेषउक्तः॥ यथा॥ ब्राह्मणादिहतानांपतितानांप्रायश्चित्ताकरणेब्रह्मचारिणामनपत्यानांचसपिंडीकरणंनास्ति ॥ तेषांसदैकोद्दिष्टमेवेति ॥ अत्रानग्निकानांद्वादशाहादयःसप्तकालाउक्ताः॥ तत्रद्वादशाहइतिसूतकांतोपलक्षणम् ॥ अतश्चक्षत्रियवैश्ययोरपिसूतकांतेएवसपिंडीकरणम् ॥ तदाहकात्यायनः ॥ सर्वेषामेववर्णानामाशौचांतेसपिंडनमिति ॥ वृद्धमनुरपि ॥ द्वादशेऽहनिविप्राणामाशौचांतेतुभूभृताम् ॥ वैश्यानांचत्रिपक्षादावथवास्यात्सपिंडनमिति ॥ शूद्रस्यापिद्वादशाहएव॥तदाहविष्णुः ॥ मंत्रवर्ज्जंहिशूद्राणांद्वादशाहेसपिंडनमिति विष्णुनाशूद्रस्यापिद्वादशाहाभिधानात्॥सर्वेषामपिवर्णानामितिवचनंब्राह्मणादिवर्णत्रयएव॥ उक्तकालेष्वपिसापिंड्येऽकृतेपुनःकर्त्तव्यताकालविशेषोऋष्यशृंगेणोक्तः॥ अनुराधार्द्रहस्तेषुरोहिण्यांवासमाचरेदिति ॥ गालवोपिसपिंडीकरणश्राद्धमुक्तकालेनचेत्कृतम् ॥ रौद्रहस्तेचरोहिण्यांमैत्रभेवासमाचरेदिति ॥ रौद्रमार्द्रा॥ मैत्रमनुराधा ॥ संवत्सरादर्वाक्सपिंडीकरणेकृतेऽपिसंवत्सरपर्यंतंसंकल्पविधिनापार्वणंसोदकुंभंचश्राद्धंकुर्यात् ॥ तदाहयाज्ञवल्क्यः ॥ अर्वाक्सपिंडीकरणंयस्यसंवत्सराद्भवेत् ॥ तस्याप्यन्नंसोदकुंभंदद्यात्संवत्सरंद्विजइति ॥ तस्यापीतिशब्देनसंवत्सरादर्वागकृतस्यसपिंडस्यापिसमुच्चयः ॥ अयन्तुविशेषः ॥ अकृतसपिंडनस्यैकोद्दिष्टंकृतसपिंडनस्यपार्वणम्॥ तत्रापिविशेषोगौतमेनोक्तः ॥ अदैवंपार्वणंश्राद्धंसोदकुंभमधर्मकम्॥ कुर्यात्प्रत्याब्दिकंश्राद्धंसंकल्पविधिनान्वहमिति ॥ अधर्मकंदातृभोक्त्रोःपुनर्भो

जनपर्यटनादिधर्मरहितम् ॥ विवाहान्मौंजीबंधाच्चोर्ध्वंवर्षार्द्धंवर्षं चसपिंडीकरणनवश्राद्धषोडशश्राद्धप्रत्याब्दिकगयामहालयश्राद्धव्य तिरिक्तममावास्याश्राद्धंपिंडरहितंकुर्यात् ॥ तदाहकार्ष्णाजिनिः ॥ मौंजीबंधाद्विवाहाच्चवर्षार्द्धंवर्षमेवच ॥ पिंडान्सपिंडानोदद्युःसपिं डीकरणादृतइति ॥ सपिंडीकरणशब्दोऽत्रनवश्राद्धषोडशश्राद्धाना मप्युपलक्षकः ॥ स्मृतिसंग्रहेपि ॥ विवाहोपनयादूर्ध्वंवर्षंवर्षार्द्धमेव च ॥ नकुर्यात्पिडनिर्वापंनदद्यात्करणानिचेति ॥ पुनःसएवाह ॥ महालयेगयाश्राद्धेमातापित्रोर्मृतेऽहनि ॥ कृतोद्वाहोपिकुर्वीतपिंडनिर्वा पणंसुतइति ॥ उक्तकालव्यतिरिक्तेष्वमावास्यादिकालेषुसंकल्पश्राद्धं कुर्यात् ॥ ॥ इतिश्रीसूर्यसेन० निर्णयामृतेश्राद्धप्रकरणेद्वितीयेसपिंडी करणनिर्णयः ॥ ॥ अथसंकल्पश्राद्धनिर्णयः ॥ सांगपार्वणादिश्राद्ध करणेअशक्तस्त्यक्ताग्निश्चसंकल्पश्राद्धंकुर्यात् ॥ अशक्तिश्चव्याध्या दिनानत्वालस्येन ॥ तदुक्तंस्मृतिसंग्रहे ॥ अंगानिपितृयज्ञस्ययदा कर्तुंनशक्नुयात् ॥ संकल्पश्राद्धमेवासौकुर्यादर्घ्यादिवर्जितमिति[2] ॥आ दिशब्दादावाहनाद्युपसंग्रहः ॥ तदाहापस्तंबः ॥ संकल्पश्राद्धेअर्घ्या[3] वाहनाग्नौकरणपिंडस्वधावाचनादिवर्जयेदिति ॥ व्यासोपि ॥ त्यक्ता ग्नेःपार्वणंनैवनैकोद्दिष्टंसपिंडनम् ॥अत्यक्ताग्नेस्तुपिंडोक्तिस्तस्मात्संक ल्प्यभोजयेदिति ॥त्यक्ताग्नेर्नास्तिकव्यादिनोत्सृष्टाग्नेः॥ इतिसंकल्पश्रा द्धनिर्णयः॥ ॥अथाभ्युदयिकश्राद्धनिर्णयः॥तच्चत्रिविधम् ॥विवाहादि नियतनिमित्तम् ॥ पुत्रजन्माद्यनियतनिमित्तम् ॥अग्न्याधानादिनिमि त्तंचेति ॥तत्रविवाहादिनिमित्तंप्रातःकार्यम्॥तदाहशातातपः ॥प्रातर्वृ द्धिनिमित्तकमितिवचनात्पूर्वाह्णेकुर्यात् ॥ अत्रप्रातःशब्दःसार्द्धप्र हरात्मककालवाचकः ॥ तदाहगार्ग्यः॥ललाटसंमितेभानौप्रथमःप्रहरः स्मृतः॥सएवाप्यर्द्धसंयुक्तःप्रातरित्यभिधीयते॥अग्न्याधानादिनिमित्तं

---

१ वर्जनादिरहितम् इति पा० । २ दर्चादि इ० पा० । ३ अर्चादि इ० पा० ।

त्वपराह्णेकार्यम् ॥तदाहगालवः॥पार्वणंचापराह्णेतुवृद्धिश्राद्धंतथाग्निक मिति ॥ अग्न्याधानादिनिमित्तंवृद्धिश्राद्धमापराह्णेकुर्यादित्यर्थः ॥ पुत्र जन्मादिनिमित्तस्यानियतत्वाच्चनिमित्तानंतरमेवतत्कार्यम्॥आभ्युद यिकश्राद्धंमातृपूर्वकमेवकार्यम् ॥ तदुक्तम् ॥ मातृश्राद्धंतुपूर्वस्यात्पि तॄणांतदनंतरम्॥ततोमातामहानांतुएवंनांदीमुखंभवेदिति ॥ नांदीमु खमाभ्युदयिकश्राद्धम् ॥ अथनांदीमुखनिमित्तान्युच्यंते॥तत्रकार्ष्णा जिनिः ॥ कन्यापुत्रविवाहेषुप्रवेशेनववेश्मनः ॥ नामकर्मणिबालानां चूडाकर्मादिकेतथा ॥ सीमंतोन्नयनेचैवपुत्रादिमुखदर्शने ॥ नांदीमु खान्पितृगणान्पूजयेत्प्रयतोगृही ॥ पुत्रादीत्यादिशब्दात्पौत्रमुख दर्शनस्याप्युपसंग्रहः ॥ गार्ग्योऽपि॥ पुत्रोत्पत्तिप्रतिष्ठासुतन्मौंजीत्या गबंधने ॥ चूडायांचविवाहेषुवृद्धिश्राद्धंविधीयतइति ॥ वृद्धगार्ग्योऽ पि॥अग्न्याधानाभिषेकादाविष्टापूर्तौस्त्रियाक्रतौ ॥ वृद्धिश्राद्धंप्रकुर्वीत आश्रमग्रहणेतथेति ॥ स्त्रियाक्रतावाद्यएव ॥ मत्स्यपुराणेपि ॥ उत्सवानंदसंतानयज्ञोद्वाहादिमंगले ॥ मातरःप्रथमंपूज्याःपितरस्तद नंतरम् ॥ ततोमातामहाःपूज्याविश्वेदेवास्तथैवचेति ॥ अत्रैवविशे षोगार्ग्येणोक्तः ॥ मातृश्राद्धंतुपूर्वेद्युःकर्माहनितुपैतृकम् ॥ माता महंचोत्तरेद्युर्वृद्धौश्राद्धत्रयंस्मृतमिति ॥ दिनत्रयकरणासंभवेशुभ कर्मदिनात्पूर्वदिनेश्राद्धत्रयमपिकुर्यात् ॥ तदाहशातातपः॥पृथग्दिने ष्वशक्तश्चेदेकस्मिन्पूर्ववासरे ॥ श्राद्धत्रयंतुकुर्वीतवैश्वदेवन्तुतांत्रिक मिति ॥ वृद्धिश्राद्धेदधिबदरादिभिःपिंडदानंकुलाचारप्राप्तंचेत्कुर्यान्न चेन्नकुर्यात् ॥ तदुक्तंभविष्योत्तरे ॥ पिंडानिर्वपणंकुर्यान्नवाकुर्यान्नरा धिप ॥ वृद्धिश्राद्धेमहाबाहोकुलधर्मानवेक्ष्यत्विति ॥ ॥ इतिवृ द्धिश्राद्धनिर्णयः ॥ अथजीवच्छ्राद्धनिर्णयः ॥ कर्त्रंतरेऽसतिश्राद्धा दिनाजीवायश्राद्धंदद्यात् ॥ तदुक्तंब्रह्मपुराणे ॥ देशकालधनश्र द्धान्यवसायसमुच्छ्रिते ॥जीवितेसतिजीवायदद्याच्छ्राद्धंस्वयंनरइति॥ ॥इतिश्री० निर्णयामृतेश्राद्धप्रकरणेद्वितीयेजीवच्छ्राद्धनिर्णयः॥ ॥अथ

संक्रांतिनिर्णयःप्रारभ्यते ॥ ॥ ताश्चसंक्रांतयोद्वादश ॥ तासुमकर कर्कटावुदग्दक्षिणायने ॥ तुलामेषौविषुवे ॥ वृषवृश्चिककुंभसिंहाविष्णुपद्यः॥धनुर्मिथुनकन्यामीनाःषडशीतयः॥तदाहवृद्धवसिष्ठः॥ अयनेद्वेविषुवेद्वेचतस्रःषडशीतयः ॥ चतस्रोविष्णुपद्यस्तुसंक्रांत्योद्वादश स्मृताः ॥ मृगकर्कटसंक्रांतीद्वेउदग्दक्षिणायने ॥ विषुवेद्वेतुलामेषौ गोलमध्येततोपराइति ॥ मृगोमकरः ॥ गोलंचलनम् ॥ अयनविषुवयोर्गोलमध्यइत्यर्थः ॥ ज्योतिर्वसिष्ठोपि॥ वृषवृश्चिककुंभेषुसिंहेचैवयदारविः ॥ एतद्विष्णुपदंनामविषुवादधिकंफलम् ॥ कन्यायांमिथुने मीनेधनुष्यपिरवेर्गतिः॥षडशीतिमुखाः प्रोक्ताःषडशीतिगुणाःफलैरिति ॥ आसामेवसंक्रांतीनांवारभेदेनसंज्ञाभेदोरत्नमालायामुक्तः ॥ घोरारवौध्वांक्ष्यमृतद्युतौचसंक्रांतिरारेचमहोदरीस्यात् ॥ मंदाकिनीज्ञेचगुरौचमंदामिश्राकवौराक्षसिकार्किवारइति ॥ एतासांचफलंतत्रैवोक्तम् ॥ ध्वांक्षीवैश्यान्सुखयतिमहोदर्यलंचौरसार्थान्घोराशूद्रानथनरपतीनेवमंदाकिनीच ॥ मंदाख्याचद्विजवरगणान्मिश्रकाख्यापशूंश्च ॥ चंडालानांप्रकृतिमखिलांराक्षसीसंज्ञिताचेति ॥ इदमेवफलंयैर्नक्षत्रैर्योगेसंपूर्णभवति ॥ तान्या‍सिएवाह ॥ उग्रक्षिप्रचरैर्मैत्रध्रुवमिश्राख्यदारुणैः ॥ ऋक्षैःसंक्रांतिरर्कस्यघोराद्याःक्रमशोमतम् ॥ अस्यार्थः ॥ रविवारेउग्रसंज्ञकानांपूर्वात्रयभरणीमघानामन्यतमसंयोगेयदासंक्रांतिर्भवतितदाघोराफलंसंपूर्णम् ॥ उभयथाघोरात्वासिद्धेः ॥ सोमवारे क्षिप्रसंज्ञकानामश्विनीपुष्यहस्ताभिजितामन्यतमसंयोगेसंक्रांतौध्वांक्षीफलंसंपूर्णम्॥भौमवारेचरसंज्ञकानांश्रवणधनिष्ठाशतभिषक्पुनर्वसुस्वातीनामन्यतमसंयोगेसंक्रांतौमहोदरीफलंसंपूर्णम्॥ बुधवारेमैत्रसंज्ञकानांचित्रारेवतीमृगशिरोनुराधानामन्यतमसंयोगेसंक्रांतौमंदाकिनीफलंसंपूर्णम् ॥ गुरुवारेध्रुवसंज्ञकानांरोहिणीत्र्युत्तराणामन्यतमसंयोगे संक्रांतौमंदाफलंसंपूर्णम् ॥ शुक्रवारेमिश्रसंज्ञयोःकृत्तिकाविशाखयो

रन्यतमसंयोगेसंक्रांतौमिश्राफलंसंपूर्णम् ॥ शनिवारेदारुणसंज्ञकानां ज्येष्ठार्द्राश्लेषाणामन्यतमसंयोगेसंक्रांतौराक्षसीफलंसंपूर्णंभवति ॥ वार नक्षत्रयोर्विपर्यासेवारनक्षत्रप्रातंमिश्रफलंभवतीति ॥ आसामेववेलाभे देनापिफलभेदंसएवाह ॥ पूर्वाह्णकालेनृपतीन्द्विजेंद्रान्मध्यंदिनेचाथवि शोपराह्णे ॥ शूद्रान्नवावस्तमितेप्रदोषेपिशाचकान्रात्रिचरान्निशीथे ॥ नटादिकांश्चापररात्रिकालेप्रत्यूषकालेपशुपालकांश्च ॥ संक्रांतिरर्क स्यसमस्तलिंगिव्रातञ्चसंध्यासमयेनिहंति ॥ सर्वासुसंक्रांतिषुश्राद्ध स्नानदानादिकंकुर्यात् ॥ तदुक्तंपुलस्त्येन ॥ अयनद्वितयेश्राद्धंवि षुवद्वितयेतथा ॥ युगादिषुचकुर्वीतपिंडनिर्वपण।इतइति॥वृद्धवसि ष्ठोपि॥ अयनेकोटिपुण्यंस्याल्लक्षंचविषुवेफलम् ॥ षडशीत्यांसहस्रंतु फलंविष्णुपदीषुचेति ॥ अयनादिषुचकृतंस्नानदानादिकंकोटिगुणा दिफलंभवतीत्यर्थः ॥ शातातपोऽपि ॥ सूर्यस्यसंक्रमेपुण्येनस्नायाद्य दिमानवः ॥ सप्तजन्मानिरोगीस्याद्दुःखभोगीचजायतइति॥ संक्रांतौया निदत्तानिहव्यकव्यानिमानवैः ॥ तानितेभ्योददात्यर्कःसप्तजन्मसुनि श्चितमिति ॥ स्मृत्यर्थसारेऽपिविशेषउक्तः ॥ मध्येविषुवतिदानंविष्णु पदेदक्षिणायनेचादौ ॥ षडशीतिमुखेऽतीतेतथोदगयनेचभूरिफलमि ति ॥ ननुसंक्रांतिषुस्नानदानादिकंविहितम् ॥ सचसंक्रांतिसम योनिमेषादपिसूक्ष्मत्वाज्ज्ञातुंदुःशक्यः ॥ अतश्चतावतिकाले स्नानादिकंकर्त्तुंकथंशक्यमितिचेत् ॥ सत्यम् ॥ मुख्यकालस्या तिसूक्ष्मत्वात्तत्सन्निहितेपूर्वस्मिन्परस्मिन्वाकालेस्नानदानादिकंकार्य म् ॥ तदाहवृद्धवसिष्ठः ॥ संक्रांतिसमयःसूक्ष्मोदुर्ज्ञेयःपिशिते क्षणैः ॥ तद्योगाच्चाप्यधश्चोर्ध्वंत्रिंशन्नाड्यःपवित्रकाइति ॥ इदंसामा न्यतःसर्वसंक्रांतिविषयम् ॥ विशेषस्तूच्यते ॥ कर्कटेपूर्वास्त्रिंशन्ना ड्योमकरेपराविंशतिर्नाड्यःपुण्याः ॥ तदाहवृद्धवसिष्ठः ॥ अतीताना गतेपुण्येद्वेउदग्दक्षिणायने ॥ त्रिंशत्कर्कटकेनाड्योमकरेविंशतिःपरा

इति ॥ विषुवयोस्तुप्राक्पश्चाच्चदशनाड्यःपुण्याः ॥ यथासएवाह ॥
वर्तमानेतुलामेषेनाड्यस्तूभयतोदशेति ॥ विष्णुपदीषुप्राक्पश्चाच्चषो
डशनाड्यःपुण्याः ॥तदाहवृद्धवसिष्ठः॥पुण्याःस्युर्विष्णुपद्यान्तुप्राक्प
श्चादपिषोडशेति॥षडशीतिषुपश्चात्षष्टिर्नाड्यःपुण्याः॥यथासएवाह॥
षडशीत्यांव्यतीतायांषष्टिरुक्तास्तुनाडिकाइति ॥ अत्रकेचित्षड
शीतिमुखीनांविषुवायनाधिकफलत्वमसहमानाइदंवचनमन्यथाव्या
ख्यातवंतः ॥ यथा षडशीतिमुखीनांसंक्रांतीनांचतसृणामेकै
कस्याःपंचदशपंचदशेतिमिलितानांपुण्याख्याःषष्टिर्नाड्योभवन्ति ॥
यद्येकैकस्याःषष्टिःपुण्यागृह्येरंस्तदैतासामेवसर्वाभ्यःप्रकर्षःप्राप्नोति॥
प्रभूतपुण्यकालत्वात् ॥ तथासतिदेवीपुराणे ॥ विषुवायनसन्निधावि
तिविषुवायनसंज्ञितानांप्रकर्षविधानेनविरोधइति ॥ तन्नयुक्तिसहम् ॥
अधिकफलत्वस्यएतद्विष्णुपदंनामविषुवादधिकंफलमितिवत्अर्थवा
दरूपेणापिवर्णयितुंशक्यत्वात्॥ नाप्यधिकफलत्वाभावेकिंचिन्नियाम
कम्॥देवीपुराणवचनन्तुविषुवायनयोःप्रकर्षमभिधत्ते॥ नतुतदितरेषा
मपकर्षम्॥इतरसंक्रांतीनामपिवाक्यांतरेणप्रकर्षाभिधानात् ॥ नहिल
भ्यते विष्णुःसंपूजितःसम्यक्चतुर्विधफलप्रदइत्युक्तेनशिवइति ॥ अ
न्यथा॥विष्णुपदीष्वपिविषुवाधिकफलत्वनिरासायतासामपिमिलिता
नांषोडशनाड्यःपुण्याइतिव्याख्यानंप्रसज्येत ॥ तत्रापिकेचिदेवंव्या
चक्षतेप्राक्पश्चादपिषोडशेतिप्रागष्टौमिलित्वाषोडशेति॥ एवंचसतिव
र्तमानेतुलामेषेनाड्यस्तूभयतोदशेत्यत्राप्येवंविधंव्याख्यानस्यवक्तुंश
क्यत्वाद्भिन्नाभिमतसिद्धिरिति॥किंच चतसृणांमिलितानांषष्टिर्नाड्यः
पुण्याइत्युक्तेपिविषुवदाधिकफलत्वंतदवस्थमेव ॥ नचग्रंथांतरेष्वेवं
व्याख्यातुमित्युपेक्षणीयमित्यलमतिविस्तरेण॥ ननुसंक्रांतिसामान्य
विषयत्वेनाधश्चोर्ध्वंत्रिंशन्नाड्यःपवित्राइत्युक्तम्॥वाक्यान्तरैस्तुदशषो
डशादीनांपुण्यत्वमुक्तमितिविरोधइतिचेन्न ॥ त्रिंशन्नाडीनांपुण्यत्वंषो

डशादिनाडीनांतदपेक्षयासन्निहितत्वात्पुण्यतरत्वंततोपिसन्निहिता- नांपुण्यतमत्वमित्यविरोधः ॥ तदाहवसिष्ठः ॥ यायासन्निहितानाड्य स्तास्ताःपुण्यतमाःस्मृताइति ॥यत्तुवृद्धवसिष्ठवचनम्॥अहःसंक्रमणे पुण्यमहःकृत्स्नंप्रकीर्तितमिति ॥ तत्रापिपूर्वोक्तएवसन्निधिविशेषात्फ लविशेषःकल्पनीयः॥अयंनिर्णयोदिनसंक्रांतिविषयः॥रात्रिसंक्रमणेतु विशेषउच्यते ॥अर्धरात्रादधोरात्रौसंक्रमेपूर्वमहः॥मध्याह्नादुपरिस्नाना दौपुण्यम् ॥ अर्द्धरात्रादूर्ध्वंसंक्रमेतुपरदिनंमध्याह्नपर्यंतंपुण्यम्॥ तदा हवृद्धवसिष्ठः ॥ रात्रौसंक्रमणेपुण्यंदिनार्द्धंस्नानदानयोः ॥ अर्धरात्रा दधस्तस्मिन्मध्याह्नस्योपरिक्रियम् ॥ ऊर्ध्वंसंक्रमणेचोर्ध्वमुदयात्प्रहर द्वयमिति ॥ तथाच ॥ आसन्नसंक्रमेपुण्यंदिनार्द्धंस्नानदानयोरिति ॥ यदासंपूर्णेर्द्धरात्रेसंक्रांतिःस्यात्तदादिनद्वयंपुण्यम्॥तदाहवृद्धवसिष्ठः॥ संक्रमस्तुनिशीथेस्यात्षड्यामाःपूर्वपश्चिमाः ॥ संक्रांतिकालेविज्ञे यास्तत्रस्नानादिकंचरेदिति ॥ ज्योतिर्वसिष्ठोऽपि ॥ पूर्णेचैवार्द्धरात्रेतु यदासंक्रमतेरविः ॥ तदादिनद्वयंपुण्यमुक्त्वामकरकर्कटाविति ॥ मकरकर्कटयोस्तुविशेषः ॥ तदाहवृद्धगार्ग्यः ॥ यद्यस्तमयवेलायां मकरंयातिभास्करः ॥ प्रदोषेचार्द्धरात्रेवास्नानदानंपरेऽहनि ॥ अर्धरा त्रंतदूर्ध्वंवासंक्रांतौदक्षिणायने ॥ पूर्वमेवदिनंग्राह्यंयावन्नोदयतेरविरि ति ॥भविष्योत्तरेऽपि ॥ मिथुनात्कर्कसंक्रांतिर्यदास्यादंशुमालिनः ॥ प्रभातेवानिशीथेवाकुर्यादहनिपूर्वतः ॥ कार्मुकंतुपरित्यज्यझषं संक्रमतेरविः ॥ प्रदोषेवार्द्धरात्रेवास्नानदानंपरेहनीति ॥ झषंमकरम् ॥ यत्तुवचनम् ॥ आदौपुण्यंविजानीयाद्यद्यभिन्नातिथिर्भवेत् ॥ अर्द्धरात्रे व्यतीतेतुविज्ञेयमपरेहनीति ॥ अस्यार्थः ॥ यद्यर्द्धरात्रेपूर्वदिनेति थ्याअभिन्नातिथिर्भवतितदापूर्वदिनंपुण्यम् ॥ भिन्नायांतिथावर्द्धरा त्रेव्यतीतेपरदिनंपुण्यमिति ॥ तथा ॥ आसन्नसंक्रमंपुण्यमि त्यादिवाक्यानिचमकरकर्कटव्यतिरिक्तसंक्रांतिविषयेसावकाशानि ॥

मिथुनात्कर्कसंक्रांतिः कार्मुकंतुपरित्यज्येत्यादिवाक्यानितुमकरकर्क टमात्रविषयत्वान्निरवकाशानि ॥ अतश्चसावकाशनिरवकाशयोर्निरव काशविधिर्बलवानितिन्यायान्मकरेपरदिनस्यपुण्यत्वम्॥कर्कटेपूर्वदि नस्यपुण्यत्वञ्चेतियुक्तम् ॥ यद्वा ॥ आसन्नसंक्रमामित्यादयः सामान्य विधयोमिथुनात्कर्कसंक्रांतिरित्यादिनाविशेषविधिनाबाध्यंतइत्यपिम करकर्कटयोःपरपूर्वदिवसयोरेवपुण्यत्वंयुक्तम् ॥ यत्तुकैश्चिदुक्तम्॥आ सन्नसंक्रमंपुण्यमित्यादीनिदेवीपुराणोक्तत्वान्मूलवाक्यानिमिथुना- त्कर्कसंक्रांतिरित्यादिवाक्यानितत्रानुक्तत्वादमूलान्याधुनिकानीति॥ नात्रकिंचिन्नियामकम् ॥ मूलवाक्यत्वेतुवृद्धगार्ग्यभविष्योत्तरवा क्यत्वप्रतिपादकाबहवोनिबंधाएवप्रमाणम् ॥ यच्चतैरेवोक्तम् ॥ अ ह्निचेद्रात्रियुग्मंस्याद्रात्रौचेद्वासरद्वयम् ॥ संक्रांतिः पक्षिणीज्ञेयादा नाध्ययनकर्मस्वित्यत्रवाक्येमकरकर्कटयोर्दिनद्वयस्यपुण्यत्वमुक्तम् तद्दानाध्ययनकर्मविषयंद्रष्टव्यम् ॥ अत्रदानंवेदाध्यापनम् ॥ कर्माणिचाध्ययनाङ्गान्येवेति ॥ तदपिनयुक्तिसहम् ॥ अयनद्वयस्या नध्यायत्वेनैवतत्राध्ययनस्यासंभवात् ॥ तदाहयाज्ञवल्क्यः ॥ अय नेविषुवेचैवशयनेबोधनेतथा ॥ चातुर्मास्यद्वितीयासुवेदाध्यायंविवर्ज येत्॥किञ्चअध्यापकानामध्येतॄणांचायंसमुदाचारः ॥ तेहिरात्रौमक रकर्कसंक्रान्तौदिनद्वयंनाध्यापयन्ति नाधीयतेत्युत्तरेणस्ववचनेनैव विरोधोपिस्यात् ॥ नन्वध्यापनेत्वयंदोषःसामान्यइतिचेन्न ॥ अत्राध्ययनशब्देनस्वाध्यायोनावसीयइति प्रत्यहंविहितब्रह्मयज्ञ रूपस्वाध्यायस्यविवक्षितत्वात् ॥ तस्यानध्यायेपिनानिषेधः ॥तदुक्तं स्मृतिसंग्रहे ॥ नानुरोधोस्त्वनध्यायेहोममंत्रेषुचैवहि ॥ वेदो पकरणेचैवस्वाध्यायेचैवनैत्यकइति ॥ अतश्चमकरकर्कटयोरुक्त एवनिर्णयः साधीयान् ॥ अत्रापिरात्रिभागस्यसन्निहितत्वात्पुण्य तमत्वम् ॥ ननुरात्रौस्नानंनकुर्वीतदानंचैवविशेषतइति ॥ रात्रौ

स्नानदाननिषेधेसतिकथंरात्रिभागस्यपुण्यतमत्वमितिचेत् ॥सत्यम्॥ संक्रांत्यादिषुरात्रावपिस्नानदानादिविधानात् ॥ तदाहयाज्ञवल्क्यः॥ राहुदर्शनसंक्रांतिविवाहात्ययवृद्धिषु ॥ स्नानदानादिकंकुर्यान्निशि काम्यव्रतेषुचेति ॥ ब्रह्मा ॥ विनाप्रेषेणयद्दानंयद्दानंजलवर्जितम् ॥अकालीनमवैधंयत्तद्दानमसुरैर्हृतम् ॥ ॥ इतिश्रीसूर्य्यसेनमहीमहेन्द्रविरचितेनिर्णयामृतेसंक्रांतिनिर्णयः॥ ॥ अथप्रसंगान्नदीनांरजोदोषउच्यते ॥ तदाहव्याघ्रपादः ॥ सिंहकर्कटयोर्मध्येसर्वानद्यो रजस्वलाः ॥ तासुस्नानंनकुर्वीतवर्जयित्वासमुद्रगाइति ॥ महानदीषुविशेषोभविष्योत्तरे॥आदौकर्कटकेदेविमहानद्योरजस्वलाः॥ त्रिदिनंतुचतुर्थेह्निशुद्धाःस्युर्जाह्नवीयथेति ॥ गंगादिविषयेतुस्मृतिसंग्रहेविशेषउक्तः॥तपनस्यसुतागंगागौतमीचसरस्वती॥रजसानाभिभूयंतेवेणीचनदसंज्ञिताइति ॥ रजोदुष्टमपिजलंगंगादिजलसंयुक्तमदुष्टं भवति ॥ तदुक्तंमहाभारते ॥ अपवित्रमपिप्राप्यगंगांयातिपवित्रतामिति ॥ मत्स्यपुराणेपि ॥ पुण्यांभसासमायोगाद्दुष्टमप्यंबुपावनमिति ॥ इतिसंक्रांतिप्रसंगान्नदीरजोदोषउक्तः ॥ मलमासस्यापि संक्रांतिमूलत्वान्मलमासनिर्णयः प्रस्तूयते ॥ मलमासोनाम संक्रांति विरहितोमासःसंक्रांतिद्वययुक्तोवा॥ तदुक्तंकाठकगृह्ये ॥ यस्मिन्मासिनसंक्रांतिः संक्रांतिद्वयमेववा ॥ मलमासः सविज्ञेयोमासःस्यात्तु त्रयोदशइति ॥ अयंचमासश्चान्द्रएव ॥ अतश्चयत्रामावास्याद्वयमध्ये संक्रांतिर्नस्यात्संक्रांतिद्वयंवाभवेत्समलमासइत्यर्थः ॥तदाहगार्ग्यः ॥ अमावास्याद्वयंयत्ररविसंक्रांतिवर्जितम् ॥मलमासः सविज्ञेयोमासःशुद्धाख्यउत्तरइति॥ अस्यैवमलिम्लुचइतिसंज्ञा॥तदाहवसिष्ठः॥मासद्वैधंभवेद्वर्षेतिथिद्वैधंयदाभवेत् ॥तत्रोत्तरोत्तमोज्ञेयःपूर्वःस्यात्तुमलिम्लुचइति॥अयमधिकमाससंज्ञोपि ॥असंक्रांतिमासेत्वाद्योमलिम्लुचउक्त

१ शुक्लप्रतिपदमारभ्यदर्शान्तंसंक्रांतिर्नस्यात् इ०पाठान्तरम्।२ शुक्लादिकृष्णपक्षान्तं संक्रांतिर्नभवेद्यादि इतिपाठान्तरम्।

रःशुद्धः ॥ द्विसंक्रांतिमासस्तुमलमासएवनाधिकमासः ॥ तदाहसत्यव्रतः ॥ राशिद्वयंयत्रमासेसंक्रमेतदिवाकरः ॥ नाधिमासोभवेदेषमलमासस्तुकेवलमिति॥अयंद्विसंक्रांतिमासःक्षयाख्योपि ॥तदुक्तंज्योतिःशास्त्रे ॥ असंक्रांतिमासोधिमासःस्फुटःस्याद्विसंक्रांतिमासःक्षयाख्यःकदाचित्॥क्षयःकार्तिकादित्रयेनान्यतःस्यात्तदावर्षमध्येऽधिमासद्वयंच ॥ द्विसंक्रांतिमासोयत्रभवतितत्रवर्षमध्येधिमासद्वयंभवति तत्रपरोदुष्टः ॥ आद्यःशुद्धः ॥ तदुक्तंतत्रैव ॥ एकत्रमासद्वितयंयदिस्याद्वर्षेधिकंतत्रपरोधिमासः ॥ त्रयोदशंतुश्रुतिराहवेदेचतुर्दशःक्वापिनचात्रदृष्टइति ॥ अयंत्रयोदशोमासश्चांद्रएवनसौरः ॥ तदुक्तम् ॥ अस्तित्रयोदशोमासःसचश्रुत्यानिगद्यते ॥ असौचांद्रोनसौरःस्यान्नास्तिसौरश्चतुर्दशइति ॥ अयंचत्रयोदशोमासःत्रिंशत्तमान्मासादूर्ध्वंषट्त्रिंशत्तमान्मासात्पूर्वंभवतीतिनियमः ॥ तदुक्तंज्योतिःसागरे॥ त्रिंशत्षट्त्रिंशन्मासस्यबाह्याभ्यंतरयोर्द्वयोः ॥ अधिमासोविकल्पेनबादरायणकीर्तितइति ॥ अनयोरेवासंक्रांतस्यसंसर्पकइतिद्विसंक्रांतस्याहर्पतिरितिसंज्ञांतरंच ॥ तदुक्तम् ॥ दर्श[1]द्वयंयदैकस्मिन्सौरेसंसर्पकोभवेत् ॥ अहर्पतिर्यदैकस्मिश्चांद्रौद्वौ[2]संक्रमौतदा ॥ संसर्पाहर्पतीचेतिद्विविधावधिमासकौ ॥ मासौपूर्वापरौदुष्टौपरपूर्वौशुभावहाविति॥ अत्राधिमासशब्दोनामोपचारतोमलमासएवोच्यते ॥ अन्यथानाधिमासोभवेदेषइतिसत्यव्रतवचनविरोधःस्यात् ॥ अत्रद्विविधेऽपिमलमासेऽनन्यगतिकंनित्यंनैमित्तिकंचकर्मकुर्यात् ॥ तदुक्तंकाठकगृह्यपरिशिष्टे ॥ मलेनन्यगतिंनित्यांकुर्यान्नैमित्तिकींक्रियामिति ॥ बृहस्पतिरपि ॥ नित्यनैमित्तिकेकुर्यात्प्रयतःसन्मलिम्लुचे ॥ तीर्थश्राद्धंगजच्छायांप्रेतश्राद्धंतथैवचेति ॥ यमोपि ॥ गर्भवार्धुषिकेभृत्ये श्राद्धकर्मणिमासिके ॥ सपिंडीकरणेनित्येनाधिमासंविवर्जयेत् ॥

१ नैवचान्द्रेयदैकस्मिन्सौरःसंसर्पकोभवेत् इ०पा० । २ द्वेसौरद्वयंभवेत् इ०पा० ।

तीर्थस्नानंजपोहोमोयस्तुव्रीहितिलादिभिः ॥ जातकर्मान्त्रकर्माणि नवश्राद्धंतथैवच ॥ मघात्रयोदशीश्राद्धंश्राद्धान्यपिचषोडश ॥ चंद्रसूर्यग्रहेस्नानंश्राद्धंदानजपादिकम्॥कार्याणिमलमासेपिनित्यंनैमित्तिकंतथेति॥अत्रतीर्थस्नानश्राद्धादिप्रासंगिकंनत्वपूर्वम्॥तस्यमलमासेऽपिनिषेधात्॥तदुक्तम्॥मलमासेप्यनावृत्ततीर्थयात्रांविवर्जयेदिति॥नैमित्तिकंतुयादिपूर्वमासेनिमित्तमुत्पद्यतेतदापूर्वमासे ॥ यदोत्तरमासेउत्पद्यतेतदोत्तरत्र॥उभयत्रचेन्मासद्वयेपिकुर्यात्॥तदाहागस्त्यः॥जातकर्मणियच्छ्राद्धंनवश्राद्धंतथैवच ॥ ग्रहणेपुंसवादौचतत्पूर्वत्रपरत्रचेति ॥ निमित्तवशादितिवाक्यशेषः ॥ मत्स्यपुराणेप्युक्तम् ॥ चंद्रसूर्यग्रहेचैवमरणेपुत्रजन्मनि ॥ मलमासेपिदेयंस्यादत्तमक्षयकारकमिति ॥ मरीचिरपि ॥ योगेचालभ्ययोगेचसीमंतेपुंसवेपिच ॥ यद्दानादिकमुद्दिष्टंपूर्वत्रापिनदुष्यतीति ॥ नित्यान्यपिसंध्योपासनादीनिमासद्वयेपिकार्याणि॥तदुक्तंमैत्रेयसूत्रे॥मासद्वयेयद्येकराशिसंक्रमेतादित्यस्तत्राद्योमलिम्लुचः ॥ शुद्धोन्यः॥पार्वणेष्टिरग्निहोत्राग्रयणसंध्योपासनंपार्वणस्थालीपाकश्चेतिनित्यानिनैमित्तानिचाहापर्यस्तेजजास्वीयतइतिविज्ञायतइति॥यत्तुव्यासवचनम् ॥ श्रौतस्मार्तक्रियायाश्चद्वादशेमासिकीर्तिताः॥ त्रयोदशेतुताःसर्वाराक्षस्यःपरिकीर्तिता इति ॥तत्काम्येष्ट्यादिविषयम् ॥ तदुक्तंगृह्यपरिशिष्टे ॥ अवषट्कारहोमाश्चपर्वचाग्रयणंतथा ॥ मलमासेपिकर्त्तव्याकाम्याइष्टीर्विवर्जयेदिति ॥ अवषट्कारहोमाअग्निहोत्रोपासनवैश्वदेवाद्याः ॥ पर्वदर्शपौर्णमासेष्टिःपार्वणस्थालीपाकश्च ॥ आग्रयणंनवान्नेनक्रियमाणेष्टिः ॥ साचापदिपुरातनान्नाभावेनवान्नभोजनार्थंकर्त्तव्या नत्वनापदि ॥ तस्यनिषेधोग्रेवक्ष्यते ॥ मत्स्यपुराणेपि ॥ दर्शेचाहरहःश्राद्धंदानंचप्रतिवासरम् ॥ गोभूतिलहिरण्यानांमास्यपिस्यान्मलिम्लुचइति ॥ ननुमलमासेदर्शश्राद्धंकर्तव्यमित्युक्तम् ॥ ऋष्यशृंग

वाक्येनतुनिषिद्धम् ॥ यथा ॥ संवत्सरातिरेकेणमासोयःस्यान्मलि
म्लुचः ॥ तस्मिंस्त्रयोदशेश्राद्धंनकुर्यादिन्दुसंक्षयइतिविरोधइतिचे
न्न ॥ निषेधस्यदर्शविहितेकाम्यश्राद्धविषयत्वात् ॥ तदाह
जाबालिः ॥ नित्यंनैमित्तिकंचैवश्राद्धंकुर्यान्मलिम्लुचे ॥ तिथि
नक्षत्रवारोक्तंकाम्यंनैवकदाचन ॥ मलमासेमृतानांतुपुनःप्रत्याब्दि
केमलमासेप्राप्तेमलमासएवकार्यंनशुद्धे ॥ तदाहभृगुः ॥ मलमासे
मृतानांतुयच्छ्राद्धंप्रतिवत्सरम् ॥ मलमासेपुनःकार्यंनान्येषांतुकदा
चनेति ॥ तुशब्दएवार्थे ॥ सत्यतपा अपि ॥ वर्षेवर्षेतुयच्छ्राद्धंमृताहे
तन्मलिम्लुचे ॥ कुर्यात्तत्रप्रमीतानामन्येषामुत्तरत्रत्विति ॥ अन्येषा
मितिमलमासादन्यत्रमृतानांशुद्धमासएवकार्यमित्यर्थः ॥ तदुक्तंस
त्यव्रतेन ॥ वर्षेवर्षेतुयच्छ्राद्धंमातापित्रोर्मृतेहनि ॥ मलमासेनतत्का
र्यंव्याघ्रस्यवचनंयथेति ॥ यत्तुवचनम् ॥ जातकर्मणियच्छ्राद्धंनवश्राद्धं
तथैवच ॥ प्रतिसंवत्सरंश्राद्धंमलमासेपितत्स्मृतमिमि ॥ इदमपि
मलमासमृताब्दिकविषयम् ॥ एवमन्यान्यपिमलमासेप्रत्याब्दिकवि
धायकवाक्यानिमलमासमृतविषयाणिज्ञेयानि ॥ यत्तुवृद्धवसिष्ठव
चनम् ॥ श्राद्धीयेहनिसंप्राप्तेअधिमासोभवेद्यदि ॥ मासद्वयेपिकुर्वीतश्राद्ध
मेतन्नदुष्यतीति ॥ तथा व्यासवचनम् ॥ षष्ट्यातुदिवसैर्मासःकथि
तोबादरायणैः ॥ उत्तरेदेवकार्याणिपितृकार्याणिचोभयोरिति ॥ इदं
वचनद्वयंसांवत्सरिकव्यतिरिक्तमासिकादिश्राद्धविषयम् ॥ तदुक्तं
स्मृतिचंद्रिकायाम् ॥ युगादिकंमासिकंचश्राद्धंचापरपाक्षिकम् ॥ म
न्वादिकंतैर्थिकंचकुर्यान्मासद्वयेपिचेति ॥ अत्रापरपाक्षिकमितिप्रति
मासंकृष्णपक्षेविधीयमानंश्राद्धमुच्यते ॥ नत्वाश्विनसंबंधिमहालयश्रा
द्धम् ॥ तस्यनकुर्याद्वानुलंघितइति महालयाब्दिकेचैवेति भृगुवसिष्ठ
वाक्याभ्यांमलमासेनिषेधात् ॥ सर्वमासकृष्णपक्षेषुश्राद्धमापस्तंबेन
विहितम् ॥ यथा ॥ मासिमास्यपरपक्षस्यापराह्णःश्रेयान् ॥ तत्राप्यपर

पक्षस्यजघन्यान्यहानिसर्वैर्ष्वेवापरपक्षस्याहःसुदत्तंपितॄन्प्रीणातीति॥ मलमासादन्यत्रमृतानामपिदैवात्त्रयोदशेऽधिमासेसति प्रथमाब्दिकं मलमासएवकार्यम् ॥ संवत्सरेपूर्णेसपिंडीकरणपक्षाश्रयणेपितत्रैवस पिंडीकरणंकुर्यात् ॥ तदाहवसिष्ठः ॥ असंक्रांतेपिकर्त्तव्यमाब्दिकं प्रथमंद्विजैः ॥ तथैवमासिकंश्राद्धंसपिंडीकरणंतथेति ॥ क्षयमासेतु तत्रैवप्रत्याब्दिकमपिकार्यम् ॥ तदाहसत्यव्रतः ॥ एकएवयदामासः संक्रांतिद्वयसंयुतः ॥ मासद्वयगतंश्राद्धंमलमासेऽपिशस्यतइति ॥ गालवोपि॥वर्षेवर्षेतुयच्छ्राद्धंमातापित्रोर्मृतेहनि॥ मासद्वयेपितत्कुर्या द्व्याघ्रस्यवचनंयथा॥ अत्रमासद्वयेपिसंक्रांतिद्वययुक्तत्वान्मासद्वयात्म केक्षयमासइत्यर्थः॥अपिशब्दएवकारार्थं॥एवंविधान्यन्यान्यपिवाक्या न्यस्मिन्नेवविषयेयोज्यानि ॥ कालादर्शकारैस्तुप्रत्याब्दिकमपिमा सद्वयेकर्तव्यमित्युक्तम् ॥ ततश्चवृद्धाचारपूर्वत्वान्मलमासेपिक्षय दिनस्यावंध्यत्वनिरासार्थंपित्रुद्देशेनब्राह्मणान्भोजयित्वाशुद्धमासेश्रा द्धंकुर्यादित्येवानवद्यम् ॥ नित्यान्यपिसोमयागादिकर्माणिम लिम्लुचेनकार्याणि ॥ तदुक्तंपरिशिष्टे ॥ सोमयागादिकर्माणिनित्या न्यपिमलिम्लुचे ॥ तथैवाग्रयणाधानिचातुर्मास्यादिकान्यपि ॥ महालयाष्टकाश्राद्धोपाकर्माद्यपिकर्मयत् ॥ स्पष्टमासविशेषाख्या विहितंवर्जयेन्मलइति ॥ स्पष्टमासेतिमासविशेषनामग्रहणेनवैशाखे कर्तव्यंकार्त्तिकेकर्त्तव्यंमाघेकर्तव्यमित्यादिकं मलिम्लुचेवर्जयेदित्य र्थः ॥ अनित्यमनिमित्तंचमहादानादिकमविपन्ननामान्नप्राशनका म्यव्रतारंभोत्सर्जनादिकंदेवप्रतिष्ठादिकंचमलमासेविवर्जयेत्॥ तदाह बृहस्पतिः॥अग्न्याधानंप्रतिष्ठांचयज्ञदानव्रतानिच ॥ वेदव्रतवृषोत्सर्ग चूडाकरणमेखलाः॥मांगल्यमभिषेकंचमलमासेविवर्जयेदिति ॥ वृषो त्सर्गःकाम्यएवनत्वेकादशाहेक्रियमाणः॥पुनःसएवाह ॥ बालेवायदि वावृद्धेशुक्रेवास्तंगतेगुरौ ॥ मलमासइवैतानिवर्जयेद्देवदर्शनमिति ॥

देवदर्शनमपूर्वम् ॥ तदाहगार्ग्यः ॥ अपूर्वदेवतांदृष्ट्वाशुचःस्युर्नष्टभार्गवे ॥ मलमासेप्यनावृत्ततीर्थयात्रांविवर्जयेदिति ॥ शातातपोपि ॥ अस्तंगतेगुरौशुक्रेवृद्धेबालेमलिम्लुचे ॥ व्रतारंभापवर्गंचनकुर्यान्मौंजिबंधनमिति ॥ गार्ग्योपि ॥ नामान्नप्राशनेचौलंविवाहोमौंजिबंधनम् ॥ निष्क्रमंजातकर्मापिकाम्यंवृषविसर्जनम् ॥ अस्तंगतेगुरौशुक्रेबालेवृद्धेमलिम्लुचे ॥ उद्यापनमुपारंभंव्रतानांनैवकारयेत् ॥ जातकर्मनामकरणन्तुस्वकालेकार्यमेव ॥ तदाहगार्ग्यः ॥ नामकर्मचजातेष्टिंयथाकालंसमाचरेत् ॥ अतियातेतुकुर्वीतप्रशस्तेमासिपुण्यदइति ॥ वसिष्ठोपि ॥ वापीकूपतडागादिप्रतिष्ठांयज्ञकर्मच ॥ नकुर्यान्मलमासेपिमहादानव्रतानिचेति ॥ मरीचिरपि ॥ गृहप्रदेशगोदानस्थानाश्रममहोत्सवान् ॥ नकुर्यान्मलमासेपिगुरौशुक्रेतथास्तगइति ॥ मत्स्यपुराणेपि ॥ आधानंयज्ञकर्मापिप्रायश्चित्तव्रतानिच ॥नकुर्यान्मलमासेपिशुक्रगुर्वोरुपप्लवइति ॥ स्मृतिसंग्रहेपि ॥ आरंभंदर्शपूर्णेष्टचोराग्निहोत्रस्यचादिमे ॥ प्रतिष्ठाःपंचकर्मा[1]द्यामलमासेपिवर्जयेदिति ॥ अत्रप्रासंगिकंगुरुशुक्रयोर्मौढ्यमुच्यते ॥ मौढ्यंनामग्रहाणामस्तमयः॥तत्रापिगुरुशुक्रयोर्मौढ्यंशुभकर्मसुपरिहरणीयत्वात्प्रसिद्धम् ॥ मौढ्यात्प्राग्वृद्धत्वंपश्चाद्बाल्यत्वंचमौढ्यवदेवपरिहरणीयम् ॥ तदुक्तंब्रह्मसिद्धांते ॥ रविणासत्तिरन्येषांग्रहाणामस्तमुच्यते ॥ ततोर्वाग्वार्द्धकंमौढ्यादूर्ध्वंबाल्यंप्रकीर्तितम् ॥ तत्रवार्द्धकबाल्ययोःकिंपरिमाणमित्यत्रोच्यते॥तदुक्तंब्रह्मसिद्धांते ॥ पक्षंप्राग्दिशिवृद्धत्वंपश्चात्पंचदिनंकवेः ॥ शैशवंप्राक्पंचाहंपश्चाद्दशादिनंस्मृतम् ॥ शैशवंवार्द्धकंपक्षंप्राक्पश्चाच्चबृहस्पतेरिति ॥ अत्रैवग्रंथांतरेषुन्यूनाधिकभावःप्रतिपादितः ॥ यथाहरत्नमालायाम् ॥ प्रागुद्यतःशिशुरहांस्त्रितयंसितःस्यात्पश्चाद्दशाहमथपंचदिनानिवृद्धः ॥ प्राच्यांतुपक्षममरेंद्रगुरुस्तुपक्षंप्रागप्यवागपिवदंतिवसिष्ठमुख्याइति ॥ बार्हस्पत्योपि ॥

[1] कर्माद्या० इ० पाठान्तरम् ।

प्राक्पश्चादुदितःशुक्रःपंचसप्तदिनंशिशुः ॥ विपरीतंतुवृद्धत्वंतद्वदेव गुरोरपीति॥इत्यादिषुवाक्येषुस्वल्पकालादेशभेदेविपदिवाग्राह्याः ॥ तदाहवराहमिहिरः ॥ बहवोदर्शिताकालायेबाल्येवार्द्धकेपिवा॥ग्राह्या स्तत्राधिकाःशेषादेशभेदादुतापदीति॥देशभेदेनभेदश्चगार्ग्येणोक्तः॥ यथा॥शुक्रोगुरुः प्राक्चपराक्चबालोविंध्येदशावन्तिषुसप्तरात्रम् ॥वंगे षुहूणेषुचषट्चपंचदेशेचशेषेत्रिदिनंवदंति ॥ अत्रवर्ज्यमग्न्याधानंप्रति ष्ठांचेत्यादिमलमासनिर्णयेचोक्तंग्राह्यम् ॥ दामोदरीयेपि ॥ यदारवे र्मंडलमेतिकाव्योविनष्टतेजागुरुरप्यथैवम् ॥ कालःसदीक्षाव्रततीर्थ यात्राविवाहयज्ञोत्सवनाशहेतुरिति ॥ अत्रापितीर्थयात्राऽपूर्वैव ॥ पूर्वा तुकार्यैव ॥ गुरुरस्तंगतइववक्रातिचारगतःसिंहमकरराशिगतोपिशुभ कर्मसुत्याज्यः ॥ तदुक्तम् ॥ नीचस्थेवक्रसंस्थेह्यतिचरणगतेबालवृ द्धास्तगेवासंन्यासोयज्ञयात्राव्रतनियमविधिःकर्णवेधोपिदीक्षा ॥ मौं जीबंधोंगनानांपरिणयनविधिर्वास्तुदेवप्रतिष्ठावर्ज्याःसद्भिःप्रयत्नात्रिद शपतिगुरौसिंहराशिस्थितेवा ॥ तथा ॥ उद्यानचूडाव्रतबंध दीक्षाविवाहयात्रादिवधूप्रवेशः ॥ तडागकूपात्रिदशप्रतिष्ठांबृहस्पतौ सिंहगतेनकुर्यादिति ॥ गयाविषयेविशेषोवायुपुराणेप्रोक्तः ॥ यथा॥ गयायांसर्वकालेषुपिंडंदद्याद्विचक्षणः ॥ अधिमासेजन्मदिनेअस्ते चगुरुशुक्रयोः ॥ नत्यक्तव्यंगयाश्राद्धंसिंहस्थेचबृहस्पताविति ॥ अत्र गयाश्राद्धस्ययात्रापूर्वकत्वाद्गयाम्प्रतियात्रानिषिद्धेत्यर्थः ॥ गालव स्तुराशिविशेषातिचारेनदोषइत्याह ॥ मेषेवृषेझषेकुंभेयद्यतीचारगो गुरुः ॥ नतत्रकर्मलोपःस्यादित्याहगालवोमुनिः ॥ ॥इतिश्रीसूर्य० निर्णयामृतेमलमासनिर्णयः ॥ ॥अथग्रहणनिर्णयःप्रस्तूयते॥ ॥ग्रह णंनामपर्वप्रतिपत्संधौराहुणासूर्याचंद्रमसोर्ग्रहणम् ॥ तदुक्तंवृद्धगार्ग्ये ण ॥ पूर्णिमाप्रतिपत्संधौराहुःसंपूर्णमंडलम् ॥ ग्रसतेचंद्रमर्कंचदर्शप्र तिपदंतरइति ॥ तत्रसंधौपर्वणोन्तिमोभागःस्पर्शकालः॥ प्रतिपदादि

१ चौलादिषुवर्जनीयः इ० पा० ।

मोभागोमोक्षकालः॥एतावन्मिश्रितःकालोग्रहणेपुण्यतमताः॥तदुक्तंब्र
ह्मसिद्धांते॥यावान्कालःपर्वणोन्तेतावान्प्रतिपदादिमः ॥ रवीन्दुग्रहणा
नेहाःसपुण्योमिश्रणाद्भवेदिति॥अनेहाःकालः ॥ अत्रग्रहणपुण्यकालेगं
गादिमहानदीषुस्नानंकुर्यात्॥गंगाद्यलाभेऽन्यास्वपि॥ तदुक्तम्॥ महा
पुण्यतमेकालेग्रहणेचंद्रसूर्ययोः ॥ महानदीषुचान्यासुस्नानंकुर्याद्यथा
विधिरिति ॥ वसिष्ठोपि॥ इन्दोर्लक्षगुणंपुण्यंरवेर्दशगुणंस्मृतम् ॥ गंगा
तोयेतुसंप्राप्तेइंदोःकोटिरवेर्दश ॥ गवांकोटिप्रदानेनसम्यग्दत्तेनयत्फ
लम् ॥ गंगास्नानेतत्फलंस्याद्राहुग्रस्तेनिशाकरे ॥ दिवाकरेपुन
स्तत्तुदशसंख्यमुदाहृतमिति ॥ अत्रगङ्गाशब्देनकृष्णावेणागोदावरी
जाह्नव्यउच्यंते ॥ तदुक्तंब्रह्मपुराणे ॥ तिस्रोनद्योमहापुण्यावेणागो
दाचजाह्नवी ॥ गांधरित्रींगता प्राप्तागंगाइतिहिकीर्तितेति ॥ तदसंभवेऽ
न्यास्वपिनदीषुकूपतडागादिसलिलाशयेष्वपि यथासान्निहितेषुस्नानं
कार्यम् ॥ तदुक्तंशंखेन ॥ वापीकूपतडागेषुगिरिप्रस्रवणेषुच ॥
नद्यांनदेदेवखातेसरसीषूद्धृतांबुनि ॥ उष्णोदकेनवास्नायाद्ग्रहणे
चंद्रसूर्ययोरिति ॥ अत्रोष्णोदकस्नानमातुरविषयम् ॥ तदाह
व्याघ्रः ॥ आदित्यकिरणैःपूतंपुनःपूतंचवह्निना ॥ तेनव्याध्यातुरः
स्नायाद्ग्रहणेचंद्रसूर्ययोरिति ॥ अतश्चग्रहणकालेऽवश्यमेवस्नानं
कार्यम् ॥ अकरणेलिंगपुराणेएवप्रत्यवायउक्तः ॥ चंद्रसूर्यग्रहेस्नाया
न्मृतकेसूतकेऽपिवा ॥ अस्नायीमृत्युमाप्नोतिस्नायीमृत्युंनविंदति ॥
मृत्युंसंसारम् ॥ ग्रहणकालस्यापिगजच्छायारूपत्वात्तत्रश्राद्धमवश्यं
कार्यम् ॥ तदुक्तंलिंगपुराणे ॥ व्यतीपातक्षणोयावांश्चंद्रसूर्यग्रहक्षणः॥
गजच्छायातुसाप्रोक्तापितॄणांदत्तमक्षयमिति ॥ महाभारतेपि ॥ सर्व
स्वेनापिकर्त्तव्यंश्राद्धंवैराहुदर्शने ॥ अकुर्वाणस्तुनास्तिक्यात्पङ्केगौरि
वसीदति ॥ तत्रश्राद्धमामान्नेनहेम्नावाकुर्यात् ॥ तदाहव्यासः ॥ आपद्य
नग्नौतीर्थेचग्रहणेचंद्रसूर्ययोः ॥ आमश्राद्धंद्विजोदद्याच्छूद्रोदद्यात्स

दैवहीति ॥ तथा ॥ अन्नाभावेद्विजाभावेप्रवासेपुत्रजन्मनि॥हेमश्राद्धंग्र
हेचैवशूद्रःकुर्यात्सदैवहीति ॥ननुग्रहणेरात्रौसंध्यायांवाजातेसतिसंध्या
रात्र्योःश्राद्धनिषेधात्कथंतत्रश्राद्धानुष्ठानमितिचेत् ॥ सत्यम् ॥ वच
नसामर्थ्यात् ॥ तथाचविष्णुः ॥ संध्यारात्र्योर्नकर्त्तव्यंश्राद्धंखलुविच
क्षणैः ॥ द्वयोरपिचकर्त्तव्यंयदिस्याद्राहुदर्शनमिति ॥ अत्रभूम्यादि
दानंस्वशक्त्यनुसारेणदद्यात् ॥ तदुक्तंमहाभारते ॥ भूमिर्ग्रामः[1]सुव
र्णंवाधान्यंवायद्यदीप्सितम् ॥तत्सर्वंग्रहणेदेयमात्मनःश्रेयइच्छतेति ॥
अत्रश्रोत्रियोऽश्रोत्रियोब्राह्मणोदानपात्रम् ॥तदाहबौधायनः॥श्रोत्रियोऽ
श्रोत्रियोवापिअपात्रंपात्रमेवच॥ अप्रवृत्तोपिवाविप्रोग्रहणेदानमर्हतीति
व्यासोपि ॥ सर्वंगंगासमंतोयंसर्वेव्याससमाद्विजाः ॥ सर्वंभूमिसमंदा
नंग्रहणेचंद्रसूर्ययोरिति ॥ ग्रहणेआशौचवानपिश्राद्धादिकंकुर्यात् ॥
तदाहांगिराः ॥ सर्वेषामेववर्णानांसूतकंराहुदर्शने ॥ स्नात्वाश्राद्धं
प्रकुर्वीरन्दानंशाठ्यविवर्जितमिति ॥ लिंगपुराणे ॥ सूतकेमृतकेचै
वनदोषोराहुदर्शने ॥ तावदेवभवेच्छुद्धिर्यावन्मुक्तिर्नदृश्यतइति ॥व्या
सोपि॥स्मार्तकर्मपरित्यागोराहोरन्यत्रसूतके ॥ श्रौतेकर्मणितत्कालं
स्नातःशुद्धिमवाप्नुयादिति ॥ ग्रहणेसतिग्रहणनिमित्ताशौचंसर्वेषांजाय
ते ॥ स्नानाच्छ्राद्धादिकर्माधिकारोभवति॥ तदुक्तंब्रह्मपुराणे ॥ आशौ
चंजायतेनृणांग्रहणेचंद्रसूर्ययोः॥तत्रस्नात्वाविधानेनदानादौकल्पतेन
रइति ॥ ग्रहणकालस्यसर्वस्यापिपुण्यत्वेपिस्पर्शकालःस्नानादिकर्म
सुश्रेष्ठः ॥ मध्यकालोमध्यमः ॥ मोक्षकालस्त्वधमः ॥ तदाहव्यासः ॥
त्रिदशाःस्पर्शसमयेतृप्यंतिपितरस्तथा ॥ मनुष्यामध्यकालेतुमोक्ष
कालेतुराक्षसाः॥ अतएतेत्रयःकालाःश्रेष्ठमध्यकनीयसइति ॥ केचित्तु
शास्त्रतोवगतेपिग्रहणेमेघाच्छादनादिनास्पर्शनागोचरेसतिस्नानादि
कंनकार्यमित्याहुः ॥ राहुदर्शनएवस्नानादिविधानात् ॥ तदाहमा
र्कंडेयः ॥ चंद्रेवायदिवासूर्येदृष्टेराहौमहाग्रहे ॥ अक्षय्यंकथितंपुण्यं

[1] गाव इतिपाठान्तरम् ।

तत्रार्कैतुविशेषतइति ॥ ॥ अत्रदृष्टइतिदर्शनंचक्षुर्व्यापारएव ॥ नतु शास्त्रतोवगतिः ॥ तथासतिरात्रौसूर्यग्रहणेदिवाचंद्रग्रहणेचशास्त्रतोवगतेस्नानादिविधेयंस्यात् ॥ तच्चनिषिद्धंषट्त्रिंशन्मते ॥ सूर्यग्रहोयदारात्रौदिवाचंद्रग्रहस्तथा ॥ तत्रस्नानंनकुर्वीतदद्याद्दानंनचक्चिदिति ॥ अतश्चयस्यजन्मराशौग्रहणंभवतिसोप्येकवारंग्रहणंदृष्ट्वामत्स्यपुराणोक्तविधानेनस्नानादिकंकुर्यात्॥पुनर्नपश्येत॥विधिश्चायम् ॥यस्यराशिंसमासाद्यभवेद्ग्रहणसंभवः ॥ तस्यस्नानंप्रवक्ष्यामिमंत्रौषधिसमन्वितम् ॥ चंद्रोपरागंसंप्राप्यकृत्वाब्राह्मणवाचनम्॥ संपूज्यचतुरोविप्राञ्छुक्कमाल्यानुलेपनैः॥ पूर्वमेवोपरागस्यसमानीयौषधादिकम् ॥ स्थापयेच्चतुरःकुंभानग्रतःसागरानिव ॥ गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् ॥ राजद्वारप्रवेशाच्चमृदमानीयनिःक्षिपेत् ॥ पंचगव्यंपंचरत्नंपंचत्वक्पंचपल्लवम् ॥ रोचनंपद्मकंशंखंकुंकुमंरक्तचंदनम् ॥ शुक्तिस्फटिकतीर्थांबुसितसर्षपगुग्गुलु ॥ मधूकंदेवदारुंचविष्णुक्रांतांशतावरीम्॥बलांचसहदेवींचनिशाद्वितयमेवच ॥ एतत्सर्वंविनिःक्षिप्यकुंभेष्वावाहयेत्सुरान् ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतुयजमानस्यदुरितक्षयकारकाः ॥ १ ॥ योसौवज्रधरोदेवआदित्यानांप्रभुर्मतः ॥ सहस्रनयनश्चेंद्रःग्रहपीडांव्यपोहतु ॥ २ ॥ मुखंयःसर्वदेवानांसप्तार्चिरमितद्युतिः ॥ चंद्रोपरागसंभूतामाग्निःपीडांव्यपोहतु ॥ ३ ॥ यःकर्मसाक्षीलोकानांधर्मोमहिषवाहनः ॥ यमश्चंद्रोपरागोत्थांग्रहपीडांव्यपोहतु ॥ ४ ॥ रक्षोगणाधिपःसाक्षीनीलाञ्जनसमप्रभः ॥ खड्गहस्तोतिभीमश्चग्रहपीडांव्यपोहतु ॥ ५ ॥ नागपाशधरोदेवःसदामकरवाहनः ॥योसौनिधिपतिर्देवःखड्गशूलगदाधरः ॥६ ॥ सजलाधिपतिश्चंद्रःग्रह० प्राणरूपोहिलोकानांसदाकृष्णमृगप्रियः ॥वायुश्चंद्रोपरागोत्थांग्रह० ॥७॥ चंद्रोपरागकलुषंवरदो[1]त्रव्यपोहतु ॥ ८ ॥ योसाविंदुधरोदेवःपिनाकी

१ धनदो इ० पा० ।

वृषवाहनः ॥ चंद्रोपरागपापानिसनाशयतुशंकरः ॥ ९ ॥ त्रैलोक्ये यानिभूतानिस्थावराणिचराणिच ॥ ब्रह्मविष्णवर्करुद्राश्चदहंतुमम पातकम् ॥ १० ॥ एवमावाहयेद्देवान्मंत्रैरेभिश्चवारुणैः ॥ एतानेवतथामंत्रान्स्वर्णपट्टेविलेखयेत् ॥ ताम्रपात्रेथवालिख्यनववस्त्रेतथैवच ॥ मस्तकेयजमानस्यनिदध्युस्तेद्विजोत्तमाः ॥ कलशान्द्रव्यसंयुक्तान्नानारूपसमन्वितान् ॥ गृहीत्वास्नापयेन्मूढम्भद्रपीठोपरिस्थितम् ॥ पूर्वोक्तैरेवमंत्रैश्चयजमानंद्विजोत्तमः ॥ अभिषेकंततःकुर्यान्मंत्रैर्वारुणसूक्तकैः ॥ ततःशुक्लांबरधरःशुक्लमाल्यानुलेपनः ॥ आचार्यं वरयेत्पश्चात्स्वर्णपट्टंनिवेदयेत् ॥ आचार्येदक्षिणांदद्याद्गोदानंचस्वशक्तितः ॥ अतऊर्ध्वंब्रह्मपूजांतदर्धेनविशेषतः ॥ पूजयेद्वस्त्रगोदानैर्ब्राह्मणानपिशक्तितः ॥ गन्धमाल्यैर्धूपदीपैःपूजयेदिष्टदेवताम् ॥ होमंचैव प्रकुर्वीततिलैर्व्याहृतिभिस्तथा ॥ निवृत्तेग्रहणेसर्वेब्राह्मणेभ्योविशेषतः॥ दानंचशक्तितोदद्याद्यदीच्छेदात्मनोहितम्॥नाश्वप्रतिग्रहेदोषोनचस्यात्तस्यविक्रये॥कन्यायाविक्रयेदोषोनदोषस्तत्प्रतिग्रहे ॥सर्वत्रप्राङ्मुखोदाताप्रतिग्राहीह्युदङ्मुखः॥ कन्यादानेपितुःश्राद्धेप्रत्यग्दक्षिणतोमुखः ॥सूर्यग्रहेसूर्यनामसदामंत्रेषुकीर्तयेत् ॥ अनेनविधिनायस्तुग्रहणेस्नानमाचरेत् ॥ नतस्यग्रहणेदोषःकदाचिदपिजायतइति ॥अत्रापि गूढंभद्रपीठोपरिस्थितमित्युक्तत्वात्सकृद्ग्रहणंदृष्ट्वापश्चाद्यथादर्शनंनसंभवतितथास्थातव्यमित्यर्थः ॥ चंद्रग्रहणात्पूर्वंयामत्रयेनभुंजीत ॥ सूर्यग्रहणात्पूर्वंयामचतुष्टयेनभुंजीत ॥ तदुक्तंमहाभारते ॥ अर्वाग्यामत्रयादिंदोर्ग्रहणेभुजिमाचरेत् ॥ चतुर्यामादधश्चैवराहुग्रस्तेदिवाकर इति ॥ वृद्धवसिष्ठोपि ॥ सूर्यग्रहेतुनाश्नीयात्पूर्वंयामचतुष्टयम् ॥ चंद्रग्रहेतुयामांस्त्रीन्बालवृद्धातुरैर्विनेति ॥ बालवृद्धातुरविषयेमत्स्यपुराणेविशेषउक्तः॥अपराह्नेनमध्याह्नेमध्याह्नेनतुसंगवे ॥ भुंजीतचेत्संगवे स्यान्नपूर्वंभुजिमाचरेदिति ॥ आतुरादिग्रहणात्पूर्वंयाममात्रेभोजनंकु

र्योदित्यर्थः ॥ वसिष्ठोपि ॥ ग्रहणंतुभवेदिंदोःप्रथमादाधियामतः॥भुंजी
तावर्तनात्पूर्वंपश्चिमेप्रथमादधः ॥ अस्यार्थः ॥ रात्रौप्रथमयामतउप
रिचंद्रग्रहणंचेत्तदाआवर्तनान्मध्याह्नात्पूर्वंभुंजीत ॥ रात्रिपश्चिमया
मेचेद्रात्रिप्रथमयामादधोभुंजीतेति ॥ चंद्रस्यग्रस्तोदयेपूर्वंदिवा
नभुंजीतदिवैवग्राससंभावितत्वात् ॥ सूर्यग्रहणेपूर्वंदिवानभुंजीत ॥
तयोर्ग्रस्तास्तसमयेतुपरदिनेउदितयोर्विमुक्तंज्ञात्वास्नात्वाभुंजीत ॥
तदाहमार्कंडेयः ॥ चंद्रस्ययदिवाभानोर्यस्मिन्नहनिभार्गव ॥ ग्रहणं
तुभवेत्तस्मिंस्तत्पूर्वंभोजनंनरः॥ नाचरेत्सग्रहेचैवतथैवास्तमुपागते॥
यावत्स्यान्नोदयस्तस्यनाश्नीयात्तावदेवतु ॥ मुक्तिंदृष्ट्वातुभुंजीतस्नानं
कृत्वाततःपरमिति ॥ चंद्रेसूर्येतथैवग्रस्तएवास्तमुपगतेसत्यन्यस्मि
न्दिनेयावत्तयोरुदयोनस्यात्तावन्नभुंजीत मुक्तिंदृष्ट्वास्नानंकृत्वाभुंजीते
त्यर्थः ॥ दृष्ट्वेतिज्ञानोपलक्षणम् ॥ मनुरपि ॥ अमुक्तयोरस्तगयोर्दृ[3]
ष्ट्वास्नात्वापरेहनीति ॥ भुंजीतेतिवाक्यशेषः॥ विष्णुधर्मस्मृतावपि ॥
अहोरात्रंनभोक्तव्यंचंद्रसूर्यग्रहोयदा ॥ मुक्तिंदृष्ट्वातुभोक्तव्यंस्नानंकृ
त्वाततःपरमिति ॥ इदमपिग्रस्तास्तविषयम् ॥ सूर्यस्यग्रहणात्पूर्व
स्मिन्नहनिग्रहणोत्तरभाविन्यांरात्रौचेत्यहोरात्रेभोजननिषेधः ॥ चंद्र
स्यग्रस्तास्तसमयेग्रहणरात्रिरग्रिमाहश्चेत्यहोरात्रः ॥ एवंपूर्वेष्वपिवच
नेषुविमुक्तिंदृष्ट्वेतिज्ञात्वेत्यर्थः॥ ननुदर्शनंचक्षुर्व्यापारएव ॥सत्यम् ॥
तथाप्यत्रवचनसामर्थ्याद्दृष्टिर्ज्ञानमेवगृह्यते ॥ तदाहवृद्धगौतमः ॥
चंद्रसूर्यग्रहेनाद्यात्तस्मिन्नहनिपूर्वतः ॥ राहोर्विमुक्तिंविज्ञायस्नात्वाकु
र्वीतभोजनमिति ॥ अतश्चमेघाच्छादनेनाविमुक्तिदर्शनेप्युदयंज्ञात्वा
भुंजीत ॥ समर्थस्यनिषिद्धकालभोजनेप्रायश्चित्तमाहकात्यायनः॥
चंद्रसूर्यग्रहेभुक्त्वाप्राजापत्येनशुध्यति ॥ तस्मिन्नेवदिनेभुक्त्वात्रि
रात्रेणैवशुध्यतीति ॥ रविचंद्रग्रहणेस्वस्ववारेचूडामणिसंज्ञकोरवि
चंद्रग्रहोनंतफलदोभवति ॥ तदाहव्यासः ॥ सूर्यवारेरवेर्ग्रासः

१प्रथमे इ०पा०। २प्रथमयामादर्वाक्सातिदिनस्यप्रथमप्रहरएवभुंजीतेति पा०।३विप्रा इ०पा०।

सोमवारेविधोर्ग्रहः ॥ चूडामणिरितिख्यातस्तत्रानंतफलंभवेत् ॥ वारे
ष्वन्येषुयत्पुण्यंग्रहणेचंद्रसूर्ययोः ॥ तत्पुण्यंकोटिगुणितंग्रहेचूडामणौ
स्मृतमिति ॥ ग्रहणात्पूर्वंत्रिरात्रमेकरात्रंवाउपोष्यस्नानदानादिकेकृते
महाफलंभवति ॥ तदुक्तंगालवेन ॥ यस्त्रिरात्रमुपोष्यैवग्रहणेचं
द्रसूर्ययोः ॥ स्नात्वादत्त्वाचविधिवन्मोदतेब्रह्मणासह ॥ एक
रात्रमुपोष्यैवस्नात्वादत्त्वाचशक्तितः ॥ कंचुकादिवसर्पस्यनिर्गतिः
पापकोशतइति ॥ ॥ इतिग्रहणनिर्णयः ॥ ॥ अथश्राद्धेग्राह्यनिषि
द्धद्रव्याण्युच्यंते ॥ ॥ तत्रविष्णुः ॥ शाकैः श्यामाकैः प्रियंगुनी
वारैर्मुद्गैर्गोधूमैश्चमासंप्रीयंतइति ॥ अत्रमुद्गाहारिताः ॥ तदुक्तंवायुपु
राणे ॥ श्यामाकाहस्तिनामानो विद्धितान्यज्ञनिःसृतान् ॥ प्रसाति
काप्रियंगुश्चमुद्गाश्चहरितास्तथेति ॥ प्रसातिकाधान्यभेदः ॥ तथा ॥
एतान्यपिसमानिस्युः श्यामाकानांगुणैर्द्विज ॥ कृष्णमाषास्तिला
श्चैवश्रेष्ठाःस्युर्यवशालयः ॥ महायवाव्रीहियवास्तथैवचमधूलिकाः ॥
कृष्णाःश्वेतालोहिताश्चग्राह्याःस्युःश्राद्धकर्मणि ॥ यवशालयोयवभे
दाःशालिभेदावा॥महायवावेणुयवाः ॥ मधूलिकायावनालविशेषः ॥
कृष्णाःश्वेतालोहितश्चेतिमधूलिकाविशेषणानीतिकल्पतरौ ॥ स्मृति
मंजर्यांतु षष्टिकाशालिभेदाइत्युक्तम् ॥ तथाच॥बिल्वामलकमृद्वीकप
नसाम्रादिदाडिमम् ॥ भव्यपारेवताक्षोटखर्जूरीणांफलानिचेति ॥
भव्यपारेवतंकृतमालभेदः ॥ तथाच ॥ कशेरुःकोविदारश्चतप्तकंद
स्तथाविसम्॥तमालंशतकंदंचतथावैशीतकंदकमिति॥ कोविदारःश्वे
तकांचनारसदृशःकंदविशेषस्तालकंदोवा॥शतकंदःशालूकः ॥ तथा
च॥कालेयंकालशाकंचसुविषण्णंसुवर्चलम्॥ मांसंशाकंदधिक्षीरंशस्तं
वेत्रांकुरस्तथा॥कालेयादिकाः शाकभेदाः॥कट्फलंकोंकणीद्राक्षालकु
चंमोचमेवच॥अलाबुग्रीवकंचारुककंधुंमधुसाह्वयमिति ॥ मोचंककद
लीफलम्॥अलाबुग्रीवकंचावितिककंधुविशेषणम् ॥तथाच॥ वैकंकतं

नारिकेलंशृंगाटकपरूषकम् ॥ पिप्पलीमरिचंचैवपटोलंबृहतीफलम् ॥ एवमादीनिचान्यानिस्वादूनिमधुराणिच ॥ नागरंचात्रवैदेयंदीर्घमूलकमेवचेति ॥ परूषकंजलोद्भवःकंदविशेषः ॥ अत्रोक्तानियानियान्यप्रसिद्धानिदेशविशेषप्रसिद्धानितानितानितत्तद्देशवासिभ्योवगंतव्यानि ॥ अत्रैवमादीन्यन्यानीत्युक्तत्वादात्मनोभोक्तुःपितुश्चस्वादूनिप्रियतमानिदेयानीत्यर्थः॥ ॥इतिश्राद्धग्राह्यद्रव्यनिर्णयः॥ ॥अथवर्ज्यानि॥ तत्रशंखः॥भूस्तृणंसुरशिग्रुश्चपालक्यंमधुकंतथा ॥कूष्मांडालाबुतोर्वारुकोविदारांश्चवर्जयेदिति ॥ ब्रह्मांडपुराणेपि ॥ द्विःस्विन्नंपरिदग्धंच तथैवग्रावलेडितम्॥शर्कराकीटपाषाणैःकेशैर्यच्चाप्युपप्लुतम् ॥ पिण्याकंमथितंचैवतथातिलवणंचयत् ॥ सिद्धीकृताश्चयेभक्ष्याः प्रत्यक्षलवणीकृताः॥राजमाषास्त थाचैववर्ज्याःसद्भिःप्रयत्नतइति॥द्विःस्विन्नंशाकादिसंस्कारार्थंजीरकादिप्रक्षेपेणयत्पुनः पक्वम्॥ अतएवपाकादावेव संस्कारःकार्यः ॥ स्विन्नस्यशाकादेःपुनरग्निसंयोगोनिषिद्धइत्यर्थः ॥ येषांतुस्विन्नानामेवसंस्कारयोग्यत्वंसूरणादीनांतेषांनदोषः ॥ अतश्च यस्ययावतापाकसिद्धिस्तावदेवाग्निसंयोगःकार्योनाधिकइत्यभिप्रायः येषुसिद्धेषुपश्चात्प्रत्यक्षलवणक्षेपःकृतस्तेतादृशाः॥ तथाच ॥ आविकंमार्गमौष्ट्रंचसर्वमेकशफंचयत् ॥ माहिषंचामरञ्चैवपयोवर्ज्यंविजानतेति ॥ शंखोपि ॥ पिप्पलींमरिचंचैवतथावैपिंडमूलकम् ॥ कृतंच विरसंसर्वंवंशाग्रंचविवर्जयेदिति॥ नन्वादित्यपुराणे ॥ मधूकंरामठंचैव कर्पूरंमरिचंगुडम् ॥ श्राद्धकर्मणिशस्तानिसैंधवंत्रपुसंतथेतिहिंग्वादीनांप्राशस्त्याभिधानाद्विरोधइतिचेत् ॥ सत्यम् ॥ हिंगुनिषेधस्याशकद्रव्यविषयत्वादन्यत्रप्राशस्त्यमित्यविरोधः ॥ हिंगुद्रव्येषुशाकेष्विति वर्ज्यप्रकरणेव्यासोक्तेः ॥ पिप्पलीमरिचयोःसंस्कारद्रव्यत्वाच्छाकादिनिक्षिप्तयोर्ननिषेधः ॥ प्रत्यक्षयोस्तुनिषेधइति ॥ ॥ इतिश्राद्धनिषिद्धद्रव्यनिर्णयः ॥ ॥ अथानुपहतद्रव्याणामेवश्राद्धो

१ शिग्रुशाकश्च इ० पा० । २ शाकत्वेनकेवलस्यनिषेधात् ।

प्युक्तत्वाद्द्रव्यशुद्धिप्रकरणमारभ्यते ॥ तत्रादौसर्वद्रव्याणांभूम्यधिकरणत्वाद्भूशुद्धिरुच्यते ॥ तत्रोपहतभूशुद्धिःसप्तधाभवति ॥ तदाह यमः ॥ खननात्पूरणाद्दाहादद्भिर्वर्षणलेपनात् ॥ गोभिराक्रमणात्कालाद्भूमिःशुध्यतिसप्तभिरिति ॥ कालादितियावताकालेनामेध्यगंधलेपादिक्षयोभवतिसकालउच्यते ॥ याज्ञवल्क्योपि ॥ भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा ॥ सेकादुल्लेखनाद्भूयाद्गृहंमार्जनलेपनादिति ॥ अत्रभूग्रहणेनैवप्राप्तेपिपुनर्गृहवचनंप्रतिदिनंतस्यमार्जनलेपनादिप्राप्त्यर्थम् ॥ इदंसमस्तमपिमार्जनादिकंदुष्टत्वहेतुभिःसमस्तैःपुनःपुनरुपहतभूविषयेशुद्ध्यापादकम् ॥ अन्यथोपहत्यनुसारेणमार्जनादिषुसप्तसुमध्येद्वित्रादिकंयथायोग्यंशुद्धिहेतुः ॥ दुष्टत्वनिमित्तानितुदेवलेनोक्तानि ॥ यत्रप्रसूयतेनारीम्रियतेदह्यतेथवा ॥चांडालाध्यासितायत्रयत्रमूत्रादिसंगतिः ॥ एवंकश्मलभूयिष्ठाभूरमेध्याप्रकीर्तिता ॥ श्वसूकरखरोष्ट्राद्यैःसंस्पृष्टादुष्टतांव्रजेत् ॥ अंगारतुषकेशास्थिभस्माद्यैर्मलिनाभवेदिति ॥ अस्यार्थः ॥ नारीप्रसवादिभिर्मूत्रादिसंगतिपर्यंतैर्निमित्तैर्भूमिरमेध्याभवति ॥ श्वसूकरादिस्पृष्टादुष्टाभवति ॥ अंगारादिसंयुक्तामलिना ॥ इतित्रिविधापिशोध्याभूमिः ॥ तत्रामेध्यायाःशुद्धिस्तेनैवोक्ता ॥ पंचधावाचतुर्धावाभूरमेध्याविशुध्यतीति॥यत्रमनुष्यदाहः तथाचांडालानांचिरस्थितिः ॥ एवंविधमेध्यायाभुवः पंचभिर्गंधलेपाद्यपनयनक्षमैर्दहनकालगोक्रमणसेकोल्लेखनैः शुद्धिः॥ यत्रमनुष्याजायन्तेम्रियन्तेवात्यन्तमूत्रविष्ठादिसंगतिर्वा ॥ एवंविधमेध्यायाभूमेर्दाहविवर्जितैःकालादिभिःपूर्वोक्तैरेवचतुर्भिःशुद्धिः ॥ दुष्टादिविषयेचसएवाह ॥ दुष्टाभूमिर्द्विधात्रेधाशुध्यतेमालिनैकधेति ॥ दुष्टायाभुवस्त्रिभिर्गोक्रमणसेकोल्लेखनैर्द्वाभ्यांसेकोल्लेखनाभ्यांवाशुद्धिः ॥ मलिनायाभुवउल्लेखनेनैकेनैवशुद्धिरित्यर्थः ॥ तथाचान्यत्रविशेषउक्तः॥गोचर्ममात्रमब्बिन्दुर्गोःशोधयति पा

ततम्ः॥ समूढमसमूढंवायत्रलेपोनदुष्यतीति॥समूढंकृतसंमार्जनम्॥ असमूढमकृतसंमार्जनंवा॥गोःपृथिव्यागोचर्ममात्रंप्रदेशंपातितंमलिन मब्बिन्दुरुदकबिंदुःशोधयतीत्येकोऽर्थः ॥ अथवा॥ गोरब्बिदुर्गोंपुच्छ स्पृष्टोदकसेकेकृतेएकेनाब्बिदुनागोचर्ममात्रभूभागः शुद्धोभवतीत्य र्थः॥यत्रैकादशगावउपविशंतितावद्भूभागोगोचर्म ॥ गृहशुद्धिस्तुसंव र्तेनोक्ताः ॥ गृहशुद्धिंप्रवक्ष्यामिअंतस्थशवदूषणे ॥ प्रोत्सृज्यमृन्मयं भांडंसिद्धमन्नंतथैवच ॥ गृहादपास्यतत्सर्वंगोमयेनोपलेपयेत्॥गोमये नोपलिप्याथच्छागेनाघ्रापयेद्बुधः ॥ ब्राह्मणैर्मंत्रपूतैश्चहिरण्यकुशवारि णा॥सर्वमभ्युक्षयेद्वेश्मततःशुध्येदसंशयमिति ॥ बौधायनेनतुविशेषउ क्तः ॥ घनायाभूमेरुपघातउपलेपनम् ॥ सुषिरायाःकर्षणम् ॥ क्लि न्नायाअमेध्योपहृत्यप्रक्षालनम् ॥ ऊर्ध्वंतुशवोपघातेतक्षणंसूर्यर श्मिप्रवेशोग्निज्वालाभिमर्षणंवेति ॥ क्लिन्नांकृमिकीटाद्याक्रान्तामन्य तोमेध्यांमृदमानीयाच्छादयेदित्यर्थः ॥ इतिभूशुद्धिनिर्णयः ॥ अथ पात्रशुद्धिः ॥ तत्रहारीतः ॥ अद्भिःकांचनरजतशंखशुक्तीनांतद्गुणव र्जनम् ॥ स्नेहवैवर्ण्योपहतानांयवगोधूमकलायमाषमसूरमुद्गांगारगो मयचूर्णैर्धावनम् ॥ अम्ललवणाभ्यांताम्राणांभस्मनाकांस्यानांश णतैलसिकताघर्षणैःकार्ष्णायसानांशिलाघर्षणमार्जनैर्मणिमयानामि ति॥ अत्रतद्गुणवर्जनमितितद्गन्धापकर्षणम् ॥ स्नेहवैवर्ण्योपहताना मितिउच्छिष्टादिस्नेहेनविवर्णत्वंयथाभवातितथोपहतानामित्यर्थः ॥ यवादिचूर्णानिविकल्पितानिसर्वेषांस्नेहवैवर्ण्यापकर्षणार्थत्वादेव ॥ उदकस्यतुसर्वत्रशोधनद्रव्यैर्योगोपेक्षितः यत्तुयाज्ञवल्क्यवचनम्॥सौ वर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम्॥शाकरज्जुमूलफलवासोविदल चर्मणाम् ॥ पात्राणांचमसानांचवारिणाशुद्धिरिष्यतइति ॥ सौवर्णंसु वर्णविकारः॥ राजतंरजतविकारः॥ अब्जंशंखशुक्तिमुक्ताफलादि ॥ऊ र्ध्वंपात्रंयज्ञीयोलूखलादि॥ग्रहाऐंद्रादयः ॥ अश्माद्दषदादिः॥मूलमार्द्र

कादि॥विदलंवेणुदलादितद्विकाराश्छत्रादीनिच ॥ चर्मादीनितद्विका राश्चपात्राणिप्रोक्षणपात्रादीनि ॥ चमसाहोतृचमसादयः ॥ एतेषांवा रिणाप्रक्षालनाच्छुद्धिरिति॥एतल्लेपरहितस्पर्शमात्रविषयम्॥ हारीतव चनन्तुस्नेहलेपाद्युपहतविषयमित्यविरोधः॥ तथाचमनुः॥ निर्लेपंकां चनंभांडमद्भिरेवविशुध्यति ॥ अब्जमश्ममयंचैवराजतंचानुपस्कृत मिति॥ अनुपस्कृतमनुत्कीर्णरेखादिखातेषूच्छिष्टावस्थानरहितमित्य र्थः ॥ सस्नेहपात्रेषुविशेषोयाज्ञवल्क्येनोक्तः ॥ चरुःस्रुक्स्रुवास स्नेहपात्राण्युष्णेनवारिणेति॥ चरुर्मृन्मयीचरुस्थाली ॥ एतान्यपिले परहितान्येवोष्णेनवारिणाशुध्यंति॥शुद्धेनवारिणेत्यनुवर्त्यतेनैवोक्तम् स्फ्यशूर्प्पाजिनधान्यानांमुसलोलूखलानसामिति ॥स्फ्योयज्ञांगभूत काष्ठच्छुरिका॥ अनःशकटम्॥आपस्तंबोपि॥गवाघ्रातानिकांस्यानि शूद्रोच्छिष्टानियानिच॥शुध्यंतिदशभिःक्षारैःश्वकाकोपहतानिचेति॥ क्षारोभस्म॥दशवारान्भस्मनामार्जितानिशुध्यंतीत्यर्थः॥यत्तुशंखवच नम् ॥ कृष्णशकुनिमुखावसृष्टंनिर्लिखेत् श्वापदमुखावसृष्टंपात्रंनप्रयुं जीतेति ॥ कृष्णशकुनिःकाकः॥ निर्लेखनंतक्षणम् ॥ इदमाधिकोप हतिविषयम्॥आपस्तंबवचनंतुस्वल्पोपहतिविषयमित्यविरोधः॥एव मन्यत्रापिन्यूनाधिकशौचकल्पाःस्वल्पाधिकोपहतिविषयत्वेनव्य वस्थापनीयाः ॥ बौधायनेनापिविशेषउक्तः॥तैजसानांमूत्रपुरीषशु क्रासृक्कुणपैरत्यंतवासितानामावर्तनम्॥अल्पसंसर्गेतुपरिलेखनम्॥ स्पर्शमात्रोपघातेतुत्रिःसप्तकृत्वोभस्मनापरिमार्जनम् ॥ अतैज सानामेवंभूतानामुत्सर्गइति ॥ अग्निसंयोगेनद्रवीकरणमावर्त्तनम् ॥ कांस्यस्यभस्मनापरिमार्जनंनियतम् ॥ अन्येषामपिसौवर्णादि तैजसानांयाज्ञवल्क्येनवारिणाशुद्धिरिष्यतइत्युक्तत्वाद्बौधायनेनभ स्मनापरिमार्जनमित्युक्तत्वाच्चभस्मादिसहितेनैववारिणाशुद्धिर्ज्ञा तव्या ॥ स्मृत्यंतरेपि ॥ भस्मनाशुध्यतेकांस्यंसुरयायन्नलिप्यते ॥

सुरामूत्रपुरीषैस्तुशुध्यतेतापलेखनैरिति ॥ सुरादिग्रहणंशुक्रशोणि
तादीनामप्युपलक्षणार्थम् ॥ तथाच ॥ ताम्रमम्लेनशुध्येत्तुनचेदा
मिषलेपनम् ॥ आमिषेणतुयल्लिप्तंपुनर्दाहेनशुध्यति ॥ शंखोपि ॥
सूतिकोच्छिष्टभांडस्यसुरामद्यहतस्यच ॥ त्रिसप्तमार्जनाच्छुद्धिर्नतु
कांस्यस्यतापनमिति ॥ अस्यार्थः ॥ सूतिकोच्छिष्टाद्युपहतानांतैज
सानांसप्तभिर्यवगोधूमादिचूर्णैःप्रत्येकंत्रिमार्जनाच्छुद्धिः ॥ कां
स्यस्यतुतपनाच्छुद्धिर्मार्जनाच्च ॥ प्रतिमार्जनमुदकप्रक्षालनम
प्यावर्तते ॥ अधिकोपहतौतुविशेषःस्मृत्यंतरेप्रोक्तः ॥ सूतिकाशव
विण्मूत्ररजस्वलाहतानिच ॥ प्रक्षेप्तव्यानितान्यग्नौयद्यद्यावत्सहेदपी
ति॥यद्द्रव्यंयावदग्निप्रक्षेपंसहतेयावताग्निप्रक्षेपेणननश्यति ॥ तावत्प्रक्षे
प्तव्यमित्यर्थः ॥ बौधायनोपि॥ तैजसानांमूत्राद्युपघातेपुनःकरणंगोमू
त्रेवासप्तरात्रंपरिवासनमिति॥ लेपनिर्हरणाशक्तौपुनःकरणम्॥अन्यथा
गोमूत्रेवाइतिव्यवस्था॥आदित्यपुराणेतु॥सौवर्णरौप्ययुक्तानि[1] शंखशु
क्तिमयानिच॥ कांस्यायस्ताम्रकूप्यानित्रपुसीसमयानिच ॥निर्लेपानि
चशुध्यन्तिकेवलेनजलेनतु॥शूद्रोच्छिष्टानिशोध्यानित्रिधाक्षाराम्लवा
रिभिरिति ॥ अत्रापिक्षाराम्लवारिभिर्दशदशकृत्वोमार्जनंकार्यम् ॥
शातातपेन शुध्यंतिदशभिःक्षारैरित्युक्तत्वात् ॥ स्मृत्यंतरेऽपि॥तिल
मुष्ककशिग्रूणांकोकिलाक्षपलाशयोः ॥ काकजंघातथावज्रचिंचाश्व
त्थवटास्तथा ॥ एषांभस्मदशक्षारंसंप्रोक्तंधर्मदर्शिभिः॥गवाघ्रातानि
कांस्यानिशूद्रोच्छिष्टानियानिच ॥दशक्षारेणशुद्ध्यंतिश्वकाकोपहता
निच ॥ क्षाराभावेदशावृत्त्याभस्मनामार्जयेद्बुधइत्युक्तत्वात् ॥ द्विजा
तिभुक्तोच्छिष्टसंस्पर्शेतुशंखेनविशेषउक्तः ॥ ब्रह्मक्षत्रविशांचैवस
कृत्संमार्जनाच्छुचिः ॥ चतुर्थेनतुयद्भुक्तंचतुर्भिस्तत्रमार्जनम् ॥ अग्नौ
प्रक्षिप्यगृह्णीयाद्धस्तौप्रक्षालययत्नतः॥ गोशृंगेणतुसंस्पृष्टंतत्पात्रंशुचि

१ सुवर्णरूप्यशंखाश्मशुक्तिरश्मिमयानिच इ० पा० ।

तामियादिति ॥ कांस्यपात्रविषयेत्वंगिरसाविशेषउक्तः ॥ गडूषं पादशौचंचयःकुर्यात्कांस्यभाजने ॥ षण्मासंभुविनिःक्षिप्यपुनराका रमादिशेत् ॥ अत्रषण्मासंभुविनिःक्षिप्येत्युक्तत्वात्खननमपिकांस्य शुद्धिहेतुः॥अतश्चोपहतंकांस्यंदोषानुसारेणसप्तहादिकालंभुविखात्वो द्धृत्यभस्मनामार्जितंशुद्धंभवति ॥ तथाच ॥ लोहानांदहनाच्छुद्धिर्भ स्मनागोमयेनच ॥ लेखनात्खननाद्वापिशैलानामंभसापिवा ॥ काष्ठा नांतक्षणाच्छुद्धिर्मृद्गोमयजलैरपीति ॥ याज्ञवल्क्योपि ॥ तक्षणंदा रुशृंगाणामिति ॥ संहतपात्रविषयेतुहारीतशातातपौ ॥ संहतानां तुपात्राणांयद्येकमुपहन्यते ॥ तस्यैवशोधनंप्रोक्तंसामान्यंद्रव्यशुद्धि कृदिति ॥ मृद्भांडानामल्पोपहतौयाज्ञवल्क्यः ॥ पुनःपाकान्मही मयमिति ॥ मद्याद्युपहतौतुपरित्यागएव ॥ तदाहमनुः ॥ मद्यै र्मूत्रपुरीषैर्वाष्ठीवनैःपूयशोणितैः ॥ संस्पृष्टंनैवशुद्ध्येतपुनःपाकेनमृ न्मयमिति ॥ ॥ इतिपात्रशुद्धिः ॥ ॥ अथधान्यादिशुद्धिः ॥ तत्रविष्णुः॥असिद्धस्यान्नस्ययन्मात्रमुपहन्यतेतन्मात्रमुत्सृज्यते॥स तुषस्यकंडनप्रक्षालनेकुर्यादितिविशेषः ॥ बौधायनोपि ॥ व्रीहयः प्रोक्षणादद्भिःशाकमूलफलानिच ॥ तन्मात्रस्यापहाराद्वानिस्तुषीक रणेनचेति ॥ इदमल्पद्रव्यविषयम् ॥ बहुद्रव्यविषयेतुकश्यपेन विशेषउक्तः ॥ प्रोक्षणपर्यग्निकरणावगाहनैः ॥ व्रीहियवगोधूमानां विमर्शनप्रोक्षणैःफलीकृतानांनिघर्षणदलनशमीधान्यादीनीति ॥ अ स्यार्थः ॥ अनेकपुरुषोद्धार्याणां व्रीहियवगोधूमानांप्रोक्षणा दिभिःशुद्धिः॥पर्यग्निकरणमभ्यभिमर्शनम् ॥ अवगाहनंप्रक्षालनम्॥ प्रोक्षणादीनिसर्वाणिसर्वत्रदोषाल्पत्वमहत्त्वापेक्षयायोज्यानिनयथासं ख्यम् ॥ कंडनेनशुक्लीकृतानिरस्तक्षुद्रकणाश्चतंडुलाःफलीकृताउ च्यंते॥ तेषामल्पानांविमर्शनंपाणिभ्यांनिर्मलीकरणम्॥बहूनांप्रोक्षण म्॥शमीधान्यानिमुद्गादीनि ॥ तेषामेकपुरुषोद्धार्याणांनिघर्षणंविमर्द

१ करणदलनैः इ० पा० ।

नंततोल्पानांदलनमनेकपुरुषोद्धार्याणांप्रोक्षणंशुद्धिहेतुरिति ॥ यत्तु तंडुलांस्तुपरित्यजेदितितदत्यंतालपपरिमाणविषयम् ॥ आदित्यपुराणेविशेषउक्तः ॥ गृहदाहेसमुत्पन्नेदग्धेचपशुमानुषे ॥ अभोज्यस्तद्गतोव्रीहिर्धातुद्रव्यस्यसंग्रहः ॥ मृन्मयेनाववद्धानामधोभुवि विचेष्टताम् ॥ यवमाषतिलादीनांनदोषोमनुरब्रवीत् ॥ ततःसंक्रममाणाग्नौखलान्नेचैवदह्यते ॥ नचप्राणिवधोयत्रकेवलंगृहदीपनम् ॥ तत्रद्रव्याणिसर्वाणिगृह्णीयादविचारयन्निति ॥ सिद्धान्नविषयेतुमनुनाविशेषउक्तः ॥ पक्षिजग्धंगवाघ्रातमवधूतमवक्षुतम् ॥ दूषितंकेशकीटैश्चमृत्प्रक्षेपेणशुध्यति ॥ पक्षिदग्धंपक्षिभक्षितम् ॥ अवधूतंयस्योपरिवासोवधूननंकृतंपक्षिभिरुत्क्षिप्यत्यक्तंच ॥ अवक्षुतंयस्योपरिक्षुतम् ॥ मृद्ग्रहणमुदकभस्मनोरपिप्रदर्शनार्थम् ॥ तथाचयाज्ञवल्क्यः ॥ सलिलंभस्ममृद्वापिप्रक्षेप्तव्यंविशुद्धयइति ॥ पाकानंतरमेवकेशकीटादिदूषितंमृदादिभिःशुध्यति ॥ तैःसहपक्वंतुपरित्याज्यमेव ॥ अतश्चनित्यमभोज्यंकेशकीटादिविपन्नमितिगौतमवाक्यस्यायमेवाभिप्रायः ॥ शंखः ॥ क्षीराणियान्यभक्ष्याणितद्विकाराशनेबुधः ॥ सप्तरात्रंव्रतंकुर्यात्प्रयत्नेनसमाहितः ॥ अत्रिः ॥ अजागौर्महिषीवापिह्यमेध्यंभक्षयेद्यदि ॥ दुग्धंहव्येनकव्येनगोमयादिनयोजयेत् ॥ ऊनस्तनीव्याधिताचयाचान्याऽभक्ष्यभक्षिणी ॥ तासांदुग्धंनहोतव्यंहुतंचैवाहुतंभवेत् ॥ देवद्रोण्यांविवाहेषुप्रयज्ञेषुकृतेषुच ॥ काकैःश्वभिश्चसंस्पृष्टमन्नंतन्नविवर्जयेत् ॥ तन्मात्रमन्नमुद्धृत्यशेषंसत्कारमर्हतीति ॥ देवद्रोणीदेवयात्रा ॥ प्रकृतेष्ववश्यंभाविषुसर्वोत्सवेषु ॥ अत्रदेवयात्रादीनांबह्वन्ननिष्पाद्यत्वाद्बह्वन्नकार्येष्वियंशुद्धिर्वेदितव्या ॥ तदाहपराशरः ॥ पक्वंद्रोणाधिकंत्वन्नंकाकश्वाद्युपघातितम् ॥ ग्रासमुद्धृत्यतन्मात्रंयत्तुलालाकृतंभवेत् ॥ हेमोदकेनचाभ्युक्षेद्राजतेनांबुनाथवा ॥ अग्निज्वालोपसंस्पर्शात्सुवर्णमधुसर्पिषा ॥ विप्राणांब्रह्मघोषेणपूतंभोज्यंचतद्भवे

दिति ॥ द्रोणःषट्पञ्चाशदधिकंपलशतद्वयम् ॥ यत्तुजमदग्निवचनम् ॥अन्नमेकाहिकंपक्वंश्वकाकाद्युपघातितम्॥केशकीटावपन्नंचतदप्येवंविशुध्यति॥ क्रीतस्यापिविधिर्दृष्टएषएवमनीषिभिरिति ॥ तदल्पधनविषयम् ॥ संस्कारविषयेविशेषश्चवसिष्ठेनोक्तः॥ द्रवाणांप्लवनेनैवघनानांप्रोक्षणेनच॥छागेनमुखसंस्पृष्टमन्नंतच्छुचितामियात् ॥ घनाःपर्प्पटवटिकादयः॥द्रवाणामितिगोरसविषयम् ॥ तदाहशंखः ॥ श्रपणंघृततैलानांप्लवनंगोरसस्यच ॥ भांडानिप्लावयेदद्भिःशाकमूलफलानिचेति ॥ घृतादीनामपिश्रपणासंभवेसजातित्वादीषत्प्लवनेन शुद्धिः ॥ मनुनातु ॥ द्रवाणांचैवसर्वेषांशुद्धिराप्लवनंस्मृतम् ॥ प्रोक्षणंसंहतानांचदारवाणांचतक्षणमित्युक्तम्॥अतश्चोत्प्लवनप्लावनोविकल्पेन॥किंच॥ प्रस्थमात्रपरिमाणानामुत्प्लवनंततोधिकपरिमाणानांप्लावनंततोन्यूनानांपरिमाणानांत्यागइतिगम्यते ॥ आधारभांडस्थितस्यगोरसादेर्नदोषः ॥ तदुक्तम् ॥ आधारदोषेतुनयेत्पात्रात्पात्रांतरंद्रवम् ॥ घृतंचपायसंक्षीरंतथैवेक्षुरसोगुडः ॥ शूद्रभांडस्थितंतक्रंतथामधुनदुष्यतीति ॥ पायसंपयोनिर्वृत्तम् ॥ यमोपि ॥ आममांसंघृतंक्षौद्रंस्नेहाश्चफलसंभवाः ॥ म्लेच्छभांडस्थितादूष्यानिष्कृताःशुचयःस्मृताइति ॥ एतच्चआधारभांडविषयम् ॥ अनाधारेपिद्रोणाधिकेपायसेप्लवनंसर्वत्रघृतादिविषयमपि॥ततोन्यूनस्यापिदेशकालाद्यपेक्षयाश्रपणादिभिःशुद्धिः ॥ तथाचबौधायनः ॥ देशंकालंतथात्मानंद्रव्यंद्रव्यप्रयोजनम् ॥ उपपत्तिमवस्थांचज्ञात्वाशौचंप्रकल्पयेदिति ॥ शातातपोपि ॥ गोकुलेकुंडशालायांतिलचक्रेक्षुयंत्रयोः ॥ अमीमांस्यानिशौचानिस्त्रीषुबालातुरेषुचेति ॥ कुंडशालायज्ञशाला ॥ ॥ शंखोपि ॥ निर्यासानांगुडानांचलवणानांतथैवच ॥ कुसुंभकुंकुमानांचऊर्णाकार्पासयोस्तथा ॥ शोषात्तुकथिताशुद्धिरित्याहभगवान्यमइति ॥ निर्यासाहिंगुप्रभृतयः ॥ इयंस्वल्पपरिमाणविषया॥

बहुपरिमाणेषुबौधायनेनविशेषाभिधानात् ॥ यथाबहुकुसुंभका र्पासयोस्तथागुडलवणानांसार्षपांचकठिनीभूतानांचांडालादिस्पर्शने नैवाशुद्धिरिति ॥ अत्यल्पत्वेपरित्याज्याएव ॥ तत्रापिदेशका लापेक्षयापरित्यागःकार्यः॥मृत्पर्णादिषुविष्णुनाविशेषउक्तः॥मृत्पर्ण तृणकाष्ठानांश्वास्थिचांडालवायसैः ॥ स्पर्शेनविहितंशौचंसोमसूर्या ग्निमारुतैः॥तथाप्रोक्षणेनपुष्पफलमपिच॥शंखोपि॥पुष्पफलानांवि ष्किरावधूतानांप्रक्षालनमित्येकपर्णानामद्भिःप्रक्षालनंसकृद्बहुष्प्रयुक्ता नामुत्सर्गइति॥ विष्किरैर्ग्रामकुक्कुटादिभिरवधूतंपदाकीर्णमित्यर्थः॥ बौधायनोऽपि॥असंस्कृतायांभूमौन्यस्तानांप्रक्षालनम् ॥ पराक्षालन मित्येके ॥ पराक्षालनमभ्युक्षणम् ॥ एवंक्षुद्रसमिधामसंस्कृतानाम मेध्याद्युपहतानामेकपुरुषोद्धार्याणामिति ॥ क्षुद्रसामेधांयज्ञियत्वेनप्र सिद्धपालाशादिव्यतिरिक्तापामार्गादीनाम्॥व्यासोपि॥रथ्याकर्दमतो यानिनावःपथतृणानिच ॥ मारुतेनैवशुद्ध्यंतिपक्वेष्टकचितानिचेति॥ मनुनातुद्रव्यहस्तस्योच्छिष्टादिस्पर्शेविशेषउक्तः॥तथा॥ उच्छिष्टेन तुसंस्पृष्टोद्रव्यहस्तःकथंचन ॥ अनिधायैवतद्द्रव्यमाचांतःशुचितामि यादिति ॥ इतिधान्यशुद्धिः॥ अथजलशुद्धिः ॥ तत्रदेवलः॥ अवि गंधारसोपेतानिर्मलाःपृथिवीगताः ॥ अक्षीणाश्चैवगोःपानादापःशु द्धिकराइति॥अत्रगोपानादिति ॥ गोपानयोग्यपरिमाणाः॥ तदाहतु व्यासबृहस्पती ॥ भूमिष्ठमुदकंमेध्यंवैतृष्ण्यंयत्रगोर्भवेत् ॥ अव्याप्तंचे दमेध्येनतद्वदेवशिलागतमिति ॥ अल्पजलाशयादुद्धृतोदकविषयेदे वलएववाक्यांतरमाह॥उद्धृतावाप्रशस्ताःस्युःशुद्धैःपात्रैर्यथाविधि ॥ एकरात्रोषितास्तास्तुत्यजेदपःसमुद्धृताइति॥अतएवबहूदकात्तडागा देरुद्धृतानांरात्र्युषितानामपर्युषितोदकांतराभावेनदोषः॥अपर्युषित सद्भावेरात्र्युषितानांकर्मयोग्यत्वंनास्ति॥महाजलाशयविषयेसएवाह॥ अक्षोभ्यानितडागानिनदीवापीसरांसिच ॥ चांडालाद्यशुचिस्प

शेतीर्थतःपरिवर्जयेदिति ॥ तीर्थमुदकावतरणमार्गः ॥ यस्मिंस्तीर्थे चांडालादिस्पर्शस्तद्वर्जयित्वाऽन्यतोजलंगृह्णीयादित्यर्थः ॥ वापीकूपादिविषयेहारीतः॥वापीकूपतडागेषुमानुषंशीर्यतेयदि॥अस्थिचर्मविनिर्मुक्तंदूषितंचखरादिभिः ॥ उद्धृत्यतज्जलंसर्वंशोधनंपरिवर्जितमिति ॥ चर्मनिर्मुक्तोश्चिरकालवासाद्विशीर्णैरित्यर्थः ॥ देवलोपि ॥ उद्धरेदुदकंसर्वंपंचपिंडान्मृदस्तथेति ॥ बृहस्पतिनातुविशेषउक्तः ॥ मृतपंचनखात्कूपादत्यंतोपहतात्तथा ॥ अपःसमुद्धरेत्सर्वाःशेषंवस्त्रेणशोधयेत् ॥ वह्निप्रज्वालनंकृत्वाकूपेपक्वेष्टकाचिते ॥ पंचगव्यंन्यसेत्पश्चान्नवतोयसमुद्भवेदिति ॥ श्वादिभिश्चिरकालोपहतौतुहारीतः ॥ घटानांशतमुद्धृत्यपञ्चगव्यंक्षिपेत्ततः ॥ श्वभिःश्वपाकचांडालैःदूषितेषुविशोधनमिति ॥ आपस्तंबस्तुविशेषमाह ॥ उपानदस्थिविण्मूत्रस्त्रीरजोमद्यमेवच ॥ एभिर्विदूषितेकूपेकुंभानांषष्टिमुद्धरेदिति ॥ स्थावरस्वल्पजलाशयेतुकूपवदेवशुद्धिः॥तदाहविष्णुः ॥ जलाशयेषुस्वल्पेषुस्थावरेषुमहीतलेकूपवत्कथिताशुद्धिर्महत्सुचनदूषणमिति॥ शातातपोपि ॥ अन्यैरपिकृतेकूपेसेतौवाप्यादिकेतथा ॥ तत्रस्नात्वाचपीत्वाचप्रायश्चित्तंनविद्यते ॥ यमेनविशेषउक्तः ॥ चांडालभांडसंस्पृष्टंपीत्वाकूपगतंजलम् ॥ गोमूत्रयावकाहारस्त्रिरात्रेणैवशुद्ध्यतीति॥नदीनांचांडालादिभांडस्पर्शोपिनदोषस्तदाहसएव ॥नदीवेगेनशुद्ध्यतीति ॥ चर्मकोशस्यकषायद्रव्येणशोधनाच्छुद्धिः ॥ ॥ तदाहकश्यपः ॥ दृतीनांरंजनाच्छुद्धिरिति ॥ शुद्धचर्मकोशगतमपिनपेयमनापदि ॥ ॥ तदाहयमः ॥ प्रपास्वरण्येघटगंधकूपेद्रोण्यांजलंकोशगतास्तथापः ॥ पिबेच्चशूद्रव्यतिरिक्तलोकइति ॥ आपद्यप्यरण्यगतंप्रपादिपेयमित्यर्थः ॥ द्रोणीसर्वसाधारणीपाषाणादिकृतापात्रीकोशोदृतिः ॥ तडागादिगतंनवोदकंदशरात्रेणशुद्ध्यति ॥ तदुक्तम् ॥ अजागावोमहिष्यश्चस्त्रियश्चैवप्रसूतिकाः ॥ दशरात्रे

१ च्छ्लेष्म इ० पा० ।

णशुध्यंतिभूमिष्ठंचनवोदकमिति॥जलपात्रंचस्वकीयमेवस्वस्यशुद्धम् ॥ ॥ तदाहबौधायनः ॥ आत्मशय्यासनंवस्त्रंजायापत्यंकमंडलुः॥शुचीन्यात्मनिएतानिपरेषामशुचीनिचेति ॥ ॥ हारीतस्तु ॥ ॥ स्वानुपपत्तौशुच्यंतद्धार्यसमामनंतिसंस्पर्शेसचैलस्नानमेवह्याहेति ॥ अयमर्थः ॥ स्वशय्याद्यलाभेपरकीयंशुद्धेनकंबलादीनांतद्धार्योपभोक्तव्यम् ॥ यतःपतितादेःशय्यादिस्पर्शेसचैलस्नानंविधीयतइति ॥ एतच्चकंबलादिपतितशय्यादिस्वीकारेवेदितव्यम् ॥ इत्युदकशुद्धिः ॥ ॥अथवस्त्रादिशुद्धिः ॥ तत्रव्यासः ॥ वस्त्रंमृदंभसाशुद्धेद्रज्जुवैदलमेवच ॥ रज्ज्वादिकञ्चातिदुष्टंत्याज्यंतन्मात्रमेवचेति ॥ वैदलं शूर्पादि ॥ ॥ यमोपि ॥ यदिमूत्रपुरीषाभ्यांरेतसारुधिरेणवा ॥ चैलंसमुपहन्येतअद्भिःप्रक्षालयेत्तुतत् ॥मृदंभसानशुध्येत्तुवस्त्रंचोपहतंदृढम् ॥ छेदनंतस्यदाहोवातन्मात्रमुपहन्यतइति ॥ अत्राच्छिन्नदग्धयोरपिपरित्यागाच्छेददाहाभ्यांशुद्ध्यभिधानमत्यंतदुर्लभविषयम् ॥ दरिद्रस्यानुत्तमेष्वपिच्छेदादिनाशुद्धिः॥राशीकृतानांबहूनांमध्येयावंतिवस्त्राणिचांडालादिभिःस्पृष्टानितानिस्पृष्टापेक्षयास्वल्पानिचेत् ॥ तदातान्युद्धृत्यप्रक्षालयेत् ॥ शेषाणिबहूनिप्रोक्षयेत्॥ अनेनैवाभिप्रायेणयाज्ञवल्क्यः॥प्रोक्षणंसंहतानांचबहूनांधान्यवाससामिति ॥स्मृत्यंतरेपि ॥वस्त्रधान्यादिराशीनामेकदेशस्यदूषणम् ॥ तावन्मात्रंसमुद्धृत्यशेषंप्रोक्षणमर्हतीति ॥ अत्रशेषस्यप्रोक्षणविधानादुद्धृतस्योपहतस्यप्रक्षालनादिभिःशुद्धिरितिगम्यते ॥ यदाराशीकृतानिसर्वाणिस्पृष्टानितदाप्रोक्षणादेवशुद्धिः॥यदाचस्वल्पानितदासर्वेषांप्रक्षालनादेवशुद्धिः॥ तदाहमनुः॥ अद्भिस्तुप्रोक्षणंशौचंबहूनांधान्यवाससाम्॥ प्रक्षालनेनत्वल्पानामद्भिःशौचंविधीयतइति ॥ राशेर्बहुत्वंचपुरुषग्राह्यभाराधिकत्वंबौधायने ॥ अनेकोद्धार्यदारुशिलेभूमिसमेइत्यनेकोद्धार्ययोर्दारुशिलयोःस्वल्पशौचत्वमुक्तम् ॥ तेनैवन्यायेनद्रव्यांतरेष्व

पिज्ञातव्यम् ॥ याज्ञवल्क्येन विशेषउक्तः ॥ सोखैरुदकगोमूत्रैःशुद्ध्यत्याविककौशिकम् ॥ सश्रीफलैरंशुपट्टंसारिष्टैःकुतपंतथा ॥ सगौरसर्षपैःक्षौमं पुनःपाकान्महीमयम् ॥ कौशिकंतसरीपट्टादि ॥ अंशुपट्टंवल्कलतंतुकृतंकुतपःपर्वतच्छागलोमकृतः ॥ इयंशुद्धिराधिकोपघाते ॥ अल्पेतुप्रोक्षणमेव ॥ एषांक्षालनेनविनाशएवस्यात् ॥ शुद्धेश्चद्रव्याविनाशेनैवेष्टत्वात् ॥ अतएवदेवलः ॥ ऊर्णाकौशेयकुतपपट्टक्षौमदुकूलजाः ॥ अल्पशौचाभवंत्येतेशोषणप्रोक्षणादिभिः ॥तान्येवामेध्ययुक्तानिक्षालयेच्छोधनैःस्वकैः ॥ तूलिकाद्युपधानन्तुपुष्परक्तांबरंतथा ॥ शोषयित्वातपेकिंचित्करैःसंमार्जयेन्मुहुः ॥ पश्चाच्चवारिणाप्रोक्ष्यविनियुंजीतकर्मणि ॥ तान्यप्यातपक्लिष्टानियथावत्परिशोधयेदिति ॥पुष्परक्तमितिप्रक्षालनासहरागरक्तोपलक्षणम् ॥ अतश्चयत्प्रक्षालनेनविनष्टरागंभवतितदातपशोषणादिनाशोध्यम् ॥यन्मंजिष्ठादिकंक्षालनेनविनश्यतितत्क्षालयेत् ॥ आपस्तंबोपि ॥ शुनोपहतंचैलमवगाहेतप्रक्षाल्यवातद्देशमग्निनासंस्पृश्यपुनःप्रक्षाल्यपादौचाचम्यप्रयतोभवति ॥ अत्रायंविवेकः॥ वस्त्रसहितस्यैवनाभेरूर्ध्वस्पर्शेवगाहः ॥ अधस्ताच्चेत्प्रक्षालनमिति ॥ शंखलिखितौ ॥ अहतानांप्रोक्षणमिति॥अहतानियंत्रादुत्तीर्णानि ॥ प्रचेताश्च ॥ चैलानामुपहतानामुच्छेदनंगंधलेपापनयनंतन्मात्रोच्छेदनंवाननवानांवाससामभ्युक्षणंचेति ॥ उच्छेदनंक्काथनम्॥ शंखः ॥ शयनासनयानानांसंहतवच्छौचमिति ॥ शयनादीनांसंहतशब्दवाच्यत्वात्संहतवद्राशीभूतद्रव्यवत्प्रोक्षणेनशुद्धिरित्युक्तंभवति ॥ तदाहांगिराः ॥ शयनासनयानानिरोमबंधानियानिच ॥ वस्त्राणितानिसर्वाणिसंहतानिप्रचक्षतइति ॥ ॥ मनुः ॥ चैलवच्चर्मणांशुद्धिर्वैदलनांतथैवच ॥ शाकमूलफलानांतुधान्यवच्छुद्धिरिष्यतइति॥ स्मृत्यंतरेपि॥ पक्षपवित्रवच्चर्मचामरतृणवेत्रवल्कलानांचचैलवच्छुद्धिरिति ॥ अत्रपवित्रंदर्भस्तन्मयंतृणमिति॥

१ अन्यान्यप्यातिनष्टानि इ० पा० । २ वल्कलानामि पा० ।

तृणराजस्तालोभिधीयते॥ अतस्तत्पत्रादीनाम्॥ ॥इतिवस्त्रादिशुद्धिः ॥ ॥ अथदेहशुद्धिः॥तत्रमनुः ॥ ज्ञानंतपोऽग्निराहारोमृन्मनोवार्युपाञ्जनम्॥वायुःकर्मार्ककालौचशुद्धेःकर्तृणिदेहिनाम्॥ सर्वेषामेवशौचानामर्थशौचंपरंस्मृतम्॥योऽर्थेशुचिर्हिसशुचिर्नमृद्वारिशुचिःशुचिः॥ क्षांत्याशुद्ध्यंतिविद्वांसोदानेनाकार्यकारिणः॥प्रच्छन्नपापाजाप्येनतपसावेदवित्तमाः॥ मृत्तोयैःशुध्यतेशोध्यंनदीवेगेनशुद्ध्यति ॥ रजसास्त्रीमनोदुष्टासंन्यासेनद्विजोत्तमः॥ अद्भिर्गात्राणिशुद्ध्यंतिमनःसत्येनशुद्ध्यति॥विद्यातपोभ्यांभूतात्माबुद्धिर्ज्ञानेनशुद्ध्यतीति॥अथाशुद्ध्यपवादः॥तत्रबृहस्पतिः ॥पादौशुचीब्राह्मणानामजाश्वस्यमुखंशुचिः॥ गवांपृष्ठानिमेध्यानिसर्वगात्राणियोषितामिति ॥अनुपहतब्राह्मणचरणस्पृष्टंशुद्धमित्यर्थः॥अतएवब्राह्मणव्यतिरिक्तचरणस्पर्शेदोषउक्तोभवति ॥तथाच ॥अयस्पात्रेचपक्वान्नंतद्व्याप्तंचतदेवयत्॥ भुक्तंपक्षादधोवर्त्मप्रदंस्नेहमृताद्दते॥पयसासर्पिषावापिसिद्धमन्नादिकंचयत्॥ स्पृष्टमप्याहरेत्प्रोक्ष्यदुःस्पृष्टंचयथाफलम्॥फलंयथागर्हितंनभवतितथा॥स्मृतिचंद्रिकायांगौतमेनोक्तम्॥ अदुष्टासंततधारावातोद्धूताश्चरेणवः॥ स्त्रियोवृद्धाश्चबालाश्चनदुष्यंतिकदाचनेति॥ बृहस्पतिरपि॥ द्राक्षेक्षुयंत्रीकरकारुहस्तगोदोहनीयंत्रविनिःसृतानि॥बालैरथस्त्रीभिरनुष्ठितानिप्रत्यक्षदृष्टानिशुचीनितानि ॥ यंत्रविनिःसृतानिद्राक्षेक्षुरसादीनि ॥ स्त्रीभिर्बालकैर्वारथ्याप्रसर्पणादिनाऽशुचिभिःकृतानिप्रत्यक्षतोज्ञातान्यपिस्पर्शपाकादीनिकर्माणिशुद्धानीत्यर्थः॥ मनुरपि ॥ नित्यंशुद्धःकारुहस्तःपण्यंयच्चप्रसारितम्॥ ब्रह्मचारिगतंभैक्ष्यंनित्यंमेध्यमितिस्थितिः ॥ ब्रह्मचारिपदंभिक्षुकोपलक्षकंभिक्षुकहस्तस्थितंसिद्धान्नंरथ्योपसर्पणोपघातेनाशुद्धंनभवतीत्यर्थः ॥ तथासुमंतुगौतमौ ॥ तिलपिष्टंतथाक्षीरंपायसंदधिसक्तवः ॥ स्नेहपक्वंचतक्रंचशूद्रस्यापिनदुष्यति॥तथाच॥अपूपाःसक्तवोधानास्तक्रंदधिघृतंपयः॥

१ पात्रादीनामित्यपिपाठः।

एतत्पण्यागतंभोज्यंभांडलेपोनचेद्भवेदिति ॥ अत्रसक्तुपूपादीनांशु
चित्वेसत्यपि ॥ आपणीयान्यभक्ष्याणीतिशंखवचनात्सिद्धान्नानाम
भक्ष्यत्वम् ॥ शंखोपि ॥ नारीणांचैववत्सानांशकुनीनांशुनांमुखम् ॥
रतौप्रस्रवणेवृक्षेमृगयायांसदाशुचीति ॥ तथाच ॥ आकराः शुचयः
सर्वेशकुनिःफलपातने ॥ श्वामृगग्रहणेमेध्यःस्त्रीमुखेषुचवारुणी ॥
स्त्रीमुखेष्वितिपीतमद्यायाअपिब्राह्मणभार्यायाः शूद्रायाबुद्धिपूर्वकगं
धरसास्वादनवर्जितंमुखंरतिसंसर्गेशुद्धमेवेत्यर्थः ॥ आकराःसुराक
रव्यतिरिक्ताः ॥ तदाहपैठीनसिः ॥ आकरोद्धृतवस्तूनिनशुचीनिक
दाचन॥आकराःशुचयःसर्वेवर्जयित्वासुराकरमिति॥यमोपि ॥ उत्तती
क्रमुकंचैवकरीरमपराजिता ॥ आममांसंघृतंक्षौद्रंफलंचेक्षुरसोदधि ॥
आकरात्पत्रशाकंचसार्द्रंपाषाणचूर्णकम् ॥ अंत्यभांडस्थितादूष्यानि
ष्क्रांताःशुचयःस्मृताः ॥ गोरसंमधुमांसानिशाकमूलफलानिच ॥ अं
त्यभांडस्थितादूष्यानिष्क्रांताःशुचयःस्मृताः ॥अदूष्यंकांचनंगावः॥
स्त्रीमुखंकुतपंक्षुरम्॥नदूषयंतिविद्वांसोयज्ञेषुचमसंतथा॥मुखतोगौरमे
ध्यातुमेध्योजोमुखतस्तथा ॥ पृष्ठतोगौर्गजःस्कंधेसर्वतोऽश्वःशुचिस्त
थेति ॥ तथाच ॥ मक्षिकाविप्रुषश्छायागोरसःसूर्यरश्मयः ॥ रजोभूर्वा
युरग्निश्चस्पर्शेमेध्यानिनिर्दिशेत् ॥ अत्रमक्षिकाग्रहणमवर्जनीयस्पर्शा
नांदंशादीनामुपलक्षणार्थम्॥विप्रुषोऽविज्ञातजलकणाः ॥ छायारजश्च
निषिद्धव्यतिरिक्ते ॥ तथाच ॥ श्वभिर्हतस्ययन्मांसंशुचितन्मनुरब्रवी
त् ॥ क्रव्याद्भिश्चहतस्यान्यैश्चांडालाद्यैश्चदस्युभिरिति ॥ क्रव्यादः
श्येनादयः ॥ दस्यवोव्याधाः ॥ अत्रिरपि ॥ मधुपर्केचसोमेचअप्सुप्रा
णाहुतीषुच ॥ नोच्छिष्टस्यभवेद्दोषोह्यत्रेश्चवचनंयथेति ॥ अप्स्विति
भोजनान्तरममृतापिधानमसिइत्यनाग्निकरणार्थयाआपोगृह्यंतेतासु
मधुपर्कादिषुचमंत्रोच्चारणविषयेउच्छिष्टदोषोनास्तीत्यर्थः ॥षट्त्रिंश
न्मतेपि ॥ तांबूलेचफलेचैवभुक्तस्नेहावशिष्टके ॥ दंतलग्नस्यसंस्पर्शे

नोच्छिष्टःस्यात्कदाचनेति ॥ अद्भिःपत्रैर्मूलपुष्पैस्तृणकाष्ठमयैस्त
था ॥ सुगंधिभिस्तथाद्रव्यैर्नोच्छिष्टस्तुभवेद्द्विजइति ॥ उच्छिष्टेन
स्पृशेद्द्रव्यहस्तस्तद्द्रव्यंभूमावनिधायैवाचम्यशुध्यति॥तथाचमनुः ॥
उच्छिष्टेनचसंस्पृष्टोद्रव्यहस्तःकथंचन ॥ अनिधायैवतद्द्रव्यमाचां
तःशुचितामियादिति ॥ अत्रउच्छिष्टेनेत्याचमनार्हेणप्रायश्चित्तेनयु
क्तःपुरुषउच्यते ॥ द्रव्यंचभक्ष्यभोज्यादीनि ॥ अत्रमणिबंधपा
णीप्रक्षाल्याचमनमित्युक्तत्वात् ॥ द्रव्यमाधायाचमनंसंभवतीतिम
न्यमानाःकेचिदाहुःशरीरस्पर्शनमात्रंद्रव्यस्यविवक्षितम् ॥ अतो
हस्तात्प्रदेशांतरेतुसंगादौतद्द्रव्यंगृहीत्वाचमेदिति ॥ अयमभिप्रायः॥
तथैवपुरुषाशौचादशुचिद्रव्यम् ॥ तथैवशौचसंबंधाद्धिभवतीति ॥
गौतमस्तुनिधायाचमेदित्याह ॥ तत्राविरोधइतिचेत् ॥ नागरीयो
द्रव्यंनिधायाचामेदसदंगस्थकृत्वाचामेदितिव्यवस्थयात्वविरोधः ॥
याज्ञवल्क्योपि ॥ मुखजाविप्रुषोमेध्यास्तथाचमनबिंदवः ॥ श्म
श्रुचास्यगतंदंतलग्नंत्यक्त्वाततःशुचिरिति ॥ अत्राचमनबिंदवइ
तिपरेभ्यआचमनंददतःपुरुषस्यपादौस्पृशेयुर्येबिंदवस्तेआचामितुर्ह
स्तोदकैःसमाज्ञेयास्तैरशुचिर्भवति ॥ अधोङ्गुलिविवरेभ्यःपत
द्भिरुदकबिंदुभिर्भूम्यभिपातात्तैर्यदिस्पृशति तेन तद्यआचामयतःप
रान्भौमिकैस्तेसमाज्ञेयानतैरप्रयतोभवेदिति ॥ अत्रापिपराना
चामयतइत्युक्तत्वाद्यआचामयेत्तदन्येनसमीपस्थेनबिंदुसंसर्गोयत्नाद्र
क्षितव्यः ॥ पादौस्पृशतइत्युक्तत्वाच्चआचमनदात्राऽपिपादव्यति
रिक्तांगस्पर्शोयत्नाद्रक्षितव्यइत्यर्थः॥गौतमेनविशेषउक्तः॥नमुख्याविप्रुषउच्छिष्टंकुर्वंतिनपतंतीति ॥ तथाच ॥ दधिसर्पिःपयःक्षौद्रेभांड
दोषोनविद्यते ॥ मार्जारश्चैवदर्वीचमारुतश्चसदाशुचिरिति ॥ स्मृ
त्यंतरेपि ॥ अजाश्वमुखतोमेध्यंगावोमेध्यामुखाहते ॥ मार्जारन
कुलौस्पृष्टौशुभाश्चमृगपक्षिणइति ॥ मार्जारस्यशुचित्वंकर्मकालाद

न्यत्र॥तत्रतुस्नानविधानात् ॥ उपघातसंदेहेमनुः ॥ त्रीणिदेवाःप वित्राणिब्राह्मणानामकल्पयन् ॥ अदृष्टमद्भिर्निर्णिक्तंयच्चवाचाप्रश स्यतइति ॥ अदृष्टमिति ॥ अदृष्टस्योपघातस्यतत्कारणकाकादिस द्भावमात्रेणशंकानकार्य्या ॥ एवंमहानसादौव्याहरद्भिरकृतशौचशू द्रादिभिःपक्वंदृष्टंभोजनंनदुष्यति ॥ नपुनरियंमाशंकोत्तरकालेका र्या ॥ भोजनात्प्रागविज्ञातोपघातेनदोषइतिमेधातिथेरभिप्रायः ॥ पा रिजातोपि ॥ माक्षिकंचोदकंक्षीरंतक्रंचेक्षुरसंदधि ॥ आममांसंघृतं तैलंतैलंचफलसंभवम् ॥ शाकंचाकरपक्वंचतथासस्नेहमौषधम् ॥ पि ण्याकमुत्ततीचूर्णपूगंचैवजलान्वितम् ॥ अंत्यभांडस्थितादूष्यानिष्क्रां ताःशुचयःस्मृताः ॥ विनोदकेनपचितंयदन्नंजातवेदसि ॥ तदन्नंफल वद्ग्राह्यंदुःस्पृष्टंतन्नदुष्यति ॥ इक्षुरापःफलंमूलंतांबूलंतिलमोष धम् ॥ भक्षयित्वापिकर्त्तव्याःस्नानदानादिकाःक्रियाः ॥ तंडुलास्त्व ग्निसंयोगात्पिष्टंलवणयोगतः ॥ पानीयमग्निसंयोगाद्घनःप्रोक्षणतःशु चिः ॥ आर्द्रकंसगुडंमद्यंसैक्षवंबदरंतथा ॥ नारिकेलांबुकांस्येच दध्नासंमिश्रितोगुडः ॥ क्षीरेचलवणंदत्तमुच्छिष्टेचतथाघृतम् ॥ स्नानं रजकतीर्थेचताम्रेगव्यंसुरासमम् ॥ दन्तोष्ठस्पर्शनान्मद्यंरोमभ्योनिः सृतंजलम् ॥ अतएवसदाकार्य्यंविद्वद्भिःश्मश्रुकर्त्तनम् ॥ यतीचब्रह्म चारीचनाचामेच्चर्मवारिणा ॥ गृहस्थोपिचनाचामेद्दैवेपित्र्येचकर्मणि॥ ॥ शंखः ॥ त्रिदिनंभस्ममृद्वारित्र्यहंत्रिफलमेवच ॥ सप्ताहंसप्तकाषायै श्चर्मशुद्धिःपरास्मृता ॥ तथाचसुमंतुः ॥ नाद्याच्छूद्रस्यपक्वान्नंविद्वा न्नाश्राद्धिनोद्विजः ॥ आददीतामभेवास्मादवृत्तावेकरात्रिकम् ॥ अ श्राद्धीनित्यश्राद्धहीनः ॥ एकरात्रिकमेकरात्रपर्याप्तम् ॥ ॥पक्वान्नेष्व पिविशेषमाहतुःसुमंत्वंगिरसौ ॥ गोरसंचैवसक्तूंश्चतैलपिण्याकमेवच॥ अपूपान् भक्षयेच्छूद्राद्यच्चान्यत्पयसाकृतम्॥हारीतः॥ कंदुपक्वंस्नेहप क्वंपायसंदधिसक्तवः ॥ एतान्यपिचशूद्रान्नभोज्यानिमनुरब्रवीत् ॥

एवंयानिशूद्रान्ननिषेधकानिवचनानितानिपरिगणितशूद्रपक्वान्नव्यतिरिक्तविषयाणि ॥ यानिचदासादिलक्षणानिपराशरस्मृत्यभिहितानितानिचनशूद्राभिप्रायेण॥ परस्परविरोधात् ॥ तल्लक्षणानिच॥शूद्रकन्यासमुत्पन्नोब्राह्मणेनतुसंस्कृतः॥संस्कारेणभवेद्दासस्त्वअसंस्कारेतुनापितः ॥ क्षत्रियाच्छूद्रकन्यायांसुतोजातःसुसंस्कृतः ॥ गोपालस्तुसविज्ञेयोभोज्योविप्रैर्नसंशयः ॥ वैश्यकन्यासमुत्पन्नोब्राह्मणेनतुसंस्कृतः ॥ कुलमित्रातिथिर्ज्ञेयोभोज्योविप्रैर्नसंशयः ॥ क्षत्रकन्यासमुत्पन्नोब्राह्मणेनतुसंस्कृतः ॥ तदधिकस्तुविज्ञेयोभोज्योविप्रैर्नसंशयः ॥ गोपालस्यक्षत्रियोजनकःअन्येषांतुब्राह्मणः॥किंचएतेषांमूर्द्धावसिक्तजात्यंतःपातित्वान्नशूद्रत्वम् ॥ किंचात्मनिवेदकस्यकुंभकारादेश्चकेवलशूद्रत्वात्तन्मायेनेतरेषामपिशूद्रत्वमेवयुक्तम् ॥ ॥ इतिभोज्याभोज्यनिर्णयः॥ ॥ शूद्रान्नस्यनिषेधाविशेषमुक्त्वाप्रसंगात्कलिनिषिद्धाःकथ्यंते ॥ समुद्रयात्रास्वीकारः कमंडलुविधारणम् ॥ द्विजानामसवर्णेभ्यः कन्योपयमनंतथा ॥ देवरेणसुतोत्पत्तिर्मधुपर्केपशोर्वधः ॥ मांसादनंतथाश्राद्धेवानप्रस्थाश्रमंतथा ॥ दत्ताऽक्षतायाः कन्यायाःपुनर्दानंपरस्यच ॥ दीर्घकालंब्रह्मचर्य्यंनरमेधाश्वमेधकौ ॥ महाप्रस्थानगमनंगोमेधंचतथामखम् ॥ एतान्धर्मान्कलियुगेवर्ज्यानाहुर्मनीषिणः ॥ तथाच ॥ अग्निहोत्रंगवालंभंसंन्यासंपलपैतृकम् ॥ देवराच्चसुतोत्पत्तिंकलौपंचविवर्जयेदिति ॥ कलावन्यान्यपिनिषिद्धानिनिरूप्यन्ते ॥ युगधर्माःपरिग्राह्याःसर्ववर्णैर्यथोचिताः ॥ ग्रामाचाराःपरिग्राह्याःश्रुतिस्मृत्यविरोधिनः ॥ देशाचाराःपरिग्राह्यास्तत्तद्देशीयकैर्जनैः ॥ अन्यथापतितोज्ञेयःसर्वधर्मबहिष्कृतः ॥ कुलाचाराःपरिग्राह्याःश्रुतिस्मृत्याविरोधिनः ॥ श्रुतिस्मृतिविरोधेनधर्माभासानयंत्यधः ॥ युगधर्माह्यनुष्ठेयायुगेयस्मिन्यथास्थिताः ॥ श्रुतिमूलापिनग्राह्याह्यस्वर्ग्यादेशदूषिताः ॥ लौगाक्षिः ॥ श्रौतःश्रेष्ठतमोधर्मः

स्मार्त्तःश्रेष्ठतरःस्मृतः ॥ पौराणिकःश्रेष्ठएवह्यागमीयोजघन्यकः ॥ श्रुतिस्मृत्यविरोधेनकौल्यदेशीयकावपि॥धर्मौमान्यावनूचानैर्ह्यन्यथा निरयप्रदौ ॥ कुलदेशीयकौधर्मौलौकिकंग्राम्यमप्युत ॥ आददीतगृहस्थस्तान्यदिशास्त्राविरोधिनः ॥ नशास्त्रदृष्ट्याविदुषाकदाचिदुल्लंघनीयाःकुलदेशधर्माः॥ मूलंहितेषांच्युतवेदशाखामहानधर्मःस्थितिभंगदोषः ॥ वेदाविरोधेनकिंचिन्नाचरणीयम् ॥ तत्राहमनुः ॥ श्रुतिस्तुवेदोविज्ञेयोधर्मशास्त्रंतुवैस्मृतिः॥तेसर्वार्थेष्वमीमांस्येताभ्यांधर्मोहिनिर्बभौ ॥ पैंग्यः ॥ वेदोक्तमपियत्कर्मवेदाप्रामाण्यवादिनि ॥ शारीरशोकपूर्त्त्यादिकंहिचिन्नफलप्रदम् ॥ सर्वकर्मवेदनिर्णीतंकार्यमितितात्पर्य्यम् ॥ ॥ इतिश्रीसूर्यसेनमहीमहेंद्रविरचितेनिर्णयामृते द्रव्यशुद्धिप्रकरणंतृतीयंसम्पूर्णम् ॥ श्रीसूर्यसेनभू०इतिनिर्णयामृतेस्मिन्संपूर्णाद्रव्यशुद्धिरियम् ॥ १ ॥ श्रीमत्पंडित० ॥ २ ॥ ॥ इदानीमाशौचप्रकरणमारभ्यते ॥ कालःस्नानाद्यपनोद्यःपिंडोदकदानादिविधेरध्ययनादिपर्युदासस्यच निमित्तभूतःपुरुषगतःकश्चनातिशयःकथ्यतेनपुनःकर्मानधिकारमात्रमित्याशौचलक्षणंमिताक्षरायामुक्तम् ॥ तच्चाशौचंद्विविधम् ॥ सूतकंमृतकंचेति ॥ जननिमित्तंसूतकम् ॥ मरणनिमित्तंमृतकम् ॥ तत्रादौजननिमित्तमाशौचमुच्यते ॥ तच्चस्रावपातप्रसवरूपभेदात्त्रिविधम् ॥ तत्रगर्भधारणान्मासचतुष्टयाभ्यंतरेगर्भच्युतिःस्रावः ॥ पंचमषष्ठयोःपातः ॥ सप्तमादिषु प्रसवः ॥ तदुक्तंस्मृत्यंतरे ॥ आचतुर्थाद्भवेत्स्रावःपातःपंचमषष्ठयोः ॥ अतऊर्द्ध्वंप्रसूतिःस्याद्दशाहंसूतकंभवेदिति ॥ तत्रमासत्रयादर्वाग्गर्भस्रावेमातुस्त्रिरात्रमाशौचंनपित्रादीनाम् ॥ पितुःस्नानादेव शुद्धिः ॥ स्नानमात्रमेवपुरुषस्येतिवृद्धवसिष्ठस्मरणात् ॥ पातेतु मातुर्गर्भमाससंख्याहान्याशौचंपितुस्त्रिरात्रंसपिंडानांच ॥ तदाहमरीचिः ॥ स्रावेमातुस्त्रिरात्रंस्यात्सपिंडाशौचवर्जनम् ॥ पातेमातुर्य

थामासंपित्रादीनांदिनत्रयमिति ॥ गोभिलोपि ॥ संस्रावेगर्भस्यत्र्यहं वेति॥याज्ञवल्क्योपि ॥ गर्भस्रावेमासतुल्यानिशाःशुद्धेस्तुकारणम् ॥ अत्रस्रावःपतनम् ॥ यत्तुयमवचनम् ॥ अजातदंतेतनयेमृतेगर्भच्युते तथा ॥ सपिंडानांतुसर्वेषामेकरात्रमशौचकमिति ॥ एतच्चगुणव त्पित्रादिविषयम् ॥ सद्यःशौचंसपिंडानामितिपुराणवचनंमासचतु ष्टयाभ्यंतरेद्रवरूपगर्भस्यपतनेवेदितव्यम् ॥ इदंगर्भस्रावाशौचंस र्ववर्णसाधारणम् ॥ यत्तुमरीचिवचनम् ॥ गर्भस्रावेयथामासमचि रेतूत्तमेत्रयः ॥ राजन्येतुचतूरात्रंवैश्येपंचाहमेवतु ॥ अष्टाहेनतु शूद्रस्यशुद्धिरेषाप्रकीर्त्तितेति ॥ उत्तमेब्राह्मणे ॥ अचिरेमासत्रयाभ्यंत रेगर्भस्रावे ॥ अत्रराजन्येतुचतूरात्रमित्याद्यविवक्षितार्थत्वंचात्रराज न्यादीनामधिकाशौचनिपातेपितथाभाव्यम् ॥ तच्चनास्ति ॥ पाते मातुर्यथामासमितितेनैवाभिहितस्ववचनविरोधःस्यात् ॥ ननुपा तशौचंसर्ववर्णसाधारणमेवस्रावाशौचेविशेषोस्तुकोविरोधइतिचेत् ॥ अत्रोच्यते ॥ एवंसतिशूद्रस्यस्रावेअष्टाहेनशुद्धिरुक्ता ॥ पंचममासिग र्भपातेगर्भतुल्यानिशाइतिपंचमाहाशौचंभवेदतश्चपाताशौचाधिक्यं प्रसज्येत ॥ अतश्चराजन्येचतूरात्रमित्यादिवाक्यशेषस्याविवक्षिता र्थत्वमेवांगीकर्त्तव्यम् ॥ अथवा ॥ गुणवदगुणवद्विषयत्वेनापदना पद्विषयत्वेवान्यूनाधिककालकल्पनाव्यवस्थापनीयेति ॥ इदंपारि जातकाराणांमतम् ॥ वयंत्वेवंमन्यामहे ॥ अचिरेतूत्तमेत्रयइतिब्रा ह्मणविषयेमासत्रयाभ्यंतरेगर्भस्रावेदिनत्रयमाशौचमुक्त्वातत्प्रसंगादा त्मानंघातयेद्यस्तुभृग्वग्न्यनशनांबुभिः॥तस्यत्रिरात्रमाशौचमित्यादि विषये यत्रब्राह्मणस्यत्रिरात्राशौचंतत्रक्षत्रियादेश्चतूरात्रादिकमितिवा क्यशेषेणपरिभाष्यते ॥ इयंपरिभाषगर्भस्रावेपिमाप्रसांक्षीदिति ॥ स्रावेमातुस्त्रिरात्रंस्यादितिमरीचेरेववाक्यांतरप्रारंभः ॥ अन्यथा पुनरुक्तत्वेनव्यर्थत्वाद्वाक्यांतरमनारंभणीयमेवस्यात् ॥ ऋष्यशृंगे

णाप्येवमेवपरिभाषाकृता ॥ यत्रत्रिरात्रंविप्राणामाशौचंसंप्रदृश्यते ॥ तत्रशूद्रेद्वादशाहंषण्णवक्षत्रवैश्ययोरिति ॥ अत्रक्षत्रियादीनांषण्णव द्वादशाहमुक्तम् ॥ तदनापद्विषयमगुणविषयंवा ॥ मरीचिनातुच तुःपंचाष्टाहमुक्तंतद्गुणवद्विषयमापद्विषयंवावेदितव्यमिति ॥ सप्त ममासप्रभृतिप्रसवरूपत्वाद्द्वादशाहादिकं यथावर्णमाशौचंसंपूर्णंकार्य म् ॥ जननाशौचेजननिमित्तमस्पृश्यत्वंमातुर्दशाहादि कम् ॥ पितुःसचैलस्नानात्स्पृश्यत्वम् ॥ तथाचसंवर्तः ॥ जा तेपुत्रेपितुःस्नानंसचैलंतुविधीयते ॥ माताशुध्येद्दशाहेनस्नानात्तु स्पर्शनंपितुरिति ॥ सपिंडानांजननिमित्तमस्पृश्यत्वंनास्त्येव ॥ तदाहांगिराः ॥ सूतकेसूतिकावर्जंसंस्पर्शोननिषिध्यतइति ॥ सूतिकायाःपित्र्यादिकार्येषुपैठीनसिनाविशेषउक्तः ॥ सूतिकां पुत्रवतींविंशतिरात्रेणकर्माणिकारयेत् ॥ मासेनस्त्रीजननीमिति ॥ जननाशौचेप्रथमषष्ठदशमदिवसेषुदानप्रतिग्रहाधिकारोस्ति ॥ तदा हव्यासः ॥ सूतिकावासनिलयाजन्मदानामदेवताः ॥ तासांयाग निमित्तंतुशुद्धिर्जन्मनिकीर्तिता ॥ प्रथमेदिवसेषष्ठेदशमेचैवसर्वदा ॥ त्रिष्वेतेषुनकुर्वीतसूतकंपुत्रजन्मनीति ॥ वृद्धयाज्ञवल्क्योपि॥ तत्रसर्वं प्रतिग्राह्यंकृतान्नंतुनभक्षयेत् ॥ भक्षयित्वातुतन्मोहाद्द्विजश्चांद्रायणं चरेदिति ॥ मार्कंडेयोपि ॥ रक्षणीयातथाषष्ठीनिशातत्रविशेषतः ॥ रात्रौजागरणंकार्यंजन्मदानांतथाबलिः ॥ पुरुषाःशस्त्रहस्ताश्चनृत्यगी तैश्चयोषितः ॥ रात्रौजागरणंकुर्यादशाहंचैवसूतकमिति ॥ ॥ इतिज ननाशौचनिर्णयः ॥ ॥ अथमृताशौचमुच्यते ॥ ॥ तत्रमृतजाते जातस्यनाभिच्छेदादूर्ध्वंमरणेचसपिंडानांमरणनिमित्तेसद्यःशुद्धिः ॥ जननिमित्ताशौचंसर्वेषांसंपूर्णम् ॥ तदुक्तंस्मृत्यंतरे ॥ नाभिच्छेदा दूर्ध्वंशिशुमरणेनिष्प्राणनिर्गमनेचजननिमित्ताशौचंकृत्स्नं यथावर्णंस र्वेषांसपिंडानामस्त्येव॥मरणनिमित्तेसद्यःशुद्धिरिति ॥पारस्करोपि ॥

गर्भेयदिविपत्तिःस्याद्दशाहंसूतकंभवेदिति॥तदपिजनननिमित्तमेव॥ सपिंडानांप्रसवनिमित्तस्यविद्यमानत्वादितिमिताक्षरायाम्॥ बृहन्मनुरपि॥ दशाहाभ्यांतरेबालेप्रमीतेतस्यबांधवैः॥ शावाशौचंनकर्त्तव्यंसूत्याशौचंविधीयतइति॥ अत्रसर्वत्रदशाहपदंद्वादशाहाद्युपलक्षणम्॥ तदुक्तंस्मृत्यंतरे॥ अंतर्दशाहोपरतस्यसूतकाहोभिरेवाशौचमिति॥ हारीतोपि॥ जातमृतेमृतजातेवासापिंडानांदशाहमाशौचमिति॥ अत्रजातमृतइतिनाभिच्छेदादूर्ध्वंमृते॥ तदाहजैमिनिः॥ यावन्नच्छिद्यतेनालंतावन्नाप्नोतिसूतकम्॥ छिन्नेनालेततःपश्चात्सूतकंतुविधीयतइति॥ यत्तुबृहस्पतिवचनम्॥ जातेमृतेमृतजातेकुलस्यसद्यःशौचमिति॥ इदंमरणनिमित्ताशौचाविषयम्॥नाभिच्छेदात्पूर्वंशिशुमरणेपित्रादीनांजनननिमित्ताशौचंत्रिरात्रम्॥ मातुःसंपूर्णम्॥ मरणनिमित्तेसद्यःशुद्धिः॥ तदाहबृहन्मनुः॥ जीवञ्जातोयदिततोमृतःसूतकमेवतु॥ सूतकंसकलंमातुःपित्रादीनांत्रिरात्रकमिति॥ ततस्तदनंतरमेवनाभिच्छेदात्पूर्वमित्यर्थः॥यत्तुस्मृत्यंतरे॥ जीवञ्जातोयदिप्रेयात्सद्यएवविशुध्यतीति॥ तत्प्रेताशौचाभिप्रायम्॥ अत्राप्यग्निहोत्रार्थंस्नानोपस्पर्शनात्सद्यःशौचमिति॥ नामकरणात्प्राङ्मरणेसद्यःशौचमेव॥ तदाहशंखः॥ प्राङ्नामकरणात्सद्यःशुद्धिरिति॥ सद्यइतिमातापितृव्यतिरिक्तविषयम्॥ तयोस्तुत्रिरात्रम्॥ तदाहकश्यपः॥ बालानामजातदंतानांत्रिरात्रेणशुद्धिरिति॥ तथा॥ बैजिकादपिसंबंधादनुरुंध्यादघंत्र्यहमिति॥ निर्णयमाधवीयेपि॥ मातापित्रोस्त्रिरात्रंस्यादितरेषांयथाविधीति॥ मातापित्रोरुपनयनपर्यंतंत्रिरात्रमेव॥ स्मृत्यर्णवे॥ शावाद्यंद्विविधंप्रोक्तंत्रिनिशंदशरात्रिकम्॥ द्वैधंशावंसुसंकोच्यचरेद्वृद्धःशुभंमतम्॥ सपिंडानांतुनामकरणानंतरमग्निदानादिसंस्कारेकृतएकरात्रम्॥ अकृतेसद्यःशुद्धिः॥ तदुक्तंस्मृत्यंतरे॥ अदंतजातेतनयेशिशौगर्भच्युतेतथा॥ सपिंडानांतुसर्वेषा

मेकरात्रमशौचकमिति ॥ याज्ञवल्क्योपि ॥ आदन्तजननात्सद्यआ चूडान्नैशिकीस्मृता ॥ त्रिरात्रमाव्रतादेशाद्दशरात्रमतःपरमिति ॥ नामकरणादूर्ध्वमग्निदाहादिकमपिविकल्पेनकुर्यात् ॥ तदाहमनुः ॥ नात्रिवर्षस्यकर्तव्याबांधवैरुदकक्रिया ॥ जातदंतस्यवाकुर्यान्नाम्निवापिकृतेसतीति ॥ अत्रोदकक्रियायाअग्निदानपूर्वकत्वादग्निदानस्याप्युपलक्षणम् ॥ सचसंस्कारस्तूष्णीमेव ॥ तदाहलौगाक्षिः ॥ तूष्णीमेवोदकंकुर्यात्तूष्णींसंस्कारमेवचेति॥संस्काराकरणपक्षेनिखननमेव॥ तदुक्तम् ॥ ऊनद्विवार्षिकंप्रेतंघृताक्तंनिखनेद्भुवि ॥ यमगाथांगायमानोयमसूक्तमनुस्मरन्निति ॥ प्रथमवर्षेअकृतचूडस्याजातदंतस्याप्यग्निसंस्कारेसत्यप्यहोरात्रम् ॥ तदाहविष्णुः ॥ तदाजातेप्यकृतचूडेप्यहोरात्रेणशुद्धिरिति ॥ प्रथमवर्षेकृतचूडस्यचूडाकरणानंतरमग्निसंस्कारस्यावश्यकत्वात्त्रिरात्रमेव ॥ ऊनद्विवर्षेप्रेतेगर्भपतनेवासपिंडानांत्रिरात्रमेवेतिवसिष्ठस्मरणात् ॥ वर्षत्रयादूर्ध्वमकृतचूडस्याप्यग्निसंस्कारानियतत्वात्त्रिरात्रमाशौचम् ॥ नात्रिवर्षस्यकर्तव्याबांधवैरुदकक्रियेतिमनुनान्यूनत्रिवर्षस्यसंस्कारनिषेधेनत्रिवर्षादूर्ध्वमभ्यनुज्ञानात् ॥ अकृतचूडानांकन्यानांमरणेसद्यःशुद्धिः ॥ ॥ तदाहापस्तंबः ॥ अकृतचूडानांकन्यानांमरणेसद्यःशुद्धिरिति ॥ कृतचूडानामपिवाग्दानात्पूर्वमेकाहेनशुद्धिः॥ ॥तदाहयाज्ञवल्क्यः॥ अहस्त्वदत्तकन्यासुबालेषुचविशोधनमिति ॥ अदत्तेवाग्दानरहितकन्यानामाशौचविषयेत्रिपुरुषमेवसापिंड्यम् ॥ ॥ तदाहवसिष्ठः ॥ अदत्तानांतुस्त्रीणांत्रिपुरुषीविज्ञायतइति ॥ वाग्दानादूर्ध्वंविवाहसंस्कारात्पूर्वंपितृकुलेपतिकुलेचत्रिरात्रमाशौचम् ॥ तदाहमरीचिः ॥वारिपूर्वंप्रदत्तानावाचैवप्रतिपादिता ॥ असंस्कृतातुसाज्ञेयात्रिरात्रमुभयोःसममिति ॥ याकेवलंवाचैवप्रतिपादितावाग्दत्ता वारिपूर्वंनैवप्रदत्तेत्यन्वयः ॥ उभयोःपितृपतिपक्षयोरित्यर्थः ॥ विवाहानंतरमाशौचेविष्णुना विशेषउक्तः ॥ संस्कृतासुस्त्रीषुनाशौचंपितृपक्षे ॥ तत्प्रसवमरणेचपि

तृगृहेस्यातां तदैकरात्रंत्रिरात्रंचेति ॥ एकरात्रंप्रसवेत्रिरात्रंमरण इत्यर्थः ॥ इदंचवयोवस्थाकृतमाशौचंसर्ववर्णसाधारणम् ॥ तदाहांगिराः ॥ अविशेषेणवर्णानामर्वाक्संस्कारकर्मणः ॥ त्रिरात्रात्तुभवेच्छुद्धिः कन्यास्वह्नाविधीयतइति ॥ ऋष्यशृंगोपि ॥ अविशेषेणसर्वेषांवर्णानामनुपूर्वशः ॥ त्रिरात्रात्तुभवेच्छुद्धिरर्वाक्संस्कारकर्मणइति ॥ ॥ इतिवयोवस्थाकृताशौचम् ॥ ॥ अथकृतसंस्काराणांवर्णविशेषेणाशौचविशेषउच्यते ॥ तत्रविप्रस्यमौंजीबंधनानंतरंमरणपर्यन्तंसंपूर्णाशौचम् ॥ क्षत्रियस्यधनुर्ग्रहणानंतरम् ॥ वैश्यस्यप्रतोदग्रहणानंतरम् ॥ शूद्रस्यवस्त्रद्वयग्रहणानंतरम् ॥ तदाहहारीतः ॥ आमौंजीबंधनाद्विप्रः क्षत्रियश्चधनुर्ग्रहात् ॥ आप्रतोदग्रहाद्वैश्यःशूद्रोवस्त्रद्वयग्रहात् ॥मौंजीबंधनाद्यनंतरंमृतौब्राह्मणादीनांस्वस्ववर्णोक्तसंपूर्णाशौचनिमित्तंभवतीत्यर्थः॥ अतश्चब्राह्मणादीनांमौंजीबंधनाद्यनन्तरंदाहपिंडोदकदानादिसंस्काराः ॥ संपूर्णाशौचंचकर्तव्यम् ॥ मृतविप्रंपश्चिमेनपुरद्वारेणनिर्हरेत् ॥ क्षत्रियमृत्तरेण ॥ वैश्यंपूर्वेण ॥ शूद्रंदक्षिणेन ॥ तदाह मनुः ॥ दक्षिणेनमृतंशूद्रंपुरद्वारेणनिर्हरेत्॥पश्चिमोत्तरपूर्वैस्तुयथायोगंद्विजन्मनामिति ॥ दाहादिकंकर्मपुत्रादिभिःकार्यम् ॥ तदुक्तं स्मृतिसंग्रहे ॥ पुत्रःपौत्रश्चतत्पुत्रःपुत्रिकापुत्रएवचेति ॥ अत्रपुत्रशब्देनद्वादशविधापुत्राउच्यन्ते ॥ तेचयाज्ञवल्क्येनोक्ताः ॥ औरसोधर्मपत्नीजस्तत्समःपुत्रिकासुतः ॥ क्षेत्रजःक्षेत्रजातस्तुसगोत्रेणेतरेणवा ॥ गृहेप्रच्छन्नउत्पन्नोगूढजस्तुसुतःस्मृतः ॥ कानीनःकन्यकाजातोमातामहसुतःस्मृतः॥अक्षतायांक्षतायांवाजातः पौनर्भवःस्मृतः ॥ दद्यान्मातापितावायंसपुत्रोदत्तकोभवेत् ॥ क्रीतश्चताभ्यांविक्रीतःकृत्रिमःस्यात्स्वयंकृतः॥दत्तात्मातुस्वयंदत्तोगर्भेविन्नः सहोढजः ॥ उत्सृष्टोगृह्यतेयस्तुसोपविद्धोभवेत्सुतः॥ पिंडदोंशहरश्चैषांपूर्वाभावेपरःपरः ॥ सजातीयेष्वयंप्रोक्तस्तनयेषुमयाविधिरिति॥ सवर्धर्मविवाहोढातस्यांजातऔरसोमुख्यः ॥ तथा ॥ आदुरादि

विवाहोढास्वानुलोमविवाहोढास्वसवर्णास्वपिजातऔरसस्तत्समश्श
ब्दवाच्यः ॥ अत्राप्ययंक्रमःकालादर्शेप्रोक्तः ॥ यथा ॥ मातापित्रो
रौर्ध्वदैहिकमौरसःपुत्रःकुर्यात्तदभावेपौत्रस्तदभावेप्रपौत्रस्तदभावेपु
त्रिकापुत्रः ॥ पुत्रिकापुत्रइत्यत्रद्वेधाविग्रहः ॥ पुत्रिकायाःपुत्रइत्येकः ॥
॥ यथा ॥ अभ्रातृकांप्रदास्यामितुभ्यंकन्यामलंकृताम् ॥ अस्यांयो
जायतेपुत्रःसमेपुत्रोभवेदिति॥पुत्रिकैवपुत्रइत्यपरः॥तदभावेक्षेत्रजस्त
दभावेदत्तकस्तदभावेविक्रीतः॥तदभावेकृत्रिमस्तदभावेअपविद्धः ॥
तदभावेपत्नी ॥ पत्न्यभावेगूढजः ॥ तदभावेकानीनः ॥ तदभावेपौ
नर्भवः ॥ तदभावेसहोढजः ॥ यत्तुशंखवचनम् ॥ पुत्राभावेतुपत्नी
स्यात्तदभावेतुसोदरइति ॥ तत्तुकानीनादिपुत्रचतुष्टयव्यतिरिक्तपुत्रा
भावविषयम्॥ कानीनादीनांचतुर्णांपत्न्यभावेधिकारस्यस्मृतिसंग्रहो
क्तत्वात् ॥ यथा ॥ कानीनगूढसहजाःपुनर्भूतनयाश्चये ॥ पत्न्यभावेधि
कुर्युस्तेअप्रशस्तेमृताइति ॥ तदभावेधनहारीदौहित्रः॥ तदभावेसहो
दरोभ्राता ॥ तदभावेतत्सुतः ॥ तदभावेमाता॥ तदभावेपिता ॥ तद
भावेस्नुषा ॥ तदभावेसोदराभगिनी ॥ तदभावेतत्पुत्रः॥तदभावेअसो
दराभगिनी॥तदभावेतत्पुत्रः॥तदभावेसपिंडः॥तदभावेसोदकः ॥तद
भावेमातुःसपिंडः ॥ तदभावेशिष्यः ॥ तदभावेऋत्विक् ॥ तदभावे
आचार्य उपनीयसाङ्गवेदाध्यापयिता ॥ तदभावेनृपतिः प्रेतजाती
येनपुरुषेणप्रेतद्रव्यंदत्त्वाकारयेदिति ॥तत्रवाक्यानि॥ तदाहसुमंतुः॥
मातुःपितुश्चकुर्वीतमृतयोरौरसःसुतः ॥पैतृमेधिकसंस्कारंमंत्रपूर्वकमा
हृतइति ॥ स्मृतिसंग्रहे ॥ पुत्रःपौत्रश्चतत्पुत्रःपुत्रिकापुत्रएवचेति ॥
तथाच॥पुत्रःकुर्यात्पितुःश्राद्धंपत्नीचतदसन्निधौ॥ धनहार्यथदौहित्रस्त
तोभ्राताचतत्सुतइति ॥ तथा ॥ भ्रातुःसहोदरोभ्राताकुर्याद्दाहादित
त्सुतः ॥ ततस्त्वसोदरोभ्रातातदभावेतुतत्सुतइति॥तथा ॥ उच्छिन्न
बांधवंप्रेतंपिताभ्रातातथाग्रजः ॥ जननीवापिसंस्कुर्यान्महदेनोन्यथाभ
वेदिति ॥ ननु ॥ नचमातानचापिताकुर्यात्पुत्रस्यपैतृकम् ॥ नाग्रजश्च

तथाभ्राताभ्रातॄणांचकनीयसामित्यादिवाक्यैर्मातापित्रोःपुत्रस्यौर्ध्वदैहिकानिषेधात्तयोःकथमधिकारइतिचेन्न ॥ निषेधस्यपुत्राद्यधिकारिसद्भावविषयत्वंस्नेहविहीनाविषयत्वंवा ॥ तदाहबौधायनः ॥ यदिस्नेहेन कुर्यातांसपिंडीकरणंविना ॥ गयायांतुविशेषेणज्यायानपिसमाचरेदिति ॥ कुर्यातांमातापितराविविविशेषः॥कात्यायनोपि ॥ अनुजोह्यग्रजोवापिभ्रातुःकुर्वीतसंस्क्रियाम् ॥ ततस्त्वसोदरस्तद्वत्क्रमेणतनयस्तयोरिति ॥ स्मृतिसंग्रहेपि॥पत्नीभ्राताचतज्जश्चपितामाताखुषातथा ॥ भगिनीभागिनेयश्चसपिंडःसोदकस्तथा॥ असन्निधानेपूर्वेषामुत्तरेपिंडदाःस्मृताः ॥ मार्कण्डेयपुराणेपि ॥ सख्युरुच्छिन्नबंधोश्चसखापिश्वशुरस्यच ॥ जामातास्नेहतःकुर्यादखिलंपैतृमेधिकमिति ॥ सर्वाभावेतुनृपतिःकारयेत्तस्यरिक्थतः॥ तज्जातीयैर्नरैःसम्यग्दाहाद्याःसकलाःक्रियाः ॥ सर्वेषामेववर्णानांबांधवोनृपतिर्यतइति ॥ स्कंदपुराणेपि ॥ सर्वाभावेस्त्रियःकुर्युःस्वभर्तॄणाममंत्रकमिति ॥ अत्रस्त्रियइतिपत्नीव्यतिरिक्ताः ॥ पत्नीतुधर्मविवाहोढैव ॥ नासुरादिविवाहोढासातुस्त्रीमात्रमेव ॥ तदाहशातातपः ॥ धर्मविवाहेरूढायासापत्नीपरिकीर्तिता॥सहाधिकारिणीह्येषायज्ञादौधर्मकर्मणीति ॥ क्रयक्रीतातुयानारीनसापत्न्यभिधीयते ॥ नसादैवेनपित्र्येस्यादासींतांमुनयोविदुरिति ॥ गौतमोपि ॥ पुत्राभावेसपिंडामातृसपिंडाःशिष्याश्चदद्युस्तदभावेऋत्विगाचार्याविति ॥ विष्णुपुराणेविशेषउक्तः ॥ पूर्वाःक्रियामध्यमाश्चतथैवोत्तरतःक्रियाः ॥ त्रिप्रकाराःक्रियाह्येतास्तासांभेदंशृणुष्वमे ॥अह्नांदशानांमध्येतुयादाहाद्याःक्रियाःस्मृताः॥ पूर्वामध्यमिकाःप्रोक्तायात्वेकोद्दिष्टसंज्ञिताः ॥ प्रेतेपितृत्वमापन्नेसपिंडीकरणादनु॥क्रियंतेयाःक्रियाःपित्र्याः प्रोच्यंतेतानृपोत्तराः ॥ पितृमातृसपिंडैस्तुसमानससलिलैस्तथा ॥ तत्संघातगतैर्वापिराज्ञावाधनहारिणा ॥ आद्यादयःक्रियाःकार्याःपुत्राद्यैरेवचोत्तराः ॥ दौहित्रैर्वानरश्रेष्ठकार्यास्तत्तनयैस्तथेति ॥ अपुत्रायाःस्त्रियाःसपत्नीपुत्रःपतिर्वाऔर्ध्वदैहिकंकुर्यात्॥

तदाहमनुः ॥ बहूनामेकपत्नीनामेकाचेत्पुत्रिणीभवेत् ॥ सर्वास्तास्तेनपुत्रेणप्राहपुत्रवतीर्मनुरिति ॥ कात्यायनोपि ॥ विदध्यादौरसः पुत्रोजनन्याऔर्ध्वदेहिकम् ॥ तदभावेसपत्नीजःक्षेत्रजाद्यास्तथासुताः ॥ तथासुतास्तेनप्रकारेणऔरसवदेवेत्यर्थः ॥ तेषामभावेतुपतिस्तदभावेसपिंडकइति ॥ शंखोपि ॥ भार्यापिंडंपतिर्दद्याद्भर्त्रेभार्यातथैव च ॥ श्वश्र्वादेस्तुस्नुषाचैवतदभावेतुसोदरइति ॥ सपत्नीवाकुर्यात् ॥ तदुक्तंस्मृत्यर्थसारे ॥ पुत्राभावेमिथोदंपतीसपत्न्यश्चेति ॥ अत्र सर्वत्राभावशब्देनासन्निधानमप्युच्यते ॥ असन्निधानंविनाशेनदेशांतरस्थित्याचभवति ॥ अन्यथापुत्रादावधिकारिणिदेशांतरस्थितेसतिमृतस्यदाहादिकर्मणोलोपएवस्यात् ॥ तथासति ॥ असगोत्रःसगोत्रोवायदिस्त्रीयदिवापुमान् ॥ प्रथमेहनियोदद्यात्सदशाहंसमापयेदितिवचनमप्यनुपपन्नमेवस्यात् ॥अतश्चाभावशब्दोसन्निधानवचनएवांगीकार्यः॥अनुपनीतोपिपुत्रःकृतचूडश्चपितुरग्निदानंसमंत्रकंकृत्वोत्तरकर्मस्वन्यंनियोजयेत् ॥ धर्मपत्नीचपत्युरेवमेव ॥तदाहकात्यायनः॥ असंस्कृतेनपत्न्यावाह्यग्निदानंसमंत्रकम् ॥ कर्त्तव्यमितरत्सर्वंकारयेदन्यमेवहीति ॥ वर्षत्रयादूर्ध्वंकृतचूडश्चेत्सर्वमौर्ध्वदेहिकंमंत्रवत्कुर्यात् ॥ तदाहसुमंतुः॥ अनुपेतोपिकुर्वीतमंत्रवत्पैतृमेधिकम् ॥ यद्यसौकृतचूडःस्याद्यदिस्याच्चत्रिवत्सरइति ॥ ननु कृतचूडस्तुकुर्वीतउदकंपिंडमेवच॥स्वधाकारंप्रयुंजीतवेदोच्चारंनकारयेदिति॥ तथाच ॥ कृतचूडोनुपेतस्तुपित्रोःश्राद्धंसमाचरेत् ॥ उदाहरेत्स्वधाकारंनतुवेदाक्षराण्यसाविति च व्याघ्रस्मृतिसंग्रहकारवचनाभ्यामनुपनीतस्यमंत्रोच्चारनिषेधात्कथंकृतचूडस्यमंत्रवत्पैतृमेधिककरणाधिकारइतिचेत् सत्यम् ॥ एतद्वचनद्वयंप्रथमवर्षकृतचूडाशक्तविषयम् ॥ तथाचमनुः ॥ नह्यस्मिन्युज्यतेकर्मकिंचिदामौंजिबंधनात् ॥ नाभिव्याहारयेद्ब्रह्मस्वधानिनयनादृतइति ॥ स्वधानिनयनंप्रेतकर्म ॥ नन्वसमर्थेबालकेपुत्रेतदंतराधिकारिभिःसमर्थैःसर्वंमंत्रवत्किंनक्रियतइतिचेत् ॥

१ वर्षत्रयादर्वाक्कृतचूडश्शक्तश्चेत्सर्वमौर्ध्वदेहिकंमन्त्रवत्कुर्यात् इ० पा० ।

सत्यम् ॥ सतिपुत्रेनिषेधात् ॥ तथाचऋष्यशृंगः ॥ पुत्रेषुवर्तमाने षुनान्योवैकारयेत्स्वधाम् ॥ अनुकल्पोह्यपुत्रस्यश्राद्धंकुर्यात्सना भिकइति॥ब्रह्मचार्यपिपितृउपाध्यायाचार्याणामौर्ध्वदेहिकंकुर्यात्॥सूत कान्नंनभुंजीतनसूतकिभिःसहवासंचकुर्यात् ॥ तदाहयाज्ञवल्क्यः ॥ आचार्यपितृउपाध्यायान्निर्हृत्यापिव्रतीव्रती॥सकटान्नंचनाश्नीयान्नचतैः सहसंवसेदिति ॥ व्रतीब्रह्मचारीव्रत्येव ॥ उपनयननिमित्तभैक्ष्यचर्या दिव्रतान्नभ्रंशतइत्यर्थः॥ सकटान्नमाशौचान्नम्॥मातापितृव्यतिरिक्त विषयेसएवाह ॥ नब्रह्मचारिणःकुर्युरुदकंपतितास्तथा ॥ उदकमिति पिंडदानस्याप्युपलक्षणम् ॥ मनुरपि॥ आदिष्टीनोदकंकुर्यादाव्रतस्य समापनात् ॥ समाप्तेतूदकंकृत्वात्रिरात्रमशुचिर्भवेदिति ॥ क्लीबाद्या अपिक्रियार्हानभवंतितदाह॥वृद्धमनुः॥ क्लीबाद्यानोदकंकुर्युःस्तेनाव्रा त्याविधर्मिणः ॥ गर्भभर्तृद्रुहश्चैवसुराप्यश्चैवयोषितइति ॥ पूर्वोक्तस पिंडाद्यधिकारिभिरपिमृतानांपाखण्ड्यादीनामौर्ध्वदैहिकंकार्यम्॥ त दाहयाज्ञवल्क्यः॥पाखण्ड्यनाश्रिताःस्तेनाभर्तृघ्न्यःकामगादिकाः ॥ सुराप्यआत्मत्यागिन्योनाशौचोदकभागिनइति ॥ पाखंडंवेदबाह्यलिं गधारणम्॥अधिकारेसत्याश्रमविशेषरहिताअनाश्रिताः॥ब्राह्मणस्वर्ण व्यतिरिक्तोत्तमद्रव्यहारिणःस्तेनाः ॥ पाखंड्यादिमरणस्याशौचा दिनिमित्तत्वाभावात्सपिंडैरुदकादिनकर्तव्यमित्यर्थः॥अंगिराश्च॥चां डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि॥ दंष्ट्रिभ्यश्चपशुभ्यश्चमरणंपाप कर्मणाम् ॥ मनुरपि॥ वृथासंकरजातानांप्रव्रज्यासुचतिष्ठताम्॥ आ त्मनस्त्यागिनांचैवनिवर्त्ततोदकक्रियेति॥ आत्मत्यागिषुविशेषोगौत मेनोक्तः॥प्रायोनाशकशस्त्राग्निविषोदकोद्बंधनप्रपतनैश्चेच्छतामिति॥ एतेषांशरीरंगंगादिपुण्यनदीजलेक्षिप्त्वावर्षानंतरंनारायणबलिंकृत्वास र्वमौर्ध्वदेहिकंकुर्यात्॥ तदुक्तम्॥आत्मनस्त्यागिनांनास्तिपतितानां तथाक्रिया॥ तेषामपियथागंगातोयेसंस्थापनंमतमिति ॥ षट्त्रिंशन्म तेपि॥गोब्राह्मणहतानांचपतितानांतथैवच॥ ऊर्ध्वंसंवत्सरात्कुर्यात्सर्वमे

वोर्ध्वदेहिकमिति॥ वृद्धयाज्ञवल्क्योपि॥नारायणबलिःकार्यौलोकगर्हा भयान्नरैः ॥ यथातेषांभवेच्छौचंनान्यथेत्यब्रवीन्मनुरिति ॥ आयुषोऽ नित्यत्वात्पापानुसारेणद्विगुणंप्रायश्चित्तंविधाय नारायणबलिंकृत्वा संवत्सरादर्वागपिकार्यम् ॥ अन्यथाकर्मलोपःप्रसज्येत ॥ आहिताग्ने स्तुअविहितमार्गेणमृतस्यविषयेअंगिरसाविशेषउक्तः॥वैतानंप्रक्षिपेद प्सुआवसथ्यंचतुष्पथे ॥ पात्राणितुदहेदग्नौयजमानेवृथामृतइति ॥ आहिताग्निब्राह्मणविषयेतुपराशरः ॥ चांडालेनश्वपाकेनगोभिर्विप्रै र्हतोयदि ॥ आहिताग्निर्मृतोविप्रोविशेषेणात्मघातकः ॥ दहेत्तं ब्राह्मणंविप्रोलोकाग्नौमंत्रवर्जितम् ॥ दग्ध्वास्थीनिपुनर्गृह्यक्षीरेणक्षा लयेत्ततः ॥ स्वेनाग्निनास्वमंत्रेणपृथगेततपुनर्दहेदिति ॥ एवंनिंदि तमृत्युनामृतानामकृतप्रायश्चित्तानांस्नेहेनौर्ध्वदेहिकंकृत्वाप्रायश्चित्ते नशुद्धोभवति ॥ तदुक्तमाम्नाये ॥ कृत्वाग्निमुदकस्नानंस्पर्शनंवहनं कथाम् ॥ रज्जुच्छेदाश्रुपातंचतप्तकृच्छ्रेणशुध्यति ॥ संवर्तोपि ॥ एषा मन्यतमंप्रेतंयोवहेतदहेतवा ॥ कटोदकक्रियांकृत्वाकृच्छ्रंसांतपनंचरे दिति ॥ उक्तनिमित्तैःप्रमादेनमृतानांत्वाशौचादिकंकार्यम् ॥ तदाहां गिराः ॥ अथकश्चित्प्रमादेनम्रियेताग्न्युदकादिभिः ॥ तस्याशौचंवि धातव्यंकर्तव्याचोदकक्रियेति ॥ शास्त्रोक्तमार्गेणात्मघातविषयेविशे षस्त्वादित्यपुराणादिषूक्तः॥ यथा ॥वृद्धःशौचस्मृतेर्लुप्तःप्रत्याख्यात भिषक्क्रियः॥ आत्मानंघातयेद्यस्तुभृग्वग्न्यनशनांबुभिः॥ तस्यात्रिरा त्रमाशौचंद्वितीयेत्वस्थिसंचयः ॥तृतीयेतूदकंकृत्वाचतुर्थेश्राद्धमाचरे दिति॥सर्पहतेतुविशेषःस्मृत्यर्थसारेप्रोक्तः॥तस्यनागव्रतंकार्यम् ॥ त त्संवत्सरभाद्रशुक्लपंचमीमारभ्यपंचम्यामुपवासःकार्यः॥ यद्वा ॥ चतु र्थ्यामेकभक्तंपंचम्यांनक्तंकुर्वन्दारुमयंमृन्मयंवानागंपंचफणंकृत्वागं धैःकरवीरैःशतपत्रैर्जातीकुसुमैरनंतंवासुकिंशंखंपद्मंककोटकंकंबलम श्वतरंधृतराष्ट्रंशंखपालंकालियंतक्षकंकपिलंचपंचम्यांसंपूज्यपश्चाद्ब्रा ह्मणान्घृतपायसमोदकैर्भोजयेत्संवत्सरांतेचैवंसंपूज्यब्राह्मणान्भोज

यित्वासौवर्णनागदानंगोदानंचकुर्यादिति॥भविष्यपुराणेपि॥सुवर्णतारनिष्पन्नंनागंकृत्वातथैवगाम्॥व्यासायदत्त्वाविधिवत्पितुरानृण्यमाप्नुयादिति॥ नारायणबलिंचकृत्वाश्राद्धादिकंचकुर्यात्॥नारायणबलिश्चस्मृत्यर्थसारएवोक्तः॥ कस्यांचिच्छुक्लैकादश्यांविष्णुंवैवस्वतंयमंचयथावदभ्यर्च्यतत्समीपेमधुघृतप्लुतांस्तिलमिश्रितान्दधिपिंडान्विष्णुरूपेणप्रेतमनुस्मरन्प्रेतस्यनामगोत्रेउच्चार्यदक्षिणाग्रेषुदर्भेषुदक्षिणामुखोदत्त्वागंधाद्यैरभ्यर्च्यपिंडप्रवहणांतंकृत्वानद्यांप्रक्षिपेत् ॥ नपत्न्यादिभ्योदद्यात् ॥ ततस्तस्यामेवरात्र्यामयुग्मान्ब्राह्मणानामंत्र्योपोषितःश्वोभूतेमध्याह्नेविष्णुमभ्यर्च्यैकोद्दिष्टविधिनाब्राह्मणपादप्रक्षालनादितृप्तिप्रश्नांतंकृत्वापिंडपितृयज्ञंवाउल्लेखनाद्यवनेजनांतंकृत्वा-विष्णवेब्रह्मणेशिवाययमायसपरिवारायचतुरःपिंडान्दत्त्वा नामगोत्रसहितंप्रेतंसंस्मृत्यविष्णोर्नामसंकीर्त्यपंचमंपिंडंदद्यात् ॥ ततोविप्रानाचांतान्दक्षिणाभिस्तोषयित्वातन्मध्येचैकंब्राह्मणंप्रेतबुद्ध्यासंस्मरन्भूहिरण्यादिभिरतिशयेनसंतोष्यपवित्रपाणिभिर्विप्रैःप्रेतायतिलादिसहितमुदकंदापयित्वास्वजनैःसहभुंजीतेति ॥ पुत्राद्यावश्यकाधिकारिव्यतिरिक्तैर्बहुदायहरैस्त्रिप्रकाराअपिदाहाद्याःक्रियाःकार्याः तदुक्तंस्कंदपुराणे ॥ मलमेतन्मनुष्याणांद्रविणंयत्प्रकीर्तितम् ॥ तद्गृह्णन्मलमादत्तेदुर्विधाज्ञानिनामपि॥ ऋषिभिस्तस्यनिर्दिष्टानिष्कृतिःपावनीपरा ॥ आदेहपतनात्तस्यकुर्यात्पिंडोदकक्रियामिति॥दायग्रहणाभावेपिपुत्राद्यैरावश्यकाधिकारिभिस्त्रिप्रकारापिक्रियाकार्या॥तदाहतुर्विष्णवापस्तंबौ ॥ पुत्रःपितुर्वित्ताभावेपिदद्यादिति ॥ मार्कंडेयोपि ॥ पुत्राभावेन्नतत्पुत्रःपत्नीमातापितातथा ॥ वित्ताभावेपिशिष्यश्चकुर्वीरन्नौर्ध्वदेहिकमिति ॥ ॥ अन्वारोहणविषयेविशेषःस्मृत्यर्थसारेप्रोक्तः ॥ सहदहनेतुपिंडश्राद्धादौपाकैक्यंकालैक्यंकर्त्रैक्यंचभवति॥ तच्चान्वारोहणंवैकल्पिकम् ॥ भर्तरिप्रेतेब्रह्मचर्यंतदन्वारोहणंवेति॥अन्वारोहणपक्षेतुहारीतेनफलातिशयोदर्शितः ॥

यथा ॥ मातृकंपैतृकंचैवयत्रचैवप्रदीयते ॥ कुलत्रयंपुनात्यत्रभर्तारं यानुगच्छति ॥ शंखांगिरसावपि ॥तिस्रःकोटयोऽर्द्धकोटीचयानिरोमाणिमानुषे ॥ तावत्कालंवसेत्स्वर्गेभर्त्तारंयानुगच्छति ॥ तथाच ॥ व्यालग्राहीयथाव्यालंबिलादुद्धरतेबलात् ॥ तद्वदुद्धृत्यसानारीतेनैवसहमोदते ॥ तत्रसाभर्तृपरमास्तूयमानाप्सरोगणैः ॥ क्रीडतेपतिनासार्द्धंयावदिंद्राश्चतुर्दशेति ॥ हारीतोपि ॥ मृतेभर्तरियानारीसमारोहेद्धुताशनम् ॥ साऽरुंधतीसमानारीस्वर्गलोकेमहीयते ॥ यावच्चाग्नौमृतेपत्यौस्त्रीनात्मानंप्रदाहयेत् ॥ तावन्नमुच्यतेसाहिस्त्रीशरीरात्कथंचनेति ॥ तथा ॥ ब्रह्मघ्नोवापिमित्रघ्नोवाकृतघ्नोवाभवेत्पतिः ॥ पुनात्यविधवानारीतमादायमृतातुयेति ॥ अयंचसर्वासांस्त्रीणामगर्भिणीनामबालापत्यानामाचंडालंसाधारणोधर्मः ॥ ननु ॥मृतानुगमनंनास्तिब्राह्मण्याब्रह्मशासनात् ॥ यास्त्रीब्राह्मणजातीयामृतंपतिमनुव्रजेत् ॥ सास्वर्गमात्मघातेननात्मानंनपतिंनयेदित्येवमादिवाक्यैर्ब्राह्मण्याअनुगमननिषेधात्कथंसर्वस्त्रीणांसाधारणोधर्मइत्युच्यते ॥ सत्यम् ॥निषेधस्यपृथक्चित्याधिरोहणविषयत्वात् ॥ तदुक्तमुशनसा॥ पृथक्चितिंसमारुह्यनविप्रागंतुमर्हति ॥ अन्यासांचैवनारीणांस्त्रीधर्मोऽयंपरःस्मृतइति ॥ पारिजातेतुविशेषउक्तः ॥ देशांतरेमृतेपत्यौ ब्राह्मण्यास्तुतदस्थिभिःसहानुगमनंभवत्येव ॥ इतरासांत्वस्थ्यभावेऽपिपतिपादुकादिचिह्नंकिमपिगृहीत्वाचिह्नाभावेपिभवति ॥ पृथक्चित्यनुज्ञानादिति ॥ अस्थ्नांशरीरांगत्वेनशरीरतुल्यत्वादेकचित्यारोहणमिव॥ तथान्वारोहणविधिश्चस्मृत्यर्थसारेप्रोक्तः॥अन्वारोहणंसर्वजातिस्त्रीणांपतिव्रतानांप्रशस्तम् ॥ आत्मनोभर्तुश्चसर्वपापक्षयदंनरकोत्तारणंच ॥ अनेकस्वर्गफलदंमोक्षदंचस्वर्गांतेआयुरारोग्यैश्वर्यपुत्रमित्रादिसर्वसंपत्प्रदंच ॥ दुःखदारिद्र्यवैधव्यादिनाशकरमित्यादिपुराणस्मृतिषुश्रूयते ॥ तथान्वारोहणंगर्भिण्यानिषिद्धम् ॥ ब्राह्मणगर्भिण्याब्रह्महत्यासमम् ॥ क्षत्रियादिगर्भिण्याःक्षत्रियादिवध

एव ॥ सवर्णायाःपत्यासहैवचित्यारोहणंकार्यम् ॥ ब्राह्मण्याएकचित्यारोहणमेवनपृथक्चित्यारोहणंकार्यम्॥क्षत्रियादिस्त्रियाभर्तरिदेशांतरेमृतेपृथक्चित्यारोहणमपि ॥ असवर्णायाःपृथक्चित्यारोहणमेव कार्यम् ॥ अन्वारोहणंकरिष्यामीतिसंकल्प्यपतिंमस्कृत्यचितिमारुह्यसर्वप्रयोगंकारयेत् ॥ यद्वा ॥ संकल्प्यप्रयोगेकृतेदह्यमानेभर्तरितन्नत्वाग्निंप्रविशेत् ॥ चितिविभ्रष्टानारीमोहाद्विचलिताप्राजापत्यंचरेत् ॥ संघातमरणेचविशेषस्तत्रैवोक्तः ॥ यथा ॥ स्त्रीपुरुषमरणेएकस्मिन्दहनकालेप्राप्तेसति सवर्णानांसमानधर्माणांपत्यासहदहनंकृत्वाउदकपिंडादिकंपतिपूर्वकंसर्वंकृत्वापश्चात्सापिंड्यंकार्यम् ॥ असवर्णानांसमानधर्माणांपत्नीनांचसहदहनेउदकपिंडादिकंज्येष्ठपूर्वंपृथगेव ॥ पितापुत्रयोःसवर्णयोःसमानधर्मयोः कपालाग्निनादाह्ययोःसहेव॥ उदकपिंडादिकंपितृपूर्वंपृथगेव ॥ भ्रातॄणांसवर्णानांसमानधर्माणांकपालाऽग्निदाह्यानांसहवादाहः ॥ उदकादिकंपृथगेवेति ॥ स्नेहादिवशादसपिंडकद्विजनिर्हरणेमनुनाविशेषउक्तः ॥ असपिंडंद्विजंप्रेतंविप्रोनिर्हृत्यबंधुवत् ॥ विशुध्यतित्रिरात्रेणमातुराप्तांश्चबांधवान् ॥ न् ॥ विशेत्तद्गृहेयदिवसेत् ॥ तथा ॥ यद्यन्नमत्तितेषांतुदशाहेनैवशुद्ध्यति ॥अनदन्नन्नमह्नैवनचेत्तस्मिन्गृहेवसेदिति ॥ एतच्चसजातीयाविषयम् ॥ विजातीयविषयेतुगौतमेनविशेषउक्तः ॥ अवरश्चेद्वर्णःपूर्ववर्णमुपस्पृशेत्पूर्वोपरंततस्तत् शावोक्तमाशौचमिति ॥ ब्रह्मपुराणे ॥ ब्राह्मणस्यवैश्यादिहीनवर्णसंस्कारेविशेषउक्तः॥ ब्राह्मणस्त्वन्यवर्णानांनकरोतिकदाचन ॥ कामान्मोहाद्भयाल्लोभात्कृत्वातज्जातितांव्रजेत् ॥ विप्रःक्षत्रियादिस्त्रीप्रसूतस्वपुत्राणामपिदाहादिकंनकुर्यात् ॥ क्षत्रियादिस्त्रीप्रसूतास्तत्पुत्रास्तुपितुर्ब्राह्मणस्यदाहादिकंकुर्युरेव ॥ तदुक्तंतत्रैव ॥ पुत्राःकुर्वंतिविप्रस्यक्षत्रविट्शूद्रयोनयः॥ पुरोहितोवामंत्रीवाऽविद्यमानसपिंडस्य राज्ञस्तत्प्रयुक्ताशौचंकृत्वादाहादिसंस्कारंकुर्यात्॥ तदुक्तंब्रह्मपुराणे ॥ मृतेराज्ञ्यसपिंडेतुनिरपत्येपु

रोहितः ॥ मंत्रीवातदशौचंतुकृत्वापश्चात्करोतिसइति ॥ अनाथप्रे तानिर्हरणेविशेषमाहपराशरः ॥ अनाथंब्राह्मणंप्रेतंयेवहंतिद्विजातयः॥ पदेपदेयज्ञफलमानुपूर्व्याल्लभंतिते॥नतेषामशुभंकिंचित्पापंवाशुभक र्मणाम्॥जलावगाहनात्तेषांसद्यःशौचंविधीयतइति ॥ विधवापुत्रस्यवी जिक्षेत्रविषयेविशेषोमरीचिनोक्तः ॥ सगोत्रोवाऽन्यगोत्रोवायोभवेद्विध वासुतः ॥ पिंडश्राद्धविधानंवाक्षेत्रिणेप्राग्विनिर्वपेत्॥ बीजिनेतुततःपं श्चात्क्षेत्रीजीवतिचेत्क्वचित्॥बीजिनेदद्युराशौचमृतेपश्चात्प्रदीयते॥एत च्चगुर्वादिनियोगेनविधिनादेवराद्युत्पन्नपुत्रविषयम् ॥अनियोगोत्पन्नवि षयेतुनारदः॥जातायेत्वनियुक्तायामेकेनबहुभिस्तथा॥ अरिक्थभाज स्तेसर्वेबीजिनामेवतेसुताः॥दद्युस्तेबीजिनेपिंडंमाताचेच्छुल्कतोहृता अशुल्कोपनतायातुपिंडदावोढुरेवतइति ॥ बहुपुत्रस्यमृतस्यौर्ध्वदे हिकमविभक्तद्रव्येणसर्वानुमत्याज्येष्ठएवकुर्यात्॥तदाहमरीचिः ॥सर्वै रनुमतिंकृत्वाज्येष्ठेनैवतुयत्कृतम्॥ द्रव्येणचाविभक्तेनसर्वैरेवकृतंभवे दिति ॥ विभक्तद्रव्यैरप्यौर्ध्वदैहिकोपयुक्तंकिंचित्किंचित्स्वधनान्निज्ये ष्ठायनिवेद्यैकीकृतंद्रव्यमप्याविभक्तमिवभवति॥विभक्तेषुद्रव्यसमीकर णेनैकस्यकर्तृत्वंषोडशश्राद्धादावेवनसांवत्सरिकादौ ॥ तथाचोक्तमि ताक्षरायाम् ॥ नवश्राद्धंसपिंडत्वंश्राद्धान्यपिच्चषोडश ॥ एकेनैवतुका र्याणिसंविभक्तधनेष्वपीति ॥ अत्रविभक्तधनेष्वपिनवश्राद्धसपिंडीक रणषोडशश्राद्धान्येकेनैवकार्याणीत्युक्तिसामर्थ्यादेव नवश्राद्धादिव्य तिरिक्तश्राद्धेषुविभक्तधनानांपृथक्करणंप्राप्नोतीति ॥ अतश्चविभ क्तधनैःसांवत्सरिकादिकंपृथगेवकार्यम्॥ स्मृत्यर्थसारेपिआद्यक्रियाप्रक रणएवोक्तम् ॥ अनेकपुत्रत्वेइतरानुमतोज्येष्ठएवदद्यात् ॥ द्रव्येणवि भक्तोवाअविभक्तोवेति ॥ उक्तेष्वधिकारिषुपुत्राद्यसंनिधानेप्रथमादिव सोपक्रांतेनैवमध्येपुत्राद्यागमनेपिदशाहपर्यंताः पिंडोदकदानादिकाः क्रियाःकार्याः ॥ तदुक्तंगृह्यपरिशिष्टे ॥ असगोत्रःसगोत्रोवायादिस्त्री यादिवापुमान् ॥ प्रथमेहनियोदद्यात्सदशाहंसमापयेदिति ॥ प्रथमेह

प्रथमाह्निचर्याद्याद्दशाहांतसएवाह ॥ प्रथमेहनियद्द्रव्यंदशाहांतंतदेव हीति ॥ दशाहानन्तरमेकादशाहादिकंसन्निहितपुत्रादिनैवकार्यम् ॥ तदभावेप्रथमोपक्रांतेनैव ॥ सपिंडीकरणंत्वसंनिहितेनापिज्येष्ठपुत्रेणैवकार्यम् ॥ इत्यधिकारिणउक्ताः ॥ संस्काराविधिस्तुशाखाभेदेनभिन्नत्वान्नोक्तः ॥ सचस्वस्वसूत्रोक्तएवग्राह्यः ॥ रात्रिमृतस्य रात्रावेवदाहःकार्यः ॥ वपनंप्रातःकार्यम् ॥ तदुक्तंस्मृतिसंग्रहे ॥ रात्रौ दग्ध्वातुपिंडांतंकृत्वावपनवर्जितम् ॥ वपनंनेष्यतेरात्रौश्वस्तदावपनक्रियेति ॥ यत्तुनिगमवचनम् ॥ संध्यायांचतथारात्रौदाहःपाथेयकर्मच ॥ नवश्राद्धंचनोकुर्यात्कृतंनिष्फलतांव्रजेदिति ॥ एतत्तुदिनमृतस्यालस्यादिनारात्रौदाहोनकार्यइत्येवंपरम् ॥ वपनंचगुरुनिपाते मृतदिनेद्वितीयेतृतीयेपंचमेसप्तमेवाकुर्य्यात् ॥ सूतकांतेचसूतकानिवृत्त्यर्थंकुर्यात् ॥ तदुक्तम् ॥ गंगायांभास्करक्षेत्रेमातापित्रोर्गुरोर्मृते ॥ आधानकालेसोमेचवपनंसप्तसुस्मृतमिति ॥ अत्रगुरुर्मंत्रोपदेष्टा विद्योपदेष्टाच ॥ तथा ॥ द्वितीयेऽहनिकर्तव्यंक्षुरकर्मप्रयत्नतः ॥ तृतीयेपंचमेवापिसप्तमेवाप्रदानतइति ॥ अत्रद्वितीयाहादिविकल्पःपूर्वत्रपूर्वत्रासंभवेउत्तरोत्तरत्रकर्त्तव्यमित्येवंपरः ॥ आपस्तंबस्तु अनुभाविनांचपरिवपनमिति ॥ अनुभाविनोल्पवयसःसपिंडापुत्राश्चेतिपारिजाते॥मिताक्षरायांतु ॥क्षौरंतदनुभाविनामित्यनुभाविनःपुत्रा एवेत्युक्तम् ॥ अतश्चदेशाचारानुसारेणव्यवस्थापनीयम् ॥ देवलोपि ॥ दशमेहनिसंप्राप्तेस्नानंग्रामाद्बहिर्भवेत् ॥ तत्रत्याज्यानिवासांसिकेशश्मश्रुनखानिचेति ॥ अत्रदशमेहनीतिसूतकान्तोपलक्षणम् ॥ केशश्मश्र्वादित्यागस्यसूतकांतेकर्तव्यवस्त्रत्यागसाहचर्यात्सूतकांतएवकर्तव्यत्वंप्रतीयते ॥ वाससांचसूतकांतेत्यागःस्मृत्यंत





रेप्रोक्तः ॥ अंत्येचवाससांत्यागइति ॥ आशौचेसपिंडानांनियमाश्च मनुनोक्ताः॥अक्षारलवणान्नाःनिस्युमज्जेयुश्चतेन्वहम् ॥मांसाशनंचना श्नीयुरिति ॥ गौतमोपि ॥ अधःशय्यासनोब्रह्मचारिणःसर्वेइति ॥ याज्ञवल्क्येनापि ॥ क्रीतलब्धाशनाभूमौस्वपेयुस्तेपृथक्पृथगिति ॥ अत्रक्रीतलब्धाशनत्वनियमोदिनत्रयपर्यंतमेव ॥तथाचवृद्धवसिष्ठः ॥ गृहान्व्रजित्वाअधःप्रस्तरेत्र्यहमनश्नंतआसीरन्क्रीतोत्पन्नेनैववर्त्तेरन्नि ति ॥ अत्रत्र्यहमनश्नंतइतिक्रीतलब्धान्नाभावेअनशनंकार्यम् ॥ अन्यथायाज्ञवल्क्यवचनविरोधःस्यात् ॥ क्रीतलब्धाशनेननियमः संभवेकार्यः॥ ॥रजस्वलायाःसूतिकायाश्चमृतायाःशुद्धिंकृत्वादाहा दिकंसंस्कारंकुर्य्यात् ॥ शुद्धिप्रकारश्चमिताक्षरायामुक्तः ॥ सूतिका यांमृतायांतुकथंकुर्वीतियाज्ञिकाः ॥ कुंभेसलिलमादायपंचगव्यंत थैवच ॥ पुण्यर्ग्भिरभिमंत्र्यापोवाचाशुद्धिंलभेत्ततः ॥ तेनैवस्नापयि त्वातुस्नानंकुर्याद्यथाविधि ॥ पंचभिःस्नापयित्वातुगव्यैःप्रेतांरजस्व लाम् ॥ वस्त्रांतरवृतांकृत्वादाहयेद्विधिपूर्वकमिति ॥ वाचाब्राह्म णवचनेन ॥ ज्वरितायारजस्वलायाःस्नानाशक्तौशुद्धिप्रकारश्चोशन सादर्शितः ॥ ज्वराभिभूतायानारीरजसाचपरिप्लुता ॥ कथंतस्याभवे च्छौचंशुद्धिःस्यात्केनकर्मणा ॥ चतुर्थेहनिसंप्राप्तेस्पृशेदन्यातुतांस्त्रि यम्॥सासचैलावगाह्यापःस्नात्वास्नात्वापुनःस्पृशेत् ॥ दशद्वादशकृ त्वोवाआचामेच्चपुनःपुनः॥अंत्येचवाससांत्यागस्ततःशुद्धाभवेत्तुसा॥ दद्याच्छक्त्याततोदानंपुण्याहेनविशुद्ध्यतीति॥ ॥इतिकृतसंस्कारवि शेषाशौचविशेषनिर्णयः॥ ॥अत्रप्रासंगिकंकिंचिल्लिख्यते॥यथोक्तमि ताक्षरायाम्॥शुद्धाभर्तुश्चतुर्थेह्निस्नानेनस्त्रीरजस्वला॥दैवेकर्मणिपित्र्ये चपंचमेहनिशुध्यतीति ॥ पंचमेहनीतिरजोनिवृत्तिकालोपलक्षणम् ॥ अत्रिणाचविशेषउक्तः॥ रजस्वलायदिस्नातापुनरेवरजस्वला ॥ अष्टा दशदिनादर्वागशुचित्वंनविद्यते ॥ एकोनविंशतेरर्वागेकाहंस्यात्ततो द्व्यहम् ॥ विंशत्प्रभृत्युत्तरेषुत्रिरात्रमशुचिर्भवेदिति ॥ यत्तुस्मृत्यंतरव

चनम् ॥ चतुर्दशदिनादर्वागशुचित्वंनविद्यतइति ॥ तत्स्नानादिनप्रभृतिगतदिनगणनाभिप्रायमितिवेदितव्यम् ॥ ॥ इतिरजस्वलाशुद्धिनिर्णयः ॥ ॥ इतिप्रासंगिकंपरिसमाप्यप्रकृतमनुसंधीयते ॥ ॥ अथपंचकमृतदाहविधिः॥ तदुक्तंगरुडपुराणे ॥ कृष्णउवाच ॥ आदौकृत्वाधनिष्ठार्द्धमेतन्नक्षत्रपंचकम् ॥ रेवत्यंतंसदादूष्यमशुभंसर्वदाभवेत् ॥ दाहस्तत्रनकर्तव्योविषादःसर्वजातिषु ॥ नजलंदीयतेतेषुत्वशुभंसर्वदाभवेत्॥पंचकानंतरंकार्यंकर्तव्यंसर्वमन्यथा॥पुत्राणांगोत्रिणांतस्यसंतापोह्युपजायते॥ गृहेहानिर्भवेत्पृष्ठेऋक्षेष्वेषुमृतस्तुयः॥ अथवाऋक्षमध्येतुदाहस्तुविधिपूर्वकः ॥ क्रियतेमानुषाणांतुसद्यआहुतिकारणात् ॥ विप्रैर्नियमतःकार्योमंत्रैस्तुविधिपूर्वकम् ॥ शवस्यचसमीपेतुक्षेतव्याःपुत्तलास्तथा ॥ दर्भमयाश्चचत्वारऋक्षमंत्राभिमंत्रिताः ॥ ॐवह[1]वपांजातवेदःपितृभ्योयप्रेतान्यथानिहितान्यथाराकैमेदसकलपाउपतस्तवतुसत्माएषमाएषमाशिलः सतुमजांस्वा[2]हेतिमंत्रेणाहुतिपञ्चकम् ॥ ततोदाहःप्रकर्त्तव्यस्तैश्चपुत्तलकैःसह ॥ सूतकांतेतदापुत्रैःकार्यंशांतिकपौष्टिकम् ॥ पंचकेषुमृतोयोसौनगतिंलभतेनरः ॥ तिलाश्वगोहिरण्यंचतदुद्देशंघृतंददेत् ॥ विप्राणांदीयतेदानंसर्वविघ्नविनाशनम् ॥ सूतकांतेचयःपुत्रैःसप्रेतोलभतेगतिम् ॥ बालोवृद्धश्चदूतश्चपञ्चकेषुमृतस्यच ॥ विधानंयोनकुर्वीतविघ्नंतस्यप्रजायतइति ॥ उपनीतमृताशौचेअस्थिसंचयनेकृतेसतिस्वाशौचकालत्रिभागेनाशौचिनामंगस्पर्शोभवति ॥ तदाहदेवलः ॥ दशाहादित्रिभागेनकृतेसंचयनेक्रमात् ॥ अंगस्पर्शनमिच्छंतिवर्णानांतत्त्वदर्शिनः ॥ अनुपनीतविषयेत्वस्थिसंचयनाभावेपिस्वाशौचात्त्रिभागात्स्पृश्यत्वम् ॥ तदाहदेवलः ॥ स्वाशौचकालाद्विज्ञेयंस्पर्शनंतुत्रिभागतः ॥ शूद्रविट्क्षत्रविप्राणांयथाशास्त्रप्रचोदितमिति ॥ उपक्रांतसंस्कारस्यदशाहमध्येदर्शपातेसतिविशेषोभविष्यपुराणेप्रोक्तः ॥

१-२ इदं पाठद्वयमसंबद्धमशुद्धमिवप्रतिभातिपरंत्वेकस्मिन्पुस्तकउपलब्धत्वादत्रनिवेशितमस्माभिः ।

प्रवृत्ताशौचतंत्रस्तुयदिदर्शःप्रपद्यते॥ समाप्यचोदकंपिंडान्स्नानमात्रं समाचरेदिति ॥ आशौचसमाप्तिपर्यंतमितिशेषः ॥ ऋष्यशृंगोपि ॥ आशौचमंतरादर्शोयदिस्यात्सर्ववर्णिनाम् ॥समाप्तिंप्रेततंत्रस्यकुर्यादित्याहगौतमइति ॥ पैठीनसिरपि ॥ आद्येन्दवेचकर्त्तव्याःप्रेतपिंडोदकक्रियाः ॥ द्विरैंदवेतुकुर्वाणःपुनःशावंसमश्नुतइति ॥ एकःप्राक्तनःक्षीणचंद्रोद्वितीयोभावीवृद्धिमानितिचंद्रद्वयम्॥ सामान्यतःप्राप्तौमःतापितृविषयेविशेषोगालवेनोक्तः ॥ पित्रोराशौचमध्येतुयदिदर्शो समापतेत् ॥ तावतैवोत्तरंतंत्रपर्यवस्येत्र्यहात्परमिति ॥ यत्तुगौतमवचनम् ॥ अंतर्दशाहेदर्शश्चेत्तत्रसर्वंसमापयेत् ॥ पित्रोस्तुतावदाशौचं दद्यात्पिंडाञ्जलांजलीनिति ॥ एतत्र्यहात्पूर्वंदर्शपातविषयम् ॥ पारिजाततुगौतमवचनंपितृविषयमुक्त्वात्र्यहात्परमिति गालवचनस्यार्थ उक्तः॥पित्राशौचेपिदर्शेतेसमाप्तिरुत्तरतंत्रस्योचिता॥ किमुतान्याशौचमध्यइतिपितृव्यतिरिक्तविषये उत्तरतंत्रस्यावश्यकसमाप्तिप्रदर्शनार्थम्॥नपुनःपितृविषयेपिनियमार्थमिति ॥ तत्रगालवचनंयादिप्रदर्शनार्थमेवस्यान्ननियमार्थम् ॥ तदात्र्यहात्परमितिविशेषनियमोनाभिधीयते ॥ अतश्चपितृविषयेत्र्यहादूर्ध्वंदर्शपातेपिंडादिसमाप्तिः ॥ त्र्यहात्पूर्वन्तुदशापातेदर्शाहान्तंपिंडोदकक्रिया ॥ चन्द्रद्वयेबलिर्नैवदेयःप्रेतस्यशान्तये ॥यदिदद्याद्विचन्द्रेतुकर्त्तुःकुलविनाशनमिति नपुनःपितृविषयम्॥ गालवचनंयादिप्रदर्शनार्थमेवस्यान्ननियमार्थम्॥यावदाशौचंपिंडादिकार्यमितिगालवगौतमवचयोनव्यवस्थयैवाविरोधोयुक्तः ॥ ॥यद्वा॥तत्रैवभवतुवापितृविषयेनियामकमिति॥ गालववचनस्यानियामकत्वमंगीकृत्यतथाप्यस्वर्ग्यंलोकविद्विष्टंधर्ममप्याचरेन्नातिवातिन्यायेनशिष्टाचाराभावात् ॥ गालववचनस्यबाधकत्वाच्छिष्टाचारप्रामाण्यादेवयत्रदेशेत्र्यहात्परंदर्शपातेपितृविषयेप्युत्तरतंत्रसमाप्तिस्तद्विषयंगालववचनम् ॥ यस्मिन्देशेत्र्यहात्परमपिदर्शपातेसंपूर्णाशौचपर्यंतपिंडांजलिदानानुवृत्तिस्तद्विषयंगौतमवचनमितिदेशाचारभेदाद्व्य

स्थाकल्पनीयेतिसर्वमनवद्यम्॥पूर्वदेशकालादिवशेनकाष्ठवद्दग्धस्य पुनर्विधानात्संस्कारादिप्रारंभेदिनादिनियमःस्मृत्यर्थसारेप्रोक्तः ॥ ॥ यथा ॥ आशौचदिनमध्येपुनःसंस्कारेतुदृष्टबाधभयाद्दिनंसंभवेशो ध्यम् ॥ कालांतरप्रकृतप्रेतकार्येतुदिनंशोध्यमेव ॥ संवत्सारादूर्ध्वंप्रे तकार्येतुउत्तरायणकालःश्रेयान् ॥ तत्रापिकृष्णपक्षःश्रेयान् ॥ तत्रा पिनंदात्रयोदशीत्रिदिनंचवर्जयेत् ॥शुक्रशनैश्चरौवारेषुवर्ज्यौ॥नक्षत्रेषु भरणीकृत्तिकार्द्राश्लेषामघाधनिष्ठादिपंचकंत्रिपुष्कराणिचातिदुष्टानि सर्वथावर्ज्यानि ॥ व्यतिपातेपरिघेवैधृतौचयोगेविष्टिकरणेचतुर्थाष्टम द्वादशस्थेचंद्रेचातिदोषः॥ रोहिणीपुनर्वसूपूर्वोत्तराचित्राविशाखानुरा धापूर्वाषाढोत्तराषाढानिद्विपुष्कराणीषद्दुष्टानिसंभवेवर्ज्यानि ॥ अव शिष्टानिग्राह्याणि॥सर्वथादिनशुद्ध्यसंभवेनातिदुष्टंनक्षत्रंग्राह्यमिति॥ इत्यधिकारिस्वरूपंनिरूप्येदानीमुपनीतादीनांवर्णभेदेनाशौचकालभे दोनिरूप्यते ॥ ब्राह्मणविषयेयमः ॥ दशाहंशावमाशौचंसपिंडे षुविधीयते ॥जननेप्येवमेवस्यान्निपुणंशुद्धिमिच्छतामिति॥ महागुरौ त्वाश्वलायनेनतद्विषयएवविशेषउक्तः॥ द्वादशरात्रंवामहागुरुषुदाना ध्ययनेवर्जयेरन्निति ॥ महागुरुस्वरूपंचतेनैवोक्तम् ॥ पुत्रानुत्पाद्यवे दार्थंग्राहयित्वावृत्तिंवायोविदधातिसमहागुरुरिति ॥ क्षत्रादिविषये याज्ञवल्क्यः ॥ क्षत्रस्यद्वादशाहानिविशःपंचदशैवतु ॥ त्रिंश द्दिनानिशूद्रस्यतदर्द्धंन्यायवर्तिनइति ॥ पाकयज्ञद्विजशुश्रूषादि रतस्यशूद्रस्यमासार्द्धंपक्षमाशौचम् ॥ इदमाशौचानंतरंकृतक्रिया ब्राह्मणादय उदकादिस्पृष्ट्वाशुध्यंति ॥ तदाहमनुः॥ विप्रःशुद्ध्य त्यपःस्पृष्ट्वाक्षत्रियोवाहनायुधम् ॥ वैश्यःप्रतोदंरश्मिंवायष्टिंशूद्राः कृतक्रियाइति ॥ कृतक्रियाःकृतस्नानाइत्यर्थः ॥ इदंवर्णप्रयु क्ताशौचंसर्वसंमतम्॥यानितुन्यूनाधिककालविधायकवाक्यानिकानिचि द्भवेयुः ॥ तान्यापदनापद्विषयत्वेनगुणवदगुणवद्विषयत्वे नवादेशाचारतोवाव्यवस्थापनीयानि ॥ इयंदशाहादिसंख्याऽर्द्धरा

त्रादर्वाग्जाते आशौचेतद्दिनप्रभृत्येव॥रात्रिंतुत्रेधाविभज्यप्रथमभागद्द येचेदाशौचंतदापूर्वदिनप्रभृतीत्यन्ये ॥ सूर्योदयात्प्राक्पूर्वदिनप्रभृती त्यपरे ॥ यदाहकश्यपः॥ उदितेतुयदासूर्येनारीणांदृश्यतेरजः॥जन नंवाविपत्तिर्वायस्याहस्तस्यशर्वरी ॥ अर्द्धरात्रावधिःकालःसूतके तुविधीयतइति ॥ सूतकइत्याशौचोपलक्षणम् ॥ तथा ॥ रात्रिंकुर्या त्रिभागांतुद्वौभागौपूर्वएवतु॥ उत्तरांशःप्रभातेनयुज्यतेमृतसूतकइति ॥ तथा ॥ रात्रावेवसमुत्पन्नेमृतेरजसिसूतके ॥ पूर्वमेवदिनंग्राह्यंयाव न्नोदयतेरविरिति॥निशाभागत्रयंकुर्याद्वौभागौपूर्ववासरे॥ शेषंपरदिनं प्रोक्तंस्थालीपाकेमृतेऋतौ ॥ अत्रापिदेशाचारतोव्यवस्थाकल्पनीये ति॥आशौचस्यदशप्रकारतादक्षेणोक्ता॥ सद्यःशौचंनिषेकाहस्त्र्यहश्च तुरहस्तथा ॥ षड्दशद्वादशाहश्चपक्षोमासस्तथैवच ॥ मरणांतंत थाचान्येदशपक्षास्तुसूतकइति॥ अत्रदशाहादिपक्षाब्राह्मणादिवर्णवि षयउक्ताः ॥ मरणांतिकविषयस्तुदक्षेणोक्तः ॥ अस्नात्वाचाप्य हुत्वाचह्यदत्त्वाश्नंस्तथाद्विजः ॥ एवंविधस्यविप्रस्यसर्वदासूतकंभ वेत् ॥ व्याधितस्यकदर्यस्यऋणग्रस्तस्यसर्वदा ॥ क्रियाहीनस्य मूर्खस्यस्त्रीजितस्यविशेषतः ॥ व्यसनासक्तचित्तस्यपराधीनस्यनि त्यशः॥ श्राद्धकर्मविहीनस्यसर्वदासूतकंभवेदिति ॥ अत्रसद्यःशौ चमृत्विगादीनांयाज्ञवल्क्येनोक्तम् ॥ ऋत्विजांदीक्षितानांचयज्ञि यंकर्मकुर्वताम् ॥ सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदांतथा ॥ दानेविवाहे यज्ञेचसंग्रामेराष्ट्रविप्लवे॥आपद्यपिचकष्टायांसद्यःशौचंविधीयतइति ॥ ऋत्विजोवरणसंभृताःकर्तृविशेषाः॥दीक्षायांसंस्कृतादीक्षिताः॥यज्ञि यंकर्मकुर्वतामित्यभिधानाद्यज्ञकर्मण्येवसद्यःशुद्धिः॥सत्रिग्रहणेनसंत तानुष्ठानतुल्यतयान्नसत्रप्रवृत्तालक्ष्यंते ॥ मुख्यानांतुसत्रिणांदीक्षित ग्रहणेनैवसिद्धेः ॥ व्रतिशब्देनकृच्छ्रचांद्रायणादिप्रवृत्ताः स्नात कव्रतप्रायश्चितप्रवृत्ताश्चोच्यंते ॥ विवाहादौप्रारब्धएव ॥ राष्ट्रविप्ल वेस्फोटकादिभिरुपसर्गैराजभयाद्वा ॥ संग्रामेसंग्रामोद्यतस्यराज्ञः ॥ प्रास्थानिकशांतिकहोमादौ ॥ कष्टायामापदिव्याध्याद्यभिभ

वे ॥ मुमूर्षावस्थायांदुरितशमार्थेकर्मणि ॥ तथा संकुचितवृत्तेश्चक्षुत्परिश्रांतमातापित्रादिबहुकुटुंबस्यतद्भरणोपयोगिनिप्रतिग्रहेसद्यःशुद्धिः ॥ इयंचसद्यःशुद्धिर्यस्यसद्यःशौचंविनात्त्युपशमोनभवत्यश्वस्तनिकस्यतद्विषया ॥ यस्त्वेकाहपर्याप्तसंचितधनस्तस्यैकाहः ॥ यस्त्र्यहोपयोगिसंचितधनस्तस्यत्र्यहः ॥ यश्चतुरहार्थमापादितधनः कुंभीधान्यस्तस्यचतुरहः॥कुसूलधान्यस्यदशाहइति ॥ एवंयस्ययावत्कालमार्त्यभावस्तस्यतावत्कालमाशौचम् ॥ आपदुपाधिकत्वादाशौचस्येतिमिताक्षरायाम् ॥ स्मृत्यंतरेच ॥ नित्यमन्नप्रदस्यापिकृच्छ्चान्द्रायणादिषु ॥ निवृत्तेकृच्छ्रहोमादौब्राह्मणादिषुभोजने ॥ गृहीतनियमस्यापिनस्यादन्यस्यकस्यचिदिति ॥ सद्यःशुचिरितिवाक्यशेषः ॥ तथाच ॥ निमंत्रितेषुविप्रेषुप्रारब्धेश्राद्धकर्मणि ॥ निमंत्रणाद्धिविप्रस्यस्वाध्यायादितरस्यच ॥ देहेपितृषुतिष्ठत्सुनाशौचंविद्यतेक्वचित् ॥ प्रायश्चित्तप्रवृत्तानांदातृब्रह्मविदांतथेति ॥ इदमाशौचमाहिताग्नेर्दाहदिनमारभ्यानाहिताग्नेर्मरणदिनमारभ्यवेदितव्यम् ॥ तदाहपैठीनसिः ॥ अनग्निमतउत्क्रांतेराशौचादिद्विजातिषु ॥ दाहादग्निमतोविद्याद्विदेशस्थेमृतेतथेति ॥ अनुलोमक्षत्रादिविजातीयसपिंडाशौचेविशेषोबौधायनेनोक्तः ॥ क्षत्रविट्शूद्रजातीयायेस्युर्विप्रस्यबांधवाः ॥ तेषामाशौचेविप्रस्यदशाहाच्छुद्धिरिष्यतइति ॥ यत्तुहारीतवचनम् ॥ दशाहाच्छुध्यतेविप्रोजन्महानौस्वयोनिषु ॥ षड्भिस्त्रिभिरथैकेनक्षत्रविट्शूद्रयोनिष्विति ॥ एतदापद्विषयम् ॥ विष्णुरपि ॥ क्षत्रियस्यविट्शूद्रेषुसपिंडेषुषड्रात्रत्रिरात्राभ्यांवैश्यस्यशूद्रेसपिंडेषड्रात्रेणशुद्धिः ॥ हीनवर्णानांतु प्रकृष्टेषु सपिंडेषुजातेषुमृतेषुवा तदाशौचव्यपगमेशुद्धिरिति ॥ आपस्तंबेनविशेषउक्तः ॥ क्षत्रविट्शूद्रजातीनांयद्याचेन्मृतसूतके ॥ तेषांतुपैतृकंशौचंविभक्तानांतुमातृजमिति ॥ विजातीयानांतुसापिंड्यंत्रिपुरुषमेव ॥ तदुक्तम् ॥ यद्येकजातावहवःपृथक्क्षेत्राःपृथग्जनाः ॥ एकपिंडाःपृथक्शौचाःपिंडस्त्वावर्ततेत्रिष्विति ॥ पृथग्जनाभिन्नजा

तीयाः ॥ प्रतिलोमानांतुसूतकंनास्त्येव ॥ प्रतिलोमाधर्महीनाइ तिस्मृत्युक्तत्वात् ॥ संग्रामेभिमुखप्रहारेणमृतानांगोब्राह्मणार्थंचमृ तानांसद्यःशौचम् ॥ तथाचमनुः ॥ उद्यतैराहवेशस्त्रैःक्षत्रधर्महत स्यच ॥ सद्यःसंतिष्ठतेयज्ञस्तथाशौचमितिस्थितिरिति ॥ यज्ञःपिं डदानादिरूपःसंतिष्ठतेसमाप्ताभवतीत्यर्थः ॥ तथाच ॥ डिंभा हवहतानांचविद्युतापार्थिवेनच ॥ गोब्राह्मणस्यचैवार्थेयस्यचेच्छतिपा र्थिवइति ॥ डिम्भोबहुजनसंकुलः॥अशस्त्रकलहोवा ॥ यस्यचेच्छ तिपार्थिवइति ॥ स्वकार्यपरिपालनाधिकृतस्य॥ ननु राज्ञःपरिपालन एवाशौचानिवृत्तिःकुतस्तदिच्छयान्याशौचाभावइत्याशंक्यतेनैवोक्त- म् ॥ सोमाग्न्यर्कानिलेंद्राणांवित्तपत्युर्यमस्यच ॥ अष्टानांलोकपाला नांवपुर्धारयतेनृपइति ॥ स्मृत्यर्थसारेपि ॥ स्त्रीविप्रार्थगवार्थंचसंग्रामे विद्युताचहतानांसपिंडानांनाशौचमिति ॥ यत्तुवचनम् ॥ ब्राह्मणार्थे विपन्नानांयेयोषितांगोग्रहेपिच ॥ आहवेषुहतानांचएकरात्रमशौचक मिति ॥ एतद्युद्धक्षतेनकालांतरमृतविषयम् ॥ तदुक्तंस्मृत्यर्थसारे ॥ युद्धक्षतेनकालांतरमरणेग्रामेश्वरेकुलपतौचमृतेत्वेकाहमिति ॥ गोब्रा ह्मणादिहतानांविधिनात्मघातिनांचयेसपिंडास्तेषांसद्यःशुद्धिः ॥ त दाहयाज्ञवल्क्यः ॥ हतानांनृपगोविप्रैरन्वक्षंचात्मघातिनामिति ॥ गौतमोपि ॥ गोब्राह्मणहतानामन्वक्षंराजक्रोधाच्चयुध्यतइति ॥ अन्व क्षंसद्यः ॥ समानोदकानांतुत्रिरात्राच्छुद्धिः ॥ तदाहमनुः ॥ दशा हंशावमाशौचंसपिंडेषुविधीयते ॥ जननेप्येवमेवस्यान्निपुणंशुद्धिमि च्छताम् ॥ जन्मन्येकोदकानांतुत्रिरात्राच्छुद्धिरिष्यतइति ॥ जन्मनीतिमरणस्याप्युपलक्षणम् ॥ क्वचिदाशौचविषयेजन्ममरणकृत कालविभेदाभावात् ॥ एकोदकाःसमानोदकाः ॥ तेचसप्तपुरुषा दूर्ध्वंयावज्जन्मनाम्नोरज्ञानंतत्पर्यंताः ॥ तदाहमनुः ॥ सपिंडतातु पुरुषेसप्तमेविनिवर्त्तते ॥ समानोदकभावस्तुजन्मनाम्नोरवेदनइति ॥ तथाचस्मृत्यर्थसारे॥ जाताशौचेमृताशौचेसोदकानांत्रिरात्रकमिति॥ असगोत्रमातामहाचार्यमातुलविषयेतुविशेषउच्यते॥तत्रबृहस्पतिः ॥

ऽप्यहंमातामहाचार्यश्रोत्रियेष्वशुचिर्भवेदिति ॥ अत्रश्रोत्रियस्तुसंनि
हितोगुणवान्वाविवक्षितः ॥ तदुक्तम् ॥ श्रोत्रियेतूपसंपन्नेत्रिरा
त्रमशुचिर्भवेत ॥ मातुलेपक्षिणीरात्रिःशिष्यर्त्विग्बांधवेषुचेति ॥
उपसंपन्नोगुणयुक्तः ॥ असंनिहितेत्वेकाहमेव ॥ तदाहाश्वलायनः ॥
एकाहंसब्रह्मचारिणिसमानग्रामिणिचश्रोत्रियइति ॥ एकाचार्योपनी
तःसब्रह्मचारी ॥ उपनीययोविद्यांप्रयच्छतिसआचार्यः ॥ तस्यपुत्रा
दिविषयेमनुनाविशेषउक्तः॥ त्रिरात्रमाहुराशौचमाचार्येसंस्थितेसति॥
तस्यपुत्रेचपत्न्यांचदिवारात्रमितिस्थितिरिति ॥ याज्ञवल्क्योपि॥गुर्व
न्तेवास्यनूचानमातुलश्रोत्रियेषुचेति ॥ अत्रासंनिधानेअहरित्यनुवर्त्त
ते ॥ तथाचस्मृत्यर्थसारे ॥ याज्यर्त्विग्दौहित्रसहाध्यायिसहोपनीता
त्मबंधुपितृबंधुमातृबंधुश्वशुरशिष्योपाध्यायानूचानगुरुपुत्राचार्यपुत्र
मित्रभागिनेयेषुश्वश्रूभगिनीमातामहेषुमातृष्वसृपितृष्वसृमातुलानी
गुर्वाचार्यपत्नीषुचमरणएकग्रामेपक्षिण्याशौचम् ॥ ग्रामान्तरेत्वे
काहमाशौचम् ॥ अगुणवत्सुत्वेकग्रामेप्येकाहम् ॥ ग्रामांतरेस्नान
मिति ॥ आत्मबंध्वादयस्तेनैवोक्ताः ॥ यथा ॥ आत्मपि
तृष्वसुःपुत्राआत्ममातृष्वसुःसुताः ॥ आत्ममातुलपुत्राश्चविज्ञे
याआत्मबांधवाः ॥ एवंपितुःपितृष्वस्रादिपुत्राःपितृबान्धवाः ॥
तथामातुःपितृष्वस्रादिपुत्रामातृबांधवाः ॥ प्रचेताः ॥ संस्थिते
पक्षिणीरात्रिर्दौहित्रेपितृबांधवइति ॥ वृद्धप्रचेताअपि ॥ सं
स्थितेपक्षिणीरात्रिर्दौहित्रेभगिनीसुते ॥ संस्कृतेतुत्रिरात्रंस्यादि
तिधर्मोव्यवस्थितः ॥ संस्कृतेत्रिरात्रमित्युक्तत्वादसंस्कृतेदौहि
त्रेभागिनेयेवासंस्कृतेपक्षिणीति ॥ पक्षिणीतिरात्रिविशेषणम् ॥
तथा ॥ पित्रोरुपरमेस्त्रीणामूढानांतुकथंभवेत् ॥ त्रिरात्रेणैव
शुद्धिःस्यादित्याहभगवान्यमइति॥ऊढानांपरिणीतानाम् ॥ तथाच॥
श्वशुरयोर्भगिन्यांचमातुलान्यांचमातुले॥ पित्रोःस्वसरितद्वच्चपक्षिणीं
क्षपयेन्निशम् ॥ श्वशुरयोःपित्रोरितिचैकशेषः ॥ तथाच ॥ मातुले
श्वशुरेमित्रेगुरौगुर्वंगनासुच॥ आशौचंपक्षिणींरात्रिंमृतामातामहीयदी

ति॥ यत्तुवृद्धविष्णुवचनम्॥ भगिन्यांसंस्कृतायांतुभ्रातर्यपिचसंस्कृते॥ मित्रेजामातरिप्रेतेदौहित्रेभगिनीसुते॥ श्यालकेतत्सुतेचैवसद्यःस्नानेनशुध्यतीति॥ एतद्ग्रामांतरमृतगुणवद्विषयमगुणवद्विषयञ्च॥ तच्चस्मृत्यर्थसारेउक्तम्॥ अगुणवत्सुएकग्रामेएकाहंग्रामांतरेस्नानमिति॥ भ्रातरीतिभगिन्यांसंबंधः॥ परिणीतायाःपुत्र्याःप्रसवेमरणेचस्मृत्यर्थसारेविशेषउक्तः॥ यथा॥ मातापितृगृहेषूढायाः पुत्र्याःप्रसवेमातापित्रादीनामेकाहमाशौचम्॥तत्रस्थायामरणेतेषांत्रिरात्रम्॥ गृहांतरमरणेपिपित्रोरेवत्रिरात्रम्॥ग्रामांतरमरणेपक्षिणीमिति॥ विष्णुरपि॥ संस्कृतासुस्त्रीषुनाशौचं पितृपक्षे॥ तत्प्रसवमरणेचेत्पितृगृहेस्यातांतदैकरात्रंत्रिरात्रंचेति॥ गृहमृतासपिंडविषयेगृहपतेस्तत्सपिंडानांचतत्रैवविशेषउक्तः॥ असपिंडेगृहेमृतेत्रिरात्रंसपिंडानामेकाहमिति॥यत्तुविष्णुवचनम्॥ असपिंडेस्ववेश्मनिमृतेएकरात्रमिति तद्गृहपतिव्यतिरिक्ततत्पत्न्यादिविषयम्॥ वृद्धविष्णुनातुविशेषउक्तः॥ ग्राममध्यगतोयावच्छवस्तिष्ठतिकस्यचित्॥ग्रामस्यतावदाशौचंनिर्गतेशुचितामियादिति॥ अनौरसक्षेत्रजादिपुत्रविषयेयाज्ञवल्क्येनविशेषउक्तः॥ अत्राहोरात्रमित्यनुवर्त्तते॥ अनौरसेषुपुत्रेषुभार्यास्वन्यगतासुचेति॥ अन्यगतास्वित्यन्यगतस्वभार्याप्रसवमरणयोःपरिणेतुरहोरात्रमाशौचमिति॥ एतदसन्निधानविषयम्॥ सन्निधौतुविष्णुः॥ अनौरसेषुपुत्रेषुजातेषुचमृतेषुच॥ परपूर्वासुभार्यासुप्रसूतासुमृतासुचेति॥ अत्रत्रिरात्रमित्यनुवर्त्तते॥ परपूर्वास्वितिपरःपूर्वश्चपतिर्यासांताःपरपूर्वाउच्यंते॥ इदमाशौचंपुत्रसंबंधेनयस्यपुत्रस्तस्यैव॥भार्यासंबंधेनतत्पत्युरेव॥सपिंडानांसद्यःशुद्धिः॥तदाहप्रजापतिः॥अन्याश्रितेषुदारेषुपरपत्नीसुतेषुच॥ गोत्रिणःस्नानशुद्धाःस्युस्त्रिरात्रेणैवतत्पितेति॥ एतच्चसंनिधौ॥असन्निधौ याज्ञवल्क्योक्तएवाहोरात्रः॥ मरीचिनातुविशेषउक्तः॥ सूतकेमृतकेचैवत्रिरात्रंपरपूर्वयोः॥ एकाहस्तुसपिंडानांत्रिरात्रंयत्रवैपितुरिति॥राज्ञिदिनमृतेतद्देशवासिनामस्तमयपर्यन्तमाशौचम्॥रात्रिमृतेसूर्योदयपर्यंतम्॥ तदा

हमनुः ॥ प्रेतेराजनिसज्योतिर्यस्यस्याद्विषयेस्थितिरिति ॥ राज्ञां प्रजापालननिमित्तकशांतिकपौष्टिकादिकर्मणिदासदासीशिल्पादीनां स्वामिगृहकर्मणिसद्यःशुद्धिः॥नित्यनैमित्तिकादिकर्मसुस्ववर्णाशौच मस्त्येव॥ तत्रप्रचेताः ॥ कारवःशिल्पिनोवैद्यादासीदासास्तथैवच ॥ राजानोराजभृत्याश्चसद्यःशौचाःप्रकीर्तिताइति ॥ कारवःसूपकाराद्याः शिल्पिनश्चित्रकारांचलनिर्णेजकाद्याः॥दासीदासविषयेअंगिरसाविशे षउक्तः॥दासीदासश्चसर्वोवैयस्यवर्णस्ययोभवेत् ॥ तद्वर्णस्यभवेच्छौ चंदास्यामासस्तुसूतकामिति ॥ तद्वर्णस्येतिस्वाम्याशौचेतस्याशौ चम् ॥ दास्यामासस्त्विति॥प्रसूतायादास्यायाःकर्माधिकारस्तुमासा वधिरेवेत्यर्थः ॥ विष्णुरपि ॥ नराज्ञांराजकर्मणिनचव्रतिनांव्रते ॥ नसत्रिणांमहासत्रे ॥ नकारूणांकारुकर्मणीति ॥ शातातपोपि ॥ मूल्यकर्मकराः शूद्रादासीदासास्तथैवच ॥ स्नानेशरीरसंस्कारेगृह कर्मण्यदूषिताः॥तथा॥सद्यःस्पृश्योगर्भदासोभक्तदासस्त्र्यहाच्छुचिः॥ चिकित्सकोयत्कुरुतेतदन्येननशक्यते ॥ तस्माच्चिकित्सकःस्पर्शेशु द्धोभवतिनित्यशइति॥इत्याशौचकालनिर्णयः ॥ अथदेशान्तरजनने मरणेचाशौचमुच्यते ॥ तत्रदशरात्रमध्येजननमरणवार्त्ताश्रवणेसत्य वशिष्टाच्छौचकालाच्छुद्धिः॥ तदाहमनुः॥ विगतंतुविदेशस्थंशृणुया द्यद्यनिर्दशम् ॥ यच्छेषंदशरात्रस्यतावदेवाशुचिर्भवेदिति ॥ विग तंमृतम् ॥ इदंजननस्याप्युपलक्षणम् ॥ दशरात्रस्येत्याशौचकाल स्योपलक्षणम् ॥ अतश्चश्रवणानंतरमेवाशौचं दशरात्रादिसंख्यात्वा शौचोत्पत्तिप्रभृत्येव ॥ याज्ञवल्क्योपि ॥ प्रोषितेकालशेषःस्यादि ति ॥ स्मृत्यर्थसारेपि ॥ विदेशस्थस्यजननेमरणेवाप्रथमादिवसादू र्ध्वंज्ञातेपुत्रादीनांस्वाशौचशेषेणैवशुद्धिरिति ॥ दशाहाद्याशौचका लानंतरंमृतादिवार्ताश्रवणेतुमनुनैवोक्तम् ॥ निर्दशंज्ञातिमरणं श्रुत्वापुत्रस्यजन्मच ॥ सवासाजलमाप्लुत्यशुद्धोभवतिमानव इति ॥ अत्रपुत्रस्येतिसंबंधशब्दत्वादतीतजननाशौचश्रवणेपिपितुरेव स्नानम्॥ नज्ञातीनाम् ॥ज्ञातिमरणंश्रुत्वासवासाजलमाप्लुत्यशुद्धोभ

वतीत्येतदपिसपिंडानांमरणवार्ताश्रवणानंतरमावश्यकंसचैलस्नान विधिपरम् ॥ नत्वाशौचाभावप्रतिपादनपरम् ॥ मासत्रयपर्यात्यादि षुत्रिरात्रमाशौचस्यवक्ष्यमाणत्वात् ॥ प्रसवेत्वतीताशौचंसपिंडानां नास्त्येवेति ॥ तदाहदेवलः॥ नशुद्धिः प्रसवाशौचव्यतीतेषुदिनेष्वपी ति ॥ स्वाशौचकालानंतरंमासत्रयपर्यंतंमृतवार्त्ताश्रवणेत्रिरात्रमा शौचम् ॥ तदूर्ध्वंषण्मासपर्यन्तंपक्षिणी ॥ ततोनवमासात्पूर्वमे काहः ॥ ततःसंवत्सरपर्यन्तंस्नानोदकदानाभ्यामेवशुद्धिः ॥ सं वत्सरादूर्ध्वंस्नानमात्रेणैवसपिंडानांशुद्धिः ॥ तदाहवृद्धवसिष्ठः ॥ मासत्रयेत्रिरात्रंस्यात्षण्मासेपक्षिणीतथा ॥ अहस्तुनवमादर्वागूर्ध्वं स्नानेनशुध्यतीति ॥ अत्रस्नानंस्वसहचरितमुदकदानमप्याक्षिप ति ॥ मनुनासंवत्सरानंतरमपिस्नानमात्रस्योक्तत्वात् ॥ यथा ॥ संवत्सरेव्यतीतेतुस्पृष्ट्वैवापोविशुध्यतीति ॥ स्पृष्ट्वास्नात्वेत्यर्थः ॥ इदमतीताशौचंपितृव्यतिरिक्तसपिंडमरणविषयम् ॥ तद्विषयेतुपैठी नसिरप्याह ॥ पितरौचेन्मृतौस्यातांदूरस्थोपिहिपुत्रकः ॥ श्रुत्वातद्दि नमारभ्यदशाहंसूतकीभवेदिति॥दशाहमितिद्वादशाहाद्युपलक्षणम् ॥ सूतकीभवेदित्येतेनाकृतप्रेतकार्यस्यतदपिकर्तव्यमितिसूच्यते ॥ त थाचोक्तंमिताक्षरायाम्॥महागुरुनिपातेतुचार्द्रवस्त्रोपवासिना ॥अतीते ऽब्देपिकर्तव्यंप्रेतकार्यंयथाविधीति॥मातृसपत्नीविषयेतुदक्षेणोक्तम्॥ पितृपत्न्यामपेतायांमातृवर्जंद्विजोत्तम॥ संवत्सरेव्यतीतेतुत्रिरात्रमशु चिर्भवेदिति॥स्मृत्यर्थसारेविशेषउक्तः॥मातापितृमरणंदशाहादूर्ध्वं दूरदेशोपिसंवत्सरादूर्ध्वमपिपुत्रःश्रुत्वामरणश्रवणदिनमारभ्यदशाहा दिकंयथावर्णंपूर्णमाशौचंकुर्यात् ॥ उदकपिंडदानंचमहागुरुमरणेचदूर देशेप्यतीतेअब्देप्यार्द्रवस्त्रोपवासिनातथैवाशौचादिकंकार्यम् ॥स्त्रीपु रुषयोःपरस्परंत्वेवमेव॥सवर्णोत्तमसपत्नीषुचैवम् ॥ देशांतरेकालांतरे चहीनवर्णायामातुःसपत्न्याःमरणेपुत्रस्यत्रिरात्रमिति ॥ अतश्चदक्षवच नमपिहीनवर्णमातृसपत्नीविषयएवयोज्यम्॥देशांतरमृतेत्वतीताशौचं ज्ञातीनांनास्ति ॥ तदुक्तंस्मृत्यंतरे ॥ देशांतरेमृतंश्रुत्वाक्लीबेवैखानसे

यतौ॥मृतेस्नानेनशुध्यंतिगर्भस्रावेचगोत्रिणइति ॥देशान्तरमृतमिति क्लीबादिव्यतिरिक्तविषयम्॥क्लीबादिषुसन्निहितेष्वपिसद्यःशुद्धिः ॥ देशांतरस्वरूपंचवृद्धमनुनोक्तम्॥महानद्यंतरंयत्रगिरिर्वाव्यवधायकः॥ वाचोयत्रविभिद्यंतेतद्देशांतरमुच्यतइति॥बृहस्पतिरपि ॥ देशांतरंवदंत्येकेषष्टियोजनमायतम्॥चत्वारिंशद्वदंत्यन्येत्रिंशदन्येतथैवच ॥एषु देशेषुदेशाचारतोव्यवस्थाकल्पनीया॥योजनप्रमाणंतुस्मृत्यर्थसारेप्रोक्तम्॥तिर्यग्यवोदराण्यष्टावूर्ध्वावाव्रीहयस्त्रयः॥ प्रामाणमंगुलस्योक्तंवितस्तिर्द्वादशांगुलः ॥वितस्तिर्द्विगुणाहस्तस्ततःकिष्कुस्ततोधनुः ॥ धनुःसहस्रेद्वेक्रोशश्चतुष्क्रोशंतुयोजनमिति ॥ इदमतिक्रांताशौचंब्राह्मणादिवर्णानामुपनयनादनंतरंवेदितव्यम् ॥ तदुक्तंस्मृत्यर्थसारे ॥अतीताशौचेतुस्वाशौचकालादूर्ध्वंस्त्रीशूद्राणांविवाहादूर्ध्वंभवतीति॥इदं सर्वेषामपिवर्णानांसाधारणम्॥तदाहव्याघ्रपादः॥ तुल्येवयसिसर्वेषामतिक्रांतेतथैवच ॥ उपनीतेतुविषमंतस्मिन्नेवतुकालजमिति ॥ अस्यार्थः ॥ वयोवस्थाकृतमाशौचमतिक्रांताशौचंचसर्ववर्णसाधारणम् ॥ दशाहद्वादशाहादिरूपमुपनीतविषयएव ॥ अतिकालजमतिक्रांताशौचंचतस्मिन्नेवोपनीतविषयएवभवतिनानुपनीतविषयइत्यर्थः ॥ अतिक्रांताशौचंगृहिणएवनतुतद्व्यस्य ॥ तदाहांगिराः ॥ अतिक्रांते दशाहेतुपश्चाज्ज्ञानातिचेद्गृही ॥ त्रिरात्रंसूतकंतस्यनतद्व्यस्यकर्हिचिदिति ॥ देशांतरमृतस्यास्थिभिःप्रतिकृतिंकृत्वास्थ्नामभावेपर्णशरेणपिष्टकेनवाप्रतिकृतिंयथास्वाचारंकृत्वादाहःकार्यः ॥ अनाहिताग्नेःप्रतिकृतिदाहेत्रिरात्रमाशौचम् ॥ आहिताग्नेर्यथावर्णंसंपूर्णाशौचमस्त्येव ॥ तदुक्तंस्मृत्यर्थसारे ॥ सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्चतथाग्निना॥असौस्वर्गायलोकायस्वाहेत्युक्त्वासबांधवैः॥एवंपर्णशरंदग्ध्वा त्रिरात्रमशुचिर्भवेदिति॥ वसिष्ठोपि॥आहिताग्निश्चेत्प्रवसन्म्रियतेपुनः संस्कारंकृत्वाशववच्छौचमिति ॥अत्रानाहिताग्नेस्त्रिरात्रमितिपूर्वंगृहीताशौचपुत्रपत्नीविषयम् ॥ अगृहीताशौचविषयेतुदशाहादिसंपूर्णाशौ

१ रत्निःततःकिंचित्ततो धनुः इ० पा० । २ यवसंमिश्रैः इ० पा० ।

चम्॥तदुक्तंस्मृत्यर्थसारे॥अतीतेसूतकेतुपूर्वमगृहीताशौचस्यपुत्रस्य पत्न्याश्चदशाहादिकंसंपूर्णाशौचम्॥ गृहीताशौचस्यपुत्रस्यपत्न्याश्च त्रिरात्रम्॥ पत्नीपुनःसंस्कारेपत्युश्चैवंसपत्न्योश्चैवमिति॥पुनःसंस्कारेसपिंडेषुतत्रैवोक्तम्॥अगृहीताशौचानांसपिंडानांत्रिरात्रम्॥ गृहीताशौचानांसपिंडानांपुनराशौचंनास्ति॥प्रोषितस्यजीवद्वार्त्तानाकर्णने विशेषोबृहस्पतिनोक्तः॥ यस्यनश्रूयतेवार्त्तायावद्द्वादशवत्सरम्॥कुशपुत्रकदाहेनतत्रस्यादवधारणमिति॥ एतत्पितृव्यतिरिक्तविषयमिति गम्यते॥ पितृविषयेजातूकर्णेनविशेषाभिधानात्॥ पितरिप्रोषिते यस्यनवार्त्तानैवचागतिः॥ऊर्ध्वंपंचदशवर्षात्तुकृत्वातत्प्रतिरूपकम्॥कुर्यात्तस्यतुसंस्कारंयथोक्तविधिनाततइति॥अत्रैवस्मृत्यर्थसारेविशेषउक्तः॥दूरदेशांतरगतेजीवद्वार्त्तांपुनःपुनः॥पुत्रःपर्यालोच्यजीवद्वार्तायामश्रूयमाणायांपूर्ववयस्केएकविंशत्यब्दादूर्ध्वंमध्यमवयस्केपंचदशाब्दादूर्ध्वमपरवयस्केद्वादशाब्दादूर्ध्वंचांद्रायणत्रयंत्रिंशत्कृच्छ्राणिवाकृत्वापालाशवृंतैःकुशैर्वाप्रतिकृतिंकृत्वादशाहाशौचोदकपिंडोदकश्राद्धानिकार्याणीति॥श्राद्धादिकेकृतेयदिजीवन्समागच्छेत्तदातंघृतकुंडे निधायजातकर्मादिसंस्कारान्कुर्यात्॥ तदाहवृद्धमनुः॥ जीवन्यदि समागच्छेद्घृतकुंडेनिधापनम्॥ उद्धृत्यस्नापयित्वास्यजातकर्मादि कारयेत्॥द्वादशाहंव्रतंकुर्यात्त्रिरात्रमथवापुनः॥ स्नात्वोद्वहेततांभार्यामन्यांवातदभावतः॥ अग्नीनाधायविधिवद्व्रात्यस्तोमेनयाजयेत्॥ अथैंद्राग्नेनपशुनागिरिंगत्वाचतत्रतु॥ इष्टिमायुष्मतींकुर्यादीप्सितांश्चक्रतूंस्ततइति॥ शवानुगमनेतन्निमित्ताशौचंतुयाज्ञवल्क्येनोक्तम्॥ ब्राह्मणेनानुगतव्योनशूद्रोनाद्विजःक्वचित्॥ अनुगम्यांभसिस्नात्वास्पृष्ट्वाग्निंघृतभुक्छुचिरिति॥ ब्राह्मणेनासपिंडेनद्विजोविप्रादिःशूद्रोवाप्रेतेनानुगन्तव्यइत्यर्थः॥ अत्रघृतभोजनंपावित्र्यार्थंनतृप्त्यर्थम्॥ इयंशुद्धिःसमानोत्कृष्टजातीयानुगमनाविषया॥ तदाहमनुः॥ अनुगम्येच्छ

१ ऊर्ध्वंपञ्चदशाद्वर्षात् इ०पा०।

याप्रेतंज्ञातिमज्ञातिमेवच ॥ स्नात्वासचैलंस्पृष्ट्वाग्निंघृतंप्राश्यविशु
ध्यतीति॥अत्रज्ञातिमितिज्ञातयोमातृसपिण्डाः॥पितृसापिण्डानुगमन
स्यविहितत्वात् ॥ हीनवर्णविषयेतुस्मृत्यर्थसारेविशेषउक्तः॥ ब्राह्मण
स्यक्षत्रियानुगमनेएकाहमाशौचम्॥वैश्यानुगमनेपक्षिणी ॥ शूद्रानुग
मनेत्रिरात्रमाशौचंकृत्वासमुद्रगायांनद्यांस्नात्वाप्राणायामशतंकृत्वा
घृतंप्राश्यविशुध्येत् ॥ क्षत्रियस्यवैश्यानुगमनेत्वेकाहमाशौचम् ॥
शूद्रानुगमनेपक्षिणी ॥ वैश्यस्यशूद्रानुगमनेत्वेकाहंरोदनेचैवमिति ॥
यत्तुवसिष्ठवचनम् ॥ मानुषास्थिस्निग्धंस्पृष्ट्वात्रिरात्रमाशौचम् ॥ अ
स्निग्धेत्वहोरात्रमाशौचम् ॥ शेषानुगमनेचैवमिति ॥ इदमपिब्राह्मण
स्यक्षत्रियानुगमनविषयम्॥ ॥ शूद्रानुगमनेतुपराशरः॥ प्रेतीभूतंतु
यःशूद्रंब्राह्मणोज्ञानदुर्बलः॥ अनुगच्छेन्नीयमानंसत्रिरात्रेणशुध्यति ॥
त्रिरात्रेतुततस्तीर्णेनदींगत्वासमुद्रगाम् ॥ प्राणायामशतंकृत्वाघृतंप्रा
श्यविशुध्यतीति ॥ इदमनुगमनादिसंसर्गाशौचंसंसर्गिणएवनतत्पुत्रा
दीनाम् ॥ तदाहांगिराः॥ आशौचंयस्यसंसर्गादापतेद्गृहमेधिनः ॥
क्रियास्तस्यनलुप्यंतेगृह्याणांनचतद्भवेदिति ॥ असपिंडप्रेतस्यालंक
रणेतुशंखेनप्रायश्चित्तमुक्तम्॥कृच्छ्रपादोऽसपिंडस्यप्रेतालंकरणेकृते॥
अज्ञानादुपवासःस्यादशक्तौस्नानमिष्यतइति॥ज्ञानात्कृतेतुद्विगुणम्
॥ ॥ पारस्करः ॥ मृतस्यबांधवैःसार्द्धंकृत्वातुपरिदेवनम् ॥ वर्जये
त्तदहोरात्रंदानंश्राद्धादिकर्मचेति ॥ ॥ इतिदेशांतरमरणजननाशौ
चनिर्णयः॥ ॥ अथाशौचसन्निपातेविशेषउच्यते॥ तत्रजननाशौच
मध्येशावाशौचमध्येवाजननाशौचेतत्समेततोन्यूनेवासतिपूर्वाशौच
शेषेणैवांतरापतितसूतकस्यनिवृत्तिः॥ तदाहयाज्ञवल्क्यः ॥ अन्तरा
जन्ममरणेशेषाहोभिर्विशुध्यतीति ॥ शावाशौचमध्येतत्समेततोन्यू
नेवाशावाशौचांतरेसतिपूर्वशेषेणैवशुद्धिः ॥ जननाशौचमध्येशावा
शौचेसतिशावाशौचंसंपूर्णकार्यम्॥नजननाशौचशेषेणशुद्धिः॥ शावा
शौचेसमुत्पन्नेसूतकंतुयदाभवेत् ॥शावेनशुध्यतेसूतिर्नसूतिःशावशो

धिनी ॥ अंगिरसाप्युक्तम् ॥ सूतकेमृतकंचेत्स्यान्मृतकेत्वथ सूतकम् ॥ तत्राधिकृत्यमृतकंशौचंकुर्यान्नसूतकमिति॥ स्वल्पाशौच मध्येअधिकेसूतकेवासतिनपुनःपूर्वशेषेणशुद्धिःकिन्तुस्वकालेनैव ॥ तदाहोशना ॥ स्वल्पाशौचस्यमध्येतुदीर्घाशौचंभवेद्यदि ॥ नपूर्वेणै वशुद्धिःस्यात्स्वकालेनैवशुध्यतीति ॥अत्राशौचपदेनसूतकंमृतकंचो च्यते ॥ अत्रस्वल्पत्वंदीर्घत्वंचकालकृतमेवाशौचस्यज्ञेयम् ॥ मा तापित्राशौचसन्निपातेचांगिरसाविशेषउक्तः॥ मातर्यग्रेप्रमीतायामशु द्धौम्रियतेपिता॥ पितुःशेषेणशुद्धिःस्यान्मातुःकुर्यात्तुपक्षिणीमिति॥ मात्राशौचस्यमध्येपित्राशौचेसतिपित्राशौचंसंपूर्णकार्यम् ॥ पित्राशौ चमध्येमात्राशौचेसतिपित्राशौचंसमाप्यमात्राशौचंपक्षिणींकुर्यादित्य र्थः ॥शातातपेनत्वपरोविशेषउक्तः ॥ रात्रिशेषेद्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहादिति॥अस्यार्थः॥ पूर्वाशौचेआशौचांतरात्रिमात्रावशेषेस तिसूतकांतरेजातेसत्यपरेणाहर्द्वयेनशुद्धिः ॥ आशौचांतरात्रिपश्चि मयाममात्रावशेषेसत्यपरैस्त्रिभिरहोरात्रैःशुद्धिर्नपूर्वशेषेणेति ॥ यत्तु ब्रह्मपुराणवचनम् ॥ आद्यंभागद्वयंयावत्सूतकस्यतुसूतके॥ द्विती येपतितेचाद्यात्सूतकाच्छुद्धिरिष्यते ॥ अतऊर्ध्वंद्वितीयांतात्सूतकां ताच्छुचिःस्मृतः ॥ एवमेवविचार्यस्यान्मृतकेमृतकांतरइति ॥ अ स्यार्थः ॥ सूतकसंबंधिचरमाहोरात्रस्ययदाद्यभागद्वयंतच्चतुर्धावि भक्तेअहोरात्रेअहोरूपमेव ॥ तत्रांतिमदिनेद्वितीयेसूतकेपतितेआ द्यात्सूतकाच्छुद्धिः ॥ अतऊर्द्धमस्तमयानंतरंरात्रिरूपभागद्वयेसू तकांतरापातेसतिद्वितीयात्सूतकांताच्छुद्धिरित्यविरोधः ॥ अन्यथा बहुवाक्यविरोधःस्यात् ॥अत्रैवगौतमोपि॥रात्रिशेषेसतिद्वाभ्यांप्रभाते तिसृभिरिति॥ आशौचमध्येआशौचांतरेसतिपिंडजातकर्मादिकर्मणि शातातपेनविशेषउक्तः ॥ अंतर्दशाहेपश्चात्स्याज्जननान्मरणंयदि ॥ प्रेतमुद्दिश्यकर्त्तव्यंपिंडदानंस्वबंधुभिः ॥ प्रारब्धेशावपिंडेतुमध्येच जननंभवेत् ॥ तथैवाशौचपिंडांस्तुशेषान्दद्याद्यथाविधीति ॥ प्रजा

पतिरपि ॥ आशौचेतुसमुत्पन्नेपुत्रजन्मयदाभवेत् ॥ कर्तुस्तात्कालिकीशुद्धिःपूर्वाशौचेनशुध्यतीति ॥ उक्ताशौचसन्निपातशुद्धिःसूतिकामग्निदंचविहायज्ञातव्या ॥ सूतिकामग्निदंचहित्वेत्याद्यैःस्मृतिसंग्रहोक्तत्वात् ॥ अत्रोक्ताशौचप्रकरणेयान्यधिकाशौचविषयेसंकुचिताशौचविधायकवाक्यानितानिसमानोदकापदादिविषयत्वेनव्यवस्थापनीयानि ॥ यानिस्वल्पाशौचविधायकानितानिगुणवदनापत्सन्निहितविषयत्वेनव्यवस्थापनीयानि ॥ नतुविरोधआशंकनीयः॥ तथाचस्मृत्यर्थसारे ॥ एवंदशाहस्थानेत्रिरात्रपक्षिण्येकाहसद्यःशौचपराणिवाक्यान्यापद्विषयाणियोज्यानि ॥ समानोदकविषयश्चसंकुचिताशौचकल्पः ॥ पक्षिण्येकाहसद्यःशौचरूपाआपद्विषयपराः॥ येनप्रतिग्रहादिनार्तिनाशस्तद्विषयानसर्वत्रेति ॥ ॥ इत्याशौचसंकरनिर्णयः ॥ ॥ अथाशौचेयत्कर्मकार्यंवर्ज्यंवातदुच्यते ॥ तत्र पुलस्त्यः ॥ संध्यामिष्टिंचरुंहोमंयावज्जीवंसमाचरेत् ॥ नत्यजेत्सूतकेवापियज्ञं[1]नोच्छेदयेद्द्विजइति ॥ विष्णुपुराणेतु ॥ सर्वकालमुपासत्तिःसंध्ययोःपार्थिवेष्यते ॥ अन्यत्रसूतकाशौचविभ्रमातुरभीतित इतिसंध्योपासनमाशौचेनिषिद्धम् ॥ अत्रायमभिप्रायः ॥ संध्यांप्राणायाममंत्रोच्चारणपूर्वकंनोपासीतेति पुलस्त्यवचनस्यतुप्राणायामवर्ज्यंमानसिकमंत्रोच्चारपूर्वकंसंध्यामुपासीतेति नसर्वथात्यजेदित्यभिप्रायः ॥ अमुमेवार्थंपुनःपुलस्त्यएवाह ॥ यथा ॥ सूतकेमृतकेचैवसंध्याकर्मसमाचरेत् ॥ मनसोच्चारयेन्मंत्रंप्राणायाममृतेद्विजइति ॥ अंजलिप्रक्षेपस्तुगायत्रीमुच्चार्यैवकार्यः ॥ तदाहपैठीनसिः ॥ सूतकेसावित्र्याचांजलिंप्रक्षिप्यप्रदक्षिणांकृत्वासूर्यंध्यायन्नमस्कुर्यादिति ॥ ॥ स्मृत्यर्थसारेतुविशेषउक्तः ॥ स्मार्त्तत्वेपिसंध्यायांगायत्र्यांजलिदानंकार्यम् ॥ मार्जनंकार्यंनवा ॥ यद्वा ॥ प्राणानायम्यमनसामंत्रमुच्चारयन्मार्जनादिकृत्वावाचागायत्रीमुच्चार्यांजलिंदद्यादिति ॥ इष्टिहोमा

१ त्यजन्गच्छेदधोद्विजः इ० पा० ।

दिकमप्यसगोत्रेणकारयेत् ॥ तदाहजातूकर्ण्यः ॥ सूतकेतुसमुत्पन्ने स्मार्तकर्मकथंभवेत् ॥ पिंडयज्ञंचरुंहोममसगोत्रेणकारयेदिति ॥ पिंडयज्ञःपिंडपितृयज्ञः ॥ चरुःश्रावणीकर्माश्वयुज्यादिकंस्थालीपाकश्च॥बृहस्पतिरपि॥सूतकेमृतकेचैवमशक्तौश्राद्धभोजने ॥प्रवासादिनिमित्तेषुहावयेन्नतुहापयेदिति ॥ यजमानस्तूद्देशत्यागंकुर्यात् ॥ नित्याग्निहोत्रादीनिस्वयमेवकुर्यात् ॥ तदाहपारस्करः ॥ नित्यानिविनिवर्त्तेरन् ॥ वैतानवर्ज्यंशालाग्नौचैकएतानिकुर्युरिति ॥अस्यार्थः ॥ वैतानंवर्जयित्वाअन्यानिनित्यानिनिवृत्तानिभवेयुः ॥नित्यमपिवैतानंननिवर्तते ॥ वितानोनामाग्नीनांविस्तारस्त्रेताग्निस्तत्रविधीयमानानिनित्याग्निहोत्रादीनिवैतानानितानिस्वयमेवकुर्यात् ॥ शालाग्निर्गृह्याग्निस्तत्संबंधीनिगृह्याग्निसायंप्रातर्होमस्थालीपाकादीनितान्यपिननिवर्तेरन्नित्येकेआहुः ॥ अतश्चैषांकरणमकरणंवा ॥करणपक्षेतान्यन्येअसगोत्राःकुर्युरित्यर्थः ॥यत्तुस्मृत्यर्थसारे॥उपासनाग्निसाध्याःसायंप्रातर्होमपार्वणस्थालीपाकाद्यानित्यनैमित्तिकाःश्रुतिचोदितत्वात्कार्यएवेति ॥अत्रापिद्रव्यत्यागात्मकंप्रधानंस्वयमेवकुर्यात् ॥ अन्यदंगमन्येनकारयेदित्यभिप्रायः ॥ अतएवअसंभवेहावयेत्सर्वथानहापयेदिति तेनैवोक्तम् ॥ असंभवेप्रधानकरणासंभवेनैमित्तिकान्यपिदर्शपौर्णमासादीनिश्रुत्युक्तानिकार्याणि ॥तदुक्तंस्मृत्यर्थसारे ॥ जातेआशौचेत्रेताग्निसाध्याग्निहोत्रदर्शपौर्णमासाद्यानित्यनैमित्तिकाःक्रियाःश्रुत्युक्तत्वात्कार्याएवेति ॥ अतश्चनित्याग्निहोत्रव्यतिरिक्तानामपिनित्यनैमित्तिकानांश्रौतानांस्मार्त्तानांवासर्वथानत्यागःकिंत्वन्येनकारयेत् ॥काम्यंसर्वमपिवर्ज्यमेव॥वैश्वदेवपंचमहायज्ञादीनिस्मार्त्तानिवर्जयेदेव ॥ तदाहसंवर्त्तः ॥ विप्रोदशाहमासीतवैश्वदेवविवर्जितः ॥ पंचयज्ञविधानंतुनकुर्यान्मृत्युजन्मनोरिति ॥ यत्पुनर्वचनम् ॥ दानंप्रतिग्रहोहोमःस्वाध्यायश्चनिवर्ततइति॥तत्काम्यहोमविषयम् ॥ नित्यस्नानादिकंकार्यमेव ॥ तदुक्तंस्मृत्यर्थसारे ॥ नित्यस्नानशौचाचमनभोजन

नियमानस्पृश्यास्पर्शनस्नानंचकुर्यादेवेति ॥ इदमाशौचंज्ञातमेवदोषापादकंनाज्ञातम् ॥ तदुक्तंब्रह्मपुराणे॥अपिदातृग्रहीत्रोश्चसूतकेमृतकेथवा॥अविज्ञातेनदोषःस्याच्छ्राद्धादिषुकदाचन ॥ विज्ञातेभोक्तुरेवस्यात्प्रायश्चित्तादिकंक्रमादिति ॥ अत्रविज्ञातेभोक्तुरितिदात्राभोक्त्राउभाभ्यांवाज्ञातेभोक्तुरेवदोषइत्यर्थः ॥ तदुक्तंषट्त्रिंशन्मते ॥ उभाभ्यामपरिज्ञातेसूतकंनैवदोषकृत् ॥ एकेनापिपरिज्ञातेभोक्तुर्दोषमुपावहेदिति ॥ उभाभ्यांदातृभोक्तृभ्यामेकेनापिदातृभोक्त्रोरन्यतरेणदात्राभोक्त्रावाज्ञातेसूतकान्नभोजनदोषोभोक्तुरेव ॥ दातुस्तुसूतकान्नभोजयितृत्वदोषोस्त्येवनभोजनदोषइत्यर्थः ॥ सूतकान्नस्याभोज्यत्वंयमेनोक्तम् ॥ उभयत्रदशाहानिकुलस्यान्नंनभुज्यतइति ॥ उभयत्रसूतकेमृतकेचकुलस्यसूतकिकुलस्य ॥ भोजनमध्येसूतकेसतिअन्यगृहोदकेनाचमनेनशुद्धिः॥तदुक्तंषट्त्रिंशन्मते ॥ भुंजानेषुतुविप्रेषुत्वंतरामृतसूतके ॥ अन्यगेहोदकाचांताःसर्वेतेशुचयःस्मृताइति ॥ पूर्वसंकल्पितेष्वन्नादिषुनदोषः ॥ तदाहबृहस्पतिः ॥ विवाहोत्सवयज्ञेषुत्वंतरामृतसूतके ॥ परैरन्नंप्रदातव्यंभोक्तव्यंचद्विजोत्तमैरिति ॥ परैः सूतकरहितैः ॥ अतएवस्मृत्यर्थसारेप्रोक्तम् ॥ दातृभोक्त्रंश्चनस्पृशेदिति॥आशौचग्राह्याणिमरीचिराह॥लवणेमधुमांसेचपुष्पमूलफलेषुच॥शाककाष्ठतृणेष्वप्सुदधिसर्पिःपयःसुच ॥ तिलौषधादिकेचैवपक्वापक्वेस्वयंग्रहः ॥ शुष्केषुचैवसर्वेषुनाशौचंमृतसूतकइति ॥ स्वयंग्रहइतिस्वाम्यनुज्ञातंस्वयंगृह्णीयादित्यर्थः ॥ पक्वापक्वइति॥पक्वभक्ष्यजातमपक्वंतंडुलादिकंचामम् ॥ तच्चअन्नसत्रप्रवृत्तादेवग्राह्यंनान्यस्मात् ॥ तदाहांगिराः ॥ अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम्॥भुक्त्वापक्वान्नमेतेषांत्रिरात्रंतुपयःपिबेदिति ॥ व्रतादिकेषुप्रान्तेष्वंतरासूतकादिप्राप्तारब्धमात्रकरणेआशौचाभावः ॥ अन्यकर्मस्वाशौचमस्त्येव॥तद्विष्णुः॥व्रतयज्ञविवाहेषुश्राद्धेहोमार्चनेजपे॥प्रारब्धेसूतकंनस्यादनारब्धेतुसूतकमिति॥सूतकमितिमृतकस्याप्युपलक्षणम् ॥

येप्रारंभविशेषश्चतेनैवोक्तः॥प्रारंभोवरणंयज्ञेसंकल्पंव्रतसत्रयोः॥नांदीमुखंविवाहादौश्राद्धेपाकपरिक्रियेति ॥ यज्ञेवरणमितिवृतानामृत्विजांयजमानस्यचतस्मिन्कर्मणिनाशौचमितिभावः ॥ एवंश्राद्धादिष्वपिदातृभोक्त्रोर्वेदितव्यम् ॥ तदुक्तंस्मृत्यर्थसारे ॥ वृतानामृत्विजांदीक्षणीयेष्ट्यादीक्षितानाम् ॥ यज्ञियंकर्मकुर्वतामन्नसत्रिणांकृच्छ्रचान्द्रायणादिव्रातिनांप्रायश्चित्तत्वेनप्रवृत्तानांब्रह्मचर्यादिव्रतानांचप्रवृत्तेश्राद्धकर्मणिभोक्तृणामेतेषांयावदुपाधिस्तावदाशौचंनास्त्येवेति ॥ प्रारंभाभावेपिकन्यायाअधार्यत्वेसन्निहितलग्नांतराभावेचकूष्मांडमंत्रैर्घृतंहुत्वाविवाहःकार्यएव ॥ तदाहविष्णुः ॥ अनारब्धेविशुद्धचर्थंकूष्मांडैर्जुहुयाद्घृतम् ॥ गांदद्यात्पंचगव्याशीततःशुध्यतिसूतकीति ॥ अनारब्धेकर्मणिसूतकविशुद्धचर्थंयद्देवादेवहेलनमित्यादिकूष्मांडसंज्ञकैर्मन्त्रैर्घृतंहुत्वाविप्रायगांदत्त्वापंचगव्यंप्राश्यसूतकीशुद्धचतीति ॥ शुद्धश्चावश्यकंविवाहमंगलंकुर्यादितिमंगलम्॥इत्याशौचकृत्याकृत्यनिर्णयः॥ ॥ श्रीसूर्यसेनभूभृद्विमलयशःक्षीरसागराडुदिते ॥ इतिनिर्णयामृतेस्मिन्नाशौचस्यानिर्णयोजातः ॥ ॥ इतिश्रीसूर्यसेनमहीमहेन्द्रविरचितेनिर्णयामृतेआशौचप्रकरणंचतुर्थंसंपूर्णम् ॥ ॥ श्रीमत्पंडितसिद्धलक्ष्मणसुतःश्रीसिद्धलक्ष्मीपदद्वंद्वाराधनसुप्रसिद्धमहिमायःसिद्धसारस्वतः ॥ आदेशादकृतैषसूर्यमहसाश्रीसूर्यसेनप्रभोर्वैधेकर्मणिकालनिर्णयमसावल्लाटनाथःसुधीः॥छ॥ श्रीरामगोविंदार्पणमस्तु॥

१ एतदग्रेऽयमेक एतादृशः श्लोकः 'बुधानामुपकारायकारुण्यान्मूढचेतसाम् ॥ गोपीनारायणेनेदंनिर्मितंनिर्णयामृतम् ॥ इति ' पुस्तकद्वये दृश्यते परंत्वेतादृशो नामोल्लेखउपक्रमेनकृत इत्यसंगतइवप्रतिभातीतिमूलेननिवेशितोऽस्माभिः ॥

पुस्तक मिलनेका ठिकाना-
खेमराज श्रीकृष्णदास-
" श्रीवेङ्कटेश्वर " छापाखाना-मुंबई.